भजे रत्नत्रय प्रत्न भव्यलोकैकभूषणम् ।
तोषण मुक्तिकान्ताया पूषण ध्वान्तसन्तते ॥६॥
वाणी कर्मकृपाणी द्रोणी ससारजलधिसतरणे ।
वेणीजितघनमाला जिनवदनाम्भोजभासुरा जीयात् ॥७॥
अरन्ध्रसद्वृत्तमणीमनन्तगुणगुम्फिताम् ।
अपूर्वमाला मन्येऽह पूर्वाचार्यपरम्पराम् ॥८॥
गद्यावलि पद्यपरम्परा च प्रत्येकमप्यावहति प्रमोदम् ।
हर्षप्रकर्ष तनुते मिलित्वा द्राग्बाल्यतारुण्यवतीव कान्ता ॥९॥
या कथा भूतधात्रीश श्रेणिक प्रति वर्णिता ।
सुधर्मगणनाथेन ता वक्तु प्रयतामहे ॥ १० ॥
मदीयवाणीरमणी चरितार्था चिराद्भूत् ।
वक्त्रे जीवधर देव या भावैजिननायकम् ॥ ११ ॥

---

निर्जनदेशस्तस्मिन् । मुक्तिर्निर्वृतिरेव कान्ता वल्लभा तया विराजिता शोभितास्तान् । नष्ट शुक्लध्याना-नलभस्मसात्कृत कर्माष्टक ज्ञानावरणाद्यष्टकर्मनिकुरम्ब यैस्तान् । विशुद्धान् विमलान् । सिद्धान् भगवत सिद्धपरमेष्ठिन । हृदि चेतसि भावये चिन्तयामि । तेषा ध्यान करोमीति भाव ॥५॥

अथ रत्नत्रय स्तोतुमाह—भजे इति—प्रत्न प्राचीन श्रेष्ठ वा । भव्याश्च ते लोकाश्चेति भव्यलोका-स्तेषामेकमद्वितीय भूषणमाभरण तत् । मुक्तिरेव निर्वृतिरेव कान्ता प्रिया तस्या । तोषण सन्तोषप्रदम् । ध्वान्तस्य मोहतिमिरस्य या सन्तति समूहस्तस्या पूषण सूर्यम् । रत्नत्रय सम्यग्दर्शनज्ञानचारित्रात्मक मणित्रितय भजे सेवे । रूपकालकार ॥ ६ ॥

अथ जिनवाणीं स्तोतुमाह—वाणीति—कर्मणा ज्ञानावरणादीना कृपाणी करवालिका छेत्रीति यावत्, ससार एव जलधि सागरस्तस्य सतरणे प्लवने द्रोणी नौका, वेण्या केशपाशेन जिता निर्जिता घनमाला मेघपङ्क्तिर्यया सा । जिनस्यार्हतो वदनाम्भोजे मुखकमले भासुरा शोभमाना वाणी सरस्वती जीयात् सर्वोत्कर्षेण वर्तताम् ॥ ७ ॥

अथ पूर्वाचार्यपरम्परा स्मर्तुमाह—अरन्ध्रेति—अह हरिचन्द्र । पूर्वे च त आचार्याश्च पूर्वाचार्या-स्तेषा परम्परा ता पूर्वसूरिसन्ततिम् । अपूर्वमाला विचित्रस्रजम् । मन्ये वेद्मि । अथ तस्या अपूर्वत्व द्योत-यितुमाह—अरन्ध्राणि निश्छिद्राणि निरतिचाराणि सद्वृत्तानि सच्चारित्राण्येव मण्यो रत्नानि यस्या ता प्रसिद्धमाला सरन्ध्रमणियुक्ता भवतीय तु तद्भिन्नेति वैशिष्ट्यम् । मणिशब्द ईकारान्तोऽप्यस्ति । अनन्ता अपरिमिता ये गुणा सूत्राणि सम्यग्दर्शनादयो वा तैर्गुम्फिता ग्रन्थिता ताम् । प्रसिद्धमाला ह्येकगुण गुम्फिता भवतीय त्वनन्तातीतगुणगुम्फितेति वैशिष्ट्यम् । अधिकारूढवैशिष्ट्यरूपकालङ्कार ॥ ८ ॥

अथ चम्पूकाव्यस्य वैशिष्ट्यमाह—गद्यावलिरिति—गद्यानामावलि पङ्क्तिर्गद्यावलि 'वृत्तगन्धो-ज्झित गद्यम्' इति गद्यलक्षणम् । पद्याना परम्परेति पद्यपरम्परा पद्यपङ्क्तिश्च 'छन्दोबद्धपद पद्यम्' इति पद्यलक्षणम् । प्रत्येकमप्येकैकमपि । प्रमोदमानन्दम् । आवहति विदधाति । तद्द्वय मिलित्वा तु बाल्य तारुण्यवती शैशवयौवनवती शैशवान्तयौवनप्रारम्भवर्तीति यावत । कान्तेव कामिनीव । द्राग्झटिति हर्षस्य प्रमोदस्य प्रकर्षम् आधिक्य तनुते विस्तारयति । उपमालकार ॥ ९ ॥

अथ ग्रन्थारम्भप्रतिज्ञामाह—या कथेति—सुधर्मगणनाथेन सुधर्माभिधानगणधरेण भूतधात्रीश भूतश्चासौ धात्रीशश्च तम् वृत्तावनिपतिम् श्रेणिक मगधसम्राज प्रति या कथा वर्णिता यदाख्यान वर्णितम् । ता कथा वक्तु कथयितुम् । प्रयतामहे प्रयत्न कुर्महे ॥ १० ॥

स्ववाण्याश्चारितार्थ्य द्योतयितुमाह—मदीयेति—सा मदीया मामकीना वाणी भारत्येव रमणी

जीव धरस्य चरित दुरितस्य हन्तृ
प्राप्ता मलीमसतमापि मदीयवाणी ।
धीरान् विनोति नियत मलिनाञ्जनश्री-
बिम्बाधरीनयनपङ्कजसगतेव ॥ १२ ॥

अथ लवणरत्नाकरनिर्लोलकल्लोलशयकुशेशयप्रक्षिप्तमुक्ताविद्रुमराजीविराजितवेलालङ्कृते, सकलद्वीपमध्यमध्यासीनेऽपि शोभातिशयेन तेषामुपरि वर्तमाने, स्वमहिमनिराकृतसुराधिपलोक गगनतलचुम्बिजम्बूविटपिकपटेन मस्तकमुद्धृत्य प्रतिक्षणमीक्षमाण इव, अपारससारसतमसा धीकृतजीवलोकस्य पुरुषार्थचतुष्टयप्रकाशनायेव दिवाकरयुगलनिशाकरयुगलव्याजेन प्रदीपचतुष्टयमाबिभ्राणे, मूर्तीकृतलावण्य इव महीमहिलाया ,रङ्गस्थल इव श्रीलासिकालास्यस्य, प्रतिच्छन्द इव नाकलोकस्य सकललेखलोचनमीनानामालम्बनकूपे जम्बूद्वीपे, भरतखण्डमण्डनायमानकमलवनमधुलुब्धभृङ्गमालाव्याजेन सकललोकलोचनबन्धनार्थमायसशृङ्खलामिव बिभ्राणम् , परिपाकपि-

रामा । चिरात् चिरकालेन चरितार्था कृतकृत्या अभूद् बभूव । या भावैरनुरागपूर्णाभिप्रायै जिननायक जिनेन्द्रम्, जीवन्धरमेतन्नामधेय देव स्वामिन वव्रे स्वीकृतवती । जीवन्धरोपाख्यानवर्णनेन मदीया वाणी कृतकृत्याभूदिति भाव ॥ ११ ॥

अथ जीवन्धरचरितस्याद्भुतप्रभावमाविर्भावयितुमाह—जीवन्धरस्येति—दुरितस्य पापस्य हन्तृ विघातक जीवन्धरस्य जीवकस्य कथानायकस्य चरितमाख्यानम् । प्राप्ता प्राप्तवती मदीयवाणी मद्भारती मलीमसतमापि सातिशयमलिनापि सती नियत निश्चयेन बिम्बाधरीणा सुरक्ताधराणा नयनपङ्कजसगता लोचनारविन्दसलग्ना मलिनाञ्जनश्रीरिव मलिनकज्जलश्रीरिव धीरान् विदुष सुदृढचेतसश्च धिनोति प्रणयति कम्पयति च । उपमालकार ॥ १२ ॥

अथ जम्बूद्वीपे हेमाङ्गद नाम मण्डलमस्तीति निरूपयति । तत्र पूर्वं जम्बूद्वीप वर्णयितुमाह—अथाद्य निवेदनान तरम् , लवणरत्नाकरस्य लवणोदस्य निर्लोला अतिशयचपला ये कल्लोलास्तरङ्गा त एव शयकुशेशया करकमलानि तै प्रक्षिप्ता ये मुक्ताविद्रुमा मुक्ताफलप्रवालास्तेषा राजी पङ्क्तिस्तया विराजिता शोभिता या वेला तटी तयाऽलकृतस्तस्मिन्, सकलाश्च ते द्वीपाश्च सकलद्वीपा निखिलद्वीपा धातकीखण्डप्रभृतय इति यावत् । तेषा मध्य मध्यभागम्, अध्यासीनेऽप्यधिष्ठितेऽपि शोभातिशयेन सौन्दर्यातिरेकेण तेषा निखिलद्वीपानामुपर्यूर्ध्वं वर्तमाने विद्यमाने, अत्यन्त शोभमान इति यावत् , गगनतलचुम्बी नभस्तलस्पर्शी यो जम्बूविटपी जम्बूवृक्षस्तस्य कपटेन व्याजेन, मस्तक मूर्धानम्, उद्धृत्योन्नमय्य, स्वमहिम्ना स्वकीयप्रभावेण निराकृतस्तिरस्कृतो य सुराधिपलोक पुरन्दरभुवन स्वर्ग इति यावत् तम्, प्रतिक्षण प्रतिसमयम्, ईक्षत इतीक्षमाणस्तस्मिन्निवावलोकमान इव, अपारमनवसान यत्ससारसतमस भवतिमिर तेनान्धीकृतो यो जीवलोको जन्तुसमूहस्तस्य, पुरुषार्थाना धर्मार्थकाममोक्षाणा यच्चतुष्टय चतुष्क तस्य प्रकाशनायेवावलोकनायेव दिवाकरयुगलस्य सूर्ययुग्मस्य निशाकरयुगलस्य चन्द्रयुग्मस्य च व्याजेन दम्भेन प्रदीपचतुष्टय दीपकचतुष्टयम् । आबिभ्राणे आदधति । महीमहिलाया पृथिवीवनिताया , मूर्तीकृत लावण्य सविग्रहीकृत सौन्दर्यं तस्मिन्निव, श्रीलासिकालास्यस्य लक्ष्मीनटीनाट्यस्य, रङ्गस्थल इव रङ्गभूमाविव, नाकलोकस्य स्वर्गप्रदेशस्य प्रतिच्छन्द इव प्रतिबिम्ब इव, सकलाश्च ते लेखाश्च सकललेखा निखिलदेवास्तेषा लोचनान्येव मीना मत्स्यास्तेषाम् । आलम्बनकूपे आधारकूपे जम्बूद्वीपे प्रथमद्वीपे । भरतखण्डस्य भारतवर्षस्य मण्डनायमानमा भरणवदाचरद्यत्कमलवन तस्य मधु मकरन्द तस्मिन् लुब्धात्यासक्ता या भृङ्गमाला भ्रमरश्रेणिस्तस्य व्याजेन दम्भेन, सकललोकाना निखिलजनाना लोचनानि नयनानि तेषा बन्धनार्थमवरोधनार्थम् । आयसशृङ्खला-

१ सकलमध्यमध्यासीने ब० ।

शङ्ककलममञ्जरीपुञ्जपिञ्जरीभूततया पत्रिकुलपातभयात् कृषीवलस्थगितपीताम्बरमिव बिभ्राणम्, तत्र तत्र समर्पितैरभ्रलिहैर्बीजावापप्रभृति तपनकलितसन्तापजनितवैरतया तदीयपदवीमुपरुन्धद्भिरिव निजसौन्दर्यसदर्शनार्थमागतैः कुलाचलैरिव उदयास्ताचलमध्यसञ्चारखिन्नस्य सरोजबन्धोर्विश्रमाय वेधसा विरचितैरिव धराधरैर्धान्यराशिभिरुद्भासितम्, अतिदूरप्रवृद्धशाखावलयविलसितकिसलयकैतवेन हस्तमुदस्य विचित्रपतत्रिविरुतैः कल्पपादपाञ्जेतुमिवाह्वयमानैर्जन्मप्रभृति जलसेकाद्युपकारेण वर्धकेभ्यो वलाहकेभ्यः फलपुष्पादीनि समर्पयितुमिव मेघमण्डलमवलम्बमानैरुपवनतरुषण्डैर्मण्डितम्, विकचनीलोत्पलनयनाभिः पद्ममुखीभिर्भृङ्गजालनीलालकाभिर्मुदितमीनलाञ्छनमकरीशोभितचारुचक्रपयोधराभिर्घनपुलिनजघनाभिस्तटिनीवधूटीभिः परिवृतमस्ति निस्तुलं हेमाङ्गदं नाम मण्डलम्।

तत्रास्ति राजनगरी जगति प्रसिद्धा
यत्सालनीलमणिदीधितिरुद्धमार्गः।
राहुभ्रमेण विवशस्तरणिः सहस्रैः
पादैर्युतोऽपि न हि लङ्घयति स्म सालम्॥ १३॥

---

मिव लोहशृङ्खला बिभ्राणमिव दधदिव। परिपाकेन परिणामेन पिशङ्गाः पिङ्गला या कलममञ्जर्यो धान्यमञ्जर्यस्तासां पुञ्जेन समूहेन पिञ्जरीभूततया पीतीभूततया पत्त्रिणां पक्षिणां कुलस्य समूहस्य पातः सम्पतनं तस्य भयं तस्मात्, कृषीवलैः कृषकैः स्थगितमाच्छादितं पीताम्बरं पीतवसनं बिभ्राणमिव दधानमिव तत्र तत्र सर्वत्र समर्पितैः प्ररूढैः, अभ्रलिहैर्मेघस्पर्शिभिः, बीजावापप्रभृति बीजविकिरणादारभ्य तपनेन सूर्येण कलितः समुत्पादितो यः सन्तापः आतपबाधा तेन जनितवैरतया समुत्पन्नविद्वेषतया तदीयपदवीं सूर्यमार्गम्, उपरुन्धद्भिरिव समाच्छादयद्भिरिव, निजसौन्दर्यस्य स्वकीयरामणीयकस्य सदर्शनार्थं समवलोकनार्थम् आगतैः यातैः कुलाचलैरिव कुलगिरिभिरिव 'हिमवन्महाहिमवन्निषधनीलरुक्मिशिखरिणो वर्षधरपर्वताः' इत्युक्ताः षट् कुलाचलाः, उदयास्ताचलयोः पूर्वापरगिर्योर्मध्ये सञ्चारेण निरन्तरगमनेन खिन्नः श्रान्तस्तस्य, सरोजबन्धोः सूर्यस्य, विश्रमाय श्रमदूरीकरणाय वेधसा प्रजापतिना विरचितैर्निर्मितैः, धराधरैः पर्वतैरिव धान्यराशिभिः व्रीहिपुञ्जैः उद्भासितं सुशोभितम्, अतिदूरं दूरतरं प्रवृद्धेषु विस्तृतेषु शाखावलयेषु शाखामण्डलेषु विलसिताः शोभमाना ये किसलयाः पल्लवास्तेषां कैतवेन व्याजेन हस्तं करम्, उदस्योत्क्षिप्य विचित्रा विविधजातयो ये पतत्त्रिणः पक्षिणस्तेषां विरुतैः शब्दैः, कल्पपादपान् सुरतरून्, जेतुं पराभवितुम्, आह्वयमानैराकारयद्भिः, जन्मप्रभृति यदा जन्म तदारभ्य जलसेको नीराभिषेचनमादौ यस्य तथाभूतो य उपकार उपग्रहस्तेन, वर्धकेभ्यो वृद्धिदायकेभ्यः, वारिवाहका बलाहकास्तेभ्यो मेघेभ्यः 'पृषोदरादीनि यथोपदिष्टम्' इति निपातनेन पूर्वपदस्य व, उत्तरपदादेश्च लत्वम्, फलपुष्पाणि प्रसवकुसुमान्यादौ येषां तानि, समर्पयितुमिव प्रदातुमिव, मेघमण्डलं घनसमूहम्, अवलम्बमानैराश्रयद्भिः, तरुषण्डैर्वृक्षसमूहैः, मण्डितं शोभितम्, विकचानि प्रफुल्लानि नीलोत्पलान्येव कुवलयान्येव नयनानि लोचनानि यासां ताभिः, पद्मानि कमलान्येव मुखानि यासां ताभिः, भृङ्गजालानि भ्रमरसमूहा एव नीलालकाः कृष्णचूर्णकुन्तला यासां ताभिः, मुदितस्य प्रसन्नस्य मीनलाञ्छनस्य मदनस्य या मकर्यो ध्वजचिह्नभूता जलजन्तुविशेषास्ताभिः शोभिता अलङ्कृता ये चारुचक्रा मनोहरचक्रवाकास्त एव पयोधराः कुचा यासां ताभिः, घनपुलिनानि विपुलजटान्येव जघनानि नितम्बानि यासां ताभिः, तटिन्यो नद्य एव वधूट्यो युवतयस्ताभिः परिवृतं परिवेष्टितम्, निस्तुलमुपमातीतम्, हेमाङ्गदमेतन्नामधेयं मण्डलं जनपदः, अस्ति विद्यते।

अथ तत्र पुरीं वर्णयितुमाह—तत्रास्तीति—तत्र हेमाङ्गदमण्डले, जगति भुवने, प्रसिद्धा प्रख्याता, सा, राजनगरी राजपुरी, अस्ति विद्यते, यस्या राजपुर्याः साले प्राकारे खचितानां नीलमणीनां वैडूर्यमणीनां दीधितिभिः किरणैः रुद्धो व्याप्तो मार्गः पन्था यस्य सः, तरणिः सूर्यः, सहस्रं पादाश्चरणाः किरणाश्च तैः,

अम्भोमुक्चुम्बिसौधध्वजपटपवनोद्धूतसप्ताश्वरथ्य-
श्रान्ते सौदामिनीश्रीतुलिततनुलतामानिनीमानितायाः ।
यस्याः माणिक्यगेहप्रसृतरुचिझरीकल्पितोद्यद्विताने
निर्यन्नीलाश्मसालद्युतिरमरपुरे वन्दनस्रग्बभूव ॥ १४ ॥

यस्यां हरिन्मणिमयालयकान्तिजालै-
र्व्याप्ते वलाहककुलेऽपि सहस्ररश्मिः ।
दूर्वाम्बुबुद्धिपतनात्स्वरथाश्वरोध-
क्लेशासहः किमकरोद्गमनेऽयने द्वे ॥ १५ ॥

यत्सुन्दरीवदनचन्द्रविलीनचन्द्र-
कान्ताश्मसौधगलितं सलिलं पिपासुः ।
एणाङ्करङ्कुरतिवेगवशात्समेत्य
भीतो रयेण निरयात्कृतसौधसिंहात् ॥ १६ ॥

यस्यामनर्घ्यनृपमन्दिरदेहलीषु
गारुत्मतैर्मृगगणा बहु वञ्चिताः प्राक् ।
दृष्ट्वापि कोमलतृणानि न [1]संस्पृशन्ति
स्त्रीमन्दहासधवलानि चरन्ति तानि ॥ १७ ॥

---

युतोऽपि सहितोऽपि, राहुभ्रमेण विधुन्तुदविभ्रमेण, विवशः परायत्तः स्खलितगतिरिति यावत् सन्, सालं प्राकारं, नहि लङ्घयति स्म नातिक्रामति स्म । सून्नतसालसुशोभिता सासीदिति भावः । भ्रान्तिमदुत्प्रेक्षा विरोधाभासाः ॥१३॥

अथ तामेव राजपुरीं वर्णयितुमाह—अम्भोमुगिति—अम्भोमुक्चुम्बिनो घनस्पर्शिनो ये सौधध्वजपटाः प्रासादपताकावस्त्राणि तेषां पवनेन समीरेणोद्धूता दूरीकृता सप्ताश्वरथ्यानां सूर्यवाहानां श्रान्तिः क्लान्तिर्यया तस्याः, सौदामिनीश्रिया विद्युल्लक्ष्म्या तुलिता सदृशी तनुलता शरीरवल्लरी यासां, तथाभूता या मानिन्यो वनितास्ताभिर्मानिता सत्कृता शोभितेति यावत् तस्याः, यस्याः राजपुर्याः, माणिक्यगेहानां रत्नमयप्रासादानां प्रसृताभिर्निर्गत्य विसृताभिः रुचिझरीभिः कान्तिपरम्पराभिः कल्पितं रचितमुद्यद्वितानं विततोल्लोचो यस्मिंस्तस्मिन्, अमरपुरे स्वर्गे, निर्यन्ती निर्गच्छन्ती नीलाश्मसालस्य नीलमणिमयप्राकारस्य द्युतिः कान्तिः, वन्दनस्रक् वन्दनमाला, बभूव । उदात्तालङ्कारः ॥१४॥

अथ तस्या आलयान्वर्णयितुमाह—यस्यामिति—सहस्ररश्मिः सूर्यः, यस्यां राजपुर्यां हरिन्मणिमयानां हरिद्वर्णरत्ननिर्मितानामालयानां निलयानां कान्तिजालैर्दीप्तिसमूहैः, व्याप्तेऽभिलते, बलाहककुलेऽपि मेघसमूहेऽपि दूर्वाम्बुबुद्ध्या शतपर्वसलिलधिया पतन्तो नीचैरायान्तो य आत्मरथाश्वाः स्वकीयस्यन्दनवाहास्तेषां रोधे निवारणे यः क्लेशो दुःखं तस्यासहस्तं सोढुमसमर्थः सन् किम् गमने गतौ द्वे अयने दक्षिणोत्तराभिधौ द्वौ मार्गौ अकरोत् विदधौ । भ्रान्तिमदुत्प्रेक्षे ॥१५॥

यत्सु दरीति—यस्या राजपुर्याः सुन्दरीणां ललनानां वदनचन्द्रैर्मुखेन्दुभिर्विलीना द्रुता ये चन्द्रकान्ताश्मसौधाश्चन्द्रकान्तमणिमन्दिराणि तेभ्यो गलितं पतितं, सलिलं जलं पिपासुः पातुमिच्छुः, एणाङ्करङ्कुश्चन्द्रमृगः, अतिवेगवशात् सत्वरम्, समेत्य समागत्य, कृतः कृत्रिमश्चासौ सौधसिंहश्च भवनमृगेन्द्रश्च तस्मात्, भीतस्त्रस्तः सन्, रयेण वेगेन, निरयात् निरगच्छत् ॥१६॥

यस्यामिति—यस्यां नगर्याम्, अनर्घ्याणि अमूल्यानि श्रेष्ठानीति यावत्, यानि नृपमन्दिराणि राज-

---

१ संस्पृशन्ति ब० ।

उदग्रहर्म्यावलिमाश्रिताना यत्राङ्गनाना नयनोत्पलश्री ।
गङ्गा सखी स्वामवलोकितु द्रास्स्वर्ग गता सूर्यसुतेव भाति ।। १८ ।।
यत्प्रासादपरम्पराप्रतिफलद्देवाङ्गनास्वाङ्गना-
भेद दृष्टिनिमेषकौशलवशाज्जानाति यूना तति ।
यद्वैडूर्यशिरोगृहस्थसुदतीवक्त्रे दुविम्ब विधो-
र्बिम्ब चैव समीक्ष्य सशयमगात् स्वर्भानुरभ्राजिरे ।। १९ ।।
यत्सौधानवलोक्य निर्जरपतिर्द्राङ्निर्निमेपोऽभवद्
यस्या वीक्ष्य सरोजशोभिपरिखा गङ्गा विपाद गता ।
यत्रत्यानि जिनालयानि कलय मेरु स्वकार्तस्वर
स्वीचक्रे च बलद्विष सुरपुरी या वीक्ष्य शोकाकुला ।। २० ।।

---

भवनानि तेषा देहलयस्तासु गारुत्मतैर्गारुडै रत्ने , प्राक् पूर्वम्, बहु भूरिश , वञ्चिता प्रतारिता , मृगगणा हरिणसमूहा , कोमलतृणानि मृदुशष्पाणि हरिद्वर्णतृणानीति यावत, दृष्ट्वाप्यवलोक्यापि, न सस्पृशन्ति, न तेषा स्पर्श कुर्वन्ति, तान्येव हरिततृणानि यत्र स्त्रीणा नारीणा मन्दहासेन स्मितेन धवलानि सितानि भवन्ति तदा चरन्ति भक्षयन्ति । भ्रान्तिमदलङ्कार ।

उदग्रेति—यत्र नगर्याम्, उदग्रा सून्नता चासौ हर्म्यावलिश्च सौधसन्ततिश्च ताम्, आश्रिताना-मधिष्ठितानाम्, अङ्गनाना नारीणाम्, नयना युत्पलानीवेति नयनोत्पलानि नेत्रकुवलयानि तेषा श्री शोभा, स्वा स्वकीया सखी वयस्या गङ्गा मन्दाकिनीम्, अवलोकितु द्रष्टु द्राग् झटिति, स्वर्ग त्रिदिव गता सूर्यसुतेव यमुनेव भाति शोभते । उत्प्रेक्षालङ्कार ॥१८॥

यत्प्रासादेति—यूना तरुणाना तति पङ्क्ति समूह इति यावत्, यस्या राजपुर्या प्रासादपरम्पराया भवनश्रेण्या प्रतिफलन्त्य प्रतिबिम्बत्वेन परिणमन्त्यो या देवाङ्गना सुर्य , ताश्च स्वाङ्गनाश्च स्वकीयवल्लभा-श्चेति द्वन्द्वस्तासु भेद वैशिष्ट्यम्, दृष्टिषु नयनेषु निमेष पक्ष्मपात एव कौशल नैपुण्य तस्य वशस्तस्मात्, जानाति बुध्यते, तत्रत्या युवतयो देवीसन्निभा आसन् केवल निमेष एव तासा नारीत्वबोधको बभूव । देवीना नयनेषु निमेषो न जायत इति प्रसिद्धि । अभ्राजिरे गगनाङ्गणे, स्वर्भानू राहु , यस्या नगर्या वैडूर्यशिरो-गृहस्थाना नीलमणिमयाग्रनिकेतनपृष्ठस्थिताना सुदतीना शोभनदन्ताना नारीणा वक्त्रेन्दुबिम्ब मुखचन्द्र-मण्डल, विधोश्च चन्द्रमसश्च, बिम्बमेव मण्डलमपि, समीक्ष्य विलोक्य, सशय कोऽत्र चन्द्र इति सदेहम्, अगात् प्रापत् , इण् गतावित्यस्य लुङि रूपम् 'इणो गाङ् लुङि' इति गाङादेश । यत्रत्यसुन्दरीवदनानि विधुबिम्ब-सदृशान्यासन्निति भाव । पूर्वार्धे व्यतिरेक उत्तरार्धे च सशयालङ्कार ॥ १९ ॥

यत्सौधानिति—यस्या राजपुर्या सौधान् राजभवनानि, अवलोक्य दृष्ट्वा, निर्जरपतिरिन्द्र द्राक् क्षिप्रम्, निर्निमेष पक्ष्मपातरहित , अभवद् बभूव, सौधाना शोभातिशय दृष्ट्वा विस्मयेन विनिमेषोऽभूदिति भाव । यस्या नगर्या , सरोजे कमलै शोभिनी समुल्लासिनी परिखा खात ताम्, वीक्ष्य विलोक्य, गङ्गा भागीरथी, विषाद खेद पक्षे विषमत्तीति विपाद शिवस्त गता प्राप्ता । यत्रत्यानि यत्रभवानि जिनालयानि जिनेन्द्रमन्दिराणि कलयन्पश्यन् मेरुर्हेमाद्रि , स्वकस्यात्मन आर्तस्वर पीडाजनितवैस्वर्य पक्षे स्वस्य कार्तस्वर स्वस्य सुवर्णमयत्वम्, स्वीचक्रेऽङ्गीचकार, सुरपुरी च देवपुरी च, या राजपुरी, वीक्ष्य दृष्ट्वा, शोकाकुला दु खव्यग्रा सती बलद्विषमिन्द्र पक्षे बवयोरैक्याद्बलद्विप पराक्रमरिपु निर्बलमिति यावत्, स्वीचक्र इति क्रियया सम्बन्ध । निर्जरपतिप्रभृतीना स्वभावसिद्धेषु निर्निमेषत्वादिषु सौधादीना दर्शनस्य कारण-त्वेनो प्रेक्षणादुत्प्रेक्षालङ्कार , तच्च श्लेषोऽनुप्राणयति ॥ २० ॥

१ —स्या, ब० ।

शास्ति स्म शस्तमहिमा महनीयवृत्ति-
स्ता भूपमौलिमणिरञ्जितपादपीठ ।
सत्यधरक्षितिपतिर्भुवि यस्य कीर्ति
प्रत्यर्थिभि सह दिगन्तमवाप शुभ्रा ॥ २१ ॥

यश्च किल सक्रन्दन इवानन्दितसुमनोगण, अन्तक इव महिषीसमधिष्ठित, वरुण इवाशान्तरक्षण, पवन इव पद्मामोदरुचिर, हर इव महासेनानुयात, नारायण इव वराहवपुष्कलोदयोद्धृतधरणीवलय, सरोजसभव इव सकलसारस्वतामरसभानुभूति भद्रगुणोऽप्यनागो, विबुधपतिरपि कुलीन, सुवर्णधरोऽप्यनादित्याग, सरसार्थपोषकवचनोऽपि नरसार्थपोषकवचन, आगमाल्याश्रितोऽपि नागमाल्याश्रित ।

---

अथ नगरीवर्णनानन्तर राजान वर्णयितुमाह—शास्ति स्मेति—शस्तो महिमा यस्य स प्रशस्तमाहात्म्योपेत महनीया श्लाघनीया वृत्तिर्व्यवहृतिर्यस्य स, भूपाना पार्थिवाना मौलिमणिभिर्मुकुटरत्नै रञ्जितोऽरुणीकृत पादपीठश्चरणासन यस्य स, सत्यधरश्चासौ क्षितिपतिश्चेति सत्यधरक्षितिपति, सत्यन्धराभिधानो नृप, ता राजपुरीम्, शास्ति स्म पालयति स्म, यस्य नृपस्य शुभ्रा धवला, कीर्ति समज्ञा, 'यश कीर्ति समज्ञा च' इत्यमर । भुवि पृथिव्याम्, प्रत्यर्थिभिररातिभि सह सार्धम्, दिगन्त काष्ठान्तम्, अवाप प्राप्ता । विगतारातिरवदातकीर्तिसम्पन्नश्चासावासीदिति भाव । सहोक्तिरलकार ॥ २१ ॥

अथ तस्य वैशिष्ट्य दर्शयितुमाह—यश्चेति—यश्च सत्यन्धर, किलेति वाक्यालङ्कारे ऐतिह्ये वा, सक्रन्दन इव पुरन्दर इव, आनन्दित समाह्लादित सुमनसा विदुषा गण समूहो येन, पुरन्दरपक्षे सुमनोगणो देवसमूह, अन्तक इव यम इव महिष्या कृताभिषेकया पट्टराज्ञ्या समधिष्ठितो युक्त, यमपक्षे स्ववाहनभूतमहिषपत्नीसहित, वरुण इव प्रचेता इव, आ समन्ताच्छान्त निरुपद्रव रक्षण यस्य स, वरुणपक्षे आशान्तस्य पश्चिमकाष्ठान्तस्य रक्षण यस्मात्स, पवन इव समीर इव, पद्माया लक्ष्म्या आमोदेन हर्षेण रुचिरो मनोहर, पवनपक्षे पद्माना कमलानामामोदेन सौरभातिशयेन रुचिर सुभग, हर इव शिव इव, महासेनया विशालपृतनयाऽनुयातोऽनुगत, शिवपक्षे महासेनेन कार्तिकेयाभिधानेन स्वपुत्रेणानुयातोऽनुगत, नारायण इव विष्णुरिव, वराहवेषूत्कृष्टयुद्धेषु य उदयो विजयस्तेनोद्धृत समुन्नमित धरणीवलय महीमण्डल येन स, विष्णुपक्षे वराहस्य सूकरस्य वपुष्कलया शरीरकलया य उदयोऽवतारस्तेनोद्धृत रसातलात्समुन्नीत धरणीवलय भूमण्डल येन स, सरोजसभव इव वेधा इव कलाभिश्चातुरीभि सहित सकल, सारो बल स्व धन यस्य स सारस्व, तामरसस्य कमलस्येव भाया दीप्तेरनुभूतिरुपभोगो यस्य स, सकलश्चासौ सारस्वश्चेति सकलसारस्व सकलसारस्वश्चासौ तामरसभानुभूतिश्चेति सकलसारस्वतामरसभानुभूति, अथवा सकला समग्रा ये सारस्वता सरस्वतीभक्ता पण्डितास्तेषा ग्रामरसभा स्थायिसमितिस्तस्यामनुभूति प्रभावो यस्य स, वेधपक्षे सकला सचातुरीका समग्रा वा येऽमरा देवा अथवा सारस्वतामरा लौकान्तिकदेवविशेषास्तेषा सभायामनुभूति प्रभावो यस्य स, अत्र सर्वत्र श्लिष्टोपमालङ्कार । भद्रगुणोऽपि दिग्गजविशेषगुणोऽपि अनागोऽगज पक्षे भद्रगुणयुक्तोऽप्यपराधशून्य, आगश्शब्दस्यादन्तत्वमपि क्वचित्प्रयुज्यते, विबुधपतिरपीन्द्रोऽपि को पृथिव्या लीन स्थित पक्षे विबुधाना विदुषा पति स्वामी विद्वच्छ्रेष्ठोऽपि सन् कुलीनोऽभिजात, सुवर्णधरोऽपि सुमेरुरपि, अनादित्यागोऽसूर्यपर्वत सूर्यागमनरहितशैल इति यावत् पक्षे सुवर्णधरोऽपि सुन्दररूपधारकोऽपि, अनादिरादिरहितस्त्यागो दान यस्य स, रसेनोपलक्षितोऽर्थो रसार्थस्तस्य पोषकाणि समर्थकानि वचनानि यस्य तथाभूतोऽपि सन्, न तथाभूत इति नरसार्थपोषकवचन पक्षे नराणा मनुजाना सार्थस्य समूहस्य पोषकाणि वचनानि यस्य स, आगमस्याप्तनिबन्धनशास्त्रस्यालया पङ्क्त्याऽऽश्रितोऽपि सेवितोऽपि तथा न भवतीति नागमाल्याश्रित पक्षे नागाना गजाना मालयेन पङ्क्त्याऽऽश्रित सेवित सहित इति यावत् । अत्र सर्वत्र विरोधाभासालङ्कार । अस्तीति शेष ।

कीर्तिर्यस्य दिगङ्गनाकुचतटीपाटीरसवादिनी
तेज श्री किल तत्र कुङ्कुमकृतालकारशङ्कावहा ।
आज्ञा यस्य महामहीशमकुटीष्वाकल्पमालायते
यत्सेवा सकृदर्थिना परिचिता स्वर्गद्रुवर्गायते ॥ २२ ॥

यस्मिञ्छासति महीमण्डल मदमालिन्यादियोगो मत्तद तावलेषु, पराग कुसुमनिकरेषु, नीचसेवना निम्नगासु, आर्तवत्त्व फलितवनराजिषु, करपीडन नितम्बिनीकुचकुम्भेषु, विविधार्थचिन्ता व्याख्यानकलासु, नास्तिवादो नारीमध्यप्रदेशेषु, गुणभङ्गो युद्धेषु, खलसङ्ग कलमकुलेषु, अपाङ्गता कुरङ्गाक्षीलोचनतरङ्गेषु, मलिनमुखता मानिनीस्तनमुकुलेषु, आगमकुटिलता भुजङ्गेषु, अजिनानुराग शूलपाणौ, सोपसर्गता धातुषु, दरिद्रभाव शातोदरीणामुदरेषु, द्विजिह्वता फणिषु, पला-

तमेव वर्णयितुमाह—कीर्तिरिति—यस्य सत्यन्धरस्य, कीर्ति समज्ञा यश इति यावत्, दिगङ्गनाना काष्ठाकामिनीना कुचतटीषु वक्षोजप्रदेशेषु पाटीरस्य चन्दनस्य सवादिनी समर्थिका तत्तुल्येति यावत् । तेज श्री प्रतापलक्ष्मी, तत्र दिगङ्गनाकुचतटीषु कुङ्कुमेन काश्मीरेण कृतो विहितो योऽलङ्कारो भूषा तस्य शङ्कावहा सदेहोत्पादिका, अस्तीति शेष, किलेति वार्तायाम् । यस्य नृपस्य, आज्ञा निदेश, महामहीशाना महाराजाना मकुटीषु मौलिषु, आकल्पमालेव नेपथ्यस्रगिवाचरतीत्याकल्पमालायते । सकृदेकवारम्, परिचिता प्राप्ता, यस्य नृपस्य सेवा शुश्रूषा, अर्थिना याचकानाम्, स्वर्गद्रव कल्पवृक्षास्तेषा वर्ग समूह इवाचरति । उपमा ॥२२॥

अथ श्लेषगर्भेण परिसख्यालङ्कारेण तमेव वर्णयितुमाह—यस्मिन्निति—यस्मिन् सत्यन्धरे महीमण्डल पृथिवीवलय शासति रक्षति सति, मदमालिन्यादियोगो दानजन्यकालुष्यादिसबन्ध, मत्तदन्तावलेषु मत्तमतङ्गजेष्वेव परमत्यन्त व्यवस्थित नान्यत्र गर्वजन्यकालुष्यादिसम्बन्धो बभूव, पराग कौसुम रज कुसुमनिकरेषु पुष्पसमूहेष्वेव नान्यत्र परागो महापराधो बभूव, नीचस्य निम्नस्थानस्य सेवना प्राप्ति निम्नगासु नदीष्वेव नान्यत्र नीचाना क्षुद्राणा सेवनोपासना बभूव, ऋतूना विकार आर्तव तस्य भाव आर्तवत्व, फलिता सज्जातफला या वनराजय काननपङ्क्तयस्तासु नान्यत्रार्त्तवता दु खवता भाव आर्त्तत्त्व दु खमिति यावद् बभूव, करैर्युवजनपाणिभि पीडन समर्दन नितम्बिनीना कामिनीना कुचकुम्भेषु स्तनकलशेष्वेव नान्यत्र करैर्वलिभिर्नृपतिग्राह्यद्रव्यभागैरिति यावत् पीडन क्लेशो बभूव, विविधार्थाना नैकविधपदार्थाना चिन्ता विचारो व्याख्यानकलासु देशनाचातुरीष्वेव नान्यत्र विविधाना नैकप्रकाराणामर्थाना लवणतैलहिङ्गुगुडादीना चिन्ता बभूव, नास्तिवाद कृशतर वेन नास्त्येवेति कथन नारीणा वनिताना मध्यप्रदेशेषु कटिस्थानेष्वेव नान्यत्र नास्तिवादोऽभिलषितपदार्थाभावनिवेदन बभूव, गुणस्य मौर्व्या भङ्गो विनाशश्छेद इति यावत्, युद्धेषु समरेष्वेव नान्यत्र गुणाना दयादाक्षिण्यादीना भङ्गो विनाशो बभूव, खलेन गोधूमादिधान्यपवित्रीकरणयुक्तस्थानविशेषेण सङ्ग समागम, कलमकुलेषु व्रीहिसमूहेष्वेव नान्यत्र खलैर्दुष्टै सङ्ग ससर्गो बभूव, अपाङ्गता कटाक्षता कुरङ्गाक्षीणा मृगलोचनाना लोचनतरङ्गेषु नयनपरम्परास्वेव नान्यत्रापाङ्गता विकलाङ्गता बभूव, मलिनमुखता कृष्णाग्रता मानिनीना नारीणा स्तनमुकुलेषु कुचकुड्मलेष्वेव नान्यत्र मलिनमुखता दुर्जनता बभूव, दुर्जनो हि कृष्णवदनत्वेन प्रसिद्ध, आगम आगमने कुटिलता वक्रत्व भुजङ्गेषु सर्पेष्वेव नान्यत्रागमे सिद्धान्ते कुटिलता वक्रत्व मायावित्व बभूव, अजिने चर्मण्यनुराग प्रीति शूलपाणौ शिव एव नान्यत्र जिनानुरागस्य जिनेन्द्रभक्तेरभावोऽजिनानुरागो बभूव, सोपसर्गता प्राद्युपसर्गसहितता धातुष्वेव भूप्रभृतिधातुष्वेव नान्यत्र सोपसर्गता सोपद्रवता बभूव, दरिद्रता कृशता शातोदरीणा कृशोदरीणा नारीणामुदरेषु जठरेष्वेव नान्यत्र दरिद्रभावो निर्धनत्व बभूव, द्विजिह्वता सर्पत्व फणिषु सर्पेष्वेव नान्यत्र द्विजिह्वता पिशुनता बभूव, पलाशिता पत्रसहितता विपिनतरुषण्डेषु काननानोकहकलापेष्वेव नान्यत्र पल मासमश्नातीति पलाशी तस्य भाव

शिता विपिनतरुषण्डेषु, अधरराग सुदतीमुखकमलेषु तीक्ष्णता कोविदबुद्धिषु, कठिनता कान्ता-कुचेषु, नीचता नाभिगह्वरेषु, विरोध पञ्जरेषु, अपवादिता नीरोष्ठ्यकाव्येषु, घनयोगभङ्गो वर्षाव-सानेषु, कलिकोपचार कामसतापेषु, कलहसकुल क्रीडासरसीषु परमेव व्यवस्थितम् ।

वक्त्र चन्द्रप्रभ यद्भुजयुगमजित यस्य गात्र सुपार्श्वं
　　कृत्य स्वाधीनधर्म्यं हृदि पुरुचरित शीतल सुव्रताढ्यम् ।
राज्य श्रीवर्धमान कुलमतिविमल कीर्तिवृन्द त्वनन्त
　　सोऽय प्रत्यक्षतीर्थेश इव विजयते विश्वविद्याविनोद ॥ २३ ॥

यत्पाणिपल्लवधृतासिजलान्निमज्ज-
　　च्छत्रुव्रजात्समुदिता जलबिन्दुराजिम् ।
तारावलीति तु वदन्ति जना मृषैत-
　　त्त्रान्यथा मकरमीनकुलीरका के ॥ २४ ॥

---

पलाशिता मासाशित्व बभूव, अधरे दन्तच्छदे रागोऽरुणिमा सुदतीना नारीणा मुखकमलेषु वदनारविन्देष्वेव नान्यत्राधरेषु नीचेषु राग प्रीतिरधररागो बभूव, तीक्ष्णस्य भावस्तीक्ष्णता कुशाग्रता कोविदाना विपश्चिता बुद्धयो धियस्तास्वेव नान्यत्र तीक्ष्णता तिग्मता कठोरतेति यावद् बभूव, कठिनता कठोरता कान्ताना वनितानां कुचेषु वक्षोजेष्वेव नान्यत्र कठिनता निर्दयता बभूव, नीचता गभीरता नाभिगह्वरेषु तुन्दिगर्ते-ष्वेव नान्यत्र नीचता खलता बभूव, वीना पक्षिणा रोध आवरण पञ्जरेषु शलाकायन्त्रेष्वेव नान्यत्र विरोधो विद्वेषो बभूव, पश्च वश्चेति पवौ तावादी येषा ते पवादय पकारवकारप्रभृतिवर्णा , न सन्ति पवादयो येषु तान्यपवादीनि, तेषा भावोऽपवादिता नीरोष्ठ्यकाव्येषु—ओष्ठस्थानोच्चारणयोग्यपवर्गादि वर्णरहितकाव्येष्वेव नान्यत्र, अपवादो निन्दास्ति येषा तेऽपवादिनस्तेषा भावोऽपवादिता बभूव, घनैर्मेघैर्योग सङ्गो घनयोगस्तस्य भङ्गो विरहो वर्षावसानेषु प्रावृट्समाप्तिष्वेव नान्यत्र घनो निविडो यो योग सम्बन्धस्तस्य भङ्गो विनाशो बभूव, कलिकाना पुष्पदलानामुपचार शय्यादिषु प्रयोग कामसतापेषु मदनज्वरेष्वेव नान्यत्र कलिषु कलहेषु कोपस्य क्रोधस्य चारो गमन बभूव, कलहसाना कादम्बाना कुल समूह क्रीडासरसीषु केलि कासारेष्वेव नान्यत्र सकुल सन्ततियुत कलह विद्वेषो बभूव । परिसख्यालकार ।

वक्त्रमिति—विश्वासा विद्याना विनोदो विश्वविद्याविनोदो निखिलागमकोविद , सोऽय सत्य-न्धर , प्रत्यक्षतीर्थेश इव प्रत्यक्षतीर्थंकर इव विजयते सर्वोत्कर्षेण वर्तते 'विपराभ्या जे ' इत्यात्मनेपदम्, तथाहि यस्य राज्ञ वक्त्र वदन चन्द्रस्य प्रभेव प्रभा यस्य तत् पक्षेऽष्टमतीर्थंकररूपम्, यस्य नृपस्य भुजयो र्बाह्वोर्युग युगलम्, अजित केनाप्यपराभूत पक्षे द्वितीयतीर्थंकृद्रूपम्, यस्य गात्र शरीरम्, शोभने पार्श्वे यस्मिस्तत् पक्षे सप्तमतीर्थंकररूपम्, कृत्य कार्यम्, स्वस्याधीन स्वाधीन, धर्मादनपेत धर्म्यं, स्वाधीनञ्च तद् धर्म्यञ्चेति स्वाधीनधर्म्यम् स्वतन्त्र धर्मापेतञ्च पक्षे स्वाधीनपञ्चदशतीर्थंकरम्, हृदि चित्ते, शीतल शान्तम्, सुव्रतेन शोभनव्रतेनाढ्य सहितम्, पुरु विपुल चरित चारित्र पक्षे पुरोर्भगवतो वृषभनाथस्य चरित गमनं शीतल दशमतीर्थंकररूपम्, सुव्रताढ्य विंशतितीर्थंकररूपम्, राज्य साम्राज्यम्, श्रिया लक्ष्म्या वर्धमान-मेधमानम्, पक्षेऽष्टप्रातिहार्योपलक्षितमहावीरतीर्थंकररूपम्, कुल गोत्रम्, अतिविमल निर्मलतरम्, पक्षे त्रयो-दशतीर्थंकररूपम्, कीर्तिवृन्द यश समूहस्तु, अनन्तमन्तातीत पक्षे चतुर्दशतीर्थंकररूपम् । यस्येत्यस्य सर्वत्र सम्बन्ध । श्लेष ॥ २३ ॥

यत्पाणीति—निमज्जन् ब्रुडन् शत्रुव्रज शत्रुसमूहो यस्मिस्तस्मात् , यस्य पाणिपल्लवेन करकिस-लयेन धृतस्य गृहीतस्यासे खड्गस्य जल पानीय तस्मात् , समुदिता समुच्छालिताम्, जलबिन्दूना तोय पृषताना राजि पङ्क्तिम्, ताराणा नक्षत्राणामावली पङ्क्तिरिति तु जना लोका , वदन्ति कथयन्ति, एतल्लोक-कथनम्, मृषा मिथ्या, अस्तीति शेष , अन्यथा मृषात्वाभावे, तत्र तारावल्याम्, मकराश्च नक्राश्च,

यस्य च वदनतटे कोपकुटिलितभ्रुकुटिघटितेऽशरणतया वन प्रति धावमानाना प्रतिपक्षपार्थिवाना वृक्षराजिरपि वातान्दोलितशाखाहस्तेन पतत्रिविरुतेन च राजविरोधिनोऽत्र न प्रवेष्टव्या इति निषेध कुर्वाणा तामतिक्रामत्सु तेषु राजापराधभयेनेव प्रवातकम्पमाना विशङ्कटकण्टकेन केशेषु कर्षतीति शङ्कामङ्कुरयामास । यस्य प्रतिपक्षलोलाक्षीणा काननवीथिकादम्बिनीशम्पायमानतनुसपदा वदनेषु वारिजभ्रान्त्या पपात हसमाला, ता कराङ्गुलीभिर्निवारयन्तीना तासा करपल्लवानि चकर्षु कीरशावका, हा हेति प्रलपन्तीना कोकिलभ्रान्तिभाविता शिरस्सु कुट्टायित कुर्वन्ति स्म करटा, ततश्चलितवेणीनामेणाक्षीणा नागभ्रान्त्या कर्षन्ति स्म वेणी मयूरा, ततो दीर्घ निश्वासमातन्वतीना तद्गन्धलुब्धमुग्धमधुकरा मदान्धा समापतन्त पश्यन्तोऽपि नासाचम्पक न निवृत्ता बभूवु, गुरुतरनितम्बकुचकुम्भभारानताना वेधसा स्तनकलशसृष्ट काठिन्य पादपद्मेषु वाञ्छन्तीना धावनोद्युक्तमनसा चलितपादयुगलप्रसृतनखचन्द्रचन्द्रिकासु समिलिताश्चकोरा उप-

---

मीनाश्च, पाठीनाश्च, कुलीरकाश्च कर्कटाश्च, इत्येषा द्वन्द्वो जलजन्तुविशेषा, के किन्नामधेया सन्तीति शेष, जलजन्तवो जलबिन्दुष्वेव निवसन्ति न च तारावलयाम्, पक्षे मकरादयो राशिविशेषा । अपह्नुतिरलकार ॥२४॥

अथ तस्य प्रभावातिशय वर्णयितुमाह—यस्येति—यस्य सत्यन्धरभूपालस्य, वदनतटे मुखतटे, कोपेन क्रोधेन कुटुलिताभ्या भ्रुकुटिभ्या घटिते सहिते सति अशरणतया रक्षकभावेन, वन कानन प्रति धावमानाना वेगेन गच्छताम्, प्रतिपक्षपार्थिवाना शत्रुभूपतीनाम्, वृक्षाणा तरूणा राजिरपि ततिरपि, वातेन वायुनान्दोलिता कम्पिता शाखैव हस्त करस्तेन, पतत्रिणा पक्षिणा विरुत ध्वनिस्तेन च, राज्ञो विरोधिनो राजविरोधिनो नृपतिप्रतिकूला, अत्र वने न प्रवेष्टव्या न प्रवेष्टुमर्हा, इति निषेध प्रतिषेध, कुर्वाणा विदधाना, ता वृक्षराजिम्, अतिक्राम सूल्लङ्घयत्सु तेषु प्रतिपक्षपार्थिवेषु, राज्ञोऽपराधो राजापराधस्तस्माद्भय भीतिस्तेनेव, प्रवातेन प्रकृष्टवायुना कम्पमाना सती, विशङ्कटकण्टकेन विशालकण्टकै, जातित्वादेकवचनम्, केशेषु कचेषु कर्षतीति शङ्का सशीतिम्, अङ्कुरयामास प्रादुर्भावयामास । उत्प्रेक्षालङ्कार ।

यस्येति—काननवीथि श्यामलवनसरणिरेव कादम्बिनी मेघमाला तस्या शम्पायमाना विद्युदिवाचरन्ती तनुसपच्छरीरसपत्तिर्यासा तासाम्, यस्य नृपस्य, प्रतिपक्षलोलाक्षीणा शत्रुचपललोचनानाम्, वदनेषु मुखेषु, वारिजभ्रान्त्या कमलविभ्रमेण, हसमाला मरालपङ्क्ति, पपात पतति स्म । ता हसमालाम्, कराङ्गुलीभिर्हस्तशाखाभि, निवारयन्तीना प्रतिषेधयन्तीना तासा शत्रुस्त्रीणा करपल्लवानि पाणिकिसलयान्, 'पल्लवः किसलयोऽस्त्रियाम्' इत्यमर, कीरशावका शुकशिशव, चकृषु कर्षन्ति स्म । हा हेति दुःखप्रदर्शकशब्दमुच्चार्य प्रलपन्तीना विलपन्तीना तासा शिरस्सु मूर्धसु, कोकिलाना पिकाना भ्रान्त्या भ्रमेण भाविता युक्ता करटा काका, कुट्टायितमनुकरणशब्द, आघात कुर्वन्ति स्म विदधति स्म । तत शिरस्सु करटकृतकुट्टायितानन्तरम्, चलिता पतिता वेण्य कवर्यो यासा तासाम्, एणाक्षीणा मृगनेत्राणाम्, वेणी कवरी केशपाशमिति यावत्, नागाना सर्पाणा भ्रान्त्या सन्देहेन, मयूरा केकिन, कर्षन्ति स्म चकृषु, ततस्तदनन्तरम्, दीर्घमायतम्, नि श्वास श्वासोच्छ्वासम्, आतन्वतीना विस्तारयन्तीना तासाम्, मदेन गर्वेण मकरन्दपानजनितमोहेन वान्धा व्यपगतलोचना, समापतन्त समन्तादागच्छन्त तासा गन्धे लुब्धास्तद्गन्धलुब्धा, तद्गन्धलुब्धाश्च ते मुग्धाश्चेति तद्गन्धलुब्धमुग्धा, तथाभूताश्च ते मधुकराश्च भ्रमराश्चेति तद्गन्धलुब्धमुग्धमधुकरा, नासा नासिकैव चम्पक चाम्पेयम् तत्, पश्यन्तोऽपि विलोकयन्तोऽपि निवृत्ता विमुखा न बभूवु । भ्रमरा हि चम्पकोपरि न पतन्ति, तद्गन्धलुब्धास्तु ते नासाचम्पक पश्यन्तोऽपि तन्मुखोपरि सम्पेतुरिति भाव । गुरुतरा अतिपीना ये नितम्बकुचकुम्भा जघनवक्षोजकलशास्तेषा भारेणानताना नम्राणा वेधसा प्रजापतिना, स्तनकलशेषु कुचकुम्भेषु सृष्ट रचित, काठिन्य कठोरत्व, पादपद्मेषु चरणकमलेषु, वाञ्छन्तीनामभिलषन्तीनाम्, धावने वेगगमन उद्युक्त मनो मानस यासा तासाम्,

रुन्धन्ति स्म मार्गम्, ततो भुवि निपत्य लुठन्तीनां सुवर्णसवर्णमुरोजयुगलं पक्वतालफलभ्रान्त्या कदर्थयन्ति वानरा, इति राजविरोधिनामरण्यमपि न शरण्यम्। किं च–

यस्य प्रतापतपनेन [1]चतुर्षु दिक्षु
निःशेषिता किल पयोनिधयः क्षणेन।
प्रत्यर्थिभूपसुदतीनयनाम्बुपूरैः
संपूरिताः पुनरतीत्य तटं ववल्गुः ॥ २५ ॥

यस्य च रिपुमहिला वनमध्यमध्यासीना वनमोहनसजातमञ्जुलमालतीलतानुकारिण्यः स्वशिशुभ्यः पूर्ववासनावशेन क्रीडाराजहंसमानयेति निर्भर्त्सयद्भ्यो बाष्पाम्बुपूरपूरितवदनकमलनयनमीनप्रतिबिम्बपरिष्कृतस्तनान्तरसरोवरप्रतिफलितचन्द्रमसं निर्दिश्यायं ते हंसो ममापि विरहाग्निव्यालीढवपुषस्तथेति परिसान्त्वयामासुः, कदाचिन्मामकीनक्रीडामयूरं दर्शयेति रोदनपरवशेभ्यः स्वार्भकेभ्यो मयूरीपुरतो नृत्यकलाविलासिनं कलापिनं निर्दिश्य तवायं शिखी ममापि तथेति सगद्गदमालपन्ति स्म।

---

मार्गं पन्थानम्, चलितानां निक्षिप्तानां पादयुगलानां चरणकमलानां प्रसृता विस्तृता या नखचन्द्रचन्द्रिका नखरेन्दुज्योत्स्नास्तासु, संमिलिता एकत्र संगताः, चकोरा जीवजीवाः, उपरुन्धन्ति समावृण्वते स्म। ततस्तदनु, भुवि पृथिव्याम्, निपत्य पतित्वा, लुठन्तीनां लुण्ठनं कुर्वन्तीनाम्, तासाम् सुवर्णसवर्णं काञ्चनकल्पम्, उरोजयुगलं स्तनयुग्मम्, पक्वानि परिणतानि यानि तालफलानि तेषां भ्रान्तिस्तया, वानराः कपयः, कदर्थयन्ति पीडयन्ति, इतीत्थम्, राजविरोधिनाम् नृपतिप्रतिकूलानाम्, अरण्यमपि काननमपि शरण्यं शरणे साधु, न—नो वर्तत इति शेषः। भीत्या वनं गता अपि प्रत्यर्थिनस्तत्र शरणमलभमानाः सत्यन्धरस्यैव शरणमुपाजग्मुरिति भावः। किञ्चान्यत्–

यस्येति—यस्य सत्यन्धरस्य, प्रतापस्तेज एव तपनः सूर्यस्तेन 'स प्रभावः प्रतापश्च यत्तेजः कोशदण्डजम्' इत्यमरः, चतुर्षु दिक्षु चतसृषु काष्ठासु, अत्र चतुर्ष्विति पुंस्त्वप्रयोगश्चिन्त्यः, सामान्ये नपुंसकं वा, पयोनिधयः सागराः, क्षणेनाल्पेनैव कालेन, निःशेषिता निःशेषेण शोषिता निर्जलत्वं प्रापिताः, किलेति वार्तायाम्, पुनरनन्तरम्, प्रत्यर्थिभूपानां शत्रुमहीपालानां सुदतीनां वल्लभानां नयनाम्बुपूरैरश्रुप्रवाहैः संपूरिताः संभृताः सन्तः, तटं तीरम्, अतीत्य समुल्लङ्घ्य, ववल्गुः संचलन्ति स्म। अतिशयोक्तिः ॥२५॥

यस्य चेति—वनमध्यं काननमध्यम्, अध्यासीना अधिष्ठिताः, वने कानने मोहनार्थं विभ्रमार्थं संजाताः समुत्पन्ना या मञ्जुलमालतीलता मनोहरजातीवल्लयस्तासामनुकारिण्यः प्राप्तसादृश्याः, यस्य च नृपतेश्च, रिपुमहिलाः शत्रुस्त्रियः, पूर्वा चासौ वासना च पूर्ववासना तस्या वशस्तेन पुरातनसंस्कारनिघ्नत्वेन, क्रीडायाः केल्या राजहंसो मरालविशेषस्तम्, आनय समर्पय, इतीत्थम्, निर्भर्त्सयद्भ्यस्तर्जनं कुर्वद्भ्यः स्वशिशुभ्यः स्वीयाबालकेभ्यः, बाष्पाम्बुपूरेणाश्रुप्रवाहेन पूरितः संभृतः, वदनकमलानां मुखमहोत्पलानां नयनमीनानां लोचनशफरीणां च प्रतिबिम्बेन प्रतिफलनेन परिष्कृतः सहितश्च यः स्तनान्तरसरोवरः कुचमध्यवर्तिकासारस्तस्मिन् प्रतिफलितः प्रतिबिम्बितो यश्चन्द्रमास्तम्, निर्दिश्य प्रदर्श्य, अयं दृश्यमानः, ते तव हंसो मरालः, विरहाग्निना वियोगानलेन व्यालीढं व्याप्तं वपुः शरीरं यस्यास्तस्या ममापि हतभाग्यायाः, तथा तादृशः, हंसः सूर्यः 'हंसः पक्ष्यात्मसूर्येषु' इत्यमरः। इत्येव प्रकारेण, परिसान्त्वयामासुः शमयन्ति स्म। तान् स्वशिशूनिति सम्बन्धः।

कदाचिदिति—कदाचित् जातुचित्, ममायं मामकीनः स चासौ क्रीडामयूरश्च तं मदीयकेलिकलापिनम्, दर्शय दृष्टिगोचरं कुरु, इतीत्थम्, रोदनपरवशेभ्यो रुदद्भ्यः, स्वासामर्भकास्तेभ्यः स्वकीयशिशुभ्यः

---

[1] अत्र 'दिक्षु' इति स्त्रीविशेष्यस्य 'चतुर्षु' इति पुंविशेषणं चिन्त्यम्।

तस्य सत्यधरस्यासीत्कान्ता कान्त्यधिदेवता।
वेला लावण्यपाथोधेर्विश्रुता विजयाख्यया॥ २६॥

सौदामिनीव जलद नवमञ्जरीव
चूतद्रुम कुसुमसपदिवाद्यमासम्।
ज्योत्स्नेव चन्द्रमसमच्छविभेव सूर्य
त भूमिपालकमभूपयदायताक्षी॥ २७॥

अस्या पादयुग गलश्च वदन किञ्चाब्जसाम्य दधु
कान्ति पाणियुग [1]दृशौ च विदधु पद्माधिकोल्लासताम्।
वेणी मन्दगति कुचौ च बत हा सन्नागसकाशता
स्वीचक्रु सुदृशोऽङ्गसौष्ठवकला दूरे गिरा राजते॥ २८॥

---

'पोत पाकोऽर्भको डिम्भ पृथुक शावक शिशु' इत्यमर। मयूरीपुरत, मयूर्या पुरस्तात्, नृत्यस्य ताण्डवस्य कलया चातुर्येण विलसति शोभत इत्येवशीलस्तम्, कलापिन मयूरम्, निर्दिश्य प्रदर्श्य, अथ पुरोवर्तमान तव शिखी मयूर, ममापि मन्दभाग्याया, तथा शिखा वह्नि, इत्येव प्रकारेण, सगद्गद यथा स्यात्तथा, आलपन्ति स्म कथयन्ति स्म। श्लेषालङ्कार।

अथ तस्य सत्यन्धरस्य भार्यां वर्णयितुमाह—तस्येति—तस्य पूर्वोक्तस्य सत्यन्धरस्यैतन्नाममहीपते, का तेर्दीप्तेरधिदेवताधिष्ठातृदेवी, लावण्यपाथोधे सौन्दर्यसागरस्य, वेला तटी, विजयाख्यया विजयेति नाम्ना विश्रुता प्रख्याता, कान्ता वल्लभा, आसीद् बभूव॥२६॥

ता वर्णयितुमाह—सौदामिनीवेति—आयते अक्षिणी यस्या सा विशाललोचना सा विजया, सौदामिनी तडित्, जलद मेघमिव, नवमञ्जरी नूतनपुष्पस्रक् चूतद्रुममिव माकन्दमहीरुहमिव, कुसुमसपत् पुष्पसम्पत्ति, आद्यमासमिव चैत्रमासमिव ज्योत्स्ना चन्द्रिका, चन्द्रमसमिव शशिनमिव, अच्छविभा निर्मलप्रभा सूर्यमिव प्रभाकरमिव, त भूमिपालक सत्यन्धरमहीपालम्, अभूपयदलञ्चकार। मालोपमा॥२७॥

अस्या इति—किञ्चान्यत्, अस्या विजयामहादेव्या, पादयुग चरणयुगलम्, गल कण्ठ, वदन च मुख च, अब्जाना साम्य सादृश्य दधुर्दधति स्म, पादयुगपक्षेऽब्जस्य कमलमिति, गलपक्षे शङ्ख इति, वदनपक्षे चन्द्र इति चार्थ। 'अब्जा धन्वन्तरौ चन्द्रे निचुले क्लीबमम्बुजे। अस्त्री कम्बुनि' इति विश्वलोचन, कान्तिर्दीप्ति, पाणियुग हस्तयुगलम्, दृशौ च नयने च, पद्माधिकोल्लासता पद्माधिकशोभाम्, विदधुश्चक्रु, कान्तिपक्षे पद्माया लक्ष्म्या अधिकोल्लासतामधिकशोभामिति, पाणियुगपक्षे, पद्मेभ्य कमलेभ्य स्वाभिलपितदायकत्वेन निधिविशेषेभ्यो वाधिकोल्लासतामधिकशोभामिति, दृक्पक्षे च पद्मेभ्यो मृगेभ्य कमलेभ्योवाधिकोल्लासतामधिकशोभामिति चार्थ। 'पद्मोऽस्त्री पद्मनालेऽब्जे व्यूहसख्यान्तरे निधौ। पद्मके नागभेदे ना पद्मा भाङ्गाश्रियो स्त्रियाम्' इति विश्वलोचन। वेणी कवरी मन्दगतिर्मन्थरगति, कुचौ च स्तनौ च, सन्नागसकाशता सन्नागसादृश्यम्, स्वीचक्रुरङ्गीचक्रु, वेणी पक्षे सश्चासौ नागश्च सन्नाग सत्सर्पस्तस्य सकाशता सादृश्यमिति, मन्दगतिपक्षे सश्चासौ नागश्च हस्ती चेति सन्नागस्तस्य सकाशता समानतामिति, कुचपक्षे न गच्छत इति नगौ, नगावेव नागौ, सन्तौ च तौ नागौ चेति सन्नागौ सत्पर्वतौ, यद्वा सन्नौ निकटवर्तिनौ च तौ नागौ च पर्वतौ चेति सन्नागा तयो सकाशताम् सदृशतामिति चार्थ। 'नाग पन्नगपुन्नागनागकेसरदन्तिषु' इति विश्वलोचन। इत्थम्, अस्या सुदृश सुलोचनाया विजयाया इति यावत्, अङ्गाना हस्तपादाद्यवयवाना सौष्ठवकला सौन्दर्यकला, गिरा वाणीना, दूरे विप्रकृष्ट राजते शोभते। वागगोचराङ्गशोभावती सासीदिति भाव। 'बत' 'हा' इत्यव्ययद्युग विस्मयार्थे पादपूर्तौ वा। श्लिष्टोपमा॥२८॥

---

१ कचश्च ब०।

अमूर्त्तेरप्यनङ्गस्य सत्सु सञ्जीवनेष्विव ।
अन्येष्वन्तःपुरेष्वेषा राज्ञः प्राणा इवाभवत् ॥ २९ ॥

शृङ्गारसागरतरङ्गपरम्परां तां
देवीं सुखेन रमयन्नधिपो नराणाम् ।
आनन्दसिन्धुजठरे विलुठन्सदाय
गीर्वाणराजपदवीं च तृणाय मेने ॥ ३० ॥

अथैकदा भूपालमणिरयमग्रगण्योऽपि प्राज्ञपरिषदामधिपतिरपि राजनयविदामधिकोऽपि परावरतत्त्वयाथात्म्यवेदिनामुदाहरणमपि सकलसमुचिताचाराणाम्, कामपरतन्त्रितचित्ततया कृत्याकृत्यमजानानः, कर्मसारथिचोदित इव सज्जनवनविलसदङ्गाराय काष्ठाङ्गाराय काश्यपीं दातुमियेष । ततो विदितवृत्तान्ता मूर्तिमन्त इव राजतन्त्रमन्त्रा विवर्ता इव प्रजाभागधेयानां प्रकारा इव कुलप्रतिष्ठायाः परिणामा इव क्ष्मानुरागाणां पारदृश्वानः शास्त्रपाथोनिधीनाममात्यमुख्याः स्वयं समन्त्र्य नरपतिमभ्येत्य समुचितं विज्ञापयामासुः ।

देव त्वयि प्रथितनीतिपयोधिचन्द्रे विज्ञापनं न घटते ध्रुवमस्मदीयम् ।
विश्वप्रसिद्धसुरभौ मृगनाभिपुञ्जे मल्लीसुमेन सुरभीकरणं यथेह ॥ ३१ ॥

---

अमूर्तेरिति—अमूर्तेरपि शरीररहितस्यापि, अनङ्गस्य कन्दर्पस्य, सञ्जीवनेषु जीवनदायकेषु, अन्येष्वितरेषु, अन्तःपुरेष्ववरोधेषु विविधवनितासमूहेष्विति यावत् । सत्सु विद्यमानेष्वपि, एषा विजया, राज्ञो नरपतेः, प्राणा इव चेतनेव, अभवद् बभूव सर्वाधिकप्रियासीदिति भावः ॥२९॥

शृङ्गारेति—शृङ्गारसागरस्य शृङ्गारपाथोधेस्तरङ्गपरम्परां कल्लोलमालाम्, ताम्, पूर्वोक्ताम्, देवीं महिषीम्, सुखेन शर्मणा, रमयन् क्रीडयन्, सदा शश्वत्, आनन्दसिन्धुजठरे प्रमोदपारावाराभ्यन्तरे, विलुठन् लुण्ठनं कुर्वन्, च, अयं नराणामधिप एष सत्यन्धरो नृपः, गीर्वाणराजस्य पुरन्दरस्य पदवीं पदं तृणाय मेने तृणवत्तुच्छं मेने मन्यते स्म 'मन्यकर्मण्यनादरे' इति चतुर्थी । इन्द्रादप्यात्मानं श्रेष्ठं मन्यते स्मेति भावः ॥३०॥

अथैकदेति—अथानन्तरम्, एकदैकस्मिन् समये, अयं भूपालमणिरेष राजश्रेष्ठः, प्राज्ञपरिषदाम् विद्वत्समितीनाम्, अग्रगण्योऽपि प्रमुखोऽपि, राजनयविदां राजनीतिज्ञानाम् अधिपतिरपि प्रधानोऽपि, परावरतत्त्वानामुच्चावचपदार्थानां याथात्म्यं स्वस्वरूपं विदन्ति जानन्ति, तेषाम्, अधिकोऽपि श्रेष्ठोऽपि सकलाश्च ते समुदाचाराश्च तेषां निखिलोत्तमव्यवहाराणाम्, उदाहरणमपि निदर्शनमपि सन्, कामेन मदनेन परतन्त्रितं स्ववशीकृतं चित्तं मनो यस्य, तस्य भावस्तत्ता तया कृत्याकृत्यम् 'इदं कर्तव्यमिदञ्च न कर्तव्यम्' इति, अजानानोऽबुध्यमानः, कर्मैव सारथिस्तेन चोदितः स इव विधिभूतप्रेरित इव, सज्जना साधव एव वनं काननं तस्मिन् विलसन् शोभमानो योऽङ्गारस्तद्रूपाय, काष्ठाङ्गाराय-एतन्नामसचिवविशेषाय, काश्यपीं क्षितिम्, दातुमियेष दातुमभिलषितवान् ।

तत इति—ततस्तदनु, विदितो विज्ञातो वृत्तान्त उदन्तो यैस्ते, मूर्तिमन्तः शरीरधारिणः, राज्ञा तन्त्रमन्त्रा इव, तन्त्रं स्वराष्ट्रस्य चिन्तनम्, मन्त्रो मन्त्र्यादिभिः सह गुप्तविमर्शः, प्रजाया जनताया भागधेयानि भाग्यानि तेषां विवर्ता इव पर्याया इव, कुलस्य गोत्रस्य प्रतिष्ठा सत्कृतिस्तस्याः प्रकारा इव विशेषा इव, क्ष्मानुरागाणां पृथिवीप्रेम्णाम् परिणामा इव पर्याया इव, शास्त्रपाथोधीनामागममहोदधीनाम्, पारं दृष्टवन्तः पारदृश्वानः पारगामिनः, अमात्यमुख्याः सचिवप्रधानाः, स्वयं स्वत एव, समन्त्र्य सम्यग् विमृश्य, नरपतिं सत्यन्धरमहाराजम्, अभ्येत्य सम्मुखमागत्य, समुचितं सूचितं यथा स्यात्तथा, विज्ञापयामासुर्निवेदयाञ्चक्रुः ॥

देव इति—हे देव हे राजन् ! नीतिरेव पयोधिर्नीतिपयोधिर्नयसागरस्तस्य चन्द्रः शशी, प्रथितः प्रसिद्धश्चासौ नीतिपयोधिचन्द्रश्च तस्मिन्, त्वयि भवति, अस्मदीयं मामकीनम्, विज्ञापनं निवेदनम्, ध्रुवं

अथापि रसनाकण्डूखण्डनाय विनिर्मिता।
विज्ञप्ति श्रोतुमधुना श्रीमन्त सम्प्रतीक्षते ॥ ३२ ॥

देव श्रीमदीयभुजपरिघालालिता भूमिभामिनी भुजा तरारोपणम्, न दनवनोल्लासिता हरिच दनलतेव वना तरम्, चूतवनकलिता मल्ली-वल्लीव स्नुहिवनम्, कमलवनालया लक्ष्मी-रिवार्कवनम्, अरवि दस्य दिमकरन्दमुदिता चञ्चरीकपङ्क्तिरिव गोक्षुरकवनम, सज्जनसदोह-समभ्यस्यमाना विद्येव कुदृष्टिजन नार्हति। अय कि राजधर्म श्रीमद्भिरवश्य ज्ञातव्यो, यन्निज-हृदयमपि सर्वथा न विश्वसनीय किमुत जना तरम्, कि तु सर्वपामपि स्वीयत्वेन विश्वसनीयत्वेन च ज्ञातव्यो यथा च द्रसूर्यौ।

धर्मार्थयुग्म किल काममूलमिति प्रसिद्ध नृप नीतिशास्त्रे।
मूले गते कामकथा कथ स्यात्केकायित वा शिखिनि प्रणष्टे ॥ ३३ ॥

उर्वश्यामनुरागत कमलभूरासावकीर्णा[1] क्षणात्
पार्वत्या प्रणयेन च द्रमकुटीऽप्यर्धाङ्गनोऽजायत।

---

निश्चयेन, तथा तेन प्रकारेण न घटते न सगत जायते, यथा येन प्रकारेण, इह लोके, विश्वस्मिन् निखिल-ससारे प्रसिद्ध प्रथित सुरभिर्गन्धो यस्य तस्मिन्, मृगनाभिपुञ्जे कस्तूरीसमूहे, मल्लीसुमेन मालतीकुसु-मेन, सुरभीकरण सुगन्धीकरण, न घटत इति क्रियासम्बन्ध ॥३१॥

अथापि—अथापि तथापि, रसनाया जिह्वाया कण्डू खर्जन तस्या खण्डन तस्मै, विनिमिता कृता, विज्ञप्ति प्रार्थना, अधुना साम्प्रतम्, श्रोतुमाकर्णयितुम्, श्रीमन्त भवन्तम्, सम्प्रतीक्षते भवत प्रतीक्षा कुरुन इत्यर्थ ॥३२॥

देव इति—हे देव हे राजन्! श्रीमदीयेन भवदीयेन भुजपरिघेण बाह्वर्गलेन, आलालिता सम्यग्-धृता, भूमिभामिनी महीमहिला, नन्दनवने पुरन्दरोपवन उल्लासिता वर्धिता, हरिचन्दनलता कल्पवृक्षविशेष-वल्लरी वनान्तरमिव काननान्तरमिव, चूतवनकलिता माकन्दारण्योद्भूता मल्लीवल्ली मालतीलता स्नुही-वनमिव गुडाकाननमिव 'वज्र स्नुक् स्त्री स्नुही गुडा। समन्तदुग्धा' इत्यमर 'थूवर इति प्रसिद्धवनस्पतिवन-मिवेति यावत्, कमलवन वारिजविपिनमालयो निवासो यस्या सा, लक्ष्मी श्री, अर्कवनमिव 'आक' इति-प्रसिद्धवृक्षकाननमिव, अरविन्देभ्य कमलेभ्य स्यन्दिना क्षरता मकरन्देन कौसुमेन मुदिता प्रहृष्टा चञ्चरीक-पङ्क्तिभ्रमरश्रेणि गोक्षुरकवनमिव 'गोखुरू' इति प्रसिद्धकण्टकिवनस्पतिगहनमिव, सज्जनसन्दोहेन साधु-समूहेन समभ्यस्यमाना सम्यगाराध्यमाना विद्या कुदृष्टिजनमिव मिथ्यादृष्टिपुरुषमिव, भुजान्तरारोपण बाह्वन्तराश्रयणम्, नार्हति न तद्योग्यास्ति। अथ वक्ष्यमाण, किलेति वार्तायाम्, राजधर्म पृथिवीपतिकर्तव्यम्, श्रीमद्भिर्भवद्भि अवश्य प्राधान्येन, ज्ञातव्यो बोधव्य, यत्, निजहृदयमपि, स्वचेतोऽपि सर्वथा सर्वप्रकारेण, न विश्वसनीय न विश्वासभाजनमस्ति, किमुत जनान्तर लोकान्तरम्। किन्त्वेव सत्यपि, सर्वेषा निखिला-नामपि, स्वीयत्वेनात्मीयत्वेन, विश्वसनीयत्वेन च विश्वासभाजनत्वेन च चन्द्रसूर्यौ यथा शशिदिवाकराविव, ज्ञातव्यो बोध्य। यथा चन्द्रसूर्यौ सर्वेषा स्वकीयत्वेन विश्वसनीयत्वेन च ज्ञायेते तद्वन्नृपतिरपि सर्वेषा स्वीयत्वेन विश्वसनीयत्वेन च ज्ञातव्य इति भाव।

धर्मार्थयुग्ममिति—हे नृप हे राजन्, नीतिशास्त्रे नीत्यागमे, कामस्य कामपुरुषार्थस्य मूल कारणम्, धर्मार्थयोर्धर्मार्थपुरुषार्थयोर्युग्म युगलम्, अस्तीति प्रसिद्ध प्रख्यातम्, किलेति वार्तायाम्, मूले कारणभूते, धर्मार्थयुग्मे गते नष्टे सति, शिखिनि मयूरे, प्रणष्टे गते मृते वा, केकायित वा केकेव 'वा स्याद्विकल्पोपमयो-रिवार्थेऽपि समुच्चये' इत्यमर, कामस्य मदनस्य कथा चर्चा कामकथा कथ केन प्रकारेण, स्याद्भवेत् ॥३३॥

उर्वश्यामिति—उर्वश्याम् एतन्नामस्वर्वेश्यायाम्, अनुरागत, प्रेम्णा, कमलभूर्ब्रह्मा, क्षणादचिरम्,

---

[1] वकीर्ण ग०।

विष्णुः स्त्रीषु विलोलमानसतया निन्दास्पदं सोऽप्यभूद्
बुद्धोऽप्येवमिति प्रतीतमखिलं देवस्य पृथ्वीपते ॥ ३४ ॥

इत्यादिनीतिप्रचुरा वाणी राज्ञो न संस्थिता ।
कामजर्जरिते चित्ते क्षीरं छिद्रघटे यथा ॥ ३५ ॥

तदनन्तरमथ क्षितिपतिरिक्षुचापशरलक्ष्यतया मोहाक्रान्तचेतनः काष्ठान्तरविदितदुराचारं काष्ठाङ्गारमाहूयानीय च विजनं देशमेवमुवाच ।

कामसाम्राज्यमस्माभिः पाल्यते यन्निरन्तरम् ।
तत्पाल्यतामिदं राज्यं भवतावहितात्मना ॥ ३६ ॥

इति नरपतिवाणीमाहरन्नेष तोषात्
प्रतिवचनमुवाच श्रीमता न्यस्तभारम् ।
नृप न हि परिशक्नोम्यद्य वोढुं समस्तं
वृषभ इव करीन्द्रेणार्पितं तुङ्गभारम् ॥ ३७ ॥

तुरगस्य खरो यथा विलासं गरुडस्येव गतानि कुक्कुटः ।
चटकः कलहंसकस्य यद्वत्तव मार्गं न हि गन्तुमुत्सहे ॥ ३८ ॥

---

अवकीर्णी दोषयुक्तः, आस बभूव, 'आस' इति विभक्तिप्रतिरूपकमव्ययम्, न त्वस्तेर्लिटि प्रयोगः । पार्वत्या दुर्गया, प्रणयेन स्नेहेन, चन्द्रमकुटोऽपि शिवोऽपि, अर्धमङ्गना यस्य तथाभूतोऽर्धस्त्रीकः, अजायत बभूव । स प्रसिद्धः, विष्णुरपि कृष्णोऽपि, स्त्रीषु गोपवनितासु, विलोलं चपलं मानसं चित्तं यस्य, तस्य भावस्तया, निन्दास्पदं गर्हास्थानम्, अभूत् । एवमनेन प्रकारेण बुद्धोऽपि तथागतोऽपि निन्दास्पदमजायत । इतीत्थम्, अखिलं सर्वम्, हे पृथ्वीपते हे राजन् ! देवस्य भवतः, प्रतीतं प्रख्यातम् ॥३४॥

इत्यादीति—इत्यादि नीत्या पूर्वोक्तप्रकारकनयोपदेशेन प्रचुरा प्रभूता वाणी भारती मन्त्रिणामिति शेषः, राज्ञो नृपस्य, कामेन मदनेन, जर्जरिते जीर्णे चित्ते चेतसि, छिद्रेणोपलक्षितो घटश्छिद्रघटस्तस्मिन् सच्छिद्रकुम्भे क्षीरं यथा दुग्धमिव, न संस्थिता न सम्यक्प्रकारेण स्थितिं प्राप्ता ॥३५॥

तदनन्तरमिति—तदनन्तरं तत्पश्चात्, अथमेष क्षितिपतिर्भूपालः इक्षुचापस्य कामस्य शराणां बाणानां लक्ष्यतया वेध्यत्वेन, मोहाक्रान्ता व्यपगतविवेका चेतना यस्य तथाभूतः सन्, काष्ठान्तरेषु दिगवकाशेषु विदितो दुर्णयो यस्य तं काष्ठाङ्गारमेतन्नामानं सचिवविशेषम्, आहूयाकार्य, विजनं विविक्तं निर्जनमिति यावत्, देशं स्थानम्, आनीय च प्रापय्य च, एवं वक्ष्यमाणप्रकारेण, उवाच जगाद ।

कामेति—यद्यस्मात् कारणात्, अस्माभिः, निरन्तरं शश्वत्, कामसाम्राज्यं मदनराज्यम्, पाल्यते रक्ष्यते, तत्तस्मात्कारणात्, भवता त्वया, अवहितः प्रमादरहित आत्मा यस्य तथाभूतेन सता इदमद्यावधि मया पाल्यमानम्, राज्यं साम्राज्यम्, पाल्यताम् रक्ष्यताम्, कर्मणि प्रयोगः ॥३६॥

इतीति—इति पूर्वोक्तप्रकाराम्, नरपतिवाणीं नरेन्द्रभारतीम्, आहरन् प्राप्नुवन् शृण्वन्निति यावत्, एष काष्ठाङ्गारः, तोषादानन्दात्, प्रतिवचनं प्रत्युत्तरम्, उवाच जगाद । हे नृप हे राजन् ! करीन्द्रेण गजेन्द्रेण, अर्पितं न्यस्तम्, तुङ्गभारं सून्नतभारम्, वृषभ इवानड्वानिव, अद्येदानीम्, समस्तं निखिलम् श्रीमता भवता, न्यस्तभारं निक्षिप्तभारम्, वोढुं वर्तुं न हि परिशक्नोमि नैव समर्थोऽस्मि । उपमालङ्कारः । मालिनीवृत्तम् 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥३७॥

तुरगस्येति—तुरगस्य हयस्य, विलासं शोभाम्, खरो यथा वैशाखनन्दन इव 'खरे वैशाखनन्दन' इत्यमरः, गरुडस्य तार्क्ष्यस्य, गतानि गमनानि कुक्कुट इव ताम्रचूड इव, कलहंसकस्य कादम्बस्य, चटकः कलविङ्कः, यद्वत् तव भवतः मार्गं पन्थानम्, गन्तुं व्रजितुम्, न हि नैव, उत्सहे प्रेरितो भवामि । भवदर्पितं भारं धर्तुं सर्वथाहमसमर्थोऽस्मीति भावः ॥३८॥

इति सप्रश्रयमालपन्त कुतुककोरकितस्वान्त भूपतिर्वचनान्तरमत्र न वक्तव्यमिति नियम्य, धन्योऽस्मीति तन्निदेश शिरसि निदधान राज्यभारे नियोज्य, प्रतिदिनमेधमानरागलतालवाला-यितहृदयो विषयसुखविवश कानिचिद्दिनानि निनाय।

अथ कदाचिदवसन्नाया निशाया वारुणीसुवासिनीकज्जलकलितराजतकरण्डक इव ग्रह-राजदर्शनभयेन सत्वर निर्गच्छन्त्या निशास्वैरिण्या निपतितताटङ्क इव नभोवारणकुम्भस्थलकलित-मौक्तिकपत्र इव अपरसिन्धुपय पूरणार्थं यामिनीकामिनीकरकलितस्फाटिकघट इव वरुणदिशा-वशावल्लभशुण्डादण्डच्युतसपङ्कबिस इव मदनसायकशाणोपल इव पश्चिमदिशाविशालाक्षी-पुष्पकन्दुक इव चरमधराधरदन्तावलकुम्भस्थलसभाव्यमानशम्बरारिवज्रखेट इव निशाकरे, वीरजिनपतिकोपाग्निदग्धाङ्गमनङ्ग कलङ्कच्छलेन निजाङ्कमारोप्य सजिजीविषयेव सञ्जीवनौषधानि गगनकाननेषु मार्गयित्वा तत्परिमार्गणायेव चरमशिखरिशिखरमधिरूढे, तत्र विरलतया वर्तमानै सन्ध्यारुणतम कालेयपङ्कैरङ्कितगगनपर्यङ्कतले निशाचन्द्रयो क्रीडासमर्दविलुलितकुसुमनिकरेष्विव म्लानतामुपगतेषु तारकानिकरेषु, निजकान्त नि श्रीकमालोक्येव नैजतेजोविरहितेष्वौषधिनिचयेषु,

इतीति—इत्येव प्रकारेण, सप्रश्रय सविनयम्, आलपन्त निगदन्तम्, कुतुकेनाविचारितराज्यल-क्ष्मीप्राप्तिजनितकुतूहलेन कोरकित कुड्मलित व्याप्तमिति यावत् स्वान्त मानस यस्य तथाभूतम्, त काष्ठा-ङ्गारम्, भूपति सत्यन्धर, अत्रास्मिन् विषये, अन्यद् वचन वचनान्तरम्, न निगाद्यम्, इतीत्थ प्रकारेण नियम्यावरुध्य, धन्योऽस्मीति कृतपुण्योऽस्मीति विचार्य तन्निदेश राजाज्ञाम्, शिरसि मूर्ध्नि, निदधान धरन्तम्, तम्, राज्यभारे राज्यकर्मणि, नियोज्य नियुक्त कृत्वा, प्रतिदिन प्रतिदिवसम्, एधमाना वर्धमाना या रागलता स्नेहवल्लरी, तस्या आलवालायितमावालवदाचरित हृदय यस्य स 'स्यादालवालमावाल-मावाप' इत्यमर, विषयसुखस्य कामसुखस्य विवश पराधीन सन्, कानिचिद् दिनानि कतिपयदिवसान्, निनाय नयति स्म।

अथ कदाचिदिति—अथानन्तरम्, कदाचित् जातुचित्, निशाया रजन्याम् अवसन्नाया क्षीणायाम् सत्याम्, वारुणी पश्चिमदिशैव या सुवासिनी सौभाग्यवती वनिता तस्या कज्जलेनाञ्जनेन कलितो युक्तो यो राजतकरण्डको रौप्यनिर्मितभाजन तस्मिन्निव, ग्रहराजस्य सूर्यस्य दर्शनमवलोकन तस्माद्भय भीतिस्तेन सत्वर सवेग निर्गच्छन्त्या निर्व्रजन्त्या पलायमानाया इति यावत्, निशा रजन्येव स्वैरिणी पुश्चली तस्या, निपतितताटङ्क इव स्खलितकर्णाभरण इव, नभोवारणस्य गगनगजस्य कुम्भस्थले गण्डप्रदेशे कलित धृत यत् मौक्तिकपत्र मुक्ताफलपट्ट तस्मिन्निव, अपरसिन्धो पश्चिमसमुद्रस्य पयसो जलस्य पूरणार्थं भरणार्थं यामिनी-कामिन्या रजनीरमण्या करकलितो हस्तधृतो य स्फाटिकघट सितोपलकुम्भस्तस्मिन्निव, वरुणदिशाया पश्चिमदिशाया यो वशावल्लभो गजस्तस्य शुण्डादण्डात् करदण्डाच्च्युत यत् सपङ्कबिस सकर्दममृणाल तस्मिन्निव, मदनसायकाना कामबाणाना शाणोपल इव तीक्ष्णीकरणप्रस्तर इव, पश्चिमदिशैव या विशा-लाक्षी दीर्घलोचना ललनेति यावत्, तस्या पुष्पकन्दुक इव कुसुमगेन्दुक इव चरमधराधरोऽस्ताचल एव दन्तावलो गजस्तस्य कुम्भस्थलेन गण्डप्रदेशेन सभाव्यमानो ध्रियमाणो य शम्बरारेर्मनसिजस्य वज्र-खेटो हीरकमौलिस्तस्मिन्निव, निशाकरे चन्द्रमसि, वीरजिनपतेर्वर्धमानजिनेन्द्रस्य कोपाग्निना क्रोधपावकेन दग्ध भस्मीभूतमङ्ग शरीर यस्य तथाभूतम्, अनङ्ग मदनम्, कलङ्कच्छलेन लक्ष्मव्याजेन, निजाङ्क स्वोत्सङ्गम्, आरोप्य स्थापयित्वा, सजिजीविषयेव सञ्जीवयितुमिच्छयेव, गगनकाननेषु नभोऽरण्येषु, सञ्जीवनौषधानि सञ्जीवनभैषज्यानि, मार्गयित्वा गवेषयित्वा, तत्परिमार्गणायेव तदन्वेषणायेव, चरमशिखरिणोऽस्ताच-लस्य शिखर शृङ्गम्, अधिरूढेऽधिष्ठिते सति, तत्र, विरलतया सान्तरतया, वर्तमानैर्विद्यमानै, सन्ध्यया तत्कालजातलोहितिम्नारुणा ये तम कालेयपङ्कध्वान्तकस्तूरीद्रवास्तै, अङ्कित चिह्नित यद् गगनमेव पर्यङ्कतल पर्यङ्कपृष्ठस्तस्मिन्, निशाचन्द्रयो रजनीरजनीकरयो, क्रीडासमर्देन केलिसमर्देन विलुलितानि व्यस्तानि यानि कुसुमानि पुष्पाणि तेषा निकरा समूहास्तेष्विव, तारकानिकरेषु नक्षत्रनिचयेषु, म्लानता कान्तिराहि-

१ विदधान ब० । २ कज्जलाकलित ब० । ३ पुष्पकन्दुक ब० । ४ वज्रखेटक इव ब० ।

अनेन कुमुदबन्धुना निजवसति कमलावलिर्विध्वस्तेति कोपादिव निशाकान्तान्निष्क्रान्ताया कमलायाम्, निजनायकविरहानलधूमरेखा निर्गच्छद्भृङ्गमालाव्याजेनोद्गमन्तीषु कुमुदिनीषु, सभोगस्वेदसलिलै प्रशान्त मनसिजाग्निं विकचकमलरज कणैरुद्दीपयितुमिव वहति प्राभातिके मारुते,

निद्रावती सा नरपालकान्ता स्वप्न ददर्श स्वशुभाशुभान्तम् ।
अस्वप्नगम्य किल भावि तस्या स्वप्नेन गम्य बत सबभूव ॥ ३९ ॥
तत पुरन्दराशाया सन्ध्याबन्धूकसच्छवि ।
रुरुचे गगनाम्भोधिविद्रुमोद्यानराजिवत् ॥ ४० ॥
अथाविरासीद्दिवसाधिनाथ प्राचीवधूटीगृहरत्नदीप ।
व्योमश्रिय सन्मणिकन्दुको वा सन्ध्याङ्गनाया मुखकुङ्कुम वा ॥ ४१ ॥

पूर्वपयोराशितैलोपान्तविराजमाने पतङ्गपातभयेनेवोपरिविन्यस्तगगनमरकतपात्रविशोभिते प्रदीप इव, पूर्ववारिधिविद्रुमच्छटाकान्तिझरीभिरिव प्राच्यपयोनिधिसकाशाद्गगनजलधिशोषणायोद्गताभिरिव बाडवाग्निज्वालाभि प्रभाराजिभिरनुरक्तमण्डले चण्डकरे उदयधराधरशिखरमधिरूढे,

---

त्यम्, उपगतेषु प्राप्तेषु, निजकान्त स्ववल्लभ चन्द्रमिति यावत्, नि श्रीक लक्ष्मीरहितम्, आलोक्येव दृष्ट्वेव, औषधनिचयेषु भैषज्यसमूहेषु तृणवज्ज्योति प्रभृतिष्विति यावत्, नैज स्वकीय यत्तेजस्तेन विरहितेषु वर्जितेषु सत्सु, अनेन कुमुदबन्धुना एतेन चन्द्रमसा, निजवसतिनिजनिकेतनम्, कमलावलि पद्मपङ्क्तिर्विध्वस्ता नाशिता, इति कोपादिव क्रोधादिव, निशाकान्ताच्चन्द्रमस, कमलाया लक्ष्म्या निष्क्रान्ताया निर्गताया सत्याम्, निर्गच्छन्त्यो निष्क्रामन्त्यो या भृङ्गमाला षट्पदपङ्क्तयस्तासा व्याजेन छलेन, कुमुदिनीषूत्पलिनीषु, निजनायकस्य स्वपतेविरहो वियोग एवानलो वह्निस्तस्य धूमरेखा धूम्रपङ्क्तिम्, उद्गमन्तीषु प्रकटयन्तीषु, सतीषु, सभोगस्वेदसलिलै सुरतघर्मोदकै, प्रशान्त मन्दीभूतम्, मनसिजाग्निं क दर्पानलम्, विकचकमलानां प्रस्फुटितपद्मानां रज कणा परागाशास्तै उद्दीपयितुमिव प्रज्वलयितुमिव, प्राभातिके प्रात कालिके, मारुते पवने, वहति वाति सति । अत्र सर्वत्र 'यस्य च भावे भावलक्षणम्' इति सप्तमी ।

निद्रावती—निद्रावती शयाना, सा पूर्वोक्ता, नरपालकान्ता राज्ञी, स्वस्या शुभाशुभे श्रेयोऽश्रेयसी अन्तौ परिणामौ फले यस्य तम्, स्वप्नम्, ददर्श विलोकयामास । तस्या राज्ञ्या, न स्वप्नेऽपि गम्यमित्यस्वप्नगम्य सुदुर्लभ भावि भविष्यत्, स्वप्नेन, गम्य ज्ञातु योग्यम्, सबभूव सम्यगभूत् । किलेति वार्तायाम्, बतेति खेदे ॥३९॥

तत पुरन्दराशायामिति—ततस्तदनन्तरम्, पुरन्दरस्य पुरुहूतस्याशा काष्ठा तस्याम्, पूर्वदिशायामिति यावत्, बन्धूकस्येव सच्छविर्यस्या सा जीवककुसुमसदृक्कान्ति, सन्ध्या सूर्योदयात्प्राग्भूतोऽहर्णिमा, गगन नभ एवाम्भोधि सागरस्तस्य या विद्रुमोद्यानराजि प्रवालोपवनपङ्क्तिस्तद्वत् । रुरुचे शुशुभे ॥ ४० ॥

अथेति—अथ सन्ध्याप्रसारानन्तरम्, प्राच्येव वधूटी प्राचीवधूटी पूर्वदिक्कामिनी तस्या गृहे विद्यमानो यो रत्नद्वीपो मणिमयदीप, व्योमश्रियो गगनलक्ष्म्या, सन् समीचीन, मणिकन्दुको वा रत्नगेन्दुक इव, सन्ध्याङ्गनाया सन्ध्येवाङ्गना वनिता तस्या मुखकुङ्कुम वा वदनतिलकमिव, दिवसाधिनाथ सूर्य, आविरासीत् प्रकटीबभूव ॥ रूपकम् ॥४१॥

पूर्वपयोराशीति—पूर्वश्चासौ पयोराशिश्चेति पूर्वपयोराशि पूर्वसागरस्तस्य तैलस्य स्नेहस्योपान्ते समीपे विराजमाने शोभमाने, पतङ्गाना शलभाना पातस्य पतनस्य भयेनेव भीत्येव, उपरिविन्यस्तेनोर्ध्वधारितेन मरकतपात्रेण हरिन्मणिभाजनेन विशोभिते विराजिते प्रदीप इव दीपक इव, पूर्ववारिधे पूर्वसागरस्य विद्रुमच्छटानां पल्लवसमूहानां कान्तिझरीभिरिव दीप्तिपरम्पराभिरिव, प्राच्यपयोनिधे पूर्वसागरस्य सकाशात्समीपात्, गगनमेव जलधिर्गगनजलधिराकाशपारावारस्तस्य विशोषण तस्मै, उद्गताभिरुत्पतिताभि, वाडवाग्निज्वालाभिरिव वडवानलार्चिभिरिव, प्रभाभि कान्तिसमूहै अनुरक्तमरुण मण्डल बिम्ब यस्य तथाभूते चण्डकरे सूर्ये, उदयधराधरस्य पूर्वाचलस्य शिखर शृङ्गम्, अधिरूढेऽधिष्ठिते सति ।

तावन्महीपालकमन्दिरान्त पिकप्रतिस्पर्धिमनोज्ञकण्ठा ।
प्राबोधिका पेठुरुपेत्य देव्या प्रबोधनार्थं ध्वनिभिर्गभीरै ॥ ४२ ॥
देवि प्रभातसमयोऽयमिहाञ्जलिं ते
पद्मै करैर्विरचयन्दरफुल्लरूपै ।
भृङ्गालिमञ्जुलरवैस्तनुते प्रबोध-
गीति नृपालमणिमानसहंसकान्ते ॥ ४३ ॥
देवि त्वदीयमुखपङ्कजनिर्जितश्री-
श्चन्द्रो विलोचनजित दधदेणमङ्के ।
अस्ताद्रिदुर्गसरणि किल मन्दतेजा
द्राग्वारुणीभजनतश्च पतिष्यतीव ॥ ४४ ॥
वलरिपुहरिदेषा रक्तसन्ध्याम्बरश्री-
रविमयमणिदीप रथ्यदूर्वासमेतम् ।
गगनमहितपात्रे कुर्वती भाक्षताढ्ये
प्रगुणयति निकाम देवि ते मङ्गलानि ॥ ४५ ॥

---

तावदिति—तावत्, यावद्भास्वानुदेतुमुदयाचलशिखरमधिरोहति तावत्, महीपालकस्य नृपस्य मन्दिरान्तर्भवनाभ्यन्तरे, पिकप्रतिस्पर्धिन कोकिलमत्सरिणो मनोज्ञा प्रिया कर्णा सुवर्णसमूहा येषां ते, मधुरवाच इति यावत्, 'कर्ण पृथाज्येष्ठपुत्रे सुवर्णालौ श्रुतावपि' इति मेदिनी, प्राबोधिका प्रबोध प्रयोजन येषां ते मागधविशेषा उपेत्याभिमुखमागत्य, गभीरैरर्थगाम्भीर्यसहितै, ध्वनिभि शब्दै, देव्या राज्या, प्रबोधनार्थं जागरणार्थं, पेठु पठन्ति स्म ॥४२॥

देवीति—नृपालमणे राजरत्नस्य सत्यन्धरमहाराजस्येति यावत् मानस चित्तमेव मानस मानससरोवरस्तत्र हसकान्ता हसी तत्सबुद्धौ तथाभूते, हे देवि हे राज्ञि ! दरफुल्लरूपैरीषद्विकसितस्वरूपै, पद्मै कमलै, करै पाणिभि, अञ्जलिं करसम्पुट, विरचयन् कुर्वन्, अय प्रभातसमय प्रात काल, भृङ्गालीना भ्रमरपङ्क्तीना मञ्जुलरवा मनोहरशब्दास्तै, ते भवत्या, प्रबोधगीति जागरणगीतिकाम्, तनुते विस्तारयति । रूपकोत्प्रेक्षा ॥४३॥

देवि त्वदीयेति—हे देवि हे राज्ञि ! त्वदीयमुखपङ्कजेन त्वदीयास्यारविन्देन, निर्जिता पराभूता श्री शोभा यस्य तथाभूतश्चन्द्र शशी, अङ्के क्रोडे, विलोचनाभ्यां जित विलोचनजित नेत्रपराभूतम्, एणम् हरिणम्, दधद् बिभ्रद्, अस्ताद्रिरस्ताचल एव दुर्गो दुर्गम्यस्थान तस्य सरणिर्मार्गो यस्य स, अथवास्ताद्रिदुर्ग एव शरण यस्य स, अथवा अस्ता गृहीताद्रिदुर्गस्य शैलदुर्गस्य सरणिर्मार्गो येन स, तथाभूत सन् मन्दतेजा क्षीणप्रताप अभूदिति शेष, किलेति वार्तायाम् । किञ्च, वारुणीभजनत पश्चिमदिक्सेवनात्, अथ च मदिरासेवनात्, द्राक् झटिति, पतिष्यतीव नीचैर्गमिष्यतीव, पतितो भविष्यतीव । अन्योऽपि निर्बल केनचिद्बलीयसा पराजित सन् पर्वतादौ भ्रमन् पतत्येवेति भाव । श्लिष्टोत्प्रेक्षा ॥४४॥

वलरिपुहरिदिति—रक्तसन्ध्यया लोहितसन्ध्योपलक्षिताम्बरश्रीर्नभोलक्ष्मी पक्षे निचेललक्ष्मीर्यस्या सा, एषा वलरिपोरिन्द्रस्य हरित्काष्ठा पूर्वदिशेति यावत्, पक्षे स्त्रीलिङ्गसाम्यात्काचिद्वनिता, रथ्या एव हया एव दूर्वा शतपर्वा तया समेत सहितम्, रविमयश्चासौ मणिदीपश्चेति रविमयमणिदीपस्त सूर्यरूपरत्नदीपम्, भाक्षताढ्ये नक्षत्रतण्डुलसहिते, गगन व्योमैव महित प्रशस्त पात्र भाजन तस्मिन्, कुर्वती विदधती सती, हे देवि हे राज्ञि ! ते भवत्या मङ्गलानि श्रेयासि, निकाममत्यन्त यथा स्यात्तथा, प्रगुणयति वर्द्धयति अन्यापि काचित्सुवासिनी धृतलोहिताम्बरा साक्षते कचित्पात्रे दूर्वासहित दीपक निधाय कस्यचिन्मङ्गल प्रगुणयति तद्वदत्रापीति भाव ॥ रूपकम् ॥४५॥

---

१ कर्णा. मु० । २ भाक्षताढ्य ब० ।

देवि त्वदीयकचडम्बरचौर्यतुङ्गा
भृङ्गावली सपदि पङ्कजबन्धनेषु ।
राज्ञा निशासु रचिताद्य विसृष्टहृष्टा
त्वा स्तौति मञ्जुलरवैरुररीकुरुष्व ॥ ४६ ॥

पयोजधूलीपरिधूसराङ्ग पत्त्रौ विधूयाद्य वियोगखिन्न ।
कोक स्वकान्ता परिरभ्य तस्या वक्त्रे स्वचञ्चु कलयन्विभाति ॥ ४७ ॥

हसतूलमयी शय्या हसीव सिकताततिम् ।
चान्द्री कलेव शुभ्राभ्रपङ्क्ति,देवि जहीहि भो ॥ ४८ ॥

इत्यादिप्राबोधिकपद्यालापैर्मङ्गलवाद्यनिनादैश्च कादम्बिनीकलकलै केकिकान्तेव स्वप्नेन प्रबुद्धपूर्वापि सा [1]प्रबुद्धा विधाय च प्रत्यूषकृत्यमभ्यग्रमभ्येत्य कृतवैभातिकविधये महासुधिये गुणमन्धराय सत्यधराय निजकान्ताय महीकान्ताय स्वप्नोदन्तमिम निवेदयामास ।

आर्यपुत्र जितामित्र दृष्टा स्वप्नास्त्रयो भृशम् ।
वाचालयन्ति मा चूतकोरका कोकिलामिव ॥ ४९ ॥

आर्यपुत्र सुत्रामविभव विभावर्या पश्चिमे यामे कश्चन तरुरशोकोऽपि केनचित्कुठार-

---

देवीति—हे देवि हे राज्ञि ! त्वदीयस्य कचडम्बरस्य केशकलापस्य चौर्येऽपहरणे तुङ्गा समुन्नता पट्वीति यावत्, भृङ्गावली भ्रमरश्रेणि निशासु रजनीषु, राज्ञा भूपालेन चन्द्रेण च 'राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयो ' इति कोश , पङ्कजबन्धनेषु कमलकारावासेषु, सपदि झटिति, रचिता स्थापिता, अद्य साम्प्रत प्रभातवेलायामिति यावत्, विसृष्टा चासौ हृष्टा चेति विसृष्टहृष्टा विमुक्ता अतएव च प्रसन्ना सती, मञ्जुलरवैर्मनोहरशब्दै , त्वा भवतीम्, स्तौति नौति, उररीकुरुष्व स्वीकुरु ॥४६॥

पयोजेति—पयोजधूलीभि पद्मपरागै परिधूसर परिमलिनमङ्ग यस्य तथाभूत वियोगेन विरहेण खिन्नो विषण्ण , कोकश्चक्रवाक , अद्य साम्प्रत प्रभात इति यावत्, पत्त्रौ पतत्रे, विधूय कम्पयित्वा, स्वकान्ता स्वकीयवल्लभाम्, परिरभ्य समाश्लिष्य, तस्या स्वकान्ताया , वक्त्रे मुखे, स्वचञ्चु स्वकीयत्रोटिम्, कलयन् धारयन्, विभाति शोभते । स्वभावोक्ति ॥४७॥

हसतूलमयीमिति—भो देवि हे राज्ञि ! सिकताततिं वालुकाश्रेणिम्, हसीव मरालीव, शुभ्राभ्रपङ्क्ति सितवारिदसन्ततिम्, चन्द्रस्येय चान्द्री चन्द्रसम्बन्धिनी कलेव षोडशभाग इव, हसतूलस्य विकारो हसतूलमयी ताम् अतिमृदुलामिति यावत्, शय्या पर्यङ्कम्, जहीहि मुञ्च ॥४८॥

इत्यादिप्राबोधिकेति—इत्यादय पूर्वोक्तप्रकारका ये प्राबोधिकाना प्रबोधकार्यनियुक्ताना मागधविशेषाणा पद्यालापा कविताशब्दास्तै , मङ्गलवाद्याना मङ्गलप्रयोजनकवादित्राणा निनादा ध्वनयस्तैश्च, कादम्बिन्या मेघमालाया कलकला अनुकरणशब्दास्तै , केकिकान्तेव मयूरीव, स्वप्नेन, पूर्वं प्रबुद्धेति प्रबुद्धपूर्वाऽपि सा विजया प्रबुद्धा जागृता सती, प्रत्यूषकृत्यमहर्मुखकार्यं स्नानादिकमिति यावत् । 'प्रत्यूषोऽहर्मुखं कल्यम्' इत्यमर । विधाय कृत्वा, अभ्यग्र पुरस्तात्, अभ्येत्याभ्यागत्य, कृता वैभातिका प्रातःकालिका विधयो येन तस्मै, महांश्चासौ सुधीश्चेति महासुधीस्तस्मै महापण्डिताय, गुणमन्धराय दयाशौर्यादिगुणविशिष्टाय, निजकान्ताय स्ववल्लभाय, इम वक्ष्यमाण स्वप्नोदन्त स्वप्नवृत्तान्तम्, निवेदयामास कथयामास ।

आर्यपुत्रेति—जितानि पराभूतान्यमित्राणि शत्रवो येन तत्सम्बुद्धौ हे जितामित्र, आर्यपुत्र हे नाथ ! दृष्टा अवलोकिता , त्रयस्त्रिसख्याविशिष्टा स्वप्ना चूतकोरका आम्रमञ्जरीकुड्मला , कोकिलामिव पिकीमिव, मा विजयाम्, भृशमत्यन्तम्, वाचालयन्ति मुखरयन्ति । उपमा ॥४९॥

आर्यपुत्र सुत्रामविभवेति—सुत्रामा वज्री इन्द्र इति यावत्, तस्येव विभवमैश्वर्यं यस्य तत्सबुद्धौ हे सुत्रामविभव 'सुत्रामा गोत्रभिद्वज्री' इत्यमर , आर्यपुत्र नाथ ! विभावर्या निशाया पश्चिमेऽन्तिमे यामे

---

१ प्रबुध्य ब० ।

पाणिना छेदनशोक प्रापितो जातश्च हाटकमकुटघटितो बालाशोकविटपी तत्परिसरेऽष्टापि माला दृष्टा इति।

तमिमं स्वप्नोद्न्तमाकर्ण्य, विचिन्त्य च शुभाशुभोदर्कफलम्, आत्मापायशङ्काशङ्कुनिचित-चेतनो हर्षशोकरसोन्मग्न इव चन्दनविषरसाभ्या मनस्यालिप्त इव कमलिनीकण्टककमलदलकलित-पक्ष सितपक्ष इव स्थितोऽपि, अहार्यधैर्यचातुर्यावगाढमतिरयमम्भोनिधिगम्भीर कुम्भिनीपतिर-शुभफलमाद्यस्वप्न मनसिकृत्य शुभफल स्वप्नद्वयमन्त कृतक्षुद्रदन्तो दन्तावल इव द्न्तयुगलमुदञ्च-यामास।

पुत्रं नृपालतिलक कुलरत्नदीप
प्राप्नोषि देवि सुरराजदिशेव सूर्यम्।
दृष्टो यत समकुटो नवबालवृक्ष
कान्ता भवन्ति खलु तस्य तदष्टमाला ॥ ५० ॥

श्रुत्वा च देवी श्रवणायताक्षी पत्युर्वच सा पुनराबभाषे।
जिज्ञासते मे हृदय प्रियाद्यस्वप्नस्य साध्य प्रतिपादयाद्य ॥ ५१ ॥

---

प्रहरे, कश्चन कोऽपि, तरुवृक्ष अशोकोऽपि शोकातीतोऽपि पक्षे कङ्केलिरपि, कुठार पाणौ यस्य तेन परशुकरेण, केनचिज्जनेन, छेदनेन शोकस्त छेदनदु खम्, प्रापितो लम्भित, किञ्च, तत्परिसरे तन्निकटे, हाटकमकुटघटित काञ्चनमौलिसहित, बालश्चासावशोकविटपी चेति बालाशोकविटपी, अशोकस्य नूतना वृक्ष जात समुत्पन्न, किञ्च, अष्टमाला अपि, अष्टस्रजोऽपि, दृष्टा अवलोकिता। परशुपाणिना केनचिच्छिद्यमानोऽशोकानोकह, सन्नि-कटे समुत्पन्न समकुट कश्चिन्नूतनाशोकपादप, तस्य परिसरेऽष्टमालाश्च लम्बमाना इति स्वप्नत्रय मयाद्य निशि दृष्टमिति भाव। इतीत्थ त्रय स्वप्ना मा भृश वाचालयन्तीति श्लोकस्य क्रियया सह सम्बन्ध।

तमिममिति—इम त पूर्वोक्त स्वप्नोदन्त स्वप्नवृत्तान्तम्, आकर्ण्य श्रुत्वा, शुभाशुभ च तदुदर्क-फलञ्चेति शुभाशुभोदर्कफल मङ्गलामङ्गलोदयपरिणामम्, विचिन्त्य च विचार्य च, आत्मापायस्य स्वकीय-मरणस्य या शङ्का सर्शाति सैव शङ्कु कीलस्तेन निचिता चेतना यस्य स, हर्षश्च शोकश्चेति हर्षशोकौ तौ च तौ रसौ चेति हर्षशोकरसौ तयोरुन्मग्न इव त्रुडित इव, चन्दनविषरसाभ्या मलयजगरलरसाभ्याम्, मनसि चेतसि, आलिप्त इव दिग्ध इव, कमलिन्या पद्मिन्या कण्टकेन कमलदलेन पद्मपत्रेण च कलितौ सहितौ पक्षौ गरुतौ यस्य तथाभूत, सितपक्ष इव मराल इव, स्थितोऽपि विद्यमानोऽपि, धैर्यं च चातुर्यञ्चेति धैर्य-चातुर्ये, अहार्ये धैर्यचातुर्ये इत्यहार्यधैर्यचातुर्ये शाश्वतिकधैर्यवत्त्वे तयोरवगाढा लीना मतिर्यस्य स, अम्भो-निधिरिव सागर इव गम्भीरोऽगाधो विपुलधैर्ययुक्त इति यावत्, अय पूर्वोक्त, कुम्भिनीपतिर्नृप सत्यन्धर इति यावत्, अशुभममङ्गल फल परिणामो यस्य तम्, आद्यस्वप्न प्रथमस्वप्नम्, मनसिकृत्य चेतसि कृत्वा गूढ विधायेति भाव, शुभफल मङ्गलप्रयोजनम्, स्वप्नद्वय द्वितीयतृतीयस्वप्नयुगलम्, अन्त कृतो मुखान्तर्धृत क्षुद्रदन्तोऽल्परदनो यस्य तथाभूत, दन्तावल इव गज इव, दन्तयोर्बहि प्रकाशमानयो रदनयोर्युगल युग्मम्, उदञ्चयामास प्रकटयामास।

पुत्रमिति—हे देवि हे राज्ञि! यतो यस्मात् कारणात्, त्वया समकुटो मौलियुत, नवबालवृक्ष प्रत्यग्राशोकपादप, दृष्टोऽवलोकित, तत, सुरराजदिशा प्राची सूर्यमिव प्रभाकरमिव, नृपालतिलक राज-श्रेष्ठम्, कुलरत्नदीप वशमणिदीपकम्, पुत्र शिशु, प्राप्नोषि लभसे, तस्मिन् नवबालवृक्षे या अष्टमाला अष्टस्रज सन्ति ता खलु निश्चयेन तस्य पुत्रस्य कान्ता वल्लभा भवन्ति जायन्ते ॥५०॥

श्रुत्वा चेति—श्रवणपर्यन्त कर्णपर्यन्तमायते दीर्घे अक्षिणी लोचने यस्यास्तत्सम्बुद्धौ, सा देवी विजया, पत्युर्वल्लभस्य, वच स्वप्नद्वयफलसूचकवचनम्, श्रुत्वा चाकर्ण्य च, पुनर्भूय, आबभाषे जगाद। हे प्रिय हे कान्त, मे मम हृदय चित्तम्, आद्यस्वप्नस्य, साध्य फलम्, जिज्ञासते ज्ञातुमिच्छति, अद्येदानीम्, प्रतिपादय निवेदय ॥५१॥

इति निजवल्लभाप्रश्नमौदासीन्येनोत्तरयति महीवल्लभे, तदिङ्गितज्ञा सा कुरङ्गलोचना, तरङ्गितदु खपूरपरिमिलितान्तरङ्गा करिनितम्बिनीव गिरिनितम्बान्निजासनान्निपत्य भुवि लुठन्ती, स्वात्मनि दुष्पूरतया वाष्पव्याजेन प्रवहता दु खपूरेण बहि सार्वितयेव चेतनया विमुमुचे। तावन्निजकान्ताचेतनापरिमार्गणायेव गतया सज्ञया विनिर्मुक्तो नरनाथोऽपि कथचिल्लब्धसज्ञ प्राज्ञाग्रेसर कथकथमपि राज्ञीमुत्थाप्य तीरातीतशोकपारावारमध्ये स्रवविस्रवविवशायास्तस्या पोतायित वचनजातमुत्तरङ्गयामास।

स्वप्नेन दृष्टेन सरोजनेत्रे कि मा विनष्टासुमितस्तनोषि।
सत्रातुकामा खलु साधुवृत्त नरा कदाचिन्न हि निर्दहन्ति॥ ५२॥

कि कल्पते कुरङ्गाक्षि शोचन दु खशान्तये।
आतपक्लेशनाशाय पावकस्य प्रवेशवत्॥ ५३॥

ततो विशालाक्षि निशाकरास्ये धर्मो विपन्नाशनमातनोति।
सूरो यथा स्फारहिमप्रणाश चन्द्रो यथा सतमसस्य नाशम्॥ ५४॥

इत्यादिसान्त्ववचनै कान्ता परिसान्त्वयन्लब्धाश्वासया तया सम यथापुर नरपतिर्विषयसुखपारवश्येन रममाण कानिचिदहान्यतिवाहयाञ्चके।

---

इति निजवल्लभेति—इति पूर्वोक्तप्रकारेण, महीवल्लभे नृपतौ, निजवल्लभाया विजयाया प्रश्नमनुयोगम्, औदासीन्येनोपेक्षाभावेन, उत्तरयति समादधति सति, तस्य महीवल्लभस्येङ्गितानि हृच्चेष्टितानि जानातीति तदिङ्गितज्ञा, सा कुरङ्गलोचना मृगनयना, तरङ्गितेन कल्लोलितेन वृद्धिंगतेनेति यावत्, दु खपूरेणाशातप्रवाहेण परिमिलितमापूर्णमन्तरङ्ग हृदय यस्यास्तथाभूता सती, गिरिनितम्बात् पर्वतकटकात्, करिनितम्बिनीव हस्तिनीव, निजासनात्स्वविष्टरात्, निपत्य नितरा पतित्वा, भुवि पृथिव्या, लुठन्ती लोठन कुर्वती, स्वात्मनि स्वस्वरूपे, दुष्पूरतया मातुमशक्यतया, वाष्पव्याजेन नयनसलिलमिषेण, प्रवहता स्यन्दता, दु खपूरेणासुखप्रवाहेण, बहि प्लावितयेव बहिर्निसारितयेव, चेतनया चैतन्यशक्त्या विमुमुचे विमुक्ता। तावत् तावता कालेन, निजकान्ताया स्ववल्लभायाश्चेतना चैतन्य तस्या परिमार्गणायेव पर्यन्वेषणायेव, गतया कुत्रापि प्रयातया, सज्ञया चेतनया, विनिर्मुक्तो रहितो मूर्च्छित इति यावत्, नरनाथोऽपि सत्यन्धरोऽपि, कथञ्चित्केनापि प्रकारेण, लब्धा पुनरासादिता सज्ञा चेतना येन तथाभूत, प्राज्ञाग्रेसरो विद्वद्श्रेष्ठ स, कथ कथमपि केनापि प्रकारेण, राज्ञी देवीम्, उत्थाप्य ससज्ञा विधाय, तीरातीत उद्वेलो य शोकपारावार शोकसागरस्तस्य मध्येऽभ्यन्तरे, प्लवविप्लवाभ्याम् उन्मज्जननिमज्जनाभ्याम् विवशा परायत्ता तस्या, तस्या राज्ञ्या, पोतायित नौकावदाचरत्, वचनजात गी समूहम्, उत्तरङ्गयामास वर्धयामास। जगादेति भाव।

स्वप्नेन दृष्टेनेति—हे सरोजनेत्रे हे कमललोचने! दृष्टेनावलोकितेन, इतोऽनेन स्वप्नेन, मा प्रियम्, विनष्टासु मृतम्, कि तनोषि किं बुध्यसे। हि यत, खलु निश्चयेन, सत्रातुकामा रक्षणाभिलाषिणो नरा जना, साधुवृत्त सज्जनद्रुमम्, कदाचिज्जातुचित्, न निर्दहन्ति न भस्मसात्कुर्वन्ति॥५२॥

किं कल्पत इति—हे कुरङ्गाक्षि हे मृगलोचने! आतपेन घर्मेण क्लेशो दु ख तस्य नाशोऽपहारस्तस्मै, पावकस्य वह्ने, आधारेऽर्थे षष्ठी, प्रवेशवत् प्रवेशे इव, शोचन शोक, दु खस्य शान्तिस्तस्यै दु खनाशाय, कल्पते किम् जायते किम्, अपितु न कल्पत इति भाव॥५३॥

ततो विशालाक्षीति—ततस्तस्मात्कारणात्, हे विशालाक्षि हे दीर्घलोचने, हे निशाकरास्ये हे चन्द्रवदने, स्फारश्च तद्धिमश्चेति स्फारहिम विशालतुषारस्तस्य प्रणाशो विनाशस्त सूरो यथादित्य इव, सतमसस्य गाढान्धकारस्य 'अवसमन्धेभ्यस्तमस' इत्यच्, नाश ध्वसनम्, चन्द्रो यथा शशीव, धर्म सुकृतपरिणाम, विपदो नाशन विपन्नाशनम्, विपत्त्यपहरणम्, आतनोति विदधाति॥५४॥

इत्यादीति—इत्यादीनि पूर्वोक्तप्रकाराणि च तानि सान्त्ववचनानि प्रथमवचनानि चेति तै, कान्तां प्रेयसीम्, विजयामिति यावत्, परिसान्त्वयन् प्रशमयन्, लब्ध आसादित आश्वासो धैर्यं यया तया सम

ततश्च विषयसुखपरवशस्य विशापते स्वप्नवृत्तान्तप्रबोधनायेव सा नरपालसती, महाकविभारतीव गभीरार्थम्, शारदाब्जसरसीव राजहसम्, रत्नाकरवेलेव मणिम्, पुरन्दरहरिदिवेन्दुमण्डलम्, गिरिगुहेव सिंहकिशोरम्, हेमकरण्डिकेव रत्नम्, सिन्धुशुक्तिकेव मुक्ताफलम्, गर्भं बभार।

तदा हि तस्या वदनाम्बुजात गर्भार्भकस्येव यशोविलासै ।
अल्पैरहोभि परिपाण्डरत्वमवाप चन्द्रेण च सर्वसाम्यम् ॥ ५५ ॥
यथा यथासीदुदर विवृद्ध तथा तथास्या कुचकुम्भयुग्मम् ।
श्यामाननत्व सममाप राज्ञा स्वप्नस्य पाकादनुतापकर्त्रा ॥ ५६ ॥
सवृद्धमुदर वीक्ष्य तत्स्तनौ मलिनाननौ ।
न सहन्ते हि कठिना मध्यस्थस्यापि सपदम् ॥ ५७ ॥
श्यामानन कुचयुग दधती वधू सा
पाथोजिनीव मधुपाञ्चितकोशयुग्मा ।
पङ्कास्यहसमिथुना सरसीव रेजे
लोलम्बचुम्बितगुलुच्छयुगी लतेव ॥ ५८ ॥

---

सार्धम्, यथापुर पूर्ववत्, विषयसुखाना मदनशर्मणा पारवश्येन परतन्त्रतया, रममाण क्रीडन्, नरपति सत्यधर, कानिचित्कतिचित्, अहानि दिनानि, अतिवाहयाञ्चक्रेऽतिगमयामास ।

ततश्चेति—ततश्च तदनन्तरञ्च, विषयसुखस्य मदनसुखस्य परवश परायत्तस्तस्य, विशापते राज्ञ, स्वप्नस्य वृत्तान्त उदन्त स्वप्नवृत्तान्तस्तस्य प्रबोधनायेव ज्ञपनायेव, सा पूर्वोक्ता, नरपालसती विजया, महाकवीना जिनसेनादीना भारती वाणी गभीरार्थमिव गूढाभिधेयमिव, शरदि भवानि शारदानि शरदृतुभवानि, तानि च तान्यब्जानि पद्मानीति शारदाब्जानि तैरुपलक्षिता सरसी सरोवर, राजहसमिव मरालविशेषमिव, 'राजहसास्तु ते चञ्चूचरणैर्लोहितै सिता.' इत्यमर, रत्नाकरस्य सागरस्य वेला तटी, मणिमिव रत्नमिव, पुरन्दरस्याखण्डलस्य हरित्काष्ठा प्राचीति यावत्, इन्दुमण्डलमिव चन्द्रबिम्बमिव, गिरिगुहा पर्वतकन्दरा सिहकिशोरमिव मृगेन्द्रमाणवकमिव, हेम्न करण्डिका हेमकरण्डिका सुवर्णभाजनक रत्नमिव मणिमिव, सिन्धो सागरस्य शुक्तिका मुक्तास्फोट मुक्ताफलमिव मौक्तिकमिव, गर्भं भ्रूणम्, बभार दधार । मालोपमा ।

अथ तस्या गर्भावस्था वर्णयितुमाह—तदा गर्भधारणवेलायाम्, हि निश्चयेन, तस्या राज्या, वदन मुखमेवाम्बुजात कमलम्, अल्पैरेव कतिपयैरेव, अहोभिर्दिवसै, गर्भे स्थितोऽर्भको गर्भार्भकस्तस्य भ्रूणस्थशिशो यशोविलासै कीर्तिसञ्चारैरिव, परिपाण्डरत्व धवलत्वम्, अथ च चन्द्रेण निशाकरेण, सर्वसाम्य सर्वप्रकारेण सादृश्यम्, अवाप लेभे । उत्प्रेक्षा ॥५५॥

यथा यथेति—अस्या विजयाया, उदर जठरम्, यथा यथा येन येन प्रकारेण, विवृद्ध वृद्धियुक्तमासीत्, तथा तथा तेन तेन प्रकारेण, कुचकुम्भयुग्म स्तनकलशयुगलम्, स्वप्नस्य, पाकात्परिणामात्, अनुतापस्य पश्चात्तापस्य कर्त्रा विधायकेन, राज्ञा सत्यन्धरेण, सम सह, श्यामाननत्व कृष्णमुखत्वम्, आप लेभे, राजा स्वमरणदिवसस्य निकटस्थत्वेन पश्चात्तापान्मलिनमुखो बभूव, स्तनकलशयुगल च गर्भकाले कृष्णचूचुक भवत्येव । सहोक्ति ॥५६॥

सवृद्धमिति—तस्या स्तनौ तत्स्तनौ तत्कुचौ, उदर जठरम्, समन्ताद् वृद्ध सवृद्ध सविस्तृतम्, वीक्ष्य दृष्ट्वा, मलिन कृष्णमानन मुख ययोस्तौ कृष्णाग्रभागाविति यावत्, जाताविति शेष । हि यत, कठिना परुषप्रकृतय, मध्यस्थस्यापि मध्ये विद्यमानस्यापि पक्षे रागद्वेषरहितस्यापि, सपद सम्पत्तिम्, न सहन्ते न तितिक्षन्ते । अर्थान्तरन्यास ॥५७॥

श्यामाननमिति—श्यामानन कृष्णचूचुकम्, दधती बिभ्रती, सा वधूर्विजया, मधुपाभ्या भ्रमराभ्यामञ्चित शोभित कोशयुग्म कुड्मलयुगल यस्यास्तथाभूता, पाथोजिनीव कमलिनीव, पङ्क कर्दम आस्ये मुखे यस्य तत्पङ्कास्य तथाभूत हसमिथुन मरालयुग्म यस्यां तथाभूता, सरसीव सरोवर इव, लोलम्बाभ्या

अन्तःस्थशिशुगाम्भीर्यं दृष्ट्वास्या नाभिमण्डलम् ।
लज्जयेवाद्य तत्याज गाम्भीर्यं भूभुजा समम् ॥ ५९ ॥
मध्यदेशश्चकोराक्ष्या शिशुना बलिना तदा ।
भङ्क्त्वा वलित्रयं राज्ञस्तापेनाभूत्समं गुरुः ॥ ६० ॥
नीलाब्जानि जितान्यासञ्जय्यमद्य सिताम्बुजम् ।
इतीव देव्या नयनयुगलं धवलं बभौ ॥ ६१ ॥

तावत्सदोहलां महिलामिमां दृष्ट्वा स्मृत्वा च दुःस्वप्नफलं पश्चात्तापपराहतस्वान्तो महीकान्तोऽयमात्मरक्षणपरायणश्चिन्तामेवमकरोत् । दुष्कर्मपरिपाकपराभूततया मया विषयानुरागापथ्यसेवनेनातिलङ्घितानि सचिववचनसञ्जीवनौषधानि । अथवा कृतमनयास्थानपतितया गतजलसेतुबन्धनसकाशया वाञ्छया । किंतु फलकालिककलिकापचयवाञ्छेवोपहास्यतां प्राप्नोति ।

एवं विचिन्त्य धरणीरमणस्तदानीं
वंशस्य रक्षणविधौ परिक्लृप्तचित्तः ।
आस्थां यशस्युपरतिं च शरीरवृत्तौ
कुर्वन्नचीकरदसाविह केकियन्त्रम् ॥ ६२ ॥

---

भ्रमराभ्यां चुम्बितमालिङ्गितं गुलुच्छयुगं स्तबकयुगलं यस्यास्तथाभूता, लतेव वल्लरीव, रेजे शुशुभे । मालोपमा ॥ ५८ ॥

अन्तःस्थेति—अस्या नरेन्द्रमानिन्याः, नाभिमण्डलं तुन्दिगह्वरम्, अन्तःस्थस्य गर्भस्थस्य शिशोर्बालकस्य गाम्भीर्यमगाधत्वं धैर्यवत्त्वञ्च, दृष्ट्वा विलोक्य, लज्जयेव त्रपयेव, अद्य गर्भधारणवेलायाम् । भूभुजा भूपालेन, समं साकम्, गाम्भीर्यमगाधतां धैर्यञ्च, तत्याज त्यजति स्म । उत्प्रेक्षाश्लेषसहोक्तयः ॥५९॥

मध्यदेश इति—तदा तस्या वेलायाम्, चकोराक्ष्या जीवञ्जीवलोचनायाः, मध्यदेशः कटिप्रदेशः, बलिना बलवता, शिशुना बालकेन, वलित्रयं नाभेरधस्ताद्विद्यमानरेखात्रयं पक्षे बलवत्त्रयम्, भङ्क्त्वा नाशयित्वा पराजित्य च, राज्ञो नृपतेः, तापेन विषादेन, समं सार्धम्, गुरुरधिको विस्तृतश्च । अभूत् बभूव । श्लेषाद्बवयोरभेदः । विरोधाभाससहोक्ती ॥६०॥

नीलाब्जानीति—नीलानि च तान्यब्जानीति नीलाब्जानि नीलारविन्दानि, जितानि पराभूतानि, अद्येदानीम्, सितञ्च तदम्बुजञ्चेति सिताम्बुजं पुण्डरीकं, जय्यं जेतुं शक्यम् 'क्षय्यजय्यौ शक्यार्थे' इति निपातितम्, अस्तीति शेषः । इति विचार्येव, देव्या विजयायाः, नयनयुगलं लोचनयुगम्, धवलं सितम्, बभौ शुशुभे । उत्प्रेक्षा ॥६१॥

तावदिति—तावत्-तावता कालेन, सदोहलां सगर्भाम्, इमां महिलाम्, विजयाम्, दृष्ट्वा विलोक्य, दुःस्वप्नफलं कङ्केलिपादपपतनात्मकस्य दुःस्वप्नस्य फलं परिणामं स्वमरणात्मकमिति यावत्, स्मृत्वा च ध्यात्वा च, पश्चात्तापेनानुशयेन पराहतं पीडितं स्वान्तं मनो यस्य सः, महीकान्तो भूपतिः, अयं सत्यन्धरः, आत्मनः स्वस्य रक्षणे त्राणे परायणस्तत्परः सन्, एवं वक्ष्यमाणप्रकाराम्, चिन्तां विचारम्, अकरोत् विदधौ । दुष्कर्मणां पापकर्मणां परिपाकेन परिणामेन पराभूततया तिरस्कृततया, मया सत्यन्धरेण, विषयेषु पञ्चेन्द्रियविषयेष्वनुरागः प्रीतिर्विषयानुरागः स एवापथ्यमहितं तस्य सेवनेन, सचिववचनानि मन्त्र्युपदेशा एव सञ्जीवनौषधानि जीवनाधायकभैषज्यानि, अतिलङ्घितानि त्यक्तानि, उपेक्षितानीति यावत् । अथवेति पक्षान्तरे, अस्थाने पतिता तया—असमयप्रादुर्भूतया, गतमग्रे प्रयातं यज्जलं सलिलं तस्य सेतुबन्धनं पुलिननिर्माणं तस्य सकाशया सदृशया, अनया 'वाञ्छया—एतयेच्छया', कृतं व्यर्थम् । किन्तु-अपितु, कलिकानां पुष्पदलानामपचयस्य वाञ्छा मनोरथः इति कलिकापचयवाञ्छा, फलकालिकी फलकालोत्पन्ना या कलिकापचयवाञ्छा, तद्वत्, उपहास्यतां हास्यभाजनताम्, प्राप्नोति लभते । इदानीं चिन्ताकरणं व्यर्थमिति भावः ।

एवमिति—तदानीं तस्मिन् काले, एवं पूर्वोक्तप्रकारेण, विचिन्त्य विचार्य, वंशस्य गोत्रस्य, रक्षणस्य-

मेघावलि सुखकरी स्वसमाननाम्ना
वर्षासु मत्तशिखिना शिखिनाशहेतु ।
इत्थ विचिन्त्य किल कल्पितकेकियन्त्र
राज्ञा विनुन्नमचरद्घनसनिधाने ॥६३॥
राजा च राजवदना महिषीं विधाय
यन्त्रे तदीयघनकेशविनिर्जिताभ्रम् ।
सद्रष्टुकाम इव दौहृदकाललीला
सभोक्तुमभ्रसरणौ विजहार धीर ॥ ६४ ॥

तावत्स दुराचार काष्ठाङ्गार, काष्ठान्तरेषु शान्ताङ्गारसकाशभास राजघ कृतघ्न इत्याद्ययशोविलास समार्जयन्, समार्जयश्च सकलहितवृत्तिम्, राजद्रोहनियन्त्रितचित्तो निजान्त-करणे चिन्तयामास । लोके पराधीन जीवित परमोत्कृष्टपदवीमवाप्तमपि सरसमोचाफलनीचेतर-मधुरक्षीराद्युपचारपरिलालितपञ्जरबद्धशुकशावकजीवनमिव विनिन्दितम्, निजबलविभवसमाजि-तमृगेन्द्रपदसभावितस्य कुम्भीन्द्रकुम्भस्थलपाटनपटुतरखरनखरस्य मृगेन्द्रस्येव स्वतन्त्रजीवन-मविनिन्दितमभिनन्दितमनवद्यमतिहृद्यम्, इति ।

---

विचिन्त्तस्मिन् रक्षाकार्ये, परिक्लृप्त प्रलीन चित्त मनो यस्य तथाभूत, असौ धरणीरमणो महीपति, यशसि कीर्त्तौ, आस्थामादरबुद्धिम्, शरीरस्य गात्रस्य वृत्ति सद्भावस्तस्याम्, उपरति विरक्तिम्, च कुर्वन् विदधन् सन्, इह स्वनगरे, केकियन्त्र मयूराकारयन्त्रम्, अचीकरत् कारयामास ॥ ६२ ॥

मेघावलिरिति—वर्षासु प्रावृट्सु, स्वसमान नाम येषा तेषा स्वसदृशनामधेयानाम्, मत्ताश्च ते शिखिनश्च तेषा मत्तमयूराणा सुखकरी सुखोत्पादिका, मेघावलिर्घनपङ्क्ति, शिखिना वह्नीना नाशस्य हेतु कारणमस्ति, इत्थमनेन प्रकारेण, विचिन्त्य विचार्य, कल्पित च तत्केकियन्त्र चेति कल्पितकेकियन्त्र निर्मित-मयूरयन्त्रम्, राज्ञा नृपेण, विनुन्नम् प्रेरित सत्, घनसनिधाने मेघसमीपे, अचरत् विजहार, किलेति वार्तायाम् ॥ ६३ ॥

राजा चेति—धीरो गभीर, राजा च सत्यन्धरश्च, राजेव चन्द्र इव वदन मुख यस्यास्ताम्, महिषी राज्ञीम्, यन्त्रे मयूराकारनभोयाने, विधाय कृत्वा, तदीयाश्च ते घनकेशाश्चेति तदीयघनकेशास्तदीय-सान्द्रशिरोरुहास्तैर्विनिर्जित पराभूत यदभ्र मेघस्तत्, सद्रष्टुकाम इव विलोकयितुमना इव 'तु काममन-सोरपि' इति मलोप, दौहृदकाललीला गर्भकालक्रीडाम्, सम्भोक्तुमनुभवितुम्, अभ्राणा मेघाना सरणिर्मार्ग-स्तस्या गगन इत्यर्थ, विजहार विहारमकार्षीत् ॥ ६४ ॥

तावदिति—तावत् तावता कालेन, दुराचारो दुर्वृत्त, स पूर्वोक्त, काष्ठाङ्गारो राज्यकर्मणि नियुक्त, काष्ठान्तरेषु दिगन्तरालेषु, शान्ताङ्गारै, इङ्गालै 'कोयला' इति प्रसिद्धै सकाशा सदृशी भा दीप्तिर्यस्य तम्, राजघो नृपहा, कृत हन्तीति कृतघ्न उपकारानभिज्ञ, इत्यादिश्चासावयशोविलासश्चेतीत्याद्ययशोविलासस्तम्, इति प्रभृत्यकीर्तिविस्तारम्, समार्जयन् प्राप्नुवन् सकलहितवृत्ति निखिलजनकल्याणकारिप्रवृत्तिम्, समार्जयन् उत्सारयन्, राजद्रोहे नृपतिविद्वेषे नियन्त्रित निलीन चित्त मनो यस्य तथाभूत सन्, निजान्तकरणे स्वकीयचेतसि चिन्तयामास विचारयामास । लोके भुवने, पराधीन परायत्तम्, जीवित जीवनम्, परमोत्कृष्टा चासौ पदवी चेति परमोत्कृष्टपदवी ताम्, सर्वश्रेष्ठपदम्, अवाप्तमपि लब्धमपि, सरसमोचाफलानि च रसाढ्यकदलीफलानि च नीचेतरमधुरक्षीराणि च सातिशयमिष्टपयासि चेति सरसमोचाफलनीचेतरमधुर-क्षीराणि, तान्यादौ येषा ते तथाभूताश्च त उपचाराश्च तै परिलालित परितोषितो य पञ्जरबद्ध शलाका-गृहनिरुद्ध शुकशावक कीरबालकस्तस्य जीवनमिव जीवितमिव, विनिन्दित निन्दापात्रम्, अस्तीति शेष, निजबलविभवेन स्वकीयपराक्रमसम्पत्त्या समाजित प्राप्त यन्मृगेन्द्रपद मृगराजपदवी तेन सभावितस्य शोभितस्य, कुम्भीन्द्रकुम्भस्थलस्य गजेन्द्रगण्डस्थलस्य पाटने विदारणे पटुतराणि दक्षतराणि खरनखराणि तीक्ष्णनखानि यस्य तस्य मृगेन्द्रस्येव सिंहस्येव, स्वतन्त्रजीवन पराविघ्नजीवितम्, अविनिन्दितम् अगर्ह-

इत्थं मनसि सचिन्त्य कृतघ्न सचिवै सह ।
समन्त्रयितुमारेभे राजद्रोहपरायण ॥ ६५ ॥
भवता वचसा पद प्रदातु मम वाणी पुर एव सनिधत्ते ।
नवनाटकवस्तुसकथाना पुरतो रङ्गभुव गता नटीव ॥ ६६ ॥
राजद्रोहसमुद्यत प्रतिदिन दैव हि मा बाधते
द्रोह राज्ञि समाचरेति तदिद कि वा सुखान्त भवेत् ।
यद्वा दु खफल ममेति हृदय डोलायते मन्त्रिण-
स्तत्तर्कप्रतितर्कणैर्नियमितैर्निश्चेयमन्यादृशै ॥ ६७ ॥
वक्तु निवर्तमानाऽपि ह्रियैतत्परिनिन्दितम् ।
दैवतस्य भयादेव प्रह्वा जिह्वा प्रवर्तते ॥ ६८ ॥

इत्थ कृतावहित्थात्काष्टाङ्गारवचनबन्धात्सत्कुलप्रसूता इव वचनीयात्, यमिजना इव प्राणिगणपरिपीडनात्, हरिणशावका इव दावानलज्वालात्, राजहसा इव घनाघनघनगर्जितात्, दरिद्रा इव दुर्भिक्षयोगात्, सभास्तारास्तत्र तत्रसु ।

---

णीयम्, अभिनन्दित प्रशसितम्, अनवद्य निष्पापम्, 'कुपूयकुत्सितावद्यखेटगर्ह्याणका समा' इत्यमर, अति हृद्यमतिमनोहरञ्च, विद्यत इति शेष । इत्येव प्रकारेण चिन्तयामासेति सम्बन्ध ।

इत्थमिति—कृतघ्नो नीच कृतोपकारापलापनपटुरिति यावत्, राज्ञा सह द्रोहो राजद्रोहो नृपतिविद्वेषस्तस्मिन् परायणस्तत्पर, स काष्टाङ्गार, इत्थ पूर्वोक्तप्रकारेण, मनसि चेतसि, सचिन्त्य विचार्य, सचिवैर्मन्त्रिभि, सह सार्धम्, समन्त्रयितु मन्त्रणा कर्तुम्, आरेभे तत्परोऽभूत् ॥ ६५ ॥

भवतामिति—भवता युष्माकम्, वचसा वाचाम्, पद स्थानम् 'पद व्यवसितित्राणस्थानलक्ष्माङ्घ्रि वस्तुषु' इत्यमर । प्रदातु वितरितुम्, मम काष्टाङ्गारस्य, वाणी भारती, पुर एव पूर्वमेव, नवनाटकवस्तु सकथाना नूतननाटकीयवस्तुव्यावर्णनानाम्, पद प्रदातुम्, पुरतोऽग्रे, रङ्गभुव रङ्गभूमिम्, गता प्राप्ता, नटीव शैलूषीव, पद चरण स्थान वा, सनिधत्ते निक्षिपति, पूर्वमह कथयामीति यावत् ॥ ६६ ॥

राजद्रोहसमुद्यतमिति—राजद्रोहे राजविद्वेषे समुद्यत तत्परम्, दैव भागधेयम्, राज्ञि नृपतौ सत्यन्धरमहाराज इति यावत्, विषयार्थे सप्तमी, द्रोह विद्वेष कार्तघ्न्यमिति यावत्, समाचर कुरु, इतीत्थम् प्रतिदिन प्रतिदिवसम्, मा बाधते पीडयति, अनिच्छन्तमपि मा राजविद्रोह कर्तुं बलात्प्रेरयतीति भाव । इद तद् दैवबाधनम्, कि वा सुखान्त सुखावसानम्, भवेत् स्यात्, यद्वा अथवा, दु खमेव फल यस्य तद्दु ख-परिणाम स्यात्, इत्येव प्रकारेण मम हृदय चेत, डोलायते डोलावच्चपल वर्तते, तत्तस्मात्कारणात्, हे मन्त्रिण हे सचिवा, तर्कप्रतितर्कणैर्विमर्शप्रतिविमर्शै, नियमितैर्नियन्त्रितै, अन्यादृशैरन्यप्रकारैश्च, तद्वृत्तम्, निश्चेय निश्चेतु योग्यमस्तीति शेष ॥ ६७ ॥

वक्तुमिति—परिनिन्दित जुगुप्सितम्, एतत्कार्यम्, वक्तु कथयितुम्, ह्रिया त्रपया, निवर्तमानापि पश्चात्कृतपदापि, प्रह्वा नम्रा, जिह्वा रसना, दैवतस्य दैवस्य, भयादेव भीतेरेव प्रवर्तते कथयितु तत्परा भवति । नास्ति चेद्दैवतस्य भय न तर्हि प्रवर्तेत मदीया जिह्वा जुगुप्सितमेतन्निगदितुमिति भाव ॥ ६८ ॥

इत्थमिति—इत्थमनेन प्रकारेण, कृता विहितावहित्थाकारगोपन यस्मिस्तस्मात्, 'भयगौरवलज्जादे र्हर्षाद्याकारगुप्तिरवहित्था । व्यापारान्तरसक्त्यन्यथाभाषणविलोकनादिकरी', इत्यवहित्थालक्षणम्, काष्टाङ्गारस्य वचनबन्धस्तस्मात् काष्टाङ्गारवचनरचनाया वचनायात् निन्दाया, सत्कुले समीचीनवशे प्रसूता उत्पन्ना अभिजना इति यावत्, तद्वत्, प्राणिगणस्य जन्तुसमूहस्य परिपीडन व्यथन तस्मात्, यमिजना इव मुनय इव, दावानलस्य वनवह्नेर्ज्वालस्तस्मात्, हरिणशावका इव मृगशिशव इव, घनाघनस्य मेघस्य घन सान्द्रम्, यद् गर्जित गर्जन तस्मात्, राजहसा इव मराला इव, दुर्भिक्षयोगात् अन्नदौर्लभ्यसयोगात्, दरिद्रा इव निर्धना इव, तारा स्थूला विशाला इति यावत्, सभा सभास्थितजना, तत्र तत्रसुबिभ्यु । काष्टाङ्गारस्य राजद्रोह-विधायक वचन श्रुत्वा सर्वे सभासदा भयेन कम्पिता बभूवुरिति भाव ।

तत्र राजनयराजितचित्तो धर्मदत्तसचिवस्तमूचिवान् ।
स्वामिभक्तिपरिवर्धितवाणीमात्मजीवितविनाशकृपाणीम् ॥ ६९ ॥
प्राणा नृपाला सकलप्रजाना यत्तेषु सत्स्वेव च जीवनानि ।
भूपेषु या द्रोहविधानचिन्ता सर्वप्रजास्वेव कृता भवित्री ॥ ७० ॥
समस्तपातकाना हि सामानाधिकरण्यभू ।
राजध्रुगेव भाविता सर्वद्रोहित्वसभवात् ॥ ७१ ॥
राज्ञो विरोधो वशस्य विनाशाय भविष्यति ।
ध्वान्त राजविरोधेन सर्वत्र हि निरस्यते ॥ ७२ ॥
हर्षाय लोकस्य धराधिनाथ क्लिश्नाति नित्य परिपालनेन ।
छायाश्रिताना परिपालनाय तरुर्यथाप्नोति रविप्रतापम् ॥ ७३ ॥

इति नीतिविदा वरिष्ठस्य सचिवप्रेष्ठस्य वचन पित्तोपहत इव मधुरतरक्षीर राजद्रोहगुरुद्रोहादिषु बद्धान्तरङ्ग काष्ठाङ्गार स्वहित मनसि न चकार, चकार च विकारजनितविद्वेषम् ।

---

तत्र राजनयेति—तत्र सभायाम्, राजनयेन राजनीत्या राजित शोभित चित्त मनो यस्य स, धर्मदत्तश्चासौ सचिवश्चेति धर्मदत्तसचिव, धर्मदत्तामात्य, त काष्ठाङ्गारम्, आत्मन स्वस्य जीवित जीवनमात्मजीवित तस्य विनाशो विध्वसस्तस्मै कृपाणी छुरिका ताम्, स्वामिनि नृपे भक्तिरनुरागातिशय स्वामिभक्तिस्तया परिवर्धिता चासौ वाणी च भारती च ताम्, ऊचिवान् जगाद । स्वागताच्छन्द । द्वितीयचरणे तु रथोद्धता । इत्थमुपजातिवृत्तम् ॥ ६९ ॥

प्राणा इति—नन्पालयन्तीति नृपाला राजान सकलाश्च ता प्रजाश्च तासा निखिललोकानाम्, प्राणा आयूषि, सन्तीति शेष । यद्यस्मात् कारणात्, तेषु नृपालेषु सत्स्वेव विद्यमानेष्वेव जीवनानि जीवितानि भवन्तीति शेष । चकार पादपूर्त्यर्थं । भूपेषु महीपालेषु, या द्रोहविधानस्य विद्वेषकरणस्य चिन्ता विचारसन्तति, सा सर्वप्रजास्वेव निखिलप्रकृतिष्वेव, कृता विहिता, भवित्री भविष्यति । न खलु राजद्रोहो राजद्रोह एव किन्तु सर्वप्रजाद्रोह । अतोऽसौ न कर्तव्य इति भाव ॥ ७० ॥

समस्तपातकानामिति—हि निश्चयेन, सर्वद्रोहित्वस्य निखिलजनविद्वेषस्य सभव समुपत्तिस्तस्मात्, राजध्रुगेव राजद्रोह्येव, समस्तपातकाना निखिलपापानाम्, सामानाधिकरण्यस्य भूराधार, भविता भविष्यति । सर्वद्रोहित्वसभवाद्धेतो राजद्रोह्येव समस्तपापाना पात्र भविष्यतीति भाव ॥ ७१ ॥

राज्ञो विरोध इति—राज्ञो नृपते, विरोधो विद्रोह, वशस्य कुलस्य, विनाशाय विध्वसनाय, भविष्यति भविता, हि यत राजविरोधेन चन्द्रविद्वेषेण, ध्वान्त तिमिरम्, सर्वत्र सर्वेषु स्थानेषु, निरस्यतेऽपसार्यते दूरीक्रियत इति यावत् । अत्र राजशब्द श्लिष्ट 'राजा प्रभौ नृपे चन्द्रे यक्षे क्षत्रियशक्रयो' इति कोश ॥ ७२ ॥

हर्षाय लोकस्येति—यथा येन प्रकारेण, तरुर्वृक्ष छायामनातप श्रिता आगतास्तेषाम्, परिपालनाय रक्षणाय, रविप्रताप तपनतापम् आप्नोति लभते, तथा तेन प्रकारेण, धराधिनाथो नृप, लोकस्य जनताया, हर्षाय प्रमोदाय, परिपालनेन रक्षणविधिना, नित्य निरन्तरम्, क्लिश्नाति क्लेशमनुभवति । स्वय दुखमनुभूय परेषा सुखमुत्पादयति पार्थिव इति भाव ॥ ७३ ॥

इति नीतिविदामिति—राजद्रोहश्च गुरुद्रोहश्चेति राजद्रोहगुरुद्रोहास्त आदौ येषा तेषु, बद्ध लग्नमन्तरङ्ग मनो यस्य स, काष्ठाङ्गार, अतिशयेन मधुर मधुरतर तच्च तत् क्षीरञ्चेति मधुरतरक्षीरम्, अतिशयमिष्टदुग्धम्, पित्तेन दोषविशेषेणोपहत पीडितस्तद्वत् पित्तोपहत इव, स्वहित निजकल्याणप्रदम्, नीतिविदा नयज्ञानाम्, वरिष्ठस्य श्रेष्ठस्य, सचिवप्रेष्ठस्य मन्त्रिश्रेष्ठस्य, इति पूर्वोक्तप्रकारम्, वचन वाक्यम्, मनसि न चकार चेतसि न दधौ, विकारेण कोपादिना जनित समुत्पन्नो विकारजनित, स चासौ विद्वेषश्च विरोधश्च तम्, चकार च कृतवाश्च ।

स्यालस्तदीयो मथनाभिधानो वाणी कृतघ्नस्य हितामभस्त ।
काक स्फुरन्निम्बफलप्रसूतिमास्वादनीया बहुमन्यते हि ॥ ७४ ॥

अथ सोऽपि काष्ठाङ्गारस्तत्काल एव नरपालजिघांसानिघ्न कृतघ्न करटतटविलुठन्मदधारा व्याजेन वह्नी कल्लोलिनीरुद्वमद्भिरिव धराधरैर्गन्धसिन्धुरै सैन्यसागरतरङ्गैरिव रङ्गत्तुरङ्गै रयविजित-रविरथैरमितरथैर्भुजचन्दनतरुकोटरान्निर्गच्छन्तीर्भुजगीरिव कृपाणीलता समुद्वहद्भि पादातै परि-शोभमाना सेना नरेन्द्रमन्दिररोधनाय समादिदेश ।

समुज्जजृम्भे सभूतस्तदा दुन्दुभिनिस्वन ।
धुन्वन्निव धरामद्रींश्चालयन्दलयन्नभ ॥ ७५ ॥

ततो नटद्भटाटोपघटितभुजास्फोटचटुलरवनिष्ठुरेण मदवारणकण्ठरवघण्टाघोषभैरवेण कण्ठीरवरवकुण्ठनपटुपोषितहयहेषितभीषणस्वरतरखुरपुटघट्टनकुट्टिमजनितकठोरध्वनिनिर्भरेण पदा-तिततिपादाहतिप्रोद्भूतभूरिभूरवभीकरेण सन्ततपरिस्पन्दन्मदमन्दवेगस्यन्दनचक्रचीत्कारमेदुरेण धानुष्ककरकलितधनुष्टकारकर्कशेन प्रतिध्वानितकुलाचलकन्दरकुलेन कोलाहलेन भरित तस्य बल भूपतिभवनमुपरुरोध ।

---

स्याल इति—मथन इत्यभिधान नामधेय यस्य स, 'आख्याह्वे अभिधान च नामधेय च नाम च' इत्यमर, तस्याय तदीय काष्ठाङ्गारसम्बन्धी, स्यालो भार्याभ्राता, कृतघ्नस्य नीचस्य तस्य काष्ठाङ्गारस्य वाणी भारतीम्, हिता कल्याणकरीम्, अमस्त मन्यते स्म । हि यत, काको वायस, स्फुरन्ती प्रादुर्भवन्ती निम्ब-फलस्य पिचुमन्दफलस्य प्रसूतिमुत्पत्तिम्, आस्वादनीया स्वादयोग्या मधुरामिति यावत्, बहुमन्यते नितरा जानाति ॥ ७४ ॥

अथ सोऽपीति—अथानन्तरम्, नरपालस्य सत्यन्धरस्य जिघासा हन्तुमिच्छा तस्या निघ्न आधीन, कृतघ्न कृतोपकारापलापी, सोऽप्यपरिमितमायाभाण्डागार काष्ठाङ्गार, तत्काल एव तत्समय एव, करटतटेषु गण्डस्थलेषु विलुठन्तीना मदधाराणा दानप्रवाहाणा व्याजेन दम्भेन, वह्नी प्रभूता, कल्लोलिनीर्नदी, उद्वमद्भि प्रकटयद्भि, धराधरैरिव शैलैरिव, गन्धसिन्धुरैर्मत्तमतङ्गजै, सैन्यमेव सागर सैन्यसागर पृतनापाथोधिस्तस्य तरङ्गा भङ्गास्तैरिव रङ्गन्त समुच्छलन्तश्च ते तुरङ्गाश्च हयाश्च तै, रयेण जवेन विजितस्तिरस्कृतो रविरथ सूर्यस्यन्दनो यैस्तै, अमितरथैरगणितशताङ्गै, भुज एव बाहुरेव चन्दनतरुर्मलयजमहीरुहस्तस्य कोटराद् गर्त्तात्, निर्गच्छन्तीर्निःसरन्ती, भुजगीरिव पन्नगीरिव, कृपाणीलता खड्गवल्लरी, समुद्वहद्भिर्धरद्भि पदातीना समूहास्तै पत्तिसमूहै परिशोभमाना परितो विराजमानाम्, सेना चमूम्, नरेन्द्रस्य नृपस्य मन्दिर सदन तस्य रोधन समावरण तस्मै, समादिदेश समाज्ञातवान् ।

समुज्जजृम्भे—तदा तस्मिन् काले, धरा पृथिवीम्, धुन्वन्निव, कम्पयन्निव, अद्रीन् पर्वतान्, चाल-यन्निवोत्सारयन्निव, नभो गगनम्, दलयन्निव खण्डयन्निव, सभूत प्रभूत, दुन्दुभेरानकस्य स्वन शब्द, समुज्जजृम्भे वर्धयामास । उत्प्रेक्षा ॥ ७५ ॥

तत इति—ततस्तदनन्तरम्, नटन्त इतस्तत क्राम्यन्तो ये भटाटोपा यौद्धसमूहास्तैर्घटित कृतो यो भुजास्फोटो बाहुताडन तस्य यश्चटुलश्चञ्चलो रव शब्दस्तेन, निष्ठुरेण कठोरेण, मदवारणाना मत्तकरिणा य कण्ठरवो गलध्वनिर्घण्टाघोषश्च घण्टाशब्दश्च ताभ्या भैरवो भयकरस्तेन, कण्ठीरवरवाणा सिंहशब्दाना कुण्ठने तिरस्करणे पटूनि दक्षाणि यानि पोषितहयाना परिपुष्टवाजिना हेषितानि हेषाशब्दास्तैर्भीषणो भयङ्कर, खर-तराणामतितीक्ष्णाना खुरपुटाना क्षुरावयवाना घट्टनेन सघर्षणेन कुट्टिमेभ्य सुदृढभूमिप्रदेशेभ्यो जनित समुत्पन्नो य कठोरध्वनि कठिनशब्द, कण्ठीरवरवकुण्ठनपटुपोषितहयहेषितभीषणश्चासौ खरतरखुरपुटघट्टन-कुट्टिमजनितकठोरध्वनिश्चेति कर्मधारय, तथाभूतेन ध्वनिना नादेन निर्भर सम्पूर्णस्तेन, पदातीना पदगाना ततय पङ्क्तयस्तासा पादाहतिभिश्चरणाघातै प्रोद्भूत समुत्पन्नो यो भूरिभूरवोऽधिकवसुधाशब्दस्तेन भीकरो भयकरस्तेन, सन्तत निरन्तर परिस्पन्दता परिचलता मदमन्दवेगाना युग्याना मदेन, मन्थररयाणा स्यन्दनाना रथाना यानि चक्राणि रथाङ्गानि तेषां चीत्कारोऽव्यक्तशब्दविशेषस्तेन मेदुरो मिलितो वृद्धिङ्गतो वा,

दौवारिकस्य वचनादुपरोधकृत्य-
माकर्ण्य कर्णपरुष पुरुषाधिराज ।
रोषेण चूषितशुचा स हि धीरधीर
पञ्चाननासनतलादुदतिष्ठतायम् ॥७६॥

तावत्प्रतिष्ठमान प्राणकान्तमनुसृत्य कृतप्रयाणा प्राणान्परिमार्गितुमिव भूमौ निपतिता ता निर्भरगर्भभरता-तामालोक्य पुनर्न्यवर्तिष्ट नरवरिष्ठ ।

प्राबोधयच्च पृथ्वीश कथचिल्लब्धचेतनाम् ।
देवी ज्ञान हि दु खाब्धितरणे तरणीयते ॥७७॥

शम्पानिभा सपदिद शरीर चल प्रभुत्व जलबुद्बुदाभम् ।
तारुण्यमारण्यसरित्सकाश क्षयिष्णुनाशो हि न शोचनीय ॥७८॥

सयुक्तयोर्वियोगो हि सध्याचन्द्रमसोरिव ।
रक्तयोरपि दपत्योर्भविता नियतेर्वशात् ॥७९॥

बन्धुत्व शत्रुभूय च कल्पनाशिल्पिनिर्मितम् ।
अनादौ सति ससारे तद्द्वय कस्य केन न ॥८०॥

---

धानुष्काणा धनुर्धारिणा करेषु हस्तेषु कलितानि धृतानि यानि धनूषि चापास्तेषा टकारोऽव्यक्तशब्दस्तेन कर्कश कठोरस्तेन, प्रतिध्वनित प्रतिशब्दित कुलाचलाना कुलगिरीणा कन्दरकुल गह्वरगणो येन तेन, कोलाहलेन कलकलशब्देन, भरित पूर्णम्, तस्य काष्ठाङ्गारस्य, बल सैन्यम्, भूपतिभवन नरेन्द्रमन्दिरम्, उपरुरोध आवृणुते स्म ।

दौवारिकस्येति—धीरधीरोऽतिशयधैर्यशाली, अय स पूर्वोक्त पुरुषाधिराजो नराधिप, द्वारे भवो दौवारिको द्वारपालकस्तस्य, वचनात् कथनात्, कर्णपरुष श्रवणकठोरम्, उपरोध आवरणमेव कृत्य कार्यम्, आकर्ण्य श्रुत्वा, चूषिता शुक् येन तेन दूरीकृतशोकेन, रोषेण क्रोधेन, पञ्चाननासनतलात् सिंहासनपृष्ठात्, उदतिष्ठत उत्तिष्ठते स्म ॥ ७६ ॥

तावदिति—तावत् तावता कालेन, प्रतिष्ठमान प्रयान्तम्, प्राणकान्तम् वल्लभम्, अनुसृत्यानुगम्य, कृत प्रयाण प्रस्थान यैस्तान्, प्राणान् जीवितानि, परिमार्गितुमन्वेष्टुमिव, भूमौ पृथिव्याम्, निपतितां स्खलिताम्, निर्भरेण सातिशयेन गर्भभरेण दोहदभरेण तान्ता दु खीभूताम्, ता कान्ता वल्लभाम्, आलोक्य दृष्ट्वा, नरवरिष्ठो नृप, पुनर्भूय, न्यवर्तिष्ट प्रत्यावृत्ते ।

प्राबोधयच्चेति—पृथ्वीशो महीकान्त, कथञ्चित् केनापि प्रकारेण, लब्धा प्राप्ता चेतना सज्ञा यया ता लब्धचेतनाम्, देवी राज्ञीम्, प्राबोधयच्च सम्बोधयामास च, हि यत, ज्ञान बोध, दु खमेवाब्धि सागरस्तस्य तरणे प्लवने, तरणिरिवाचरतीति तरणीयते नौकायते ॥ ७७ ॥

शम्पानिभेति—सपत् सम्पत्ति, शम्पानिभा तडित्सदृशी, 'शम्पा सौदामिनी तडित्' इति धनञ्जय, इद शरीरम्, अय विग्रह 'शरीर वर्ष्म विग्रह' इत्यमर, चल चपलम्, प्रभुत्वमैश्वर्यम्, जलबुद्बुदाभ जलस्फोटसदृशम्, तारुण्य यौवनम्, आरण्यसरित्सकाश वनापगासदृशम्, अस्तीति शेष, हि निश्चयेन क्षयिष्णो नश्वरस्य नाशो विनाश, शोचनीय शुग्भाजन, न भवतीति भाव ॥ ७८ ॥

सयुक्तयोरिति—हि निश्चयेन, सध्या च चन्द्रमाश्चेति सन्ध्याचन्द्रमसो तयोरिव पितृप्रसूशशिनोरिव, सयुक्तयो सयोग प्राप्तयो, रक्तयो परस्परानुरागसहितयो, दम्पत्यो, जायाश्च पतिश्चेति दम्पती तयो 'जायया जम्भावो दम्भावो निपात्यते' वियोगो विरह नियतेर्दैवस्य वशात् परतन्त्रत्वात्, भविता भविष्यति ॥ ७९ ॥

बन्धुत्वमिति—बन्धूना सहोदराणाम्, बन्धुत्व भ्रातृत्व, शत्रुभूय शत्रुत्व च, कल्पनैव शिल्पी कार्यकरस्तेन निर्मितम्, अस्तीति शेष । ससारे भुवने, अनादावाविरहिते सति, तयोर्द्वन्द्व युग्म बन्धुत्व शत्रुत्वञ्च, कस्य जनस्य केन जनेन सह न, अपितु सर्वस्य सर्वेणैव सह वर्तत इति भाव ॥ ८० ॥

इति नरनाथवचनपरिपाटी निष्टप्तलोहपतितवारिधारेव शोकानलज्वालालीढे देव्या मनसि किञ्चिदप्यार्द्रतामनापादयन्ती निर्दग्धभूम्युप्तबीजराजिरिव विफला बभूव ।

राजा समारोप्य शिखण्डियन्त्रमापन्नसत्त्वां सरसीरुहाक्षीम् ।
सभ्रामयामास च मेघमार्गे हा हा बत क्रूरविधेर्विपाक ॥८१॥

अथ कलापियन्त्रे वलाहकमार्गमधिरूढे, मृगेन्द्र इव गिरिकन्दरा मन्दिरान्निर्गत्य, निखिलपरिवारविकलो वसुधापतिरसहाय एव रणाङ्गणमवतीर्य, धैर्यावगाढहृदयस्तत्राभ्यमित्रीणं शात्रवमन्त्रिणं सगरसनद्धं निध्याय, क्रोधपरतन्त्रितचित्तो योद्धुमुपचक्राम ।

चण्डवात इवाम्भोदान्मण्डलाधिपतिर्भटान् ।
निनाय कान्दिशीकत्वं पञ्चाननपराक्रमः ॥८२॥
जिगाय मन्त्रिणं वीरो जनानामधिपस्ततः ।
जन्याजिराभ्रतिग्मांशुर्जयश्रीप्राणवल्लभः ॥८३॥

अथ काष्ठाङ्गारोऽपि सगरे निजामात्यभङ्गं निशम्य, तरङ्गितक्रोधकुटिलितभ्रुकुटीविटङ्कः सामजसमाजवाजिपादातशबलेन बलेन सनाथो नरनाथमभिगम्य, बहुधा युद्ध्वा, वैराग्यायत्तचि-

---

इति नरनाथवचनेति—इति पूर्वोक्तप्रकारा नरनाथस्य सत्यन्धरमहाराजस्य वचनपरिपाटी वाक्यपरम्परा, निष्टप्तश्चासौ लोहश्चेति निष्टप्तलोहः सन्तप्तायः तस्मिन् पतिता मुक्ता या वारिधारा तद्वत्, शोकानलस्य विषादवह्नेर्ज्वालाभिरर्चिभिरालीढे व्याप्ते तस्मिन्, देव्या राज्ञ्याः, मनसि चेतसि, किञ्चिदपि मनागपि, आर्द्रतां क्लिन्नताम्, अनापादयन्ती न कुर्वन्ती, निर्दग्धभूमौ निर्दग्धपृथिव्यामुप्ता सतानिता या बीजराजिः कणश्रेणिस्तद्वत्, विफला निष्फला, बभूवाभूत् ।

राजा समारोप्येति—राजा नरेन्द्रः, आपन्नसत्त्वां गर्भिणीम्, सरसीरुहाक्षीम् कमललोचनाम्, विजयामिति यावत्, शिखण्डियन्त्रं मयूरयन्त्रम्, समारोप्याधिष्ठापयित्वा, मेघमार्गे च नभसि च, सभ्रामयामास सचालयामास, 'हा हा बत' इति खेदार्थेऽव्ययत्रयम्, क्रूरविधेर्दुष्टदैवस्य, विपाकः परिणामः फलमिति यावत् । कर्मणामुदयो विचित्रोऽस्तीति महादुःखकरमिति भावः ॥ ८१ ॥

अथ कलापियन्त्र इति—अथानन्तरम्, कलापियन्त्रे मयूरयन्त्रे, वलाहकमार्गं मेघमार्गम् गगनमिति यावत्, अधिरूढेऽधिष्ठिते सति, गिरिकन्दरात्पर्वतगह्वरात्, मृगेन्द्र इव सिंह इव 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः' इत्यमरः, निर्गत्य बहिरागत्य, निखिलश्चासौ परिवारश्चेति निखिलपरिवारः समस्तपरिजनः, तेन विकलो रहितः, वसुधापतिर्नृपः सत्यन्धरः, असहाय एव एकाक्येव, रणाङ्गणं समरचत्वरं युद्धभूमिमिति यावत्, अवतीर्य प्रविश्य, धैर्येण स्थैर्येणावगाढं प्रचुरं हृदयं चेतो यस्य तथाभूतः सन्, तत्र रणाङ्गणे, अभ्यमित्रीणं शत्रुपक्षीयम्, शात्रवमन्त्रिणं शत्रुसचिवम्, सगराय युद्धाय सनद्धं तत्परम्, निध्याय दृष्ट्वा, क्रोधेन कोपेन परतन्त्रितं परायत्तं चित्तं मनो यस्य तथाभूतो भवन्, योद्धुं युद्धं कर्तुम्, उपचक्राम तत्परो बभूव ।

चण्डवात इति—पञ्चाननस्येव पराक्रमो यस्य स मृगेन्द्रविक्रमः, मण्डलाधिपतिर्भूपतिः चण्डवातस्तीक्ष्णपवनः अम्भोदानिव मेघानिव, भटान् योद्धॄन्, कान्दिशीकत्वं भयद्रुतत्वम् 'कान्दिशीको भयद्रुते' इत्यमरः, भयकृतपलायमानताम्, निनाय प्रापयामास । 'अकथितञ्च' इति नयतेर्द्विकर्मकत्वम् ॥ ८२ ॥

जिगायेति—ततः कतिपयक्षणव्यापियुद्धानन्तरम्, जन्याजिरं समराङ्गणमेवाभ्रं गगनं तत्र तिग्मांशुः सूर्यः, जयश्रिया विजयलक्ष्म्याः प्राणवल्लभो जीवितेशः, वीरः शूरः, जनानां लोकानाम्, अधिपः स्वामी सत्यन्धर इति यावत्, मन्त्रिणं शत्रुसचिवम्, जिगाय जयति स्म 'सन्लिटोर्जेः' इत्यभ्यासस्य कुत्वम् ॥ ८२ ॥

अथ काष्ठाङ्गारोऽपीति—अथ तदनु, काष्ठाङ्गारोऽपि कृतघ्नशिरोमणिरपि, सगरे समरे, निजामात्यस्य स्वसचिवस्य भङ्गं पराजयम्, निशम्य श्रुत्वा, तरङ्गितक्रोधेन वृद्धिङ्गतकोपेन कुटिलितो वक्रीकृतो भ्रुकुटीविटङ्को भ्रूप्रदेशो यस्य तथाभूतः सन् सामजसमाजश्च गजगणश्च वाजिनश्च हयाश्च पादातानि च पदातिसमूहश्चेति

ततया प्राणिगणवधविरत त वयस्य इव स्वस्थता निनाय ।

स्वर्ग भूपो राजहा राज्यलक्ष्मी भेरीशब्द श्रोत्रदेश च देव्या ।
पौरा शोक पण्डिता स्त्रीविरक्ति ज य शान्ति यौगपद्यात्प्रपेदे ॥८४॥
तावच्च य त्र भ्रमणेन हीन शनै शनैस्तद्वियतोऽवतीर्य ।
ता भर्तृशोकानलदह्यमाना प्रपातयामास वने पितृणाम् ॥

ततश्च कुणपकवलनार्थं मिलितनि शङ्ककङ्ककाकसङ्कुलमभ्यर्णसज्वलच्चिताचक्रज्वालाभिरतप्ततया निजाग्रभागसमारोपितपाटच्चरगलनिरर्गलनिर्गलल्लोहितधारासम्पर्कसजातचुकारिधूम्यसव्छादितै शूलै समाकीर्ण सामिदग्ध शव चिताहुतवहादाकृष्य खण्डशो विच्छिद्य खादन्तीना डाकिनीना कोलाहलेन कटाग्निदह्यमाननृकरोटिपटुचटात्कारेण च भीकर यत्पुरप्रेतागारमवलोकमाना सा नरदेवमहिषी मूर्छापहृतचेतना बभूव ।

अजानती कश्मलपारवश्यात्प्रसूतिपीडा नरपालजाया ।
मासे तदा वै जनने दिनेऽस्मिन्प्रासूत सूनु तपन यथा द्यौ ॥८५॥

---

साम जसमाजवाजिपादात तेन शबल चित्रित तेन, बलेन सैन्येन, सनाथ सहित सन्, नरनाथ नरेन्द्रम्, अभिगम्य तस्य सम्मुख गत्वा, बहुधा विविधप्रकारेण, युद्ध्वा युद्ध कृत्वा, वैराग्यस्य निर्वेदस्यायत्त निघ्न चित्त हृदय यस्य तस्य भावस्तत्ता तया, प्राणिगणस्य जन्तुसमूहस्य वधाद्धिसनात्, विरतो विरक्तस्तम्, त नृपम्, वयस्य इव सखेव, स्व स्थता स्व स्वर्गस्तस्मिस्तिष्ठतीति स्व स्थस्तस्य भाव स्व स्थता ता स्वर्गवासित्वम्, पक्षे स्वस्थता 'शर्परे शरि विसर्गलोपो वा वक्तव्य' इति वार्तिकेन विकल्पेन विसर्गलोप । नीरोगताम्, निनाय प्रापयामास ।

स्वर्ग भूप इति—भूप सत्यन्धर, स्वर्ग त्रिदिवम्, राजहा काष्ठाङ्गार, राज्यलक्ष्मी राज्यश्रियम्, भेरीशब्दश्च ढक्कानादश्च, देव्या विजयाया, श्रोत्रदेश कर्णप्रदेशम्, पौरा नागरिका, शोक खेदम्, पण्डिता विद्वास, स्त्रीविरक्ति ललनाभ्यो विरागम्, जन्य युद्धम्, शान्ति प्रशमम्, यौगपद्याद्युगपदेव, प्रपेदे प्राप। अनेनैषा एकक्रियया सह सम्बन्धाद्दीपकालङ्कार ॥ ८४ ॥

तावच्चेति—तावत्कालपर्यन्तम्, भ्रमणेन भ्रमणशक्त्या, हीन रहित तत् यन्त्र शनै शनै मन्द मन्द वियतो गगनात्, अवतीर्य अवरुह्य, भर्तु शोक एवानलस्तेन दह्यमाना ताम्, प्राणपतिविरहजन्यखेदपावक भस्मीभवन्तीम्, ता विजयाम्, पितृणा वने श्मशाने प्रपातयामास स्खलयामास ॥

ततश्चेति—ततश्च राज्ञ स्वर्गप्रयाणानन्तरम्, कुणपकवलनार्थं मृतकदेहभक्षणार्थम्, मिलिता एकत्र सगता नि शङ्का निर्भयाश्च ये कङ्ककाका पक्षिविशेषास्तै सङ्कुल व्याप्तम् अभ्यर्णे निकटे सज्वलत प्रदीप्यमान यच्चिताचक्र चितासमूहस्तस्य ज्वालाभिरर्चिभि सप्ततया निष्टप्तत्वेन, निजाग्रभागे स्वशिखरे समारोपितोऽधिष्ठापितो य पाटच्चरश्चोरस्तस्य गलात्कण्ठात् निरर्गल निर्बाध यथा स्यात्तथा निर्गलन्त्यो नि शेषेण पतन्त्यो या लोहितधारा रुधिरश्रेणयस्तासा सम्पर्केण स्पर्केण सजाता समुत्पन्ना चुकारिणी चुमितिशब्दकारिणी या धूम्या धूमसमूह 'पाशादिभ्यो य' इति य प्रत्यय, तया सञ्छादितैरावृतै, शूलैरायसकीलै, समाकीर्ण व्याप्तम्, सामिदग्धमर्धदग्धम्, शव मृतदेहम्, चिताहुतवहात् चित्याग्ने आकृष्याकृष्ट विधाय, खण्डश खण्डेन खण्डेन, विच्छिद्य विदार्य, खादन्तीना भक्षयन्तीना डाकिनीना पिशाचीनाम्, [कविसमयेनैतद्वर्णन न तु जैनसिद्धान्तेन तत्र देवाना मासभोजनस्य निषिद्धत्वात्] कोलाहलेन कलकलशब्देन, विकटाग्निना विशालानलेन दह्यमान पच्यमानो यो नृकरोटिर्नरकपालप्रदेशस्तस्य पटुस्तीक्ष्णो यश्चटात्कारोऽव्यक्तशब्दविशेषस्तेन च, भीकर भयङ्करम्, तत्पुरस्य राजपुरीनगरस्य प्रेतागार श्मशानम्, अवलोकमाना पश्यन्ती, सा नरदेवमहिषी, नृपतिप्रधानपत्नी विजयेति यावत् 'कृताभिषेका महिषी' इत्यमर, मूर्च्छया नि सज्ञतयापहृता दूरीभूता चेतना सज्ञा यस्यास्तथाभूता बभूव ।

अजानती—तदा तदानीम्, वै जनने मासे दशमे मासे, अस्मिन् दिने नृपतिप्राणावसानदिवसे,

---

१ अय श्लोको मुद्रितपुस्तके नास्ति ।

तदा जनकराज्यश्रीर्द्रष्टुं मूर्तिमिवास्थिता।
सुतस्य भाग्यसपद्वा देवता काचिदागता॥ ८६॥

दिशि दिशि विसरद्भिः पुत्रतेजोविलासै-
र्बहलतिमिरजाले[1] नाशिते तत्क्षणेन।
विलसितमणिदीपा[2] देवताक्लृप्तरूपा
सुतरुचिपरिभूता मङ्गलार्था बभूवुः॥ ८७॥

तस्या मुखेन्दोरवलोकनेन शोकाम्बुधिर्वृद्धिमवाप देव्याः।
अभ्युग्रभावः किल बान्धवानां सुखस्य दुःखस्य च वृद्धिहेतुः॥ ८८॥

हा मनोजाकाररूप हा महागुणमणिद्वीप हा मानसविहारराजहंसस्वरूप हा मदनकेलिचतुरभूप मम प्राणैकरूप कासि कासीति विलपन्ती शोकविषमोहिताङ्गीं लताङ्गीं तां देवतापि लोकोत्तरतोकोत्तममहिमवर्णनपीयूषपरिषेचनेन समुज्जीवयन्ती सुवर्णसवर्णेषु तदीयाङ्गेषु लसदूर्णाप्रमुखविलक्षणलक्षणप्रदर्शनेन प्रत्याययन्ती तनुजवर्धनोपायचिन्तासतमसदूरीकरणधीरतरमित्थं गिरमुत्थापयामास।

---

कश्मलपारवश्यात् कृच्छ्रपारतन्त्र्यात्, प्रसूतिं पीडां प्रसवकष्टम्, अजानती न बुध्यमाना, नरपतिजाया राज्ञी विजयेति यावत्, द्योगंगने तपनं यथा सूर्यमिव, सूनुं सुतम्, प्रासूत जनयामास। उपमा॥ ८५॥

तदेति—तदा तस्मिन् काले, मूर्तिं शरीरम्, आस्थिता प्राप्ता, जनकराज्यश्रीरिव पितृराज्यलक्ष्मीरिव सुतस्य पुत्रस्य, भाग्यसपद्वा पुण्यसम्पत्तिर्वा, द्रष्टुं विलोकयितुं तां विजयामिति शेषः, काचित् कापि, देवता, देवी, आगता समायाता॥ ८६॥

दिशि दिशीति—दिशि दिशि प्रतिकाष्ठम्, विसरद्भिः, प्रसरद्भिः पुत्रस्य शिशोस्तेजोविलासैः सहज ज्योतिः प्रकाशैः, बहलं प्रभूतं यत्तिमिरजालं ध्वान्तसमूहस्तस्मिन्, तत्क्षणेन तत्कालेन, नाशिते विध्वस्ते सति, देवतया देव्या क्लृप्तं रहितं रूपं येषां ते तथाभूताः, विलसिता शोभिता ये मणिदीपा रत्नप्रदीपाः ते, सुतस्य पुत्रस्य रुच्या देहदीप्त्या परिभूतास्तिरस्कृताः सन्तः, मङ्गलमेवार्थः प्रयोजनं येषां तथाभूताः, बभूवुरासन्॥ ८७॥

तस्या इति—तस्या देवतायाः, मुखेन्दोर्वदनचन्द्रमसः, अवलोकनेन दर्शनेन, देव्या विजयायाः, शोक एवाम्बुधिः खेदसागरः वृद्धिम् उन्नतिम्, अवाप लेभे। बान्धवानामिष्टजनानाम्, अभ्युग्रभावः सामुख्यम्, सुखस्य शर्मणः, दुःखस्य चाशातस्य च 'शर्मशातसुखानि च' इत्यमरः, वृद्धिहेतुः प्राबल्यकारणं भवतीति शेषः, किलेति वार्तायाम्॥ ८८॥

हा मनोजेति—हा मनोजस्येव कामस्येवाकाररूपे सस्थानसौन्दर्ये यस्य तत्सम्बुद्धौ, हा महागुणा एव मणयो रत्नानि तेषां द्वीपस्तत्सम्बुद्धौ, हा मानसं चित्तमेव मानसं मानससरोवरस्तस्मिन् विहारे क्रीडने राजहंसस्येव मरालस्येव पक्षे राजज्येष्ठस्येव स्वरूपं यस्य तत्सम्बुद्धौ, हा मदनकेल्याः कामक्रीडायाः चतुरो दक्षस्तत्सम्बुद्धौ, मम विजयायाः, प्राणैकरूप जीवितोपम, भूप राजन्, कासि कुत्रासि कासि कुत्रासि, इत्येवं प्रकारेण, विलपन्तीं विलापं कुर्वन्तीम्, शोक एव विषाद एव विषं गरलं तेन मोहितानि प्राप्तमूर्छानि अङ्गानि यस्यास्ताम्, लताङ्गीं कृशाङ्गीम्, तां राज्ञीं, देवतापि देव्यपि, लोकोत्तरस्य सर्वश्रेष्ठस्य तोकस्य पुत्रस्य य उत्तममहिमा परममाहात्म्यं तस्य वर्णनमाख्यानमेव पीयूषममृतं तेन परिषेचनं पर्युक्षणं तेन, समुज्जीवयन्ती समुल्लासयन्ती, सुवर्णसवर्णेषु कनककल्पेषु, तदीयाङ्गेषु पुत्रावयवेषु, लसन्ति शोभमानानि, ऊर्णाप्रमुखानि मकरिकाप्रधानानि यानि विलक्षणलक्षणानि विचित्रचिह्नानि तेषां प्रदर्शनेन विलोकनेन, प्रत्याययन्ती विश्वासमुत्पादयन्ती, तनुजवर्धनस्य पुत्रवृद्धेर्ये उपायाः साधनानि तेषां चिन्तैव सतमसं गाढध्वान्तम् तस्य दूरीकरणेऽपहरणे धीरतरमतिशयेन धीरं यथा स्यात्तथा, इत्थं वक्ष्यमाणप्रकाराम्, गिरं वाणीम्, उत्थापयामास उत्थापयति स्म, जगादेति यावत्।

---

1 तिमिरबहलजाले ब०। 2 मणिरूपा मु०।

पुत्रस्य वर्धनविधौ विजहाहि चिन्ता
सवर्धयिष्यति सुत तव कश्चिदेनम् ।
चन्द्रश्चकोरमिव चूततरुर्यथा वा
बाल पिकं कमलिनीविसरो मरालम् ।।८६।।

तदात्व एवात्र मृत तनूज विसृज्य गन्धोत्कटवैश्यनाथ ।
योगीन्द्रवाक्यस्मरणेन सूनु गवेषयन्लोचनगोचरोऽभूत् ।।६०।।

त दृष्ट्वा देवतावाक्य प्रमाण निश्चिकाय सा ।
सवादेन हि सर्वेषा प्रामाण्यमवगम्यते ।।६१।।

ततो महीकान्तकान्ता, निजान्तरङ्गरविकान्तजाज्वल्यमानप्रियविप्रयोगशोकानलकीलाकलाप तनयसुन्दरवदनचन्दिरालोकेन शमयिष्यन्ती, सरोजलोद्धृतशफरीव विना शिशुना स्थातु क्षणमपारयन्त्यपि देवतावचनजनितविस्रम्भभावेन गत्यन्तराभावेन च गन्धोत्कटश्रेष्ठिसमर्पणाय कथ कथमप्यनुमतिमापाद्यमाना, स्वभावत एव समुद्रमपि निर्निद्राणतेजसा पुत्र पित्रीयमुद्रया समुद्र विधाय, विधाय च पुरतो, देवतया सह सहसान्तरधात् ।

पितृवनवनमध्ये बालसूर्यप्रकाश
सुतमतिविततताभ्या लोचनाभ्या पिबन् स ।

---

पुत्रस्येति—पुत्रस्य सुतस्य, वर्धनविधौ सरक्षणकार्ये, चिन्ताम्, विजहाहि विमुञ्च, 'ओहाक् त्यागे' इत्यस्य लोटि मध्यमपुरुषैकवचने रूपम् 'आ च हौ' इत्यात्वम्, तव भवत्या, एन वर्तमानम्, सुत पुत्रम्, कश्चित् कोऽपि नर, चन्द्र शशी, चकोरमिव जीव जीवमिव, यथा वा येन प्रकारेण वा, चूततरुराम्रवृक्ष, बालमदीर्घायुषम्, पिक कोकिलम्, कमलिनीविसर पद्मिनीसमूह, मराल हसम्, वा, सवर्धयिष्यति पालयिष्यति । मालोपमा ॥ ८६ ॥

तदात्व इति—तदात्व एव तस्मिन्नेव काले, अत्र पितृवने, मृत परासुम्, तनूज सुतम्, विसृज्य त्यक्त्वा, गन्धोत्कटवैश्यनाथो गन्धोत्कटनाम वैश्यपति, योगीन्द्रस्य महामुनेर्वाक्यस्य वचनस्य स्मरणमाध्यान तेन, सूनु जीवितमपर पुत्रम्, गवेषयन्नन्वेषयन्, लोचनगोचरो दृष्टिविषय, अभूत् ॥ ६० ॥

त दृष्ट्वेति—त पूर्वोक्त गन्धोत्कटम्, दृष्ट्वा विलोक्य, सा विजया देवतावाक्य देवीवचनम् 'सवर्धयिष्यति सुत तव कश्चिदेनम्' इति रूपमिति यावत्, प्रमाण सत्यम्, निश्चिकाय निश्चितवती, 'विभाषा चेः' इति विकल्पेन कुत्वम्, हि यत, सवादेनानुकूलसमर्थनेन, सर्वेषा निखिलानाम्, प्रामाण्य याथार्थ्यम्, अवगम्यते ज्ञायते । अर्थान्तरन्यास ॥ ६१ ॥

तत इति—ततस्तदनन्तरम्, महीकान्तस्य भूवल्लभस्य कान्ता प्रेयसी, विजयेति यावत्, निजान्तरङ्गमेव स्वकीयान्त करणमेव रविकान्त सूर्यकान्तोपलस्तस्मिन् जाज्वल्यमान पुन पुनरतिशयेन वा ज्वलन् य प्रियविप्रयोगशोक एव वल्लभविप्रलम्भविषाद एवानलो वह्निस्तस्य कीलाकलाप ज्वालासमूहम्, तनयस्य सुतस्य सुन्दरवदनमेव सुभगास्यमेव चन्दिरश्चन्द्रस्तस्यालोकन दर्शन तेन, 'चन्दिरोऽनेकपे चन्द्रे' इति मेदिनी, शमयिष्यन्ती शान्त करिष्यन्ती, सरोजलात्कासारनीरादुद्धृता समुद्धृत्य बहिर्नीता शफरीव मत्सीव, शिशुना पुत्रेण, विनान्तरेण, क्षणमप्यल्पकालपर्यन्तमपि, स्थातु निवसितुम्, अपारयन्त्यपि असमर्थापि, देवतावचनेन देवीवाक्येन जनित समुत्पादितो यो विस्रम्भभावो विश्वासपरिणामस्तेन, गत्यन्तराभावेन च साधनान्तराभावेन च, गन्धोत्कटश्रेष्ठिने समर्पण प्रदान तस्मै, कथ कथमपि केनापि प्रकारेण, अनुमतिमनुमोदनम्, आपाद्यमाना प्रापयन्ती, स्वभावत एव निसर्गेणैव, निर्निद्राणानि स्फुरन्ति च तानि तेजासि ज्योतींषि तेषाम्, समुद्रमपि सागरमपि, पुत्र तनूजम्, पितुरिय पित्रीया सा चासौ मुद्रा च तया पितुराङ्गुलीयकेन, समुद्र मुद्रया सहितम्, विधाय कृत्वा, पुरतोऽग्रे विधाय च कृत्वा च, देवतया देव्या, सह सार्धम्, सहसा झटिति, अन्तरधात् तिरोहिताभूत् ।

पितृवनवनमध्य इति—पितृवन श्मसान तस्य वनस्य गहनस्य मध्ये, बालसूर्यस्येव प्रात प्रभाकर-

तृषित इव सरोऽम्भश्चातको यद्वदभ्र-
प्रसृतजलकणालिं नातृपद्वैश्यनाथः ॥ ६२ ॥

(अथ च, एधोऽन्वेषिजन इव महानिधिं महीशसुतमासाद्य, सद्य एवाङ्कुरितपुलकापदेशेन हृदयालवालसजातमञ्जुलमोदलताकोरकानिव बिभ्राणः, प्रीतेः परां कोटिमात्मजं चादधानः, तदङ्गस्पर्शसुखपारवश्येन प्रमदजलनिधिमग्न इव, हृदयान्तरे मलयजरसलिप्त इव, हिमवालुकादीर्घिकानिमज्जन्मूर्तिरिव, मोहाक्रान्त इव, निद्राण इव, मत्त इव, परिमूढेन्द्रियगण इव, निमीलितचैतन्य इव, आनन्दपरम्परायाः परां काष्ठामातिष्ठमानो, जीवेत्याद्याशीर्वचनमाकर्ण्य, तमनङ्गरूपधेयं महाभागधेयमङ्गजं तन्नामधेयेनालञ्चकार।)

ततः स्वकीयावसथं समेत्य वणिक्पतिः क्रुद्ध इवाबभाषे।
जीवन्तमप्यात्मजमद्य मत्ते विना परीक्षां मृतकं किमात्थ ॥ ६३ ॥

यद्वा सम्भ्रान्तचित्तानां वनितानां स्वभावतः।
युक्तं न किं कुमारस्य मारान्तत्वप्रकल्पनम् ॥ ६४ ॥

इत्यादिवचनसायकेन निजनायकेन समर्पितं नयनानन्दनं नन्दनं सुनन्दापि समादधाना

---

स्येव प्रकाशः उज्ज्वलत्वं यस्य तम्, सुतं पुत्रम्, अतिविततास्यामतिदीर्घाभ्याम्, लोचनाभ्यां नयनाभ्याम्, पिबन्नवलोकयन्, स पूर्वोक्तः, वैश्यनाथो गन्धोत्कटः, सरोऽम्भः कासारसलिलम्, पिबन् धयन्, तृषित इव पिपासुरिव, अभ्रान्मेघात् प्रसृतानां निःसृत्य विस्तृतानां जलकणानां वारिबिन्दूनामालिं पङ्क्तिस्ताम्, पिबन्, चातको यद्वत् जीवञ्जीव इव, नातृपत् सतृप्तो नाभूत् ॥ ६२ ॥

अथ चेति—अथ च गन्धोत्कटश्च, महानिधिं विपुलभाण्डारम्, आसाद्य प्राप्य, एधोऽन्वेषिजन इवेध्मगवेषिपुरुष इव, महीशसुतं राजपुत्रम्, आसाद्य लब्ध्वा, सद्य एव झटित्येव, अङ्कुरितानां प्रादुर्भूतानां पुलकानां रोमाञ्चाणामपदेशेन व्याजेन, हृदयमेव स्वान्तमेवालवालमावापस्तस्मिन् सजाता समुत्पन्ना या मञ्जुलमोदलता मनोहरानन्दवल्लरी तस्याः कोरकाः कुड्मलास्तान्, बिभ्राण इव दधान इव, प्रीतेः प्रसन्नतायाः, परामन्त्याम्, कोटिमवधिम्, आत्मजं पुत्रं च, आदधानः आधरन्, तदङ्गस्य पुत्रशरीरस्य स्पर्शेन सगेन यत्सुखं तस्य पारवश्यं परायत्तत्वं तेन, प्रमद एव जलनिधिः प्रमदजलनिधिर्हर्षपारावारस्तस्मिन्मग्न इव ब्रुडित इव, हृदयाभ्यन्तरे चित्तमध्ये, मलयजरसेन चन्दननिस्यन्देन लिप्त इव दिग्ध इव, हिमवालुकानां प्रालेयसिकतानां दीर्घिका वापिका तस्यां निमज्जन्ती वगाहमाना मूर्तिः शरीरं यस्य स तथाभूत इव, मोहेनाक्रान्तो मोहाक्रान्तो मूढस्तद्वत्, निद्राण इव शयान इव, मत्त इव, क्षीब इव, परिमूढः प्राप्तमोह इन्द्रियगणो हृषीकसमूहो यस्य तथाभूत इव, निमीलितं तिरोहितं चैतन्यं यस्य तथाभूत इव, आनन्दपरम्परायाः प्रमोदसन्ततेः, परामुत्कृष्टाम्, काष्ठां सीमानम्, आतिष्ठमानः प्राप्नुवन्, सन्, 'जीव' 'जीयतात्' इत्याद्याशीर्वचनमितिप्रभृतिदीर्घायुष्यवचनम्, आकर्ण्य निशम्य, अनङ्गस्येव कामस्येव रूपधेयं सौन्दर्यं यस्य तम्, महद्भागधेयं भाग्यं यस्य तं विपुलभाग्यम्, तं पूर्वोक्तम्, अङ्गजं सुतम्, तन्नामधेयेन जीवेति नाम्ना, अलञ्चकार भूषयामास।

तत इति—ततस्तदनन्तरम्, वणिक्पतिर्गन्धोत्कटः, स्वकीयावसथं स्वकीयगृहम्, समेत्यागत्य, क्रुद्ध इव कुपित इव, वनितां प्रति, आबभाषे जगाद, अयि मत्ते क्षीबे! अद्यास्मिन् दिवसे, जीवन्तमप्यमृतमपि, आत्मजं पुत्रम्, परीक्षां विना विचारमन्तरेण, मृतकं परासुम्, किं केन कारणेन, आत्थ कथयसि? इति। अन्यस्या मातुरपत्यं विज्ञाय कदाचिदियं स्त्रीस्वभावादस्य निजापत्यवत्पालनं न कुर्यादित्याशङ्क्य गन्धोत्कटेन तस्यान्यापत्यकत्वं निरस्तमिति रहस्यम् ॥ ६३ ॥

यद्वेति—यद्वेति पक्षान्तरे, स्वभावतो निसर्गेण, सम्भ्रान्तं क्षुभितं चित्तं यासां तासाम्, वनितानां नारीणाम्, कुमारस्य पुत्रस्य, मारान्तत्वप्रकल्पनं मृतपर्यन्तकल्पनम्, किं न युक्तं किं न योग्यमपि तु योग्यमेव। निसर्गेण सम्भ्रान्तचित्तानां विवेकः कुत इति भावः ॥ ६४ ॥

इत्यादिवचनेति—इत्यादीनि इतिप्रभृतीनि वचनान्येव सायकः शरस्तेन सह, निजनायकेन स्व-

तदङ्गसौष्ठवकलावलोकनजनितदृष्टिदोषपरिहारायेव तरलतरकटाक्षनीलोत्पलदाममेचकरुचिवीचिकाविचितमातेने ।

पायं पायं नयनचषके रूपलावण्यलक्ष्मी
सौधीं धारां प्रकृतिमधुरां वैश्यजायापती तौ ।
स्पर्शं स्पर्शं कुसुममृदुलं विग्रहं तस्य सूनो-
स्तृप्तिं प्राप्यानितरसुलभां प्रापतुर्विस्मयाब्धिम् ॥ ६५ ॥

देवता च महिषीतनुवल्ल्या साम्यमाश्रमलतास्विव द्रष्टुम् ।
बान्धवालयपराङ्मुखीमिमां दण्डकावननिवासमनैषीत् ॥ ६६ ॥

अथ समीहितार्थसिद्धिजनिततोषकलिताया देवताया सव्याजमन्तर्हितायामियं च राजपत्नी नैजमानससरोवरे सन्ततविकचजिनपादपयोजविशोभिते नन्दनराजहंसं सक्रीडयामास ।

या हंसतूलशयनस्थलतान्तवृन्त-
क्लेशासहा पुरि पुराजनि काननान्ते ।
दर्भेषु हन्त शयनं बहुमन्यते स्म
सा मालतीकुसुमकोमलगात्रवल्ली ॥ ६७ ॥

---

वल्लभेन, समर्पितं प्रदत्तम्, नयनान्यानन्दयतीति नयनानन्दनस्तं लोचनाह्लादकम्, नन्दनं पुत्रम्, समादधाना गृह्णाना सुनन्दापि गन्धोत्कटवल्लभापि, तस्य पुत्रस्याङ्गसौष्ठवकलाया शरीरसौन्दर्यकलाया अवलोकनेन जनितं समुत्पन्नो यो दृष्टिदोषस्तस्य परिहारो निराकरणं तस्मा इव, तादर्थ्ये चतुर्थी, तरलतरा अतिचपला कटाक्षा अपाङ्गान्येव नीलोत्पलदामानि नीलारविन्दमाल्यानि तेषां मेचकरुचिर्वीचिकया कृष्णकान्तिसन्तत्या विचितं व्याप्तम्, आतेने चकार ।

पायं पायमिति—सा च स चेति तौ सुनन्दागन्धोत्कटौ, वैश्यजायापती वणिग्दम्पती, तस्य सूनोः पुत्रस्य, प्रकृत्या स्वभावेन मधुरां मनोहरां मिष्टेति यावत् ताम्, रूपलावण्यलक्ष्मीं वर्णसौन्दर्यश्रियम्, सौधीं सुधाया इयं सौधी तां पीयूषसम्बन्धिनीम्, धारां प्रवाहम्, नयनचषकैर्लोचनपानपात्रैः, पायं पायं पीत्वा पीत्वा, 'आभीक्ष्ण्ये णमुल् च' इति णमुल्, कुसुममिव पुष्पमिव मृदुलं कोमलम्, विग्रहं शरीरम्, स्पर्शं स्पर्शं स्पृष्ट्वा स्पृष्ट्वा, नेतरेषां सुलभेत्यनितरसुलभा तामन्यजनदुर्लभाम्, तृप्तिं सन्तोषम्, प्राप्यासाद्य, विस्मयाब्धिमाश्चर्यसागरम् प्रापतुर्लेभाते ॥ ६५ ॥

देवता चेति—देवता च देवी च, महिषीतनुवल्ल्या राज्ञीशरीरवल्ल्याः, साम्यं सादृश्यम्, आश्रमलतासु तपोवनवल्लीषु, द्रष्टुमिवावलोकयितुमिव, बान्धवालयाद्भ्रातृगृहात्पराङ्मुखी विमुखाम्, इमाम् विजयाम्, दण्डकावने दण्डकाभिधानकानने निवासस्तपोवनवासम्, अनैषीत्प्रापयत् । अत्र तृतीयचरणं रथोद्धताया अन्यानि च त्रीणि स्वागतायाः । इत्थमुपजातिर्वृत्तम् । तदुक्तम् 'इत्थं किलान्यास्वपि मिश्रितासु स्मरन्ति जातिष्विदमेव नाम' ॥ ६६ ॥

अथेति—अथानन्तरम्, समीहितार्थस्य समभिलषितकार्यस्य सिद्ध्या साफल्येन जनितः समुद्भूतो यस्तोषः सुखं तेन कलिताया सहितायाम्, देवताया देव्याम्, सव्याजं कस्यापि कार्यस्य मिषेण, अन्तर्हितायां तिरोभूतायां सत्याम्, इयं च राजपत्नी विजया, सन्ततं निरन्तरं विकचाभ्यां प्रस्फुटिताभ्यां जिनपादपयोजाभ्यां जिनेन्द्रचरणकमलाभ्याम् विशोभिते विराजिते, नैजे स्वकीये मानसमेव चित्तमेव सरोवरं कासारस्तस्मिन् , नन्दन एव राजहंसस्तम्, पुत्रमरालम्, सक्रीडयामास खेलयामास । जिनेन्द्रचरणारविन्दे पुत्रञ्च ध्यायन्ती समयमजीगमदिति तात्पर्यम् ।

या हंसेति—पुरा भर्तृराज्यवेलायाम्, या विजया, पुरि नगर्याम्, हंसतूलशयनस्थाना हंसतूलोपलक्षितमृदुलविष्टरस्थितानां लतान्तानां पुष्पाणां वृन्तैर्बन्धनैर्यः क्लेशो दुःखं तस्यासहा सोढुमसमर्था, अजनि बभूव, मालतीकुसुममिव मल्लीपुष्पमिव कोमला मृदुला गात्रवल्ली शरीरलता यस्यास्तथाभूता, सा विजया, काननान्ते वनमध्ये, दर्भेषु कुशेषु, शयनं स्वापम्, बहुमन्यते स्म श्रेष्ठं बुध्यते स्म, हन्तेति खेदेऽव्ययम् ॥ ६७ ॥

पुरेऽपि मानिनीवारतोषिताया सतीमणे ।
काननेऽजनि नीवारोऽप्याहारोऽस्या किमद्भुतम् ॥ ९८ ॥

तावन्नन्दनसमागमसञ्जातमोदबन्धोत्कटेन ततन्यमान महोत्सवसार्थमात्मार्थं गणयता सकलसद्धर्मपरमकाष्ठाङ्गारेण काष्ठागारेण दापितमर्थजात तत्क्षणजातैस्तदाज्ञासमानीतैरितरैरपत्यै सह लब्ध्वायमूरूजपतिरितरात्मजै सम निजात्मजमविशेषेण वर्धयामास ।

यथा यथा जीवकयामिनीशो विवृद्धिमागाद्विलसत्कलाप ।
तथा तथावर्धत मोदवार्धिरुद्वेलमूरव्यनिकायभर्तु ॥ ९९ ॥

उत्तानशयने बिभ्रन्मुष्टिं तुष्टिकर सुत ।
उद्यत्कुड्मलयुग्मश्रीपद्माकरतुला दधौ ॥१००॥

मुग्धस्मित मुखसरोजगलन्मरन्द-
धारानुकारि मुखचन्दिरचन्द्रिकाभम् ।
पित्रो प्रमोदकरमेष बभार सूनु
कीर्तेर्विकासमिव हासमिवास्यलक्ष्म्या ॥१०१॥

---

पुरेऽपि—पुरेऽपि नगरेऽपि, मानिनीना मानवतीना वार समूहस्तेन तोषिता प्रसादिता तस्या, पक्षे मानिना प्रमाणवता, नीवारेण वन्यधान्येन तोषिताया, अस्या सतीश्रेष्ठाया काननेऽपि वनेऽपि, नीवारो वन्यधान्यम्, आहारो भोजनम्, अजनि बभूव, अत्र किमद्भुत किमाश्चर्यम्, न किमपीति यावत् ॥ ९८ ॥

तावन्नन्दनेति—तावता कालेन, नन्दनस्यार्भकस्य समागमेन लाभेन सजात समुत्पन्नो य आमोदबन्धो हर्षसम्बन्धस्तेनोत्कट प्रगल्भस्तेन, 'नन्दनो दारकोऽर्भक' इति धनञ्जय, गन्धोत्कटेन तन्नामवैश्यपतिना ततन्यमानमतिशयेन विस्तार्यमाणम्, महोत्सवाना महोल्लासाना सार्थं समूहस्तम्, आत्मार्थं निजप्रयोजनकम्, गणयता बुध्यमानेन, सकलसद्धर्म एव निखिलसमीचीनधर्म एव काष्ठान्येधासि तेषामङ्गार प्रज्वलितानलस्तेन, काष्ठाङ्गारेण कृतघ्नेन, दापित प्रापितम्, अर्थजात धनसमूहम्, तत्क्षण तत्काले जाता समुत्पन्ना स्तै, तस्याज्ञया तन्निदेशेन समानीता प्रापितास्तै, इतरैरन्यै, अपत्यै पुत्रै, सह सार्धम्, लब्ध्वा प्राप्य, अयमेष, ऊरुजपतिर्वैश्यपति, इतरेषामन्येषामात्मजा पुत्रास्तै, सम साकम्, निजात्मज स्वाङ्गजम् जीवमिति यावत, अविशेषेण सामान्येन भेदभावमन्तरेणेति यावत्, वर्धयामास वर्धयति स्म ।

यथा यथेति—विलसन्ती शोभमाना कलाश्चातुरी पक्षे षोडशभागानयते गच्छति प्राप्नोतीति विलसत्कलाप, जीवक एव यामिनीशो जीवकयामिनीशो जीवन्धरचन्द्र, यथा यथा येन प्रकारेण, विवृद्धिमौन्नत्यम्, आगात् प्राप्नोत्, तथा तथा तेन तेन प्रकारेण, ऊरव्याना वैश्याना निकाय समूहस्तस्य भर्ता स्वामी तस्य गन्धोत्कटस्येत्यर्थ, मोदवार्धिर्हर्षपारावार, उद्वेल निर्मर्याद यथा स्यात्तथा, अवर्धत वृद्धिगतो बभूव । रूपकालङ्कार ॥ ९९ ॥

उत्तानशयन इति—उत्तानशयने ऊर्ध्वमुखस्वापे, मुष्टि बद्धकरपुटम्, बिभ्रद् दधत्, तुष्टिकर सुखकर, सुतो नन्दन, उद्यत्समुत्पद्यमान कुड्मलयुग्म मुकुलयुगल यस्मिन्, एवभूतो य श्रिया लक्ष्म्या पद्माकर कमलोपलक्षितकासारस्तस्य तुलामुपमा, दधौ धृतवान् ॥ १०० ॥

मुग्धस्मितमिति—एष सूनु—अय बालक, मुखमेव सरोज मुखसरोज वदनारविन्द तस्माद्गलन्त्या पतन्त्या मरन्दधाराया आसवसन्ततेरनुकारि विडम्बयितृ, मुखमेव वक्त्रमेव चन्दिरश्चन्द्रस्तस्य चन्द्रिकाया ज्योत्स्नाया आभेवाभा दीप्तिर्यस्य तत्, माता च पिता चेति पितरौ तयो, 'पिता मात्रा' इत्येकशेष, प्रमोदकरमानन्दधायकम्, कीर्तेर्यशस, विकासमिव प्रस्फुरणमिव, आस्यलक्ष्म्या मुखश्रिया, हासमिव हसितमिव, मुग्धञ्च तत्स्मितञ्चेति मुग्धस्मित सुन्दरमन्दहसितम्, बभार दधार 'मुग्ध सुन्दरमूढयो' इत्यमर । उपमोत्प्रेक्षे ॥ १०१ ॥

पयोधर धयन् सूनु पयो गण्डूषित मुहु ।
उद्गिरन्कीर्तिकल्लोल किरन्निव विदिद्युते ॥१०२॥

सञ्चरन् स हि जानुभ्याममले मणिकुट्टिमे ।
प्रतिबिम्ब परापत्यबुद्ध्या सताडयन्बभौ ॥१०३॥

क्रमेण सोऽय मणिकुट्टिमाङ्गणे नखस्फुरत्कान्तिभरीभिरञ्चिते ।
स्खलत्पद कोमलपादपङ्कजक्रम ततान प्रसवास्तृते यथा ॥१०४॥

तावत्सुनन्दापि जलगर्भेव कादम्बिनी रत्नगर्भेव वसुमती मलगर्भेव वल्लरी तेजोगर्भेव शुनासीरकाष्ठा श्रेष्ठिसती शनैरन्तर्वत्नीधुरामाबिभ्राणा क्रमेण नवमासेष्वतीतेषु नन्दाढ्य नाम नन्दन जनयामास ।

तत्सौभ्रात्रेण विभ्राजन्मन्मनालापलालित ।
जीवकस्तनयैरन्यैर्मुदा चिक्रीड पासुपु ॥१०५॥

अथ पञ्चमे वयसि सञ्चरन्प्रत्यक्षपञ्चशर समुदञ्चितव्यक्तवचनप्रपञ्च स्वयमागतस्य सकल-

---

पयोधरमिति—पयोधर मातु स्तनम्, धयन् पिबन्, सूनु पुत्र , मुहुर्बहुवारम्, गण्डूषित कुरलकवदाचरितम्, पयो दुग्धम्, उद्गिरन् उद्वमन्, कीर्तिकल्लोल यशस्तरङ्गम्, किरन्निव क्षिपन्निव, बभा शुशुभे ॥ १०२ ॥

सञ्चरन्निति—अमले स्वच्छे, मणिकुट्टिमे रत्नखचितभूभागे, जानुभ्या जङ्घाभ्याम्, 'जघन जानु जङ्घा च' इति धनञ्जय , सञ्चरन् समन्ताद् भ्रमन् , स सूनु , प्रतिबिम्ब स्वस्यैव प्रतिकृतिम्, परमन्यच्च तदपत्य च पुत्रश्चेति परापत्य तस्य बुद्धिर्धिषणा तया अन्यपुत्रभ्रान्त्या, ताडयन् पीडयन्, बभौ शुशुभे, हीत्यव्यय पादपूर्तौ । भ्रान्तिमान् ॥ १०३ ॥

क्रमेणेति—सोऽय बालक , क्रमेण क्रमश , नखाना नखराणा स्फुरन्त्य प्रसरन्त्य कान्तयो दीप्तय एव भर्यो वारिप्रवाहास्ताभि अञ्चिते शोभिते, अतएव प्रसवै पुष्पैरास्तृत व्याप्त तस्मिन् यथा दृश्यमाने मणिकुट्टिमाङ्गणे रत्नखचितचत्वरे स्खलत्पद पतच्चरण यथा स्यात्तथा, कोमलपादपङ्कजयोर्मृदुलचरणकमलयो क्रम विक्षेपम्, ततान विस्तारयामास । उत्प्रेक्षा ॥ १०४ ॥

तावदिति—तावत् तावता कालेन, श्रेष्ठिन सती श्रेष्ठिसती गन्धोत्कटवैश्यपतिपत्नी, सुनन्दापि सुनन्दाभिधानापि, जल तोय गर्भे मध्ये यस्यास्तथाभूता कादम्बिनीव मेघमालेव, रत्न मणिर्गर्भे यस्या स्तथाभूता वसुमतीव पृथिवीव, फल गर्भे मध्ये यस्यास्तथाभूता, वल्लरीव लतेव, तेजो दिवाकराभिधान गर्भे यस्यास्तथाभूता शुनाशीरकाष्ठेव पुरन्दरदिशेव प्राचीवेति यावत्, शनै क्रमश , अन्तर्वत्नीधुरा गर्भिणीभारम्, अन्तरस्ति गर्भो यस्या अन्तर्वत्नी 'अन्तर्वत्पतिवतोर्नुक्' इति निपातितम्, आबिभ्राणा- आदधाना सती, क्रमेण क्रमश , नवमासेषु, अतीतेषु अपगतेषु सत्सु, नन्दाढ्य नाम नन्दन तनयम्, जनयामास प्रासूत ।

तत्सौभ्रात्रेण—सुभ्रातुर्भाव कार्यं वा सौभ्रात्र, तस्य नन्दाढ्यस्य सौभ्रात्र सुसहोदरत्व तेन, विभ्राजन् शोभमान , मन्मनालापेनास्पष्टाक्षरवार्तया लालित शोभित , जीवक विजयासुत , अन्यैरितरै , तनयै पुत्रै , सह पासुषु धूलिषु, चिक्रीड क्रीडति स्म । बाला हि पासुषु रमन्ते तरामिति जाति ॥ १०५ ॥

अथ पञ्चमे वयसीति—अथानन्तरम्, पञ्चमे वयसि सञ्चरन् पञ्चमवर्षावस्थाया सचार कुर्वाण , समुदञ्चित सम्यक्प्रकारेण प्रकटितो व्यक्तवचनाना स्पष्टवचसा प्रपञ्च समूहो यस्य स , कण्ठीरवकिशोरस्य मृगेन्द्रमाणवकस्येवाकृति सस्थान तेज इति यावत्, यस्य स , अय जीवक , स्वेच्छया, आगतस्य प्राप्तस्य, सकलकला एव निखिलवैदग्ध्य एव कल्लोलिन्य सरितस्तासाम्, शैल पर्वतस्तस्य, शैलो हि सरितामुद्गम

कलाकल्लोलिनीशैलस्यार्यनन्दिनामधेयस्याचार्यवर्यस्योपकण्ठे कण्ठीरवकिशोराकृतिरय प्रत्यूहव्यूह-परिहाराय परिकलितसिद्धनमस्य सिद्धमातृकाप्रसिद्धा सरस्वती परिशीलयामास ।

लेभे जीववरो वाणी क्रमनिर्जितसिन्धुर ।
नमस्यत गुरु सोऽय मनस्यमितभक्तित ॥१०६॥

*इति महाकविहरिचन्द्रविरचिते श्रीमति जीवन्धरचम्पूकाव्ये*
*सरस्वतीलम्भो नाम प्रथमो लम्भ ।*

---

स्थानत्वेन प्रसिद्ध , आर्यनन्दीति नामधेय नाम यस्य तस्य आचार्यवर्यस्य सूरिश्रेष्ठस्य, उपकण्ठे समीपे, प्रत्यूहव्यूहस्य विघ्नसमूहस्य परिहारो निवारण तस्मै, परिकलिता कृता सिद्धनमस्या सिद्धपरमेष्ठिपूजा येन तथाभूत सन्, 'पूजा नमस्यापचिति सपर्या चार्हणा समा' इत्यमर , सिद्धमातृकया अनादिवर्णपरम्परया प्रसिद्धा प्रख्याता ताम्, सरस्वती परिशीलयामास, परिशीलन चकार, सरस्वत्या अभ्यासमकार्षीदिति भाव ।

लेभे—क्रमेण गत्या निर्जित पराजित सिन्धुरो हस्ती येन स , सोऽय जीवन्धर , वाणी सरस्वतीम्, लेभे, प्राप्तवान्, मनसि चित्ते, अमितभक्तितोऽसीमभक्त्या, गुरुम्, आर्यनन्दिनम् अनमस्यत् नमश्चकार 'नमो वरिवसश्चित्रङ क्यच्' इति क्यच् ॥ १०६ ॥

इति महाकविश्चासौ हरिचन्द्रश्चेति महाकविहरिचन्द्रस्तेन विरचिते सुविहिते चम्पुर्जीवधरे जीवन्धरचम्पूनाम सन्दर्भे सरस्वत्या लम्भ प्राप्तिर्यस्मिस्तथाभूतो नाम प्रथमो लम्भ प्रथमप्रकरणम्, समाप्त । इतिशब्द समाप्त्यर्थवाचक ।

इति महाकविहरिचन्द्रविरचिते श्रीमति 'कौमुदी' व्याख्याधरे जीवन्धरचम्पूकाव्ये
सरस्वतीलम्भो नाम प्रथमो लम्भ ।



# द्वितीयो लम्भः

अथ हृद्यतम किञ्चन विद्यासदनमासाद्य वयस्यससद्वतसित, जीवधर सकलकलाकलापैरपरकलाविलुब्धैरिव स्वय निवासगृहतया परिगृहीतादखिलपण्डिताखण्डलादस्मादाचार्यवर्यादखिला कला, वसन्तादिव वनप्रिय कलरवलीला, घनसमयादिव केकितरुण केका, अध्यगीष्ट।

(तच्चित्ताम्बुजमापेदे सूर्योलोकाद्विनिद्रताम।
प्रासूत च कलाजालमकरन्दझरी तत ॥ १ ॥)
समस्तविद्यावनितासमागमे निरस्तविघ्ना गुरुभक्तिरेव।
विलोभनीयस्य वधूभिरन्तत सुतस्य तस्य प्रबभूव दूती ॥ २ ॥
पराभूते जीवन्धरशशभृता पर्वशशिनि
कलाचातुर्गुण्याद्विलसदमृत वाचमगमत्।
मुख कान्ति प्राप्ता सकलजगदानन्दकरता
तदीयाङ्घ्रि प्रापत्पदनखमभूत्सोऽपि शशभृत ॥ ३ ॥)

---

अथेति—अथ सिद्धमातृकाज्ञानानन्तरम्, हृद्यतममतिमनोहरम्, वयस्याना सखीना ससदा समूहेनावतसित शोभितम्, किञ्चन किमपि, विद्यासदन विद्यालयम्, आसाद्य प्राप्य, जीवन्धर सत्यन्धरसुत, अपराश्च ता भिन्नाश्च ता कलाश्च वैदग्ध्यश्रेण्यैपरकलास्तासु विलुब्धैरिवासक्तैरिव, सकलकलाना निखिलवैदग्धीना कलापा समूहास्तै, स्वय स्वत एव परप्रेरणामन्तरेणैवेति यावत्, निवासगृहतया वासभवनत्वेन, परिगृहीतात्स्वीकृतात्, अखिलपण्डितेषु समस्तसूरिष्वाखण्डल सहस्राक्ष श्रेष्ठ इति यावत् तस्मात्, अस्मात् आचार्यवर्यात् आर्यनन्दिनामविद्वद्वरात्, अखिला सर्वा, कला विद्या वैदग्धीर्वा, वसन्तात् सुरभिमासात्, कलरवलीला मधुरशब्दकेली, वनप्रिय कोकिल इव, घनसमयाज्जलदकालात्, केका मयूरवाणी, 'केका वाणी मयूरस्य' इत्यमर, केकितरुण इव मयूरयुवेव अध्यगीष्ट अधीष्ट 'इङ् अध्ययने' इत्यस्य लुङि रूपम्, 'विभाषा लुङलृङो' इति वैकल्पिको गाङादेश, 'घुमास्थागापाजहातिसा हलि' इत्यात ईत्वम्।

तच्चित्ताम्बुमिति—यत कारणात्, तस्य जीवन्धरस्य चित्तमेव मन एवाम्बुज कमलम्, सूरेराचार्यस्यालोको दर्शनमेव सूर्यस्य दिवाकरस्यालोक प्रकाशस्तस्मात, विनिद्रता सावधानताम् पक्षे विकासिताम्, आपेदे प्राप, तत कारणात्, कलाजालमेव विद्यासमूह एव मकरन्दस्य मधुनो झरी धारा ताम्, प्रासूत च, जनयामास च, रूपकालङ्कार ॥ १ ॥

समस्तविद्येति—वधूभिर्नारीभि, विलोभनीयस्याकर्षणीयस्य, तस्य सुतस्य जीवन्धरस्य, समस्तविद्या एव वनिता योषितस्ताभिस्तासा वा समागम सयोगस्तस्मिन्, गुरौ भक्तिर्गुरुभक्तिर्गुरुप्रीत्यतिशय एव, निरस्त दूरीकृत विघ्नमन्तरायो यया सा, दूती दौत्यकर्मणि प्रवृत्ता अन्तत कार्यसिद्धिपर्यन्तम्, प्रबभूव। गुरुभक्तिप्रसादादेव तस्याखिला विद्या प्राप्ता बभूवुरिति भाव। वशस्थोपेन्द्रवज्रयो समिश्रणादुपजातिवृत्तम् ॥ २ ॥

पराभूत इति—जीवन्धर सत्यन्धरिरेव शशभृच्चन्द्रमास्तेन, कलाना चातुर्गुण्य तस्मात्, जीवन्धरे हि चतु षष्टि कला आसन् पर्वशशिनि तु षोडशैव, इत्थ कलाचातुर्गुण्यहेतो, पर्वशशिनि राकानिशाकरे, पराभूते पराजिते सति, तत्र विलसच्छोभमानम्, अमृत पीयूषम्, वाच वचन, जीवन्धरस्येति यावत्, अगमत् प्रापत्, कान्तिर्दीप्ति, मुख वदनम्, प्राप्ता गता, सकलजगतो निखिललोकस्यानन्दकरता सुखविधायकता, तदीयाङ्घ्रि जीवन्धरशरीरम्, प्रापज्जगाम, स पराजित, शशभृदपि पर्वचन्द्रोऽपि, स्वयम्, पदनख चरणनखरम्, अभूदजायत। रूपकालङ्कार शिखरिणीच्छन्द ॥ ३ ॥

इति निजविद्यालतलितलतामस्य हृदयालवालपल्लवितामवलोक्य, प्रीते परां काष्ठामधितिष्ठमानः प्रसन्नचित्तवृत्तिरयं सूरिः, एकदा विजने निजप्रान्तमावसन्तमन्तेवासिनमित्थमचीकथत् ।

श्रुताम्बुधेः पारगत शृणु त्वं प्रवीण कस्यापि चरित्रभावम् ।
अवाप्य यं श्रोत्रपथेन चित्तं दयानटीनर्तनसूत्रधारः ॥ ४ ॥
विद्याधराणां विनिवासलोके कालं नृपः कश्चिदजीगमद्यः ।
कृत्येन नाम्नापि च लोकपालो विद्याधरोऽभूद्विबुधेश्वरोऽपि ॥ ५ ॥

एकदा महीपतिरयमुदयशिखरिशेखरं हरिदश्व इव हर्यक्षासनमलङ्कुर्वन्, गगनजलधिजलनीलीपटलमिव वियद्वनविहरमाणस्तम्बेरममिव सुरलोकसमारोहणार्थमाकलितसोपाननीलोपलमिव कञ्चन जलधरं नीलमपि नयनेन पीतमातन्वन्, क्षीबाणां क्षितिपानामैश्वर्यं क्षणक्षीणमिति बोधयन्तमिव तत्क्षणमन्तर्हितमवलोक्य निजनन्दनक्षिप्तराज्यभारो विजृम्भितवैराग्यसाम्राज्यप्रतिष्ठामधितिष्ठन्, सकलसांसारिकदुःखशमनदक्षां जैनीं दीक्षामाससाद ।

इतीति—इत्येवं प्रकारेण, निजविद्यैव स्वविद्यैव ललितलता सुन्दरवल्लरी ताम्, अस्य जीवन्धरस्य, हृदयमेव चित्तमेवालवालमावापस्तस्मिन् पल्लविता किसलयिताम्, आलोक्य दृष्ट्वा, प्रीते प्रसन्नतायाः परामन्त्याम्, काष्ठामवधिम्, अधितिष्ठमानः प्राप्नुवन्, प्रसन्ना निर्मला चित्तवृत्तिर्मनःप्रवृत्तिर्यस्य तथाभूतः, अयं सूरिराचार्यः, एकदा एकस्मिन् काले, विजने निर्जने, निजप्रान्तं स्वाभ्यर्णम्, आवसन्तं विद्यमानम्, अन्तेवासिनं छात्रं जीवन्धरमिति यावत्, इत्थमनेन प्रकारेण, अचीकथत् कथयामास । प्रायेण जैनकाव्येषु 'अचीकथत्' इति प्रयोगो दृश्यते स कथं सिध्यतीति न वेद्मि। पाणिनीयव्याकरणे तु 'अचकथत्' इत्येव साधु ।

श्रुताम्बुधेरिति—हे श्रुतमेवाम्बुधिस्तस्य शास्त्रसागरस्य, पारगत पारगतस्तत्सम्बुद्धौ पारगामिन्, प्रवीण निपुण त्वम्, कस्यापि जनस्य, चरित्रभावं जीवनोपाख्यानम्, शृणु समाकर्णय, यश्चरित्रभावः, श्रोत्रपथेन कर्णमार्गेण, चित्तं हृदयम्, अवाप्य लब्ध्वा, दयानट्याः करुणाशैलूष्याः नर्तने नाट्ये सूत्रधारो नाट्यव्यवस्थापको भवेदिति शेषः । 'नाट्योपकरणादीनि सूत्रमित्यभिधीयते । सूत्रं धारयतीत्यर्थं सूत्रधारो निगद्यते' । इति सूत्रधारस्य लक्षणम् । यं श्रुत्वा भवच्चेतसि दयासञ्चारो भविष्यतीति भावः ॥ ४ ॥

विद्याधराणामिति—विद्याधराणां खेचराणाम्, विनिवासलोके निवासक्षेत्रे, विजयार्धगिराविति यावत्, कश्चित्कोऽपि, नृपो राजा, कालं समयम्, अजीगमद् व्यपगमयामास । यो नृपः, कृत्येन कार्येण, नाम्नापि च नामधेयेनापि च, लोकपालो लोकं पालयतीति लोकपालः, लोकपालनामधेयः, अभूद् आसीत्, किञ्च, विगतो बुधेश्वरो विबुधेश्वरो मूर्खोऽपि विद्याधरो विद्याधारकः पण्डित इति यावत्, अभूदिति विरोधः । विबुधानां विदुषामीश्वरः स्वामीति परिहारः ॥ ५ ॥

एकदेति—एकदैकस्मिन्काले, उदयशिखरिणः शिखरमित्युदयशिखरिशिखरं पूर्वाचलचूलिकाम्, हरिदश्व इव भास्वानिव, 'भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मयः' इत्यमरः । हर्यक्षासनं सिंहासनम् । अलङ्कुर्वन् शोभयन्, अयं लोकपालः, महीपतिर्नृपः, गगनमेव जलनिधिर्गगनजलनिधिराकाशसमुद्रस्तस्य जलनीलीपटलमिव शैवालसमूहमिव, वियद्वने गगनकानने विहरमाणश्चासौ स्तम्बेरमश्चेति विहरमाणस्तम्बेरमो भ्रमन्मातङ्गस्तमिव, सुरलोकस्य देवसमूहस्य, स्वर्गस्य वा समारोहणार्थमुच्चटनार्थम्, आकलितं निर्मितं यानि सोपानानि निःश्रेणयस्तेषां नीलोपलमिव नीलप्रस्तरमिव, कञ्चन कमपि, जलधरं मेघम्, नीलमपि श्याममपि, नयनेन नेत्रेण, पीतं पीतगुणविशिष्टं पक्षेऽवलोकितम्, आतन्वन् कुर्वन्, क्षीबाणां मत्तानाम्, क्षितिपानां महीपतीनाम्, ऐश्वर्यं वैभवम्, क्षणक्षीणमल्पकालभङ्गुरम्, इत्येवम्, बोधयन्तमिव ज्ञपयन्तमिव, तत्क्षणं तत्कालम्, अन्तर्हितं तिरोहितं नष्टमिति यावत्, अवलोक्य दृष्ट्वा निजनन्दने स्वकीयपुत्रे क्षिप्तो राज्यभारो येन सः, विजृम्भितं वृद्धिङ्गतं यद् वैराग्यसाम्राज्यं निर्वेदवैभवं तस्मिन् प्रतिष्ठामास्थाम्, अधितिष्ठन्, प्राप्नुवन् सन्, सकलानि समस्तानि यानि सांसारिकदुःखानि भवोद्भूताशर्माणि तेषां शमने दमने दक्षां समर्थां ताम्, जिनस्येमां जैनीं जिनसम्बन्धिनीम्, दीक्षां तपस्याम्, आससाद प्राप ।

तपासि भूप स हि तप्यमानस्तपस्यया प्रापितरुग्विलास ।
विपाकत सञ्चितकर्मणा तद्रुगन्तर भस्मकमाटिटीके ॥ ६ ॥

तदनु दिने दिने प्रवर्धमान भस्मकरोगमल्पेन तपसा विस्फुलिङ्गेनेवार्द्रेन्धन खद्योतेनेव सतमस नखरञ्जिकयेव महारण्य शमयितुमशक्नुवान, पूर्व राज्यमिव तप साम्राज्यमपि परित्यजन्, पापण्डितपसा समाच्छादित, स्वैराहारान्नाफल इव गुल्मान्तर्हितो विष्किरा समाददानो यथेष्टमवतिष्ठ ।

तदनु नगराराम सोऽय जगाम दृढक्षुधा
क्वचिदविरलैरक्ताशोकोल्लस नवपल्लवै ।
विशदवियत सन्ध्यारागाञ्चितस्य सुलक्षण
क्वचन कुसुमैरन्यारामान्हस तमिव स्थितम् ॥ ७ ॥

यस्मिन्पिके पञ्चममञ्जुगान समाश्रिते मन्दमरुद्भ्रुकुस ।
आनाटयत्याततभृङ्गनादकलारवा लोललतावधूटीम् ॥ ८ ॥

यश्च किल कुत्रचिन्निरन्तरनिष्पतत्पुष्पपरिष्कृततया वनदेवतासमाराधनाय विस्तृतदुकूलसस्तरणमिव बिभ्राण, क्वचन कुसुमासवपानमत्तमधुपान्धीकृततया समुदञ्चिताञ्जनपुञ्जमिव

---

तपासीति—तपास्यनशनादीनि, तप्यमान कुर्वाण, तपस्यया तपश्चरणेन, प्रापिता लम्भिता रुग्विलासा कान्तिप्रकारा य तथाभूत, स पूर्वोक्त, भूपो नृप, लोकपालमुनिरिति यावत्, सञ्चितानि पुरा बद्धानि यानि कर्माणि सातेतरवेद्यादीनि तेषाम्, विपाकत उदयात्, तत्प्रसिद्धम्, भस्मक भस्मकनामकम्, रुगन्तर रोगान्तरम्, आटिटीके प्राप । आङ्पूर्वकस्य 'टीकृ गतौ' इत्यस्य लिटि रूपम् ॥ ६ ॥

तदन्विति—तदनु तदनन्तरम्, दिने दिने प्रतिदिवसम्, प्रवर्धत इति प्रवर्धमानम् एधमानम्, भस्मकरोग भस्मकव्याधिम्, अल्पेन तुच्छेन, तपसा तपश्चरणेन, विस्फुलिङ्गेनाग्निकणेन, आर्द्रेन्धनमिव सरसेध्मसमूहमिव, खद्योतेन ज्योतिरिङ्गणेन, सतमसमिव निविडध्वान्तमिव, 'अवसमन्धेभ्यस्तमस.' इत्यच् समासान्त, नखरञ्जिकया नखरच्छेदिकया, महारण्यमिव दीर्घकाननमिव, शमयितु शान्त कर्तुम्, अशक्नुवानो ऽसमर्थो भवन्, पूर्व प्राग्, राज्यमिव साम्राज्यमिव, तप साम्राज्यमपि तपश्चरणवैभवमपि, परित्यजन्मुञ्चन्, पापण्डितपसा मायावितपश्चरणेन, समाच्छादितस्तिरोहित सन्, गुल्मान्तर्हित क्षुपाच्छादित, नाफल शाकुनिक, विष्किरानिव शकुन्तानिव, स्वैराहारान् स्वच्छन्दाहारान् जैनप्रक्रियाविरुद्धानिति यावत्, समाददानो गृह्णान, यथेष्ट स्वैरम्, यथा स्यात्तथा, अवतिष्ट प्रवृत्तिमकरोत् ।

तदनु नगराराममिति—तदनु तदनन्तरम्, सोऽय लोकपालो मुनिवर, दृढक्षुधा भूयिष्ठबुभुक्षया, क्वचित्कुत्रचिद्, अविरलै सघनै, रक्ताशोकेपु लोहितवञ्जुलेषूल्लसन्त शोभमाना ये नवपल्लवा नूतनकिसलयास्तै, सन्ध्या पितृप्रसूस्तस्या रागेणारुणिम्नाञ्चित सहित तस्य, विशदवियतो निर्मलगगनस्य, सलक्षण सदृशम्, क्वचन कुत्रचित्, कुसुमै पुष्पै, अन्यारामान् इतरोपवनानि, हसन्तमिव तिरस्कुर्वन्तमिव, स्थित विद्यमानम्, नगराराम नगरोपवनम्, जगाम ययौ । उत्प्रेक्षालकार ॥ ७ ॥

यस्मिन्निति—यस्मिन् नगरारामे, पिके वनप्रिये कोकिल इति यावत्, पञ्चमश्च तन्मञ्जुगानञ्चेति पञ्चममञ्जुगानम् पञ्चमस्वरविशिष्टमनोहरगानम्, समाश्रिते प्राप्ते सति, 'यस्य च भावे भाव लक्षणम्' इति सप्तमी, मन्दश्चासो मरुच्चेति मन्दमरुत्, स एव भ्रुकुस इति मन्दमरुद्भ्रुकुस, मन्थरपवननट, आततो विस्तारितो भृङ्गनादो भ्रमरशब्द एव कलरवो मधुरशब्दो यया ताम्, लोललता चञ्चलवल्लर्येव वधूटी युवतिस्तम्, आनाटयति नर्तयति । रूपकालकार ॥ ८ ॥

यश्च किलेति—यश्च नगराराम, किलेति वाक्यालकारे वार्ताया वा, कुत्रचित्क्वचित्, निरन्तर निर्व्यवधान यथा स्यात्तथा निष्पतद्भिर्वर्षद्भि पुष्पै कुसुमै परिष्कृततया विशोभिततया, वनदेवताना वनाधिष्ठातृदेवीना समाराधनाय सेवनाय, विस्तृतमातानित यद् दुकूल सस्तरण क्षौमास्तरण तत्, बिभ्राण इव दधान इव, क्वचन कस्मिश्चित्स्थाने, कुसुमासवस्य पुष्परसस्य पानेन सेवनेन मत्ता धृतमोहा ये मधुपा

सदधान, क्वचिदतिविततकङ्केलीपल्लवतल्लजरुचिझरीविराजिततया निजानुराग प्रकटयन्निव, क्वचन विकचकोकनदकान्तिसक्रान्तसरोवरशोभिततया कुङ्कुमक्षोदझरमिव समाकलयन्, कुत्रचन डोलार्थमिव लताप्रतानमातन्वन्नदृश्यत।

सुतान्तरैस्तत्र समाचरन्त क्रीडा भवन्त स हि सददर्श।
नक्षत्रवृन्दै परिशोभमान यथा सुराणा पथि बालचन्द्रम् ॥ ९ ॥
कियद्विदूर पुरमित्यनेन पृष्टो गिर त्व मधुरामुवक्थ।
मुखेऽम्बुजभ्रान्तिपतद्द्विरेफास्तन्वन्सितान्दन्तमणिप्रभाभि ॥१०॥
नगरोपवने बालक्रीडासमवलोकनात्।
पुरमासन्नवृत्तीति वृद्धो नानुमिनोति क ॥११॥
धूमदर्शनतो वह्नि नावगच्छति क पुमान्।
शीते वाते समायाते क समीपे जलस्थितिम् ॥१२॥

इत्यादिवचनपीयूषधाराससेकेन त्वदीयरूपलक्षणसपदवलोकनजनितसुखबीजेन च हृदयालवालजनितप्रीतिप्रतानिनी तावकान्वयनिश्चयेन पुष्पिता चिकीर्षु दुर्दर्पजाठरदहनबाधा शिशम-

भ्रमरास्तैरन्वीकृततया श्यामलाकृततया, समुदञ्चित समुत्क्षेपित यदञ्जन कज्जल तस्य पुञ्जो राशिस्तम्, सदधान इव बिभ्राण इव, क्वचित्कुत्रचित्, अतिविततानामतिविस्तृताना कङ्केलीपल्लवतल्लजानामशोककिसलयश्रेष्ठाना रुचिझरीभि कान्तिसन्ततिभिर्विराजिततया शोभिततया, निजानुराग स्वकीयप्रेमाणम्, प्रकटयन्निव प्रकाशयन्निव, क्वचन कुत्रचित, विकचकोकनदाना प्रस्फुटितरक्तारविन्दाना कान्तिभिर्दीप्तिभि सक्रान्ता व्याप्ता ये सरोवरा कासारास्तै शोभिततयालङ्कृततया, कुङ्कुमक्षोदस्य काश्मीरचूर्णस्य झर वारिप्रवाहम्, समाकलयन्निव दधदिव, कुत्रचित्क्वचित्, डोलार्थमिव वनदेवतान्दोलिकार्थमिव, लताप्रतान वल्लीसमूहम्, आतन्वन्विस्तारयन्, अदृश्यतावलोक्यत।

सुतान्तरैरिति—स मुनिचर, हि निश्चयेन, तत्र नगरोपवने, सुतान्तरैरन्यै पुत्रै सह, क्रीडा केलिम्, समाचरन्त कुर्वन्तम्, भवन्तम्, सुराणा देवानाम्, पथि मार्गे, गगन इति यावत्, नक्षत्रवृन्दैरुडुसमूहै, परिशोभमान विराजन्तम्, बालचन्द्र यथा द्वितीयेन्दुमिव, भवन्त त्वाम्, सददर्श सम्यगवलोकयामास ॥ ९ ॥

कियद्विदूरमिति–पुर नगरम्, कियद्विदूर कियद्विप्रकृष्टम्, इतीत्थम्, अनेन मुनिचरेण, पृष्टोऽनुयुक्त, त्वम् जीवन्धर, मुखे वदने, अम्बुजभ्रान्त्या कमलभ्रमेण पतन्तो झम्पापात कुर्वन्तो ये द्विरेफा भ्रमरास्तान्, दन्ता रदना मणयो रत्नानीवेति दन्तमणयस्तेषा प्रभा दीप्तयस्ताभि, सितान् धवलान्, तन्वन् कुर्वन्, मधुरा मनोहराम्, गिर वाणीम्, उवक्थ कथयामासिथ। तद्गुणालकार ॥ १० ॥

नगरोपवन इति—नगरोपवने पुरोद्याने, बालाना शिशूना क्रीडाया केल्या विलोकन दर्शन तस्मात्, पुर नगरम्, आसन्ना निकटस्थवृत्ति सद्भावो यस्य तत्, इत्येवम् को वृद्धो विशेषज्ञ, नानुमिनोति नावबुध्यते। अपि तु सर्व एव इति भाव ॥ ११ ॥

धूमदर्शनत—धूमस्य धूम्रस्य दर्शन विलोकन तस्मात्, धूमाद्धेतोरिति यावत्, क पुमान् को मनुष्य, वह्निमग्निम्, नावगच्छति नो जानाति। शीते शिशिरे, वाते वायौ, समायाते सति, समीपे पार्श्वे, जलस्य तोयस्य स्थिति सद्भावस्ताम्, क पुमान् नावगच्छतीति पूर्वार्धक्रियया सह सम्बन्ध। कार्यात्कारणस्य ज्ञान सर्वेषामेव सुकरमिति भाव ॥ १२ ॥

इत्यादीनि—इत्यादिवचनमेव पीयूषधारा सुधासन्ततिस्तया ससेक समुक्षण तेन, रूप च लावण्य च लक्षणानि च सामुद्रिकशास्त्रप्रकटितशुभचिह्नानि चेति रूपलक्षणानि, तान्येव सपद् त्वदीया भवदीया या रूपलक्षणसपत्, तस्या अवलोकनेन दर्शनेन जनित समुत्पन्न यत्सुख शर्म तस्य बीज कारण तेन च, हृदयमेव चित्तमेवालवालमावापस्तस्मिन् जनिता समुत्पन्ना या प्रीतिप्रतानिनी प्रीतिलता ताम्, तावकान्वयस्य त्वदीयवशस्य निश्चयो दृढज्ञान येन, पुष्पाणि सजातानि यस्या ता पुष्पिताम् कुसुमिताम्,

यिषुमाहारयाच्ञापरतन्त्रितमानसमेन कुहनातापस भवान्भवनमानीय तदीयभोजनकृते पौरोगवमादिदेश ।

तदनु त्वयि भोजनाय यत्न कृतवत्यारभतान्नमेष भोक्तुम् ।
तव वाङ्मयगोस्तनीविमिश्र मुखशोभामृतपानक पिपासु ॥१३॥

तावदर्भकस्वभावेन सर्वमुष्णमिद कथ भुञ्जेऽहमिति रोदनवशेन नयनकञ्जयुगसञ्जातमकरन्दपूरकानुकारिणीभिरश्रुधाराभिनयनकमलवास्तव्यलक्ष्मीवक्ष स्थलस्थपुटितमालामुक्ता इव किरन्त भवन्त समीक्ष्य, भिक्षुरय विश्वातिशायिमतिमहिममहितस्य भृशमपरोदननिदानस्यापि तव रोदन कथमिति चित्रभित्तीयते चित्तमित्याबभाषे ।

श्रुत्वा वाणी तस्य मन्दस्मितेन तन्वन्निर्यत्क्षीरधारेति शङ्काम् ।
इत्थ वाचामाचचक्षे भवान्वै मोचामाध्वीमाधुरीमादधानाम् ॥१४॥

श्लेष्मच्छेदो नयनयुगलीनिर्मलत्व च नासा-
शिङ्घाणाना भुवि निपतन कोष्णता भोज्यवर्गे ।

---

चिकीर्षु कर्तुमिच्छुम्, दुर्धर्षा चासौ जाठरदहनस्य बाधा चेति दुर्धर्षजाठरदहनबाधा ताम् कठिनोदराग्निपाडाम्, शिशमयिषु शमयितुमिच्छुम्, आहारस्य भोजनस्य याच्ञया प्रार्थनेन परतन्त्रित वशीकृत मानस चित्त यस्य तम्, एनमिमम्, कुहनातापस मिथ्यातापसम्, भवान् जीवन्धर, भवन गृहम्, आनीय प्रापय्य, तदीयभोजनकृते त भोजयितुम्, पौरोगव पाचकम्, आदिदेशाज्ञातवान् ।

तदनु त्वयीति—तदनु तदनन्तरम्, त्वयि भवति, भोजनाय भोक्तुम्, यत्नमुद्यमम्, कृतवति विहितवति सति, त्वयि भोक्तुमुद्यते सतीति यावत्, तव भवत, वाङ्मयानि वचनान्येव गोस्तन्यो द्राक्षास्ताभिर्विमिश्र मिलितम्, मुखशोभा वदनसौन्दर्यमेवामृतपानक पीयूषपेय तत् पिपासु पातुमिच्छु, एष साधु, अन्न खाद्यपदार्थम्, भोक्तुमत्तुम्, आरभत प्रारम्भ चकार ॥ १३ ॥

तावदर्भकस्वभावेनेति—तावत् तावता कालेन, अर्भकस्वभावेन डिम्भनिसर्गेण 'पोत पाकोऽर्भको डिम्भ पृथुक शावक शिशु' इत्यमर, सर्व निखिलम्, इद भोजनम्, उष्णमशीतम्, वर्तते, कथ केन प्रकारेण, भुञ्जेऽद्मि 'भुजोऽनवने' इत्यात्मनेपदम्, इतीत्थम्, रोदनवशेन—आक्रन्दनाधीन्येन, नयनकञ्जयुगे लोचनकमलयुगले सजात समुत्पन्न यन्मकरन्द कौसुम तस्य पूरकस्य प्रवाहस्यानुकारिण्योऽनुविधायिन्यस्ताभि, अश्रुधाराभिर्नयनसलिलसन्ततिभि, नयनकमलवास्तव्या लोचनारविन्दकृतनिवासा या लक्ष्मी श्रीस्तस्या वक्ष स्थले भुजान्तरप्रदेशे स्थपुटिता नतोन्नतभावेन विद्यमाना या माला मौक्तिकस्रक् तस्या मुक्ता मुक्ताफलानीव, किरन्त विक्षिपन्तम्, भवन्तम्, समीक्ष्य दृष्ट्वा, अयमेष, भिक्षु साधु, विश्वातिशायिनी सर्वाधिका या मतिर्बुद्धिस्तस्या महिम्ना माहात्म्येन महितस्य शोभितस्य, भृशमत्यन्तम्, सर्वथेति यावत्, अपगतानि दूरीभूतानि रोदननिदानानि रोदनादिकारणानि यस्य तथाभूतस्यापि 'निदान त्वादिकारणम्' इत्यमर तव भवत, रोदनमश्रुविमोचनम्, कथ केन कारणेन, इतीत्थम्, चित्रस्यालेख्यस्य भित्तिरिव कुड्यमिवाचरतीति चित्रभित्तीयते, चित्त हृदयम्, मदीयमिति शेष इत्येवम्, आबभासे जगाद ।

श्रुत्वेति—तस्य भिक्षो, वाणी गिरम्, श्रुत्वा निशम्य, भवान् त्वम्, मन्दस्मितेन मन्दहसितेन, निर्यन्ती निर्गच्छन्ती चासौ क्षीरधारा च पयोधारा चेति निर्यत्क्षीरधारा, इतीत्थम्, शङ्का सशयम्, तन्वन्विस्तारयन्, सन्, मोचामाध्वीना कदलीफलद्राक्षाणा माधुरी माधुर्यम, आदधाना बिभ्रतीम्, इत्थ वक्ष्यमाणप्रकाराम्, वाचाम् वचनम्, भागुरिमते हलन्तादपि टाप् प्रत्ययो भवति । तथा चोक्तम्, 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो । आप चैव हलन्ताना यथा वाचा निशा दिशा' ॥ इति । वै निश्चयेन, आचचक्षे कथयामास । 'चक्षिङ् व्यक्ताया वाचि' इत्यस्य लिटि रूपम्, 'वा लिटि' इत्यस्य वैकल्पिकत्वेन ख्याञादेशाभावपक्षे रूपम् । शालिनीच्छन्द 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकै', इति तल्लक्षणात् ॥ १४ ॥

श्लेष्मच्छेद इति—श्लेष्मच्छेद कफापहार, नयनयुगल्या नेत्रयुगलस्य निर्मलत्व स्वच्छत्वम्, नासाशिङ्घाणाना घ्राणमलानाम्, भुवि पृथिव्याम्, निपतन नितरा पतनम्, भोज्यवर्गे खाद्यपदार्थसमूहे,

शीर्षाबद्धभ्रमकरपयोदोपबाधानिवृत्ति-
रन्येऽप्यस्मिन्परिचितगुणा रोदने सम्भवन्ति ॥१५॥

इति वचनमयसुधा श्रवणपुटे सिञ्चता भिक्षोरपारबुभुक्षासमीक्षणजनितवैलक्ष्यप्रापितजोषभावेन करुणावरुणालयेन भवता वितीर्णम्, शयकुशेशयकररुहरुचिसुरसरिड्डिण्डीरखण्डायमानम्, करकल्पतरुस्तबकशङ्कावह नखचन्द्रैः सह परिचयाय समागतचन्द्रबिम्बसम्भावनासपादकम्, आशातरङ्गिणीशोषणशारदसमयखण्डायित करकवलमासाद्य, सद्य एव तृप्तिमापन्न कर्मन्दी, सदीपितजठरदहनशमनेन महोपकार मन्यमान, परमनन्यसामान्यसौजन्यतया परमोत्कृष्टफला कला तुभ्य प्रतिपादयामास।

विद्यावल्ली पात्रसुक्षेत्रदत्ता प्रज्ञासिक्ता सूक्तिभि पुष्पिता च।
आशायोषित्कर्णभूषायमाणा कीर्तिप्रोद्य मञ्जरीमादधाति ॥१६॥

विद्याकल्पतरु समुन्नतिमित प्राप्तोऽपि गम्यो नतै
पुष्पाण्यत्र समेत्य मञ्जुलमहोऽमुत्र प्रसूते फलम्।
किं चाय खलु मूलमाश्रितवता सतापमन्तस्तनो-
त्यूर्ध्वं सचरता नृणा पुनरसौ ताप धुनीतेतमाम् ॥१७॥

---

कोष्णता मन्दोष्णता 'कोष्ण कवोष्ण मन्दोष्ण कदुष्ण त्रिषु तद्वति' इत्यमर। शीर्षे शिरस्याबद्धो यो भ्रमो भ्रमरोगस्तस्य करो निर्मायको यो पयोदोषो जलदोषस्तस्य बाधाया पीडाया निवृत्तिर्दूरीकरणम्, अन्येऽपीतरेऽपि, परिचिताश्च ते गुणाश्चेति परिचितगुणा अनुभूतलाभा अस्मिन् रोदन आक्रन्दने, सम्भवन्ति सम्यक् प्रकारेण जायन्ते। न नो रोदन व्यर्थमिति भाव। मन्दाक्रान्ताच्छन्द 'मन्दाक्रान्ताजलधिषडगैम्भौ नतौ ताद्गुरू चेत्' इति लक्षणात्।

इति वचनेति—इति पूर्वोक्ताम्, वचनमयसुधा वाणीरूपपीयूषम्, श्रवणपुटे कर्णपुटे, सिञ्चता क्षरता, भिक्षो साधो, अपारबुभुक्षाया सामार्ततीक्ष्णक्षुध समीक्षणेन, समवलोकनेन जनितमुत्पादित यद्वैलक्ष्य विस्मयस्तेन प्रापितो लम्भितो जोषभावस्तूष्णीभावो य तेन, करुणाया दयाया वरुणालय समुद्रस्तेन, भवता त्वया, वितीर्णं प्रदत्तम्, शयकुशेशयस्य हस्तकमलस्य कररुहा नखानि तेषा रुचि कान्तिरेव सुरसरिद्गङ्गा तस्या डिण्डीर कफस्तस्य खण्डायमान शकलायमानम्, कर एव कल्पतरु करकल्पतरु पाणिसुरपादपस्तस्य स्तबकस्य पुष्पगुलुच्छस्य शङ्कावह सन्देहाधायकस्तम्, नखचन्द्रैर्नखरेन्दुभि, सह साकम्, परिचयाय मेलनाय, समागत समायात यच्चन्द्रबिम्ब शशिमण्डल तस्य सम्भावनाया समुत्प्रेक्षाया सपादक जनकम्, आशातरङ्गिण्यास्तृष्णानद्या शोषणेऽल्पीकरणे शारदसमयखण्डायित जलदान्तकालखण्डवदाचरितम्, करकवल हस्तग्रासम्, आस्वाद्य भक्षयित्वा, सद्य एव झटित्येव, तृप्ति सन्तोषम्, आपन्न प्राप्त, कर्मन्दी भिक्षु, सदीपितो वृद्धिङ्गतो यो जठरदहन उदराग्निस्तस्य शमनेन शान्त्या, महोपकार भूरिकल्याणम्, मन्यमानो बुध्यमान, सन्, परमत्यर्थम्, अनन्यसामान्यमनुपम यत्सौजन्य साधुत्व तस्य भावस्तत्ता तया, परमोत्कृष्ट श्रेष्ठतर फल परिणामो यस्यास्ताम्, कला विद्याम्, तुभ्य भवते, प्रतिपादयामास समर्पयामास।

विद्यावल्लीति—पात्र योग्यशिष्य एव सुक्षेत्र सुभूमिस्तस्मिन् दत्तोप्ता, प्रज्ञा नवनवोन्मेषशालिनी बुद्धिस्तया सिक्तोक्षिता, सूक्तिभि सुभाषितै पुष्पिता च कुसुमिता च, विद्यावल्ली विद्यालता, आशायोषिता दिगङ्गनाना कर्णभूषायमाणा श्रवणालङ्कारवदाचरन्तीम्, कीर्तिरेव यश एव प्रोद्यन्मञ्जरी प्रादुर्भवन्मञ्जरीम्, आदधाति बिभर्ति। रूपकालकार। शालिनीच्छन्द ॥ १६ ॥

विद्याकल्पतरुरिति—विद्यैव कल्पतरुरिति विद्याकल्पतरुविद्याकल्पवृक्ष, इतो लोके, समुन्नतिमुत्तुङ्गताम्, प्राप्तोऽपि लब्धोऽपि, नतैर्वामनै पक्षे नम्रै गम्य प्राप्य समुन्नतो वृक्षो वामनै कथ प्राप्य इति विरोध परिहारश्च नतैर्नम्रैर्विनयवद्भिर्जनैर्गम्य सेवनीय इति। स एव च विद्याकल्पतरु, अत्र लोके, पुष्पाणि कुसुमानि, समेत्य प्राप्य, अमुत्र परलोके, मञ्जुल मनोहरम्, फलम्, प्रसूते जनयति, इत्यहो आश्चर्यम्, यत्र पुष्पलाभस्तत्रैव फलोपलब्धिरुचिता विद्याकल्पतरौ च विपरीतेत्याश्चर्यम्, परिहारस्तु

इति गुरोरुदन्तमाकर्ण्य कर्णरसायनम्, मौनमेवोत्तरमादधानो, वदनवनजे मनससरसि च प्रश्रयमृणालीमधिमुखमादधती शैष्योपाध्यायिकामराली खेलयन्, गुरुशुद्धिविज्ञानेन लब्धमणिपरिशुद्धिज्ञानेनेव मोदजलधे पर पार गतोऽपि, गुरूपदिष्टे सागारधर्मसागरे ममज्ज सज्जनहृदयचन्दनो नन्दन ।

तन्नु विजन देश नीत्वा गुरु सुतपुङ्गव
व्यवृणुत गिरा राजोदन्त दुरन्तमिदन्तया ।
विदितजनकोदन्त सत्यधरस्य सुतस्तदा
सुलभजनुषा रोषेणासीज्जगन्ति दहन्निव ॥१८॥

एव गुरुवचनेन स्वस्य राजपुत्रत्व काष्ठाङ्गारस्य राजहन्तृत्व च निश्चित्य, समेधमानक्रोधधनञ्जयस्येव सन्दीपितशराग्नेरपि तमेनमिन्धन चिकीर्षु क्रोधान्धगन्धसिन्धुर इव गुरुणा दुर्निवारसरभससन्नाह सात्यधरि, बन्धुरयुद्धारम्भसरम्भान्न विरराम । गुरुरपि तदीयदुर्धर्षामर्षविस्ता-

परलोके स्वर्गादिसुखप्राप्तिर्जायत इति । किञ्चान्यच्च, खलु निश्चयेन, अय विद्याकल्पतरु, मूल तलम, आश्रित वता सेवमानानाम्, अन्तर्हृदये, सताप दु ख, तनोति विस्तारयति, पुन किन्तु, ऊर्ध्वमुपरिष्टात, सचरता सञ्चरण कुर्वताम्, नृणा जनानाम्, असो विद्याकल्पतरु, ताप दु खम्, अतिशयेन धुनीत इति धुनातितमाम्, अत्यन्त दूरीकरोतीति यावत्, अन्ये वृक्षा मूलगताना सताप हरन्त्यूर्ध्व गच्छता च सताप विदधति, विद्याकल्पतरुश्च तद्विलक्षण इत्याश्चर्य परिहारस्तु मूलमग्र श्रितवता सताप विस्तारयति, उपरि चरता चाज्ञानाभिधान ताप निवारयतीति । रूपकव्यतिरेको, रूपकविरोधौ वा शार्दूलविक्रीडित छन्द । 'सूर्याश्वैर्मसजास्तत सगुरव शार्दूलविक्रीडितम्' इति लक्षणात् ॥ १७ ॥

इति गुरोरिति—इति पूर्वोक्तप्रकारेण, कर्णरसायन श्रवणामृतम्, गुरोरुपाध्यायस्य, उदन्त वृत्तान्तम्, आकर्ण्य श्रुत्वा, वदनवनजे मुखकमले, मानससरसि च हृदयकासारे च, मुख इत्यधिमुख तस्मिन्, प्रश्रयमृणाली विनयविसम्, आदधतीम् धृतवतीम, शैष्योपाध्यायिका शिष्यगुरुव्यवहृतिरेव मराली हसी ताम्, खेलयन् क्रीडयन्, गुरोरुपाध्यायस्य शुद्धिर्नैर्मल्य तस्या विज्ञान बोधस्तेन, लब्धमणे प्राप्तरत्नस्य या परिशुद्धिर्नैर्मल्य तस्या ज्ञान तेनेव, मोदजलधेरानन्दाम्भोधे, पर द्वितीय पार तटम्, गतोऽपि प्राप्तोऽपि, सज्जनहृदयचन्दन साधुजनमनोमलयज, नन्दनो जीवन्धर, गुरुणोपदिष्टस्तस्मिन् गुरुप्रदर्शिते, सागारधर्म एव श्रावकधर्म एव सागर समुद्रस्तस्मिन्, ममज्ज निमग्नोऽभूत् । सागारधर्म दधारेति भाव ।

तदनु विजनमिति—तदनु गृहस्थधर्मोपदेशानन्तरम्, गुरुरार्यनन्दी, सुतपुङ्गव पुत्रश्रेष्ठम्, जीवन्धरमिति यावत्, विजन निर्जनम्, एकान्तमिति यावत, देश स्थानम्, नीत्वा प्रापय्य, इदन्तयाऽनेन प्रकारेण, दुरन्त दुष्परिणामम्, राजोदन्त सत्यन्धरनृपतिवृत्तान्तम्, गिरा वाण्या, व्यवृणुत वर्णयामास । तदा गुरुमुखाद्राजोदन्ताकर्णनानन्तरम्, विदितो ज्ञातो जनकस्य पितुरुदन्तो वृत्तान्तो येन तथाभूत, सत्यन्धरस्य सुतो जीवन्धर, सुलभ सुप्राप्य जनुर्जन्म यस्य तेन, रोषेण क्रोधेन, जगन्ति भुवनानि, दहन्निव भस्मसात्कुर्वन्निव, आसीद् बभूव । भृश चुकोपेति भाव, हरिणीच्छन्द 'रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा' इति लक्षणात् ॥ १८ ॥

एव गुरुवचनेनेति—एव पूर्वप्रकारेण, गुरुवचनेनोपाध्यायवाण्या, स्वस्यात्मन, राजपुत्रत्व नृपतिसुतत्वम्, काष्ठाङ्गारस्य तात्कालिकनृपस्य राजहन्तृत्व सत्यन्धरमहाराजघातकत्वञ्च, निश्चित्य निर्णीय समेधमानो वर्धमानो य क्रोध एव कोप एव धनञ्जयो वह्निस्तस्येव सन्दीपित प्रज्वलित शरा एव बाणा एवाग्निस्तस्यापि, एन त काष्ठाङ्गारम्, इन्धन दारुनिचय दाह्यमिति यावत्, चिकीर्षु कर्तुमिच्छु, क्रोधेनान्ध क्रोधान्ध कोपान्ध स चासौ गन्धसिन्धुरश्च गन्धगजश्च स इव, गुरुणोपाध्यायेन दुर्निवारो दु खेन निवारयितु शक्य सरभससन्नाहस्तात्कालिकयुद्धोद्योगो यस्य स, सत्यन्धरस्यापत्य पुमान् सात्यन्धरि 'अत इञ्' इति इञ् प्रत्यय, जीवन्धर, बन्धुर पूर्णो यो युद्धारम्भ समरप्रारम्भस्तस्य सरम्भाद दृढनिश्चयात्, न विरराम विरमति स्म । गुरुरपि, तदीयेन तत्सम्बन्धिना दुर्धर्षामर्षेण विकटक्रोधेन विस्तारित आयोजितो य

रितसमरसरम्भमवलोक्य, न पुनरयमन्यथा विरमतीति निश्चयमणि हृदयपुटपेटके निधाय, वत्स वत्सरमेक क्षमैव मह्य गुरुदक्षिणा विधेयेति, कथकथमपि सात्यधरेरायोधनसन्नाहसधान निवारयामास ।

न कार्य क्रोधोऽय श्रुतजलधिमग्नैकहृदयै-
र्न चेद्व्यर्था शास्त्रे परिचयकलाचारविधुरा ।
निजे पाणौ दीपे लसति भुवि कूपे निपतता
फल कि तेन स्यादिति गुरुरथोऽशिक्षयदमुम् ॥१९॥

इत्यादिनीतिपदवीमाशास्य, तमाश्वस्य, विश्वातिशायिन पन्थानमास्कन्दितुममन्दादरमेदुरे तस्मिन्गुरुवरे गतवति तपोवनम, पश्चिमपयोधिवेलावनमिव भास्वति, जीवन्धरस्तत्समरणसधुक्षित-गुरुविरहशोकाशुशुक्षणि तत्त्वज्ञानपय पूरेण निर्वापयामास ।

तावत्तारुण्यलक्ष्मीर्नृपतनयतनु प्राप वल्ली यथा वा
पुष्पश्री पारिजातस्थितिमिव विबुधाशास्यवासन्तलक्ष्मी ।
गङ्गेवाम्भोधिवेला शरदिव शशिनो मण्डलीमब्धिपाली
प्रात सूर्यप्रभेवामलकुमुदवनी शारदी कौमुदीव ॥२०॥

---

समरसरम्भो युद्धदृढनिश्चयस्तम्, अवलोक्य दृष्ट्वा, अय जीवन्धर, अन्यथान्यप्रकारेण, न पुन, विरमति विरतो भवतीति, निश्चय एव मणिस्त निर्णयरत्नम्, हृदयपुटपेटके स्वान्तपुटकरण्डके, निधाय निक्षिप्य, हे वत्स हे तात, एक वत्सरम्, एक सवत्सरम् 'कालाध्वनोरत्यन्तसयोगे' इति द्वितीया, क्षमा क्षान्तिरेव युद्ध-विराम एव, मह्य गुरवे, गुरुदक्षिणा गुरुपुरस्कार, विधेया कर्तव्या, इत्येव प्रकारेण, कथ कथमपि केनापि प्रकारेण, सात्यन्धरेर्जीवन्धरस्य, आयोधनाय युद्धाय सन्नाहस्तत्परीभावस्तस्य सधान योजन धारणमिति यावत्, निवारयामास दूरीचकार ।

न कार्य इति—श्रुतमेव शास्त्रमेव जलधि सागरस्तस्मिन्मग्न ब्रुडितमेकहृदय मुख्यस्वान्त येषा तै, अयमेष, क्रोध कोप 'रुट्कोपक्रोधमन्यव' इति धनजय, न कार्यो न विधातव्य, सर्वतोभावेन शास्त्रज्ञानपारावारे निमग्नहृदयेर्जनै क्रोधो न कर्तव्य इति भाव । न चेदेव न स्यात्तर्हि, आचारेण प्रयोगेण विधुरा रहिता शास्त्रे श्रुतौ, 'विषयार्थे सप्तमी' परिचयकलाभ्यासकला, व्यर्था मोघा, अस्तीति शेष, शास्त्रे यल्लिखित तदनुकूलाचरणाभावे तदभ्यासा व्यर्थ इति भाव, भुवि पृथिव्याम्, निजे स्वकीये पाणौ हस्ते, दीपे प्रदीपे, लसति शोभमाने सति, कूपे प्रहौ, निपतता पतन कुर्वताम्, जनानाम्, तेन दीपेन, कि किन्नाम-धेयम्, फल प्रयोजनम्, स्याद् भवेत्, इतीत्थम्, गुरुरार्यनन्दी, अथो युद्धारम्भसरम्भाद्विरमणानन्तरम्, अमु जीवन्धरम्, अशिक्षत् शिक्षयामास । शिखरिणीच्छन्द 'रसै रुद्रैश्छिन्ना यमनसभलाग शिखरिणी' इति लक्षणात् ॥ १९ ॥

इत्यादिनीतिपदवीमिति—इत्यादिश्चासौ नीतिपदवी च ताम् इति प्रभृतिनयमार्गम्, आशास्योपदिश्य, त कुमारम्, आश्वस्य-सर्वथा शोभन भविष्यति, काष्ठाङ्गारो नश्यति तव च राज्य भविष्यतीति समाश्वासन विधाय, विश्वातिशायिन लोकोत्तरम्, ससारातिक्रामिण मोक्षप्रापकमिति यावत्, पन्थान मार्गम्, आस्कन्दितु प्राप्तुम्, अमन्दश्चासावादरश्चेत्यमन्दादरो महाप्रीतिस्तेन मेदुरो मिलितस्तस्मिन्, तस्मिन्पूर्वोक्ते, गुरुवरे गुरुश्रेष्ठे, पश्चिमपयोधेर्वरुणाशासागरस्य वेलावन तीरकाननम्, भास्वतीव सूर्य इव, तपोवन तपश्चरणयोग्यकाननम्, गतवति प्रयाते सति, जीवन्धरो गुरुभक्तशिष्य, सधुक्षित सदीपितो यो गुरुविरहशोक एवोपाध्याय वियोगविषाद एवाशुशुक्षणिर्वह्निस्तम्, तत्वज्ञानमेव पय पूरस्तेन पदार्थज्ञान-जलप्रवाहेण, निर्वापयामास शमयामास ।

तावदिति—तावत् तावता कालेन, तारुण्यलक्ष्मीर्यौवनश्री, नृपतनयस्य राजकुमारस्य जीवन्धरस्येति यावत तनु शरीर ताम्, प्राप प्राप्तवती, केवेति चेदाह—पुष्पश्री कुसुमलक्ष्मी, वल्ली यथा वा लतामिव, विबुधैर्देवैराशास्या प्रशसनीयेति विबुधाशास्या, सा चासौ वासन्तलक्ष्मीश्च मधुमासशोभा चेति

सौन्दर्यस्य परा काष्ठा शृङ्गारस्य परा गति ।
खनि कलाना यस्यासीन्मूर्तिरानन्ददायिनी ॥२१॥

यस्य च रूपमादिमोदाहरण रूपसपन्नदेहानाम्, अधिदैवत कान्तिसपदाम्, सजीवनौषध सौन्दर्यस्य, सङ्केतसदन शृङ्गारस्य, जीवितरस सारस्यसारस्य, केलीभवन कलानाम्, शिक्षास्थान नर्मविलासानाम्, शृङ्गाटक सगीतविद्यानाम्, आकर्षणौषधमायताक्षीनयनानाम्, बन्धनगृह युवतिजनमानसानाम्, सेचनक सकलजनलोचनानाम्, अगोचरपद कविवचनानाम्, अङ्कुरक्षेत्र कीर्तिस्फूर्तीनाम्, आवासस्थल जयलक्ष्मीविलासानाम्, आस्थामन्दिर लक्ष्मीसरस्वत्यो, सञ्चरदिव सकलनयनसुखम्, सचेतनमिव महीमहिलाभाग्यम्, साकारमिव प्रतापपटलम्, सजीवमिव गाम्भीर्यम्, सञ्जीभूतमिव शौर्यम्, सरूपधेयमिव कुरुवशभागधेयम्, वेधस सकलशिल्पनैपुण्यप्रदर्शनमुदजृम्भत ।

अथैकदा व्याधजनाधिराजो मर्त्याकृति प्राप्त इवान्धकार ।
कृत्येन नाम्नापि च कालकूट सेनायुतो गा सकला जहार ॥ २२ ॥

---

तथा, पारिजाताना कल्पवृक्षाणा स्थिति स्थान तामिव, नन्दनवनमिवेति यावत्, गङ्गा भागीरथी, अम्भोधिवेलामिव, सागरतटीमिव शरद् जलदान्तत्तु, शशिनश्चन्द्रमस, मण्डली बिम्बमिव, प्रात सूर्यप्रभा प्रभातप्रभाकरप्रभा, अब्धिपालामिव सागरवेलामिव 'पाली वेला तटोच्छ्वास' इति धनञ्जय, शारदी-शरत्सम्बन्धिनी, कौमुदी ज्योत्स्ना, अमलकुमुदवनीमिव निर्मलकैरवकाननमिव, इति, एकस्य बहूपमानान्मालोपमालङ्कार । स्रग्धरावृत्तम् 'म्रभ्नैर्याना त्रयेण त्रिमुनि यतियुता स्रग्धरा कीर्तितेयम्' इति लक्षणात् ॥ २० ॥

सौन्दर्यस्येति—यस्य जीवन्धरस्य, आनन्ददायिना कल्याणप्रदा, मूर्ति शरीरम्, सौन्दर्यस्य लावण्यस्य, परा चरमा, काष्ठा सीमा, शृङ्गारस्य शृङ्गाररसस्य परा सर्वश्रेष्ठा, गति स्थानम्, कलाना वैदग्धीनाम्, खनिराकर, आसीद् बभूव । रूपकम् ॥ २१ ॥

यस्य चेति— यस्य च जीवन्धरस्य च, रूप सौन्दर्यम्, रूपेग सौन्दर्येण सम्पन्नो युक्तो देह शरीर येषा तेषाम्, आदिमोदाहरण प्रथमनिदर्शनम्, कान्तिसम्पदा दीप्तिसम्पत्तीनाम्, अधिदैवतम् अधिष्ठातृदेवता, सौन्दर्यस्य लावण्यस्य, सजीवनौषध सजीवनभैषज्यम्, शृङ्गारस्य रसराजस्य, सङ्केतसदन सङ्केतभवनम्, सारस्यस्य रसिकत्वस्य सार श्रेष्ठोऽशस्तस्य, जीवितरस चेतनाह्लाद, कलाना वैदग्धीनाम्, केलीभवन क्रीडासदनम्, नर्मविलासाना क्रीडाविभ्रमाणाम्, शिक्षास्थान विद्यायतनम्, सगीतविद्याना गन्धर्वविद्यानाम्, शृङ्गाटक चतुष्पथस्थानम्, आयताक्षीनयनाना वनिताचक्षुषाम्, आकर्षणौषध वशीकरणभैषज्यम्, युवतिजनमानसाना तरुणीजनचित्तानाम्, बन्धनगृह नियन्त्रणभवनम्, सकलजनलोचनाना निखिलनरनयनानाम्, सेचनकमतृप्तिकरम् 'तदासेचनक तृप्तेर्नास्त्यन्तो यस्य दर्शनात्' इत्युक्तत्वात्, कविवचनाना काव्यनिर्मातॄणाम्, अगोचरपदमविषयस्थानम्, कीर्तिस्फूर्तीना समज्ञोत्साहानाम्, अथवा समज्ञोत्पत्तीनाम्, अङ्कुरक्षेत्र प्ररोहस्थान केदारमिति यावत्, जयलक्ष्मीविलासाना विजयश्रीविभ्रमाणाम्, आवासस्थल निवासस्थानम्, लक्ष्मीश्च सरस्वती चेति लक्ष्मीसरस्वत्यो तया श्रीशारदयो, आस्थामन्दिरमादरभवनम्, सञ्चरद्भ्रमत्, सकलनयनसुखमिव निखिलजनशातमिव, सचेतन सजीवम्, महीमहिलाभाग्यमिव पृथिवी पुरन्ध्रीभागधेयमिव, साकार सस्थानसहितम्, प्रतापपटलमिव तेज समूह इव, सजीव सचेतनम्, गाम्भीर्यमिव स्थैर्यमिव, सञ्जीभूत पुञ्जीभूतम्, शौर्यमिव पराक्रम इव, सरूपधेय सौन्दर्यसहितम्, कुरुवशस्य सम्यन्धरवशस्य भागधेयमिव भाग्यमिव, वेधसो ब्रह्मण, सकलशिल्पनैपुण्यस्य निखिलशिल्पकौशलस्य प्रदर्शन प्रदर्शनस्थानम्, उदजृम्भत वर्धयामास । रूपकोत्प्रेक्षे ।

अथैकदेति—अथानन्तरम्, एकदैकस्मिन् काले 'सर्वैकान्य कियत्तद काले दा' इति दाप्रत्यय, मर्त्याकृति मनुष्याकार प्राप्तो लब्ध, अन्धकार इव ध्वान्तमिव, कृत्येन कार्येण परमारणात्मकेनेति यावत्, नाम्नापि च नामधेयेनापि च, कालकूटो हालाहलविष कालकूटसज्ञश्च, सेनायुत पृतनासहित, व्याधजनाना भिल्लजनानामधिराज स्वामी, सकला समस्ता, गा धेनू, जहार—अहार्षीत् ॥ २२ ॥

तदनु गोपाक्रोशवशविदितवृत्तान्त काष्ठाङ्गारोऽपि, असमानकृतामवज्ञां मृगाधिप इव शृगालकृतामसहमान, अन्तर्दीप्यमानक्रोधानलज्वालाभिरिव पाटलरुचिभिराक्रान्तवदन, शात्रवनितम्बिनीगर्भसमाविर्भूतार्भकनिर्भेदनपटुतरैर्भेरीभाङ्कारैस्तिरोहितपारावाररवम्, कालकूटापदेशेन पुञ्जीभूतस्य तिमिरस्य संहरणाय विधात्रा विरचितैरनेकविवस्वन्मण्डलमण्डितैरुदयाचलैरिव कनकखेटककलितकुम्भस्थलैर्दन्तावलै, सदानितलोहखलीनवदनबिलनिर्गलल्लालाजलफेनिलाननतया जन्याजिरे करिष्यमाणासपत्नयशःपानमनुकुर्वद्भिरिवार्वद्भि, रथकट्यया, पादातेन च समधिकमनीकम्, कालकूटबलपाटनाय प्राहिणोत्।

वरूथिनीं वीक्ष्य स कालकूट स्वकं पुरोधाय बलं चचाल।
प्रत्यर्थिसैन्यं परितो दिधक्षु कोपाग्निना मृत्युरिव क्षणेन॥ २३॥

तदनु मिलितं सैन्यद्वन्द्वं बलादुपचक्रमे
समरमतुलं पत्रिव्रातैर्विदीर्णपरस्परम्।
चलदसिलताघातैर्भिन्नेभकुम्भविनिर्गल-
न्मणिगणविभापूरैर्दीप्रं रजोऽन्वितमप्यलम्॥ २४॥

---

तदन्विति—तदनु तदनन्तरम्, गोपानां धेनुपालकानाम्, आक्रोशवशेनाक्रन्दनस्याधीन्येन विदितोऽवगतो वृत्तान्तो येन स, काष्ठाङ्गारोऽपि तात्कालिकनृपोऽपि, असमानकृतामसदृशजनविहिताम्, अवज्ञामनादृतिम्, शृगालकृतां गोमायुविहिताम्, मृगाधिप इव पञ्चानन इव, असहमान सोढुमसमर्थो भवन्, अन्तर्दीप्यमाना हृदये प्रज्वलन्त्यो या क्रोधानलज्वाला कोपाग्न्यर्चीषि ताभिरिव, पाटलरुचिभि श्वेतरक्तदीप्तिभि, 'श्वेतरक्तस्तु पाटल' इत्यमर, आक्रान्त व्याप्तं वदनं मुखं यस्य स, शात्रवनितम्बिनीनां शत्रुस्त्रीणां गर्भेषु जठरेषु समाविर्भूता समुत्पन्ना येऽर्भका शिशवस्तेषां निर्भेदने खण्डने पटुतरा दक्षतरास्तै, भेरीभाङ्कारैरानकध्वनिभि, तिरोहितोऽन्तर्धापित पारावारस्य सागरस्य रवो नादो येन तत्, अनीकमित्यस्य विशेषणम्, कालकूटस्य व्याधजनाधिराजस्यापदेशो व्याजं तेन, पुञ्जीभूतस्य राशीभूतस्य, तिमिरस्य ध्वान्तस्य, संहरणाय विनाशाय, विधात्रा ब्रह्मणा, विरचितै सृष्टै, अनेकविवस्वतां बहुसूर्याणां मण्डलैर्बिम्बैर्मण्डिता शोभितास्तै, उदयाचलैरिव सूर्योदयशैलैरिव, कनकखेटै सुवर्णमौलिभि कलितानि युक्तानि कुम्भस्थलानि गण्डस्थलानि येषां तै, दन्तावलैर्गजै, सदानितं योजितं लोहखलीनमायसकविका येषु तथाभूतानि यानि वदनबिलानि मुखविवराणि तेभ्यो निर्गलन्निष्पतद्यल्लालाजलं लालातोयं तेन फेनिलं डिण्डीरयुक्तमाननं वक्त्रं येषां तेषां भावस्तत्ता तया, जन्याजिरे समराङ्गणे करिष्यमाणं विधास्यमानं यत् सपत्नयशःपानं शत्रुकीर्तिपानं तत्, अनुकुर्वद्भिर्विडम्बयद्भि, अर्वद्भिर्हयै, रथानां स्यन्दनानां समूहो रथकड्या (रथकट्या) तया, 'खलगोरथात्' इति प्रकरणे 'इनित्रकट्यचश्च' इति समूहार्थे कट्यच् प्रत्यय, पदातीनां समूह पादातं तेन पत्तिसमूहेन च, समधिकं प्रभूतम् अनीकं सैन्यम्, कालकूटस्य शबरराजस्य बलं सैन्यं तस्य पाटनं विदारणं तस्मै। प्राहिणोत् प्रेषयामास।

वरूथिनीमिति—स कालकूटश्शबरराज, वरूथिनीं काष्ठाङ्गारसेनाम्, वीक्ष्य दृष्ट्वा, स्वकं स्वकीयम्, बलं सैन्यम्, पुरोधायाग्रे कृत्वा, परित समन्तात्, प्रत्यर्थिसैन्यं शत्रुपृतनाम्, कोपाग्निना क्रोधानलेन, क्षणेनाल्पकालेन, दग्धुमिच्छुर्दिधक्षु सन्, मृत्युरिव यम इव, चचाल चलतिस्म। युद्धाय तत्परो बभूवेति भाव॥ २३॥

तदन्विति—तदनु तदनन्तरम्, मिलितं सङ्गतम्, सैन्यद्वन्द्वं सेनायुगलम्, बलाद् हठात्, अतुलमनुपमम्, समरं युद्धम्, उपचक्रमे प्रारब्धं चकार 'प्रोपाभ्यां समर्थाभ्याम्' इत्यात्मनेपदम्। अथ समरस्य विशेषणान्याह—पत्रिव्रातैर्बाणसमूहै विदीर्णं खण्डितं परस्परमन्योऽन्यं यस्मिंस्तम्, रजसा परागेणान्वितमपि तिमिरितमपि, चलन्तीनामसिलतानां खड्गवल्लीनां घाता प्रहारास्तै भिन्ना खण्डिता य इभकुम्भा गजगण्डास्तेभ्यो विनिर्गलतां बहिर्निस्सरतां मणिगणानां रत्नसमूहानां विभापूरै कान्तिसमूहै, अलमत्यर्थम्, दीप्तं दीप्तियुक्तम्। हरिणीच्छन्द॥ २४॥

तदानीम्, अमित्रकरकलितमण्डलाग्रखण्डितगण्डतलनि सरदसृग्धाराराजितगजताया गैरिकधातुनि सृतनिर्झरशोभितोभयभागधराधरानुकारिण्याम्, घनकीलालपङ्किलसमराजिरे निजखुरनिमज्जनशङ्कयेव गगनगमनतुङ्गेषु [1]निषादिजनविषादभङ्गेषु तुरङ्गेषु नाम्नेव कृत्येन च मदोत्कटकरटिघटाया हरिरिति विख्याति प्रख्यापयत्सु, करलाघववशेनालक्ष्यशरस धानमोक्षणकालेषु सदा समारोपितशरासनतयालेख्यलिखितेष्विव धानुष्केषु पदगगनतलचराचरकरालकरवालखण्डितमस्तकनिकरेष्वतिदूरमुत्पत्य गगनजलधिशतपत्रशङ्काकरेषु, पुरुषद्वयसप्रवहल्लोहितवाहिनीसेतुशङ्कासपादकभिन्नमतङ्गजगात्रपरपराबन्धुरायामायोधनधरायाम्, व्याधयोधनिरन्तरनिर्मुक्तनाराचधारापूरिताङ्गेषु, व्याधसेना व्याजेष्टेति घोषो घोषान्तरमुत्तरङ्गयामास।

[2]तदोरुजानामधिभू स्वमित्रैरालोच्य निश्चित्य च नन्दगोप।
विवक्षित तस्य नृपस्य कर्णपथप्रवृत्त चतुरश्चकार॥ २५॥

तदानीमिति—तदानी तस्मिन्काले, अमित्राणा शत्रूणा करकलितैर्हस्तधृतैर्मण्डलाग्रै कृपाणै खण्डिताद्विदारिताद् गण्डतलात्कटप्रदेशान्नि सरन्तीभिनिर्गच्छन्तीभिरसृग्धाराभी रुधिरवेणीभी राजिता शोभिता या गजता गजसमूहस्तस्याम् 'गजसहायाभ्या चेति वक्तव्यम्' इति समूहार्थे तल्प्रत्यय। गैरिकधातुभ्यो रक्तवर्णमृत्तिकाप्रदेशेभ्यो नि सृता निर्गता ये निर्झरा वारिप्रवाहास्तै शोभितौ राजितावुभयभागावुभयतटौ यस्य तथाभूतो यो धराधर पर्वतस्तस्यानुकारिण्या विडम्बिन्या सत्याम्, घनकीलालेन सान्द्ररुधिरेण पङ्किल कर्दमयुक्त यत्समराजिर युद्धाङ्गण तस्मिन्, निजखुराणा स्वकीयशफाना निमज्जनस्य वगाहनस्य शङ्का सशीतिस्तयेव, गगनगमनाय नभोयानाय तुङ्गा उन्नता उच्छलन्त इति यावत् तेषु, निषादिजनानामारोहिनराणा विषादस्य खेदस्य भङ्गो विनाशो यैस्तेषु, तुरङ्गेषु हयेषु, नाम्नेव नामधेयेनेव कृत्येन च कार्येणापि 'हरि' हय इति नाम्नेव 'हरि' सिहस्तस्य कार्येणापीति भाव। 'सविरर्वा हरीरथ्य' इति धनजय, 'सिहो मृगेन्द्र पञ्चास्यो हर्यक्ष केसरी हरि' इत्यमर, मदेन दानेनोत्कटा उद्दण्डा ये करटिनो हस्तिनस्तेषा घटा समूहस्तस्याम्, हरिरिति सिह इति विख्याति प्रसिद्धिम्, प्रख्यापयत्सु विस्तारयत्सु सत्सु, करलाघववशेन हस्तक्षिप्रकारित्ववशेनालक्ष्यो दृष्ट्यगोचर शरसन्धानमोक्षणयोर्बाणधारणमोचनयो काल समयो येषा तेषु, धानुष्केषु धनूषि प्रहरणानि येषा तेषु धनुर्धरेषु, सदा शश्वत्, समारोपित सगुणीकृत शरासन धनुर्येषा तेषा भावस्तत्ता तया, आलेख्यलिखितेष्विव चित्रलिखितेष्विव सत्सु, पदगगनतलयोश्चरणनभ प्रदेशयोश्चराचरैरतिशयचपलै करालैर्भयङ्करै करवालै कृपाणै खण्डिताना छिन्नाना मस्तकाना शिरसा निकरा समूहास्तेषु 'चरिचलिपतिवदीना वा द्वित्वमच्याक् चाभ्यासस्येति वक्तव्यम्' इति वार्तिकेन चराचरपदस्य सिद्धि। अतिदूरमतिविप्रकृष्टम्, उत्पत्योद्गत्य, गगनमेव जलधिर्गगनजलधिराकाशपारावारस्तस्य शतपत्राणा कमलाना शङ्काकरा सदेहोत्पादकास्तेषु तथाभूतेषु सत्सु, पुरुषद्वयस्य पुरुषप्रमाणा प्रवहन्त्य प्रकर्षेण गच्छन्त्यो या लोहितवाहिन्यो रुधिरस्रवन्त्यस्तासा सेतुशङ्काया पुलिनसशयस्य सपादिका या भिन्नमतङ्गजाना खण्डितगजाना गात्रपरम्परा शरीरसन्ततिस्तया बन्धुरा नतोन्नता तस्या तथाभूतायाम्, आयोधनधराया समरभूमौ सत्याम्, व्याधयोधैर्भिल्लभटैर्निरन्तर निर्व्यवधान यथा स्यात्तथा निर्मुक्ता त्यक्ता या नाराचधारा बाणपङ्क्तयस्ताभि पूरितानि सम्भृतान्यङ्गानि शरीराणि येषा तेषु, काष्ठाङ्गारस्येमे इति काष्ठाङ्गारिका, ते च ते सैनिकाश्च योधाश्चेति काष्ठाङ्गारिकसैनिकास्तेषु, दिशि दिशि प्रतिकाष्ठम्, कान्दिशीकता भयद्रुतताम्, 'कान्दिशीको भयद्रुत' इत्यमर, प्रापितेषु लम्भितेषु सत्सु, व्याधसेना शबरपृतना, व्याजेष्ट विजययुक्ता बभूव, इति घोष शब्द, घोषाणामाभीराणामन्तर हृदय तदवगाहनप्रदेश वा, उत्तरङ्गयामास क्षोभयामास।

तदोरुजानामिति—तदा काष्ठाङ्गारपृतनापराजये सति, ऊरुजाना वैश्यानाम्, अधिभू स्वामी, चतुरो निपुण, तादात्विककार्यसाधनपटुरिति यावत्, नन्दगोप एतन्नामा, स्वमित्रै स्वकीयसुहृद्भि, आलोच्य विचार्य, निश्चित्य च स्थिरीकृत्य च, वक्तुमिष्ट विवक्षित स्वाभिप्रेतमिति यावत्, तस्य नृपस्य काष्ठाङ्गारस्य, कर्णपथे श्रवणमार्गे प्रवृत्त प्रगतम्, चकार विदधौ। स्वाभिप्राय त श्रावयामासेति भाव॥ २५॥

१ षादिजन ब०। २ तदा प्रदानामधिभू (?) ब०।

तदनु पुलिन्दसन्दोहतो गोविमोक्षण विधास्यते दास्यते गोपेन्द्रनन्दगोपनन्दिनी सप्तचामीकरपुत्रिकाभि साकमिति पटुतर पुटभेदनचत्वरे काष्ठाङ्गारेण कारिता घोषणा निशम्य विशालतरकुतुक सात्यन्धरिस्तद्घोष निवारयामास ।

सहायताधिष्ठितपार्श्वभागो जीवन्धरो मन्दिरत प्रतस्थे ।
द्विपैरनेकै परिवार्यमाणो हिमाद्रिरन्ध्रादिव यूथनाथ ॥ २६ ॥

तता निजयश कलशार्णवतरङ्गैरिव चामरयुगलपरिशोभितपार्श्वतया नभ सरणिसञ्चरणयोग्यौ पक्षाविव बिभ्राणै लपनबिलतलविगलितफेनशकलदन्तुरितपुरोभागतया रयविजितपवनसमानीतमुक्तोपहारानिवाङ्गीकुर्वाणै स्यदनिरीक्षणक्षणह्रीणा हरिदश्वहरिताश्वान्गगनकाननदुर्गेषु धावमानान वेष्टुमिव गगनसरणिमुत्पतद्भिर्जयोदर्कै कर्कै परिष्कृतान्रथानलकुर्वन्त, शताङ्गचक्रक्षुण्णक्षितितलोद्भूतधूलिकापालिका सकलजगदन्धकरणधुरीणा पताकापटपवनेन धून्वन्त, देहबद्धा इव वीररसा, मूर्ता इवोत्साहा, जयलक्ष्मीनिवासमन्दिरकनकप्राकारायिताङ्गदविभ्राजितभुज-

तदनु पुलिन्देति—तदनु तदनन्तरम्, पुलिन्दसन्दोहत शबरसमूहात्, गवा धेनूना विमोक्षण प्रत्याहरण तदिति गोविमोक्षणम्, विधास्यतीति विधास्यन् तस्मै करिष्यते 'लृट सद्वा' इति भविष्यदर्थे लृट शतृ प्रत्यय, जनायेति शेष, सप्त च ताश्चामीकरपुत्रिकाश्च सुवर्णपुत्तलिकाश्चेति ताभि, साक सार्धम्, गोपेन्द्रश्चासौ नन्दगोपश्चेति गोपेन्द्रनन्दगोपस्तस्य नन्दिना पुत्रा, दास्यते वितरिष्यते प्रदत्ता भविष्यतीति भव, इत्येव प्रकाराम्, पटुतर तिग्मतर यथा स्यात्तथा, पुटभेदनस्य पत्तनस्य चत्वर चतुष्पथ तस्मिन् 'पू स्त्री पुरीनगर्यौ वा पत्तन पुटभेदनम्' इत्यमर, काष्ठाङ्गारेण नृपेण, कारिता विधापिताम्, घोषणा सूचनाम्, निशम्य श्रुत्वा विशालतर महत्तर कुतुक कौतूहल यस्य तथाभूत, सात्यन्धरिर्जीवन्धर, तद्घोप ता घोषणाम्, निवारयामास प्रतिषेधयामास ।

सहायतेति—सहायाना मित्राणा समूह सहायता 'गजसहायाभ्या चेति वक्तव्यम्' इति समूहार्थे तल् प्रत्यय, तयाधिष्ठितो युक्त पार्श्वभागो निकटप्रदेशो यस्य तथाभूत, जीवन्धर सात्यन्धरि मन्दिरतो भवनात्, अनेकैर्बहुभि, द्विपैर्गजे, परिवार्यमाण परिवेष्ट्यमान, यूथनाथो गणपति गजसमूहपतिरिति यावत्, हिमाद्रेर्हिमालयस्य रन्ध्रादिव विवरादिव, प्रतस्थे प्रययौ ॥ २६ ॥

ततो निजयश इति—तत प्रस्थानानन्तरम्, निजयश स्वकीयकीर्तिरेव कलशार्णव क्षीरसागरस्तस्य तरङ्गैरिव कल्लोलैरिव, चामरयुगलेन बालव्यजनयुग्मेन परिशोभित समलङ्कृत पार्श्वमुभयतट येषा तेषा भावस्तत्ता तया, नभ सरणौ गगनमार्गे सञ्चरणयोग्यौ प्रयाणार्हौ, पक्षौ गरुतौ, बिभ्राणैर्दधद्भिरिव, लपनबिलतलान्मुखरन्ध्रतलाद्विगलितानि पतितानि यानि फेनशकलानि डिण्डीरभित्तानि तैर्दन्तुरितो व्याप्त पुरोभागोऽग्रप्रदेशो येषा तेषा भावस्तत्ता तया, रयेण वेगेन विजित पराभूता य पवनो वायुस्तेन समानीता समर्पिता ये मुक्तानामुपहारा मौक्तिकोपायनानि तान्, अङ्गीकुर्वाणैरिव स्वीकुर्वद्भिरिव, स्यदस्य वेगस्य निरीक्षणक्षणे विलोकनवेलाया ह्रीणा लज्जितास्तान्, अतएव गगनकाननमेव नभोटव्येव दुर्गा दुर्गम्यस्थानानि तेषु, धावमानान् पलायमानान्, हरिदश्वस्य भास्वतो हरिताश्वा हरिद्वर्णहयास्तान् 'भास्वद्विवस्वत्सप्ताश्वहरिदश्वोष्णरश्मय' इत्यमर, अन्वेष्टुमिव मार्गयितुमिव, गगनसरणि गगनमार्गम्, उत्पतद्भिरुद्गच्छद्भि, जयोदर्कैर्विजयफलै, कर्कै श्वेताश्वै, परिष्कृतान् सहितान्, रथान् स्यन्दनान्, अलकुर्वन्त शोभयन्त, सकलजगतो निखिललोकस्यान्धकरणे दृष्टयपहरणे धुरीणा निपुणा ताम्, शताङ्गाना रथाना चक्रै रथाङ्गै क्षुण्णाद् विदारितात् क्षितितलाद्भूतलाद् उद्भूतोत्पन्ना या धूलिकापालिका रेणुसन्ततिस्ताम्, पताकापटपवनेन वैजयन्तीवस्त्रवायुना, धून्वन्तो दूरीकुर्वन्त देहबद्धा शरीरधारिण, वीररसा इव—उत्साहस्थायिभावकरसा इव, मूर्ता सशरीरा, उत्साहा इव स्फूर्तिसमूहा इव, जयलक्ष्म्या विजयश्रिया यन्निवासमन्दिर निवासभवन तस्य कनकप्राकारायित सुवर्णपरिधीयमान यदङ्गद केयूर तेन विभ्राजित शोभितो भुजदण्डो बाहुदण्डो येषा ते, लक्ष्म्या श्रिया विहार क्रीडा तस्य लीलाडोलायित केलिहिन्दोलिकावदाचरित यन्मुक्तादाम मौक्तिक स्रक् तेन विराजितमलकृत वक्ष स्थल

दण्डाः, लक्ष्मीविहारलीलाडोलायितमुक्तादामविराजितवक्षःस्थलाः, ते जीवन्धरप्रमुखाः, कार्मुकटङ्कारक्ष्वेलारवमुखरितदिशावकाशाः समराङ्गणं समाजग्मुः।

प्रविदारणमाविरास तत्र प्रथमं बाणगणैः परस्परम्।
अरुषा च रुषा क्षणं विहीनं विशिखाद्यग्यभवच्छिखी यतः ॥२७॥

नखांशुमयमञ्जरीसुरभिलां धनुर्वल्लरीं
समागतशिलीमुखां दधदयं हि जीवन्धरः।
अनोकह इवाबभौ भुजविशालशाखाञ्चितो
निरन्तरजयेन्दिराविहरणैकसवासभूः ॥२८॥

कुण्डलीकृतशरासनान्तरे जीवकाननममर्षपाटलम्।
स्पर्धते परिधिमध्यमास्थितं चन्द्रबिम्बमिह सन्ध्ययारुणम् ॥२९॥

जीवन्धरेण निर्मुक्ताः शरा दीप्रा विरेजिरे।
विलीनान् समितिं व्याधान् द्रष्टुं दीपा इवागताः ॥३०॥

तदनु जिष्णुचापचुम्बिजीवन्धराम्बुधरनिरवग्रहनिर्मुक्तशरधाराभिः कालकूटबलप्रतापानले

---

सुरःस्थलं येषां ते, ते पूर्वोक्ताः, जीवन्धरः सात्यन्धरिः प्रमुखः प्रधानो येषां तथाभूताः, कार्मुकटङ्कारश्च कोदण्डमौर्वीशब्दविशेषश्च क्ष्वेलारवश्च सिंहनादश्चेति कार्मुकटङ्कारक्ष्वेलारवौ ताभ्यां मुखरिता वाचालिता दिशावकाशाः काष्ठामध्यप्रदेशा यैस्तथाभूताः सन्तः, समराङ्गणं युद्धाङ्गणम्, समाजग्मुः समाययुः।

प्रविदारणमिति—तत्र समराङ्गणे, प्रथमं पूर्वम्, परस्परमन्योऽन्यम्, बाणगणैः शरसमूहैः, तत् प्रविदारणं युद्धम्, आविरास प्रकटीबभूव यत् क्षणमल्पकालं यावत्, रुषा क्रोधेन, अरुषा क्रोधाभावेन च विहीनमासीदिति विरोधः, परिहारपक्षे 'अरुषा' इत्यस्य 'व्रणेन' इत्यर्थो ग्राह्यः, 'व्रणोऽस्त्रियामीर्ममरुः' इत्यमरः। किञ्च, यतो यत्र, सार्वविभक्तिकस्तसिल्, विगता शिखा यस्य स विशिखः शिखारहितस्तस्मादपि, शिखास्ति यस्य स शिखी शिखायुक्तः, अभवद्बभूवेति विरोधः, विशिखाद् बाणादपि शिखी वह्निरभवदिति परिहारः। विरोधाभासोऽलङ्कारः ॥ २७ ॥

नखांशुमयेति—नखांशुमय्यो नखरश्मिरूपा या मञ्जर्यः पुष्पस्रजस्ताभिः सुरभिलां सुगन्धितां ताम्, समागताः प्राप्ताः शिलीमुखा बाणाः पक्षे भ्रमरा यस्यां ताम्, धनुर्वल्लरीं चापलताम्, दधत् बिभ्रत्, भुजा एव विशालशाखा इति भुजविशालशाखा बाहुदीर्घशाखास्ताभीरञ्चितः शोभितः, निरन्तरं शश्वत् जयेन्दिराया विजयलक्ष्म्या विहरणस्य विहारस्यैकसवासभूर्मुख्यनिवासभूमिः, अयं जीवन्धरः एष सात्यन्धरिः, अनसः शकटस्याकं गतिं हन्तीत्यनोकहो वृक्षः स इव, आबभौ शुशुभे। रूपकोपमे। पृथ्वीच्छन्दः 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' इति लक्षणात् ॥ २८ ॥

कुण्डलीकृतेति—कुण्डलीकृतं वर्तुलीकृतं यच्छरासनं धनुस्तस्यान्तरे मध्ये स्थितमिति शेषः, अमर्षेण क्रोधेन पाटलं श्वेतरक्तमित्यमर्षपाटलम्, जीवकस्य जीवन्धरस्याननं मुखमिति जीवकाननम्, इह लोके, परिधिमध्यं परिवेषाभ्यन्तरम्, आस्थितं विद्यमानम्, सन्ध्यया सायम् 'सायं सन्ध्या पितृप्रसूः' इत्यमरः, अरुणं रक्तवर्णम्, चन्द्रबिम्बं शशिमण्डलम्, स्पर्धतेऽसूयति। उपमालंकारः। रथोद्धतावृत्तम्, 'रान्नराविह रथोद्धता लगौ' इति लक्षणात् ॥ २९ ॥

जीवन्धरेणेति—जीवन्धरेण विजयासुतेन, निर्मुक्तास्त्यक्ताः, दीप्ता दीप्तिमन्तः, शरा बाणाः, समितिं युद्धे, विलीनान् तिरोहितान् व्याधान्, किरातान्, द्रष्टुमवलोकयितुम्, आगता आयाताः, दीपा दीपका इव, विरेजिरे शुशुभिरे। उत्प्रेक्षा ॥ ३० ॥

तदन्विति—तदनु तदनन्तरम्, जिष्णुचापं विजेतृधनुः पक्षे शक्रशरासनं चुम्बति दधातीति जिष्णुचापचुम्बी स चासौ जीवन्धरश्च, स एवाम्बुधरो मेघस्तेन निरवग्रहं निष्प्रतिबन्धं यथा स्यात्तथा निर्मुक्तास्त्यक्ता या शरधारा बाणपङ्क्तय एव जलधारास्ताभिः, कालकूटस्य शबरराजस्य बलं सैन्यं तस्य

शान्तता नीते, निशितशस्त्रनिकृत्तकुञ्जरपदकच्छपा, भल्लावलूनहयमल्लाननपयोजपरिष्कृता मदवारणकर्णभ्रष्टचामरहसावतसिता, कीलालवाहिन्य समीकधराया पर सहस्रमजायन्त।

जित्वा किरातबलमेष यश प्रसूनै-
राशाविशालनयना सुरभीचकार।
क्षीराम्बुदानिव सदा प्रवहत्पयोभि
सिक्तान्तिकान्पशुगणानहरन्च धीर ॥३१॥

पुरा खलु य शम्बरारातिश्चापलालिजीवन्धरश्च जगति विश्रुतो बभूव, सोऽयमधुना शबरारातिश्चापलालिजीवन्धरश्च सवृत्त इति, न बिन्दुमात्रेणापि विशेष। पूर्वं सारसशरोऽयमधुना सरसशर इत्याकारतो विशेषेऽप्याकारसाम्यमखण्डितमुल्लसत्येवास्येति विचित्रमेतत्। अथ पौराणा हर्षातिरेक एतावानिति गगनतलप्रसारितवैजयन्तीभुजाभिबोधयदिव मोदोत्तरमेतत्पुर प्रविश्य स्वय विशिखाधारस्यापि विशिखाधेयतामास्कन्दत सकलवयस्यमण्डलमध्यमध्यासीनस्य जीव-

---

प्रताप एव तेज एवानलो वह्निस्तस्मिन्, शान्तता शान्तिम्, नीते प्रापिते सति, समीकधराया युद्धभूमौ, पर सहस्र सहस्रादप्यधिका, कीलालवाहिन्यो रुधिरनद्य, अजायन्त प्रादुरभूवन्, कथभूता कीलालवाहिन्य इत्याह—निशितैस्तीक्ष्णै शस्त्रैरायुधै निकृत्तानि छिन्नानि कुञ्जरपदान्येव हस्तिचरणा एव कच्छपा कूर्मा यासु ता, भल्लै कुन्तैरवलूनानि खण्डितानि यानि हयमल्लाननान्यश्वारोहिवीरवदनानि तान्येव पयोजानि पद्मानि तै परिष्कृता शोभिता, मदवारणाना मत्तमतङ्गजाना कर्णेभ्य श्रवणेभ्यो भ्रष्टा ये चामरा एव प्रकीर्णका एव हसा मरालास्तैरवतसिता शोभिता।

जित्वेति—एष जीवन्धर किरातबल शबरसैन्यम्, जित्वा पराभूय, यश प्रसूनै कीर्तिकुसुमै, आशा एव काष्ठा एव विशालनयना आयताक्ष्यस्ता, सुरभीचकार सुगन्धयामास। च किञ्च, धीरो वीर, स, सदा सर्वदा, प्रवहत्पयोभि प्रक्षरत्क्षीरै, सिक्तान्तिकान् उक्षिताभ्यर्णान्, क्षीराम्बुदानिव दुग्धवारिदानिव, पशुगणान् गोसमूहान्, अहरत्प्रत्यावर्तयत्, रूपकोपमे। वसन्ततिलकावृत्तम् 'ज्ञेया वसन्ततिलका तभजा जगौ ग' इति लक्षणात्॥ ३१॥

पुरा खल्विति—पुरा पूर्वम्, खलु निश्चयेन, य शम्बरारातिर्मनसिज काम इति यावत् 'शम्बरारिर्मनसिज कुसुमेषुरनन्यज' इत्यमर, चपला एव चापलाश्चञ्चलास्ते च तेऽलयश्च भ्रमराश्चेति चापलालय स्तैर्जीवन्धर प्रत्यञ्चाधर, कामकोदण्डस्य भ्रमरमौर्वीकत्व कविसमयसिद्धम्, इति च, जगति भुवने विश्रुत प्रख्यात, बभूव, सोऽयम्, अधुना साम्प्रतम्, शबरारातिभिल्लरिपु, चापलाली धनु शोभी चासौ जीवन्धरश्च विजयासुतश्चेति चापलालिजीवन्धरश्च, सवृत्तो बभूव इतीत्थम्, न बिन्दुमात्रेणाप्यनुस्वारमात्रेणापि, विशेषो व्यतिरेक। अयमेव काम इति भाव, पूर्वं प्राक्, अय जीवन्धर, सारस सरसीरुह शरो बाणो यस्य स काम इति यावत् 'सारस सरसीरुहम्' इत्यमर 'अरविन्दमशोक च चूत च नवमल्लिका' इत्यभिधानात्कामस्य कमलशरत्व कविसमयसिद्धम्, अधुना साम्प्रतम्, सरस सबल शरो बाणो यस्य स सरसशर, अस्तीति शेष, इत्याकारत सस्थानात् पक्षे आकारवर्णात्, विशेषेऽपि व्यतिरेकेऽपि, अस्य सत्यन्धरसुतस्य, अखण्डित मन्यूनम्, आकारसाम्य सस्थानसादृश्यम्, उल्लसत्येव शुम्भत्येव, इत्येतद् विचित्रमाश्चर्यकरम्।

अथ पौराणामिति—अथ विजयानन्तरम्, पौराणा नागरिकाणाम्, हर्षातिरेक प्रमोदाधिक्यम्, एतावानियत्प्रमाण, इत्येवम्, गगनतले नभस्तले प्रसारिता विस्तारिता वैजयन्त्य पताका एव भुजा बाहवस्ताभि बोधयदिव सूचयदिव, मोदोत्तर हर्षप्रधानम्, एतत्पुर राजपुराभिधान नगरम्, प्रविश्य प्रवेश कृत्वा, विशिखाधारस्यापि रथ्याधारस्यापि सत, विशिखाधेयता रथ्याधेयतामास्कन्दत इति विरोध, यो विशिखानामाधार स एव तासामाधेय कथ भवतीति विरोध स्पष्ट। परिहारपक्षे स्वयम्, विशिख हृदय तस्याधार समाश्रयस्तथाभूतस्यापि सत विशिखाया रथ्याया आधेयतामास्कन्दत, मार्गे गच्छत इति यावत्, सकल च तद् वयस्यमण्डलञ्चेति सकलवयस्यमण्डल निखिलमित्रसमूहस्तस्य मध्यम्, अध्यासीन-स्याधितिष्ठत, जीवन्धरस्य सात्यन्धरे शौर्यं च स्थैर्यं च धैर्यञ्चेति शौर्यस्थैर्यधैर्याणि शूरत्वस्थिरत्वधीरत्वानि

न्धरस्य देहसहकारे शौर्यस्थैर्यधैर्यमञ्जरीमञ्जुले कीर्तिसौरभ्याकर्षिता पौरजानपदनयनपुष्पन्धया निरन्तरमापेतु ।

नन्दगोप इति विश्रुतमेघ समदाम्बुनिधिमाशु निपीय ।
वारिपातमकरोत्करपद्मे जीवकस्य शुभलक्षणजुष्टे ॥३२॥

जीवन्धरोऽपि नन्दगोपेन पातितामच्छवारिधारा तत्सहचरी मन्दस्मितप्रकाशितकुन्दकुड्मलरुचिवीचिस्नापितामिव 'पद्मास्यो योग्य' इति शुद्धवर्णा वचोधारा पातयन्नेवोरीकुर्वन्, दूरीकृतस्पृह 'मम पद्मास्यस्य च भात्रभेदो न तु जीवभेद' इति मैत्रीविभव विभावयन्, तत्परिणयमहोत्सवारम्भ सत्रा मित्रामित्रजनानन्दद्वेषाभ्या कन्दलयामास ।

शुभे मुहूर्ते स हि नन्दगोपसुताकराब्जग्रहण चकार ।
वह्नि पुरस्कृत्य विधिं विधाय पद्मास्यनामा परिणीतियोग्य ॥३३॥

गोविन्दायास्तनुतनुलता चञ्चलाप्रत्यनीका
कान्त्या पुष्यत्कनककदलीकन्दलीगर्भगौरीम् ।
हेलोन्मीलत्कुचयुगलसन्मौक्तिकस्रक्प्रभाभि
स्पष्टाभ्यर्णा स हि बहुमुदा चक्षुषा पश्यति स्म ॥३४॥

---

तान्येव मञ्जर्य पुष्पस्रजस्ताभिर्मञ्जुलो मनोहरस्तस्मिन्, देहसहकारे शरीरातिसौरभाम्रे 'आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभ' इत्यमर, कीर्तिसौरभ्येण यश सौगन्ध्येनाकर्षिता वशीभूता, पौरजानपदाना नागरिकराष्ट्रवासिजनाना नयनान्येव लोचनान्येव पुष्पधया भ्रमरा निरन्तर निष्प्रतिबन्ध यथा स्यात्तथा, आपेतु पतन्तिस्म, ते त ददृशुरिति भाव ।

नन्दगोप इति—नन्दगोप इति नाम्ना विश्रुतश्चासो मेघश्चेति विश्रुतमेघ प्रसिद्धवारिवाह, आशु-झटिति, समद एवाम्बुनिधिस्त हर्षसागरम्, निपीय नितरा पीत्वा, शुभलक्षणै शङ्खचक्रादिशुभसामुद्रिकचिह्नैर्जुष्ट सेवित तस्मिन्, जीवकस्य जीवन्धरस्य करपद्मे हस्तकमले, वारिपात जलपात कन्यादानसकल्पार्थं जलधारापातमिति भाव अकरोद् विदधौ । स्वागतावृत्तम्—'स्वागतेति रनभाद्गुरुयुग्मम्' इति लक्षणात् ॥ ३२ ॥

जीवन्धरोऽपि—जीवन्धरोऽपि सात्यन्धरिरपि, नन्दगोपेन तन्नाम्ना गोपवरेण, पातिता मोचिताम्, अच्छवारिधारा निर्मलजलधाराम्, तस्या अच्छवारिधाराया सहचरी सखा सदृशीति यावत् ताम्, मन्दस्मितेन मन्दहसितेन प्रकाशिता प्रकटिता या कुन्दकुड्मलरुचयो माघ्यमुकुलमरीचयस्तासा वीचिभि सन्ततिभि स्नपितामिव प्रक्षालितामिव, 'पद्मास्या योग्य पद्मास्याभिधान सखा योग्यस्त्वत्पुत्र्या उचितो वर' इत्येव प्रकाराम्, शुद्धवर्णां शुद्धाक्षराम्, वचोधारा वचनपङ्क्तिम्, पातयन् प्रकटयन्नेव, उरीकुर्वन् स्वीकुर्वन्, दूरीकृता स्पृहा येन स त्यक्तनन्दगोपकन्याभिलाप, मम पद्मास्यस्य च भावभेद पर्यायभेदोऽस्ति न तु जीवभेद प्राणभेदोऽस्ति, इत्येव मैत्रीविभव सौहार्दसम्पत्तिम्, विभावयन् प्रकटयन्, सन्, मित्रामित्रजनयो सुहृदसुहृदोरानन्दद्वेषाभ्या हर्षखेदाभ्याम्, सत्रा सार्धम्, तस्य पद्मास्यस्य परिणयमहोत्सवो विवाहोल्लासस्तस्यारम्भ प्रक्रमस्तम्, कन्दलयामास वर्धयामास ।

शुभे मुहूर्ते—हि निश्चयेन, परिणीतिर्विवाहस्तस्या योग्योऽर्ह इति परिणीतियोग्य, पद्मास्यनामा पद्मास्याभिधान, स जीवन्धरसुहृद्, शुभे प्रशस्ते, मुहूर्ते समये, विधि तात्कालिकविधानम्, विधाय कृत्वा, वह्निमग्निम्, पुरस्कृत्याग्रे विधाय, नन्दगोपसुताया कराब्जग्रहण पाणिपद्मग्रहणम्, चकार विदधौ ॥ ३३ ॥

गोविन्दाया इति—हि निश्चयेन, स पद्मास्य कान्त्या दीप्त्या, चञ्चला सौदामिनी प्रत्यनीक विपक्षो यस्यास्ता 'तडित्सौदामिनी विद्युच्चञ्चला चपला अपि' इत्यमर, विद्युत्सदृशीमिति यावत्, पुष्यन्ती विकसन्ती या कनककदली सुवर्णमोचा तस्या कन्दली तस्या गर्भ इव गौरी पीतवर्णा ताम्, हेलया सहजगत्योन्मीलत् प्रकटीभवत् य कुचयुग स्तनद्वन्द्व तस्मिन् लसन्त्य शोभमाना या मौक्तिकस्रजो मुक्ता

यस्या पादौ मृदुलकमलस्पर्धिशोभाविलासौ
जङ्घे मारत्रिभुवनजये काहलीवद्व्यभाताम् ।
नाभि पञ्चायुधरसभरीकूपिकेवाविरासीद्-
वक्त्र राकासितरुचितुलासगमङ्गीचकार ॥३५॥

*इति महाकविहरिचन्द्रविरचिते श्रीमति जीवन्धरचम्पूकाव्ये*
*गोविन्दालम्भो नाम द्वितीयो लम्भ ।*

---

मालास्तासा प्रभा दीप्तयस्ताभि , स्पष्ट प्रकाशमानमभ्यर्णं समापपदेशो यस्यास्ताम्, गोविन्दाया नन्दगोप-सुताया , तन्वी चासौ तनुलता च ता कृशकलेवरवल्लरीम्, चक्षुषा नयनाभ्याम्, जातावेकवचनम्, बहुमुदा प्रचुरानन्देन पश्यति स्म अवलोकयामास । मन्दाक्रान्तावृत्तम् 'मन्दाक्रान्ता जलधिषडगम्भा नतौ ताद्गुरू चेत्' इति लक्षणात् ॥ ३४ ॥

यस्या पादाविति—यस्या गोविन्दाया , पादौ चरणौ, मृदु च तत्कमलञ्चेति मृदुकमल कोमल-पद्म तत् स्पर्धेते इति मृदुकमलस्पर्धिना, शोभा च विलासश्चेति शोभाविलासौ दीप्तिविभ्रमौ, मृदुकमल स्पर्धिनौ शोभाविलासौ ययोस्तौ, आस्तामिति शेष । यस्या , जङ्घे प्रसृते 'जङ्घा तु प्रसृता समे' इत्यमर , मारस्य मदनस्य त्रिभुवनजयस्त्रिलोकविजयस्तस्मिन् 'मदनो मन्मथो मार प्रद्युम्नो मीनकेतन' इत्यमर , काहलीवद् वाद्यविशेषवद, व्यभाताम् शुशुभाते । नाभिस्तुन्दि , पञ्चायुधस्य कामस्य रसभरी रसनिष्यन्दस्तस्या कूपिकेव ह्रस्वनिपानमिव, आविरासीत्प्रादुरभूत् । वक्त्र वदनम्, राकाया पौर्णमास्या सितरुचिश्चन्द्रस्तस्य तुलोपमा तस्या सङ्ग सम्बन्धम् अङ्गीचकार स्वीचक्रे । उपमालङ्कार । मन्दाक्रान्ताच्छन्द ॥ ३५ ॥

इतीत्यव्यय समाप्तौ महाकविना हरिचन्द्रेण विरचिते निर्मिते, श्रीमति शोभासम्पन्ने, जीवन्धर चम्पूकाव्ये एतन्नाम चम्पूनाम सन्दर्भे, गोविन्दाया नन्दगोपनन्दिन्या लम्भ प्राप्तिर्यस्मिन् स, एतन्नामा द्वितीयो लम्भोऽधिकार समाप्त इति ।

इति महाकविहरिचन्द्रविरचिते श्रीमति 'कौमुदी' व्याख्याधरे जीवन्धरचम्पूकाव्ये
गोविन्दालम्भो नाम द्वितीयो लम्भ ।



# तृतीयो लम्भः

अथ दिने दिने प्रवर्धमानानुराग पद्मास्यनामा राजहंसतरुणस्त्रिवलीलहरीविराजिते नाभि-महावर्तशोभिते गोविन्दानामतरङ्गिण्या उदरह्रदे कचन काल रममाण, काञ्चीविहङ्गविरुतमुखरिते घननितम्बबिम्बपुलिने कतिपयसमय स्थितिमापन्न, करेण मेचकचूचुकलोलम्बचुम्बितवक्षोरुहकमलकुड्मल स्पृशन्, आनन्दलहरीभिरभ्युक्षित, कुचचक्रवाकमञ्जुले सुरभिलश्रीखण्डद्रवपङ्किले कञ्चुलीकोमलशैवलपेशले वक्षःस्थलकमलाकरे विहरमाणश्चिरमिन्द्रियग्राम तर्पयामास।

> जीवन्धरोऽपि कमनीयकलावधूटी
>
> कीर्त्यङ्गना जयरमा च समानवृत्त्या।
>
> उल्लासयन् सकललोचनभागधेय-
>
> माबिभ्रदाकृतिममन्दमुदावतस्थे ॥ १ ॥
>
> तस्मिन् पुरे वैश्यजनस्य नेता श्रीदत्तनामा वसति स्म कश्चित्।
>
> यस्य स्पृहोहौ धनलाभहेतू प्रासाददेशे रमता चिराय ॥ २ ॥

---

अथेति—अथ गोविन्दापरिणयानन्तरम्, दिने दिने प्रतिदिवसम्, प्रवर्धमान समेधमानोऽनुराग प्रीतिर्यस्य तथाभूत, पद्मास्यनामा पद्मास्याभिधान, राजहंसतरुणो मरालयुवा, त्रिवल्यो नाभेरधस्ताद्विद्यमानास्तिस्रो रेखा एव लहर्यस्तरङ्गास्ताभिर्विराजिते शोभिते, नाभिरेव तुन्दिरेव महावर्तो दीर्घभ्रमस्तेन शोभिते समुल्लसिते, गोविन्दानामतरङ्गिण्या गोविन्दाख्यस्रवन्त्या उदरह्रदे उदरजलाशये, कचन काल किञ्चित्समयपर्यन्तम् 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया, रममाण क्रीडन्, काञ्चीविहङ्गाना मेखलाशकुन्ताना विरुतेन कूजनध्वनिना मुखरिते वाचालिते, घन निबिड स्थूलमिति यावत् यन्नितम्बबिम्ब कटिपश्चाद्भागाभोग स एव पुलिन तोयोत्थिततीरप्रदेशस्तस्मिन् 'तोयोत्थित तत्पुलिन सैकत सिकतामयम्' इत्यमर, कतिपयसमय किञ्चित्कालम्, स्थितिमवस्थानम्, आपन्न प्राप्त तत्र स्थित इति यावत्, करेण हस्तेन, मेचकचूचुके एव कृष्णस्तनमुखे एव लोलम्बा भ्रमरो ताभ्या चुम्बितमाश्लिष्ट यद् वक्षोरुहकमलयो कुचारविन्दयो कुड्मल मुकुल तत, स्पृशन् स्पर्शनेन्द्रियविषयीकुर्वन्, आनन्दलहरीभि प्रमोदतरङ्गै, अभ्युक्षितोऽभिषिक्त कुचावेव चक्रवाकौ कुचचक्रवाकौ स्तनरथाङ्गौ ताभ्या मञ्जुले मनोहरे, सुरभिलश्चासौ सुगन्धिश्चासौ श्रीखण्डद्रवश्च मलयजपङ्कश्चेति सुरभिलश्रीखण्डद्रवस्तेन पङ्किले पङ्कयुक्ते, कञ्चुलयेव स्तनवस्त्रमेव कोमलशैवल मृदुजलनीली तेन पेशले मनोहरे, वक्ष स्थलमेवोर स्थलमेव कमलाकर पद्मोपलक्षितसरोवरस्तस्मिन्, विहरमाणो विहार कुर्वन्, सन्, चिर दीर्घकाल यावत्, इन्द्रियग्राम हृषीकसमूहम्, तर्पयामास प्रीणयामास। रूपकालङ्कार।

जीवन्धरोऽपि—जीवन्धरोऽपि सात्यन्धरिरपि, कमनीयकला एव ललितवैदग्ध्य एव वधूट्यो युवतयस्ता, कीर्तिरेव समज्ञैवाङ्गना सीमन्तिनी ताम्, जयरमा च विजयलक्ष्मी च, समानवृत्त्या दाक्षिण्येन समानानुरागेणेति यावत्, उल्लासयन् हर्षयन्, सकलाना निखिलाना लोचनानि नयनानि तेषा भागधेय भाग्यम् 'भागरूपनामभ्यो धेय' इति भागशब्दाद्धेयप्रत्यय, आकृति सस्थान सौन्दर्यमिति यावत्, आबिभ्रद् आदधत्, अमन्दमुदा प्रकृष्टहर्षेण, अवतस्थेऽवस्थितो बभूव, सुखेन न्युवासेति भाव ॥ १ ॥

तस्मिन्निति—तस्मिन् पुरे पूर्वोक्ते राजपुरनगरे, श्रीदत्तनामा श्रीदत्ताभिधान, कश्चित्कोऽपि, वैश्यजनस्य वणिग्जनस्य, नेता नायक, वसतिस्म न्यवासीत्। यस्य प्रासाददेशे भवनप्रदेशे, धनलाभस्य वित्तप्राप्तेर्हेतू कारणे, स्पृहा च धनेच्छा च, ऊहश्च तत्प्राप्त्यर्हतर्कश्चेति स्पृहोहौ, चिराय दीर्घकाल सदेति यावत्, अरमतामक्रीडताम्। 'रम क्रीडायाम्' इत्यस्य परस्मैपदप्रयोगश्चिन्त्य ॥ २ ॥

कदाचिदसौ रत्नवाणिज्यपरायणो रत्नद्वीपं गन्तुकामः प्रस्थानमाचरन्क्रमेण लङ्घितानेकजनपदनगरग्रामः स्फुटितशुक्तिमौक्तिकवितानतारकितं मकरमीनकुलीरराशिसमाश्रितमपरमिव गगनतलं निशि निपीतनिशाकरकरनिकरं डिण्डीरखण्डकपटेनोद्वमन्तमिव, क्वचिच्चलाचलकुलाचलैरिव कल्लोलघट्टनमनुभवद्भिस्तिमितिमिङ्गिलैः पुत्रैरिवोपास्यमानम्, क्वचन माणिक्यराशिरश्मिझरीपरीतजलमामिषशङ्कयाभिधावद्भिः पुनः पावकभिया धावमानैर्मीनैराकुलीनम्, कुत्रचिद्देदीप्यमानफणामणिभिस्तरङ्गसंगतैर्भुजङ्गैर्निबिडिततया परिणाहादिगुणेन विजितं विलीनमाकाशमूर्मिहस्तविधृतदीपिकाभिरन्वेषमाणमिव, कुत्रचन वितनविद्रुमवनराजिविराजिततया प्रत्यक्षीकृतौर्वानलमिव, क्वचन गङ्गासिन्धुप्रमुखनदीकान्ताः समागताः प्रसारितलहरीबाहाभिराश्लिष्यन्तमिव, पुरः प्रकाशन्तमुदन्वन्तं ददर्श ।

यत्राम्भोमनुजास्तटोत्थपवनप्रोद्धूततालीवन-
ध्वान्तत्रस्तहृदः प्रमर्दितमिलच्छैवालमाला बभुः ।
कुम्भीन्द्राश्च महाझषाननबिलं भूमीधरोद्यद्दरी
भ्रान्त्या विश्यपुनर्निवृत्तिमगमस्तज्ज्वालमालासहाः ॥३॥

कदाचिदिति—कदाचिज्जातुचित्, रत्नानां मणीनां वाणिज्ये व्यापारे परायणस्तत्परः, अतएव रत्नद्वीपं द्वीपविशेषम्, गन्तुकामो यातुमनाः, 'तुं काममनसोरपि' इति मलोपः, असौ श्रीदत्तः, प्रस्थानं प्रयाणम्, आचरन् कुर्वन्, क्रमेण क्रमशः लङ्घिता व्यतिक्रान्ता अनेके बहवो जनपदनगरग्रामा राष्ट्रपत्तननिगमा येन तथाभूतः सन्, पुरः पुरस्तात्, प्रकाशन्तं शोभमानम्, उदन्वन्तं सागरम् 'उदन्वानुदधिः सिन्धुः सरस्वान्सागरोऽर्णवः' इत्यमरः, ददर्श विलोकयामास । अथ तमेवोदन्वन्तं वर्णयितुमाह—स्फुटितानि विदीर्णानि यानि शुक्तिमौक्तिकानि मुक्तास्फोटमुक्ताफलानि तेषां वितानेन समूहेन तारकितं सञ्जातनक्षत्रकम्, मकराश्च मीनाश्च कुलीराश्चेति मकरमीनकुलीरा नक्रपाठीनकर्कटाभिधाना जलजन्तुविशेषास्तेषां राशिः समूहस्तेन समाश्रितं सेवितं पक्षे मकरमीनकुलीरा एव राशयो ज्योतिषशास्त्रप्रसिद्धास्तैः समाश्रितम्, अपरमन्यत्, गगनतलमिव नभस्तलमिव, डिण्डीरस्याब्धिकफस्य खण्डः समूहस्तस्य कपटेन दम्भेन, निशि रजन्याम्, निपीतो धयितो यो निशाकरस्य चन्द्रस्य करनिकरः किरणकलापस्तम्, उद्वमन्तमिवोद्गिरन्तमिव, क्वचित्कुत्रचित्, घट्टनमाघातमिति कल्लोलघट्टनम्, अनुभवद्भिः प्राप्नुवद्भिः, चलाचलाश्च ते कुलाचलाश्चेति चलाचलकुलाचलास्तैरतिशयचपलैः कुलपर्वतैरिव, तिमयश्च पाठीनाश्च तिमिङ्गिलाश्च मत्स्यविशेषाश्चेति तिमितिमिङ्गिलास्तैः, तिमिं गिरतीति विग्रहे मूलविभुजादित्वात्कप्रत्ययः, 'अचि विभाषा' इति लत्वम्, 'गिलेऽगिलस्य' इति मुम्, पुत्रैरिव सुतैरिव, उपास्यमानं सेव्यमानम्, क्वचन कुत्रचित् माणिक्यराशेः रत्नसमूहस्य रश्मिझरीभिः किरणसन्ततिभिः परीतं व्याप्तं यज्जलं तोयं तत्, आमिषशङ्कया मांसभ्रान्त्या, अभिधावद्भिः सम्मुखमागच्छद्भिः, पुनर्भूयः, पावकभिया वैश्वानरभयेन, धावमानैर्वेगेन दूरं गच्छद्भिः, मीनैः शफरैः, आकुलीनमाकीर्णम्, कुत्रचित्क्वचित्, देदीप्यमाना अतिशयेन प्रकाशमानाः फणामणयो भोगरत्नानि येषां तैः, तरङ्गसंगतैः कल्लोलमिलितैः, भुजङ्गैर्नागैः, निबिडिततया सान्द्रतया, परिणाहादिगुणेन विशालताप्रभृतिगुणेन 'परिणाहो विशालता' इत्यमरः, विजितं पराजितं, सत्, विलीनमन्तर्हितम्, आकाशमम्बरम्, ऊर्मय एव तरङ्गा एव हस्ताः करास्तेषु विधृता गृहीता या दीपिकास्ताभिः, अन्वेषमाणमिव गवेषयन्तमिव, कुत्रचित्कस्मिंश्चित्प्रदेशे, विद्रुमवनं प्रवालकाननं 'मूगा' इति प्रसिद्धकाननम् तस्य राजिः पङ्क्तिस्तया विराजिततया शोभिततया, प्रत्यक्षीकृतः सम्मुखं दृश्यमानः और्वानलो वडवानलो यस्य यस्मिन्वा तमिव क्वचन कुत्रापि, समागताः प्राप्ताः, गङ्गासिन्धू प्रसिद्धनदीविशेषौ प्रमुखे यासु तथाभूता या नद्यः स्रवन्त्यस्ता एव कान्ता वनितास्ताः, प्रसारिता लहर्य एव तरङ्गा एव बाहा बाहवस्ताभिः, आश्लिष्यन्तमिवालिङ्गन्तमिव ।

यत्राम्भोमनुजा इति—यत्रोदन्वति, तटोत्थानि तीरोत्पन्नानि, पवनप्रोद्धूतानि वायुकम्पितानि यानि तालीवनानि ताडीकाननानि तेषां, ध्वानेन शब्देन त्रस्तं भीतं हृन्मनो येषां ते, अम्भोमनुजा जलमनुष्याः, प्रमर्दिताः खण्डिताः मिलन्त्योभयनिवारणार्थमुपरिधारिताः शैवालमाला जलनीलीसमूहा येषां

त वारानिधिमापीय नयनेन वणिक्पति ।
विस्मयाम्बुधिमापेदे क्षारत्वमसहन्निव ॥ ४ ॥

तदनु पोतमारुह्य द्वीपान्तर गत्वा तत्र विचित्रैरुपायैर्बहूनि द्रविणानि सपाद्य सपत्ना शम्पायुधमन्तरिक्षाकूपारसञ्चरणक्षमैरावणस्कन्धादिरूढमनुकुर्वन्निव महायानपात्रमारुह्य सायात्रिकपतिरसाववारान्तमाडुढौके ।

ततो घनघनारवस्फुटितसर्वदिग्भित्तिक
पपात तरणौ तदा बहलवर्षबिन्दूत्कर ।
निजप्रतिभटस्फुटप्रचुरमौक्तिकाडम्बरा-
सहिष्णुरिव गोचरो न हि विपत्क्षण प्राणिनाम् ॥ ५ ॥
सायात्रिकोऽसौ सकलास्तरिस्थान्पुरैव शोकाम्बुधिमग्नदेहान् ।
सतारयामास स तत्त्वबोधपोतप्रदानेन परावरज्ञ ॥ ६ ॥

---

तथाभूता बभु शुशुभिरे, कुम्भीन्द्राश्च गजेन्द्राश्च, भूमिधराणा पर्वतानामुद्यन्त्य प्रकटीभवन्त्यो या दर्यो गुहास्तासा भ्रान्ति सदेहस्तथा, महाकृपाणा दीर्घकायमत्स्यानामानन मुखमेव बिल गह्वर तत्, आविश्य प्रविश्य, तस्य ज्वालमाला तेज समूह न सहन्त इति तज्ज्वालमालासहा सन्त , पुनर्भूय , निवृत्ति प्रत्यागमनम्, अगमन् प्रापु । शार्दूलविक्रीडितच्छन्द ॥ ३ ॥

त वारानिधिमिति—वणिक्पति श्रीदत्त , नयनेन चक्षुषा, त पूर्वोक्तम्, वारानिधि सागरम्, आपीय समन्तात्पीत्वा दृष्ट्वेति यावत्, क्षारत्व लवणताम्, असहन्निव सोढुमसमर्थो भवन्निव, विस्मयाम्बुधिमाश्चर्यसागरम्, आपेदे प्राप । उत्प्रेक्षा ॥ ४ ॥

तदनुपोतमिति—तदनु सागरदर्शनानन्तरम्, सायात्रिकाना पोतवणिजा पति स्वामीति सायात्रिकपति , असौ श्रीदत्त पोत नौकाम्, आरुह्याधिष्ठाय, अन्यो द्वीपो द्वीपान्तरस्तम्, गत्वा प्राप्य, तत्र द्वीपान्तरे, विचित्रैर्विविधै , उपायै साधनै बहूनि विपुलानि द्रविणानि धनानि, सपाद्योपार्ज्य, सपत्ना सपत्न्या अन्तरिक्षमेवाकूपार इत्यन्तरिक्षाकूपारो गगनसागरस्तस्मिन् सचरणे गमने क्षम समर्थो य ऐरावण सुरगजस्तस्य स्कन्ध ग्रीवोपरि, अधिरूढोऽधिष्ठितस्तम्, शम्पायुध वज्रायुधम्, इन्द्रमिति यावत् , अनुकुर्वन्निव विडम्बयन्निव, महायानपात्र महापोतम्, आरुह्याधिष्ठाय, अवारान्त समुद्रान्तम्, आडुढौके प्राप । 'ढौकृ गतौ' इत्यस्य लिटि रूपम् ।

ततो घनघनारवेति—ततस्तदनन्तरम्, तदा तस्मिन् काले, घनश्चासावारवश्चेति घनारव प्रचण्डशब्द घनाना मेघाना यो घनारवस्तेन स्फुटिता विदारिता सर्वदिग्भित्तयो निखिलकाष्ठान्तप्रदेशा येन स , वर्षबिन्दूना वृष्टिसीकराणामुत्कर समूह इति वर्षबिन्दूत्कर , बहलश्चासावधिकश्चासौ वर्षबिन्दूत्करश्चेति बहलवर्षबिन्दूत्कर , निजप्रतिभट शोभया स्वपतिपक्ष , स्फुट प्रकटित प्रचुर प्रभूतश्च यो मौक्तिकाना मुक्ताफलानामाडम्बर समूहस्तस्यासहिष्णुरसहनशील इव, तरणौ पोते, पपात-अपतत् । हि निश्चयेन विपत्क्षणो विपत्त्यवसर , प्राणिना जीवानाम्, गोचरो विषय न, नो अस्तीति शेष । कस्य कदा कापत्तिरापतिष्यतीति प्राणिनो ना जानन्तीति भाव । उत्प्रेक्षार्थान्तरन्यासौ । पृथिवीच्छन्द ॥ ५ ॥

सायात्रिकोऽसाविति—परश्चावरश्चेति परावरो उत्तमाधमौ, तौ जानातीति परावरज्ञ , असो स पूर्वोक्त , सायात्रिक पोतवणिक्, श्रीदत्त इति यावत्, पुरैव तरिनिमज्जनात्प्रागेव, शोक एवाम्बुधि शोकाम्बुधि खेदसागरस्तस्मिन्मग्नो देहो विग्रहो येषा तान्, सकलान् समस्तान् तरिस्थान् नौकास्थितान्, जनानिति शेष , तत्त्वबोधस्तत्त्वज्ञानमेव पोतो यान तस्य प्रदान वितरण तेन सतारयामास सतीर्णाञ्चकार । सदुपदेशेन तेषा शोकमपाचकारेति भाव ॥ ६ ॥

---

१ सचरणचणैरावण, ब० ।

शनै शनैर्नावि नष्टाया दिष्टेनेव सन्निधापित दृष्ट कूपखण्डमारुह्यात्मान लब्धप्राण मन्य मानो नष्टशेवधिरपि सतुष्टहृदय किंचन द्वीपमासाद्य तत्र याहच्छिकमिव गत कचन विद्याधर प्रति चापलवशेन निजोदन्त प्रतिपादयामास ।

श्रुत्वाथ तेन च मिषेण स नीयमानो
रूप्याचल स्मितनिभ धरणीरमण्या ।
शृङ्गैर्नभोनिकषणोपललीढतुङ्गै-
र्लेखाचल परिहसन्तमिम ददर्श ॥ ७ ॥

यत्सानुनीलमणिदीप्तिपरम्पराभि
पञ्चाननस्य शिशवो बहु विप्रलब्धा ।
सत्येऽपि कन्दरमुखे परिशङ्कमाना
निश्चित्य गर्जनकृतध्वनिभिर्विशन्ति ॥ ८ ॥

स्व वीक्ष्य वन्यद्विरदो नितम्बे यस्य बिम्बितम् ।
समेत्य दन्तैस्त हन्ति मदिना का विवेकिता ॥ ९ ॥

मृगाधिपा यत्र गजभ्रमेण घनावलि गर्जनसम्भ्रमेण ।
[1]उत्पत्य वेगान्नखरप्रहारैर्विदार्य कोपेन समुत्सृजन्ति ॥ १० ॥

शनै शनैरिति—शनै शनैर्मन्द मन्दम्, क्रमेणेति यावत् , नावि तरणौ, नष्टाया निमग्नाया सत्याम्, दिष्टेनेव भाग्येनेव, सन्निधापित समाप प्रापितम्, दृष्ट विलोकितम् , कूपखण्ड नौकादण्डम्, आरुह्याधिष्ठाय, आत्मान स्वम्, लब्धा प्राप्ता प्राणा आयु प्रभृतयो येन त लब्धप्राणम् , मन्यमानो बुध्यमान नष्टशेवधिरपि विगतनिधिरपि, सतुष्ट हृदय यस्य तथाभूत सतृप्तचेता , स श्रीदत्त , किञ्चन कमपि, द्वीपमन्तरीपम्, आसाद्य प्राप्य, तत्र द्वीपे, यदृच्छया विहरतीति याहच्छिकस्त स्वैरचारिणम्, गत प्राप्तम्, कञ्चन कमपि, विद्याधर खगम्, प्रति तमुद्दिश्येति यावत् , चापलवशेन चञ्चलत्वेन, निजोदन्त स्वसमाचारम्, प्रतिपादयामास जगाद ।

श्रुत्वाथेति—अथानन्तरम्, तेन जनेन, श्रुत्वा निशम्य तदुदन्तमिति शेष , मिषेण केनापि व्याजेन, नीयमानो गम्यमान , स श्रीदत्त , धरणीरमण्या पृथिवीपुरन्ध्रया स्मितनिभ मन्दहसितसदृशम्, नभ एव गगनमेव निकषणोपल शाणोपलस्तेन लीढानि स्पृष्टानि, तथाभूतानि च तानि तुङ्गानि च समुन्नतानि चेति तथाभूतैस्तै , शृङ्गै शिखरै , लेखाना देवाना गिरिस्त सुमेरुपर्वतमिति यावत्, परिहसन्त तिरस्कुर्वन्तम्, इमम्, रूप्याचल रजतगिरिम्, विजयार्धमिति यावत्, ददर्श विलोकयामास ॥ ७ ॥

यत्सानुनीलेति—यस्य रूप्याचलस्य, सानुनीलमणीना शिखरगतमेचकरत्नाना दीप्तय किरणास्तासा परम्परा पङ्क्तयस्ताभि , बहु भूयोवारान्, विप्रलब्धा प्रतारिता , पञ्चाननस्य सिंहस्य, शिशव शावका , सत्येऽपि यथार्थभूतेऽपि कन्दरमुखे गुहाग्रभागे, परिशङ्कमाना सन्दिहाना , सन्त , गर्जनेन कृता विहिता ध्वनय प्रतिनादास्तै , निश्चित्य निर्णीय, विशन्ति प्रवेश कुर्वन्ति । भ्रान्तिमानलङ्कार ॥ ८ ॥

स्व वीक्ष्येति—वने भवो वन्य , द्वौ रदौ यस्य स द्विरद , वन्यश्चासौ द्विरदश्चेति वन्यद्विरद काननकरी, यस्य रूप्याचलस्य, नितम्बे कटके, बिम्बित प्रतिफलितम्, स्वमात्मानम्, वीक्ष्य विलोक्य, समेत्याभिमुख गत्वा, दन्तै रदनै , त प्रतिबिम्बितहस्तिनम्, हन्ति ताडयति, मदिना मदयुक्तानाम्, का किन्नामधेया, विवेकिता कर्तव्याकर्तव्यज्ञानवत्ता, अस्ति, नास्त्येवेति भाव । भ्रान्तिमदर्थान्तरन्यासौ ॥ ९ ॥

मृगाधिपा इति—यत्र पर्वते, मृगाधिपा सिंहा , गर्जनसम्भ्रमेण गर्जितभ्रान्त्या, गजभ्रमेण हस्तिसन्देहेन, वेगाज्जवात्, घनावलि मेघसमूहम्, उत्पत्योद्भ्रम्य, कोपेन क्रोधेन, नखरप्रहारैर्नखाघातै , विदार्य विदीर्ण विधाय, समुत्सृजन्ति मुञ्चन्ति । भ्रान्तिमान् ॥ १० ॥

---

१ उत्पद्य ब० ।

यश्च किल, क्वचित्खगाङ्गनासङ्घदुकूलभ्रमनिषेवितसितजीमूतपरिवृत, क्वचन हरिन्मणिमयतटनि सृतविभाविभाविततिग्मरुचिबिम्बे गगनसरसि सरोजिनीहरितपलाशशङ्का तटचरनभश्चराणामुपजनयन्, कुत्रचिन्महीरुहपरम्परासु कादम्बिनीशङ्कया कलधौततलस्फुटनटनपटुबर्हिप्रतिबिम्बकपटेन स्थलसमुत्फुल्लनीलाब्जमालासन्देह दधान, क्वचन सरसि समुद्भूतसारसराजहसकूजितैर्लताविलसितान्तमकरन्दपानमत्तेन्दिन्दिरमनोहरभङ्कारैरुपवनतलालङ्कारसहकारप्रवालचर्वणगर्वितकलकण्ठकण्ठरवैश्च हृदिशय निर्निद्राण कुर्वाण, कुत्रचन मञ्जुलवञ्जुलनिकुञ्जविहरमाणखगकञ्जनयनाजनरत्यन्तश्रमहारिसमीरकिशोरमनोरम समदृश्यत ।

> दुर्वर्णभूधरे तत्र सर्व स्वागतिकारणम् ।
> अभाणीत्[1]खेचर सोऽय स्पष्टमेव[2] वणिक्पते ॥११॥

> श्रेण्या धरस्यास्य हि दक्षिणस्या गान्धारदेशस्य ललामभूता ।
> पुरी निरालम्बतयान्तरिक्षाच्च्युता सुराणा नगरीव भाति ॥१२॥

यश्च किलेति—यश्च किल विजयार्धगिरि, क्वचित् कुत्रचित्, खगाङ्गनासङ्घेन विद्याधरवनितासमूहेन दुकूलभ्रमेण क्षौमभ्रान्त्या निषेविता धृता ये सितजीमूता धवलवलाहकास्तै परिवृत परिवेष्टित, क्वचन कुत्रचित्, हरिन्मणिमयानि मरकतमणिप्रचुराणि यानि तटानि तीराणि तेभ्यो नि सृता निर्गता या विभा दीप्तिस्तया विभावित परिगत तिग्मरुचिबिम्ब सूर्यमण्डल यस्मिस्तस्मिन्, गगनसरसि नभ कासारे, तटेषु चरन्तीति तटचरास्तीरगामिन ते च ते नभश्चराश्च विद्याधराश्च तेषाम्, सरोजिनीना कमलिनीनाम्, हरितपलाशाना हरितदलाना शङ्का सशीतिस्ताम्, उपजनयन्नुत्पादयन्, कुत्रचित् क्वचित्, महीरुहाणा वृक्षाणा परम्परा सन्ततयस्तासु, कादम्बिनीशङ्कया मेघमालाभ्रान्त्या, कलधौततले सुवर्णमयपृथिवीतले स्फुट स्पष्ट यथा स्यात्तथा नटने नृत्ये पटवो दक्षा ये बर्हिणो मयूरास्तेषा प्रतिबिम्बस्य प्रतिफलनस्य कपट व्याज तेन, स्थले भूतले समुत्फुल्ला विकसिता या नीलाब्जमाला नीलकमलपङ्क्तिस्तस्या सदेह सशयम्, दधानो बिभ्राण, क्वचन कस्मिश्चित् स्थाने, सरसि कासारे, समुद्भूतानि समुत्पन्नानि यानि सारसराजहसाना गोनर्दमरालविशेषाणा कूजितानि ध्वनयस्तै, लताना वल्लरीणा विलसिता-तेषु प्रफुल्लपुष्पेषु मकरन्दस्य मधुन पानेन मत्ता क्षीबा य इन्दिन्दिरा भ्रमरास्तेषा मनोहरभङ्कारैश्चेतोरमाव्यक्तशब्दै, उपवनतलस्योद्यानभूमेरलङ्कारा भूषणोपमा ये सहकारा आम्रास्तेषा प्रवालाना किसलयाना चर्वणेन भक्षितेन गर्विता प्राप्तदर्पा ये कलकण्ठा कोकिलास्तेषा कण्ठरवैश्च धमर्नारमशब्दैश्च, हृदिशय कामम्, निर्निद्राण जागृतम्, कुर्वाणो विदधान, कुत्रचन क्वचित्, मञ्जुला मनोहरा ये वञ्जुलनिकुञ्जा वेतसलतागृहास्तेषु विहरमाणा भ्रमन्तो ये खगकञ्जनयनाजना विद्याधरीसमूहास्तेषा रत्यन्तश्रमस्य सुरतावसानखेदस्य हार्यपनेता य समीरकिशोरो वायुबालको मन्दपवन इति यावत् तेन मनोरमश्चेतोहर सुन्दर इति भाव समदृश्यत व्यलोक्यत ।

दुर्वर्णभूधर इति—तत्र पूर्वोक्ते, दुर्वर्णभूधरे रजतगिरा, सोऽय खेचरो विद्याधर, वणिक्पतेर्वैश्यवरस्य गन्धोत्कटस्येति यावत्, सर्व निखिलम्, स्वागतिकारण निजागमननिदानम्, स्पष्टमेव स्फुटमेव, अभाणात् कथयामास ॥ ११ ॥

श्रेण्यामिति—हि निश्चयेन, अस्य धरस्य विजयार्धपर्वतस्य, दक्षिणस्यामपाच्याम्, श्रेण्या भागे, विजयार्धपर्वतस्य द्वे श्रेणी स्त —उत्तर श्रेणी दक्षिण श्रेणी च, उत्तर-श्रेण्या षष्टि नगर्यो दक्षिण श्रेण्याञ्च पञ्चाशन्नगर्य सन्तीत्यागम, गान्धारदेशस्य गान्धार जनपदस्य, ललामभूता विभूषणीभूता, पुरी नगरी, निरालम्बतया निराधारत्वेन, अन्तरिक्षाद् गगनात्, च्युता पतिता, सुराणा देवाना नगरीव पुरीव, भाति शोभते ॥ १२ ॥

१ अफाणीत् ब० । २ मेव ब० ।

यामन्वर्थाभिधेयेन नित्यालोकेति खेचरा ।
वदन्ति नीरदा यस्या गवाक्षद्वारचारिण ॥१३॥

यत्सालमाला स्फुरदंशुजाला पयोधरप्रोल्लसदम्बरश्री ।
वक्ष स्थलीव प्रमदाजनाना मनो जरीहर्ति च निर्जराणाम् ॥१४॥

यद्गोपुराग्रसुत्राममणिपुत्री विराजते ।
धृतसूक्ष्मदुकूलेव शारदाम्बुदमालया ॥१५॥

गरुडवेग इति क्षितिपालक सकलखचरसेवितवैभव ।
इह पुरीमनुशास्ति यथा दिव सुरपति कमनीययशोधन ॥१६॥

शरीरिणी कान्तिपरम्परेव सदेहबन्धा शशिन कलेव ।
अचञ्चला विद्युदिवापरेव श्रीधारिणी तस्य चकास्ति पत्नी ॥१७॥

गन्धर्वदत्ता तस्यास्ति तनया विनयोज्ज्वला ।
या मन्मथमहाहर्म्यवलभीमणिदीपिका ॥१८॥

अस्या बाल्ये कुवलयदृशो विग्रह त्यक्तुकामे
तारुण्ये चागमनरसिके मन्मथद्वारचारे ।

---

यामन्वर्थेति—या पुरीम्, खेचरा विद्याधरा, अन्वर्थाभिधेयेन सार्थकनामधेयेन, 'नित्यालोका' इति नित्य सदातन आलोक प्रकाशो यस्या सा, इति, वदन्ति कथयन्ति । नीरदा मेघा, यस्या नगर्या, गवाक्षद्वारेषु वातायनप्रवेशमार्गेषु चरन्तीत्येव शीला इति गवाक्षद्वारचारिण । सन्तीति शेष ॥ १३ ॥

यत्सालमालेति—यस्या नित्यालोकपुर्या सालमाला प्राकारपरम्परा निर्जराणा देवाना पक्षे यूनाम्, मनो हृदयम्, जरीहर्ति पुन पुनरतिशयेन हरति । कथम्भूता सालमालेत्याह-प्रमदाजनाना नारीनिचयानाम्, वक्ष स्थलीव उर स्थलीव, अथोभयो सादृश्यमाह—स्फुरदंशुमाला, स्फुरन्ति देदीप्यमानानि अंशुजालानि खचितरत्ननिचयकिरणसमूहा यस्या सा पक्षे स्फुरन्ति अंशुजालानि उपरि धारितरत्नमालाकिरणसमूहा यस्या सा पयोधरैर्मेघै प्रोल्लसत् शोभमान यदम्बर गगन तस्मिन् श्री शोभा समुत्तुङ्गत्वाद्यस्या सा, पक्षे पयोधरै स्तनै प्रोल्लसच्छोभमान यदम्बर वस्त्र तेन श्री शोभा यस्या सा । यथोत्तुङ्गस्तनयुगलविशोभिता युवतिजनाना वक्ष स्थली जरारहिताना यूना मनो हरति तथा तत्सालमाला निर्जराणा देवाना मनो हरतीति भाव । श्लिष्टोपमा ॥ १४ ॥

यद्गोपुराग्रेति—यस्या नगर्या गोपुराग्रे प्रधानद्वाराग्रभागे निर्मिता या सुत्राममणिपुत्री नीलमणिपुत्तलिका सा, शरदि भवा शारदा, ते च तेऽम्बुदाश्च तेषा माला तया जलदान्तजलदपङ्क्त्या, धृत पिहित सूक्ष्मदुकूल लघुक्षौम यया सा तथाभूतेव, राजते शोभते, उत्प्रेक्षा ॥ १५ ॥

गरुडवेग इति—सकलाश्च ते खेचराश्चेति सकलखेचरा निखिलविद्याधरास्तै सेवित समाराधित वैभवमैश्वर्यं यस्य स, कमनीय मनोहर यश एव कीर्तिरेव धन वित्त यस्य स गरुडवेग इति प्रसिद्ध, क्षितिपालको राजा, दिव स्वर्गम्, सुरपतिर्यथा पुरन्दर इव, इह पर्वते, पुरी नित्यालोकाभिधाना नगरीम्, अनुशास्ति पालयति । उपमा ॥ १६ ॥

शरीरिणीति—तस्य गरुडवेगस्य, शरीरिणी मूर्तिमती, कान्तिपरम्परेव दीप्तिसन्ततिरिव, देहबन्धेन शरीरसघातेन सहिता सदेहबन्धा, शशिनश्चन्द्रमस कलेव षोडशभाग इव, अचञ्चला स्थिरा, अपरा भिन्ना, विद्युदिव सौदामिनीव, श्रीधारिणी एतन्नामवती, पत्नी, चकास्ति शोभते ॥ १७ ॥

गन्धर्वदत्तेति—तस्य गरुडवेगस्य, विनयेन नम्रतयोज्ज्वला शोभमाना, गन्धर्वदत्ता-एतन्नामवती, तनया पुत्री, अस्ति विद्यते, या, मन्मथस्य कामस्य महाहर्म्यं महाभवन तस्य वलभी गोपानसी तस्या मणिदीपिका रत्नदीपिका, अस्ति । रूपकालकार ॥ १८ ॥

अस्या बाल्य इति—कुवलयदृशो नीलोत्पललोचनाया, अस्या गन्धर्वदत्ताया, बाल्ये शैशवे,

मौढ्ये याते चतुरिमरसेऽप्यागते तत्कृशाङ्गया
मध्य सूक्ष्म जघनवलय भूधराभ विभाति ॥१९॥
मुखेन्दुर्लोलाक्ष्या सितरुचिरुचि निन्दतितरा
भ्रुवौ चापाटोप सपदि झषकेतो कलयत ।
कुचौ मन्द म द लिकुचतुलना कन्दलयत
शनै पादन्यासो मदकरमराली विजयते ॥२०॥

सा राजपुरे साराकारा स्वयमद्वितीयापि वल्लकीविजयिनो यूनो द्वितीया भविष्यतीति दैवज्ञोपज्ञवचनविस्रम्भविजृम्भितचिन्तो महीकान्त कान्तया सह समन्त्र्य राजपुरोपवनालङ्कारस्य सागरसेननाम्नो जिनराजस्याधिपरिसर सजाता युवयो प्रीतिलता शनै पल्लवितामद्य फलिता चिकीर्षुस्त्वदागमनाय मा प्राहिणोत ।

नाम्ना वरोऽह तव नौविनाशविश्रान्तिमापद्य महीध्रमेनम् ।
आनीतवानित्यभिधाय सोऽय खगोऽधरोष्ठ घटयाञ्चकार ॥२१॥
श्रीदत्तोऽपि तदाकर्ण्य बहुधा मुमुदेतराम् ।
नष्टस्यार्थस्य सम्प्राप्ति कामदोग्ध्री मुदा न किम् ॥२२॥

---

विग्रह शरीरम्, त्यक्तुकामे मोक्तुमनसि, सति, मन्मथ कामो, द्वारे प्रवेशमार्गे चरतीति द्वारचारो यस्य तद् मन्मथद्वारचार तस्मिन्, तारुण्ये च यौवने च, आगमने रसिक तस्मिन् आगमनप्रीतियुक्ते, सति, मौढ्ये माग्ध्ये, याते गते सति, चतुरिमरसेऽपि चातुर्यस्नेहेऽपि, आगते प्राप्ते सति, सा चासौ कृशाङ्गी चेति तत्कृशाङ्गी तस्यास्तत्तन्वङ्गया मध्यमवलग्न कटिरिति यावत्, सूक्ष्म कृशम्, जघनवलय नितम्बमण्डलम्, भूधराभ पर्वततुल्यम्, विभाति शोभते । मन्दाक्रान्ताच्छन्द ॥१९॥

मुखेन्दुरिति—लोले चपले अक्षिणी नयने यस्यास्तस्या, मुखेन्दुर्वदनचन्द्र, सितरुचेश्चन्द्रस्य रुचि शोभा ताम्, अतिशयेन निन्दतीति निन्दतितराम्, भ्रुवौ भ्रुकुट्यौ, झषकेतो कामस्य चापाटोप धनुर्विस्तारम्, सपदि झटिति, कलयत प्राप्नुत, कुचौ स्तनौ, मन्द मन्द शनै शनै, लिकुचतुलना डहुसादृश्यम् 'लकुचा लिकुचा डहु' इत्यमर, पादन्यासश्चरणनिक्षेप, शनै क्रमेण, मदकरमराली दसहसीम्, विजयते पराजयते । उपमा । शिखरिणीच्छन्द ॥ २० ॥

सा राजपुर इति—साराकारा श्रेष्ठाकृति सा गन्धर्वदत्ता, स्वयम् अद्वितीयापि प्रथमापि, राजपुरे एतन्नामनगरे, वल्लकीविजयिनो वीणाविजयिन, यूनस्तरुणस्य, द्वितीया सहचरी–अद्वितीया द्वितीया कथ भवेदिति विरोध परिहारस्तूक्त । भविष्यतीति, दैवज्ञेन ज्यौतिर्विदा प्रथम ज्ञातमिति दैवज्ञोपज्ञ तच्च तद् वचनञ्च तस्य विस्रम्भेण विश्वासेन विजृम्भिता वर्धिता चिन्ता यस्य तथाभूत महीकान्तो नृप, कान्तया वल्लभया, सह सार्धम्, समन्त्र्य विमर्श कृत्वा, राजपुरोपवनस्य राजपुरोद्यानस्यालङ्कार आभरण तस्य तत्र स्थितस्येति यावत्, सागरसेननाम्न सागरसेनाभिधानस्य, जिनराजस्य मुनिराजस्य, अधिपरिसर निकटे, सजाता समुत्पन्नाम्, शनै क्रमेण, पल्लविता किसलयिताम्, युवयोर्भवतो, प्रीतिलता स्नेहवल्लरीम्, फलिता फलयुक्ताम्, चिकीर्षु कर्तुमिच्छु सन्, त्वदागमनाय भवदागमनाय, मा त्वत्पुरो वर्तमानम्, प्राहिणोत् प्रेषयामास ।

नाम्नेति—नाम्ना नामधेयेन 'प्रकृत्यादिभ्य उपसख्यानम्' इति तृतीया, वर इतिनामा अहम्, तव भवत, नावो विनाशो नौविनाशस्तस्य विश्रान्तिस्ता तरणिध्वसभ्रमम्, आपाद्योत्पाद्य, एन महीध्र विजयार्धपर्वतम्, आनीतवानस्मि प्रापितवानस्मि, त्वामिमिति शेष, इत्येवम्, अभिधाय निगद्य, सोऽय खगो विद्याधर, अधरोष्ठ दन्तच्छदयुगलम्, घटयाञ्चकार निर्मीलयति स्म तूष्णीबभूवेति भाव ॥ २१ ॥

श्रीदत्तोऽपि—श्रीदत्तोऽपि वैश्यवरोऽपि, तद् वरविद्याधरोक्तम्, आकर्ण्य श्रुत्वा, मुमुदेतराम् अतिशयेन प्रसन्नो बभूव, नष्टस्य विगतस्य, अर्थस्य पदार्थस्य, सम्प्राप्तिर्लाभ, मुदा प्रमोदानाम्, कामदोग्ध्री कामान् दोग्धीति कामदोग्ध्री मनोरथपूरिका, किम् न भवति अपि तु भवत्येव । अर्थान्तरन्यास ॥ २२ ॥

विद्याधरीकरसरोरुहराजहस-
युग्मायमानचलचामरवीज्यमानम् ।
राज्यश्रियो नयनयुग्मगलत्कटाक्ष-
धारापरीतमिव खेचरभूमिपालम् ॥२३॥
मदनद्रुममञ्जुमञ्जरीभि स्फुटलावण्यपयोधिवीचिकाभि ।
महित वरवारकामिनीभिर्बहुसौन्दर्यतरङ्गिणीझरीभि ॥२४॥
खेचरेन्द्रमकुटीतटीलस मौक्तिकप्रतिफलत्पदाम्बुजम् ।
हारयष्टिपरिमण्डितोरस निर्झराञ्चितहिमाद्रिसच्छविम् ॥२५॥
त ददर्श खगाधीशमकुटारूढशासनम् ।
मोदवार्धे पर पारमपि सायात्रिकाधिप ॥२६॥

तमेन सभाजिरविराजितमणिमयासनमलङ्कुर्वन्त मूर्तीकृतमिव सौहार्द सायात्रिक स्मित-सभाषितादिभि सतर्पयन्, निजनन्दिनीस्वयवरवृत्तान्त कर्णामृत मनसो रसायन च कारयन्, चकार तद्वशा निजतनया विदितनया ध्वजिनी च कलितादरो विद्याधरपति ।

विद्याधरेशस्य निदेशमेत्य सेना पुरोधाय [1]परीतमानम् ।
सायात्रिकोऽसौ मुदमाप पूर्वं पश्चात्तयामा निजराजधानीम् ॥२७॥

---

अथ विद्याधरधरापति कलापकेन वर्णयति–विद्याधरीति–मदनेति–खेचरेन्द्रेति–तमिति—विद्याधरीणा खेचराणा करसरोरुहेषु पाणिपद्मेषु विद्यमानौ राजहसौ मरालविशेषौ तयोर्युग्मायमानाभ्या युगलवदाचरद्भ्या चामराभ्या बालव्यजनाभ्याम् वीज्यमान प्रकीर्यमाणम्, अतएव राज्यश्रियो राज्यलक्ष्म्या, नयनयुग्माल्लोचनयुगलाद् गलन्ती पतन्ती या कटाक्षधारा केकरपङ्क्तिस्तया परीतमिव व्याप्तमिव । मदनद्रुमस्य कामानोकहस्य मञ्जुमञ्जर्यो मनोहरपुष्पस्रजस्ताभि, स्फुटलावण्यमेव प्रकटसौन्दर्यमेव पयोधि सागरस्तस्य वीचिका लहर्यस्ताभि, बहुसौन्दर्यमेव प्रचुरसौन्दर्यमेव तरङ्गिणी नदी तस्या झर्य स्रोतासि ताभि, वरवारकामिनीभि श्रेष्ठविलासिनीभि, महित शोभितम्, खेचरेन्द्राणा विद्याधरराजाना मकुटीतटीषु मौलिप्रान्तेषु लसन्ति शोभमानानि यानि मौक्तिकानि मुक्ताफलानि तेषु प्रतिफलता पदाम्बुजे चरणकमले यस्य तम्, हारयष्टिभिर्मुक्तालताभि परिमण्डित शोभितमुरो वक्षो यस्य तम्, निर्झरै स्रोतोभिरञ्चित शोभितो यो हिमाद्रि प्रालेयशैलस्तस्येव सच्छवि शोभनदीप्तिर्यस्य तम् । खगाधीशाना विद्याधरराजाना मकुटेषु मौलिष्वारूढमधिष्ठित शासनमाज्ञा यस्य तम्, त पूर्वोक्तम्, खेचरभूमिपाल विद्याधरराज गरुडवेगमिति यावत्, सायात्रिकाधिप पोतवणिक्श्रेष्ठ श्रीदत्त, ददर्श विलोकयामास, मोदवार्धेर्हर्षसागरस्य, पर द्वितीयम्, पार तटम्, अपि ददर्शेति पूर्वेणान्वय अथवा 'आप प्राप्तवान्' इति पाठ ॥२६॥

तमेनमिति—सभाजिरे सभाङ्गणे विराजित शोभित यन्मणिमय रत्नमयमासन विष्टर तद्, अलङ्कुर्वन्त शोभयन्तम्, मूर्तीकृत सदेहीकृतम्, सौहार्दमिव मैत्र्यमिव, एन त सायात्रिक पोतवणिजम्, स्मितसभाषितादिभिर्मन्दहसितसभाषणप्रभृतिभि, सतर्पयन् प्रीणयन्, निजनन्दिन्या स्वपुत्र्या स्वयवरवृत्तान्त स्वयवरोदन्तस्तम्, कर्णामृत श्रुतिसुधाम्, मनसो हृदयस्य, रसायन पुष्टिप्रदौषध च कारयन् विदधन्, कलितादर आदरसम्पन्न, विद्याधरपतिर्गरुडवेग, निजतनया स्वपुत्रीम्, विदितो नयो यया ता ज्ञातनीतिम्, ध्वजिनी च सेनाञ्च, तद्वशा तदायत्ताम्, चकार विदधे ।

विद्याधरेशस्येति—असौ सायात्रिक पोतवणिक्, विद्याधरेशस्य खेचरेन्द्रस्य परीत व्याप्त मान सन्मान यस्मिस्तम्, निदेशमाज्ञाम्, एत्य प्राप्य, सेना पृतनाम्, पुरोधायाग्रे कृत्वा, पूर्वं प्राक्, मुद हर्षम्, आप प्राप्तवान्, पश्चात्तदनु, तया मुदा, खेचरेन्द्रपुत्र्या, पृतनया च, अमा सह, निजराजधानी स्वावासनगरीम्, आप प्राप्तवान् ॥ २७ ॥

---

१ परीतमानाम् ब० ।

तदनु विविधरत्नचयविनिर्मितम्, राजपुरलक्ष्मीमुखावलोकनार्थं परिकल्पितमणिमुकुराय-माणम्, गगनविसृत्वरैर्मरकतपद्मरागालोकैर्घनघनाघनरहितेऽपि नभ स्थले सुरचापशङ्कामादधानम्, कुङ्कुमरसप्रचुरपय ससेकशीतलम्, तत्र तत्र विकीर्णकुसुमकुलसुरभिलम्, वीणाविजयिनो जनिष्यमाणकीर्तिलताबीजराजिमिव मुक्तामयरङ्गवल्लीमाबिभ्राणम्, स्वयवरमण्डप परिकल्प्य, राजानुमतिपूर्वक तदुदन्त कटकेषु घोषयामास ।

तदेतदाकर्ण्य महीक्षितस्ते स्ववाहिनीभिस्ततदिक्प्रदेशा ।
पुरीं पताकाभिरिवाह्वयन्तीं नरा इवाब्धि शतश समापु ॥२८॥

मञ्चेषु तत्र घनवज्रमयेषु भूपा
क्षीरोदवीचिनिकरेष्विव चन्द्रबिम्बा ।
रूप्याद्रितुङ्गशिखरेष्विव पञ्चवक्त्रा
भान्ति स्म पञ्चशरवञ्चनचारुरूपा[1] ॥२९॥

तत सकलनेत्रकुरङ्गाणा वागुरायमाणतनुलता, मूर्तेव मदनसाम्राज्यपदवी, राजधानीव शृङ्गारमहिपालस्य, वेला लावण्यसुधापयोनिधिवीचीनाम्, सर्वस्वमिव नवयौवनस्य, सञ्जीवन-

तदन्विति—तदनु तदनन्तरम्, विविधाना नैकप्रकाराणा रत्नाना मणीना चयेन समूहेन विनिर्मित रचितम्, राजपुरलक्ष्म्या राजपुरश्रिया मुखावलोकार्थं वदनदर्शनार्थम्, परिकल्पितो रचितो यो मणिमुकुरो रत्नादर्शस्तद्वदाचरन्तम्, गगने नभसि विसृत्वरा प्रसरणशीलास्तै, मरकतपद्मरागालोकैर्हरितलोहितमणिप्रकाशै, घनो निविडो यो घनाघनो मेघस्तेन रहित शून्य तस्मिन्नपि, नभ स्थले गगनप्रदेशे, सुरचापशङ्का शक्रशरासनसशीतिम्, आदधान कुर्वन्तम्, कुङ्कुमरसेन काश्मीरद्रवेण प्रचुर प्रभूत यत्पयो नीर तस्य ससेकेन समुक्षणेन शीतल शिशिरस्तम्, तत्र तत्र स्थलेषु, विकीर्णं प्रक्षिप्त यत्कुसुमकुल पुष्पसमूहस्तेन सुरभिल सुगन्धितस्तम्, वीणाविजयिनो वल्लकीविजयिन, जनिष्यमाणा समुत्पत्स्यमाना या कीर्तिलता यशोवल्लरी तस्या बीजराजिमिव बीजपङ्क्तिमिव, मुक्तामयी चासौ रङ्गवल्ली चेति मुक्तामयरङ्गवल्ली ताम् मौक्तिकलताम्, आबिभ्राण दधानम्, स्वयवरमण्डप स्वयरास्थानम्, परिकल्प्य रचयित्वा, राजानुमतिपूर्वक राजाज्ञापुरस्सरम्, तस्य स्वयवरस्योदन्तो वृत्तान्तस्तम्, कटकेषु शिविरेषु, घोषयामास प्रख्यापयामास ।

तदेतदाकर्ण्येति—शतश शतसख्याका, ते महीक्षितो राजान, तदेतदाख्यानम्, आकर्ण्य श्रुत्वा, स्ववाहिनीभि स्वकीयसेनाभिस्तता व्याप्ता दिक्प्रदेशा काष्ठाप्रान्ता यैस्तथाभूता सन्त, पताकाभि वैजयन्तीभि, आह्वयन्तीमिवाकारयन्तीमिव, पुरी नगरीम्, नदा द्विरेफा 'नदी नदो द्विरेफश्च' इति धनजय, अब्धिमिव सागरमिव, समापु समायातवन्त, नदपक्षे स्ववाहिनीभि स्वसहायकनदीभि, तता व्याप्ता दिक्प्रदेशा यैस्तथाभूता इति विशेषो ज्ञातव्य ॥ २८ ॥

मञ्चेष्विति—तत्र स्वयवरमण्डपे, घनवज्रमयेषु सान्द्रहीरकनिर्मितेषु, मञ्चेषु-आसनविशेषेषु, आसीना इति शेष, पञ्चशरस्य कामस्य वञ्चन प्रतारण चारु सुन्दर रूप सौन्दर्यं येषा ते तथाभूता, भूपा नृपा, क्षीरोदस्य क्षीरसागरस्य वीचीना भङ्गाना निकरा समूहास्तेषु, चन्द्रबिम्बा इव विधुप्रतिमा इव, रूप्याद्रेर्विजयार्धस्य तुङ्गानि समुन्नतानि यानि शृङ्गाणि शिखराणि तेषु, पञ्चवक्त्रा इव सिहा इव, भान्ति स्म शुशुभिरे । मालोपमा । वसन्ततिलकावृत्तम् ॥ २९ ॥

तत इति—ततस्तदनन्तरम्, गन्धर्वदत्ता गरुडवेगविद्याधरतनया, याप्ययान शिविकावाहनम्, आरुह्याधिष्ठाय, स्वय वरमण्डप स्वयवरणस्थानम्, अवततार समागतवती । अथ कथम्भूता गन्धर्वदत्तेत्याह—सकलाना निखिलजनाना नेत्राण्येव नयनान्येव कुरङ्गा हरिणास्तेषाम्, वागुरायमाणा पाशायमाना तनुलता शरीरवल्ली यस्या सा, मूर्ता सदेहा मदनसाम्राज्यपदवीव कामराज्यपदवीव, शृङ्गारमेव महीपालस्तस्याद्य-

[1] चुञ्चुरूपा० ब० ।

मिव सौभाग्यस्य, मूर्त्यन्तरमिव लक्ष्म्या, अमृतवर्तिरिव भूपतिदृशाम्, विशालनयनविलासविजितनीलोत्पला गन्धर्वदत्ता याप्ययानमारुह्य स्वयंवरमण्डपमवततार।

तत करसरोरुहप्रसृतकान्तिपारम्परी-
प्रक्लृप्तनवपल्लवभ्रमसमागतालिस्वरैः ।
परीतवरवल्लकीमृदुलतानगीतादिभि-
र्व्यजेष्ट खगसुन्दरी सकलदेशपृथ्वीपतीन् ॥३०॥

खगेशतनयाकराञ्चितविपञ्चिकामाधुरी-
रसं श्रवणभाजनैः सकलगीतविद्याविदः ।
निपीय वनितारदच्छदमिहाधरं मेनिरे
सुधामपि सुरोद्धृतां मधुपपानयोग्यं मधु ॥३१॥

तदनु प्रत्यक्षपञ्चशरः पञ्चशतमित्रजनपरिवृतो जीवन्धरः, स्वयंवरसभाजिरं समागत्य, वीणाकलाकुशलान्प्राज्ञाग्रेसरान्गुणदोषपरीक्षाया विधाय,[१] अभिधाय च नियोगिजनानीतासु त्रिचतुरासु वीणासु केशरोमलवादिकं दोषम्, अतिसंतोषपरवशया कन्यया समर्पितां निजकरालङ्कारभूतां सुघोषां नाम वीणां परिजग्राह ।

---

रसभूपालस्य राजधानीव नृपावासनगरीव, लावण्यमेव सौन्दर्यमेव सुधापयोनिधिः पीयूषपारावारस्तस्य वीचयस्तरङ्गास्तासाम्, वेला तटोच्छ्वासः, 'पाली वेला तटोच्छ्वासः' इति धनंजयः, नवयौवनस्य नूतनतारुण्यस्य, सर्वस्वमिव सारभूतधनमिव, सौभाग्यस्य वल्लभप्रियतायाः सञ्जीवनमिव प्राणप्रदमिव, लक्ष्म्याः श्रियाः मूर्त्यन्तरमिव द्वितीयप्रतिमेव, भूपतिदृशां नरेन्द्रनयनानाम्, अमृतवर्तिरिव सुधाशलाकेव, विशालनयनयोरायतलोचनयोर्विलासेन शोभातिशयेन विजिते पराभूते नीलोत्पले नीलकमले यया सा ।

तत करसरोरुहेति—ततस्तदनन्तरम्, खगसुन्दरी गन्धर्वदत्ता, करसरोरुहाभ्यां पाणिपद्माभ्यां प्रसृता निःसृत्य बहिर्व्याप्ता या कान्तिपारम्परी दीप्तिश्रेणिस्तया प्रक्लृप्तेन रचितेन नवपल्लवभ्रमेण प्रत्यग्रकिसलयसंदेहेन समागताः सम्प्राप्ता येऽलयो भ्रमरास्तेषां स्वरैर्गुञ्जनशब्दैः, परीता व्याप्ता या वरवल्लकी श्रेष्ठवीणास्तस्या मृदुलेन कोमलेन तानेन स्वरावरोहारोहक्रमेणोपलक्षिता ये गीतादयः संगीतप्रभृतयस्तैः, सकलदेशपृथ्वीपतीन् निखिलजनपदजगतीपतीन्, व्यजेष्ट विजितवती । 'विपराभ्यां जेः' इत्यात्मनेपदम् । पृथ्वीवृत्तम् ॥ ३० ॥

खगेशतनयेति—गीतविद्यां विदन्तीति गीतविद्याविदः सकलाश्च ते गीतविद्याविदश्चेति सकलगीतविद्याविदः समस्तसंगीतज्ञजनाः, खगेशतनयाकरे गन्धर्वदत्ताहस्तेऽञ्चिता शोभिता या विपञ्चिका वीणा तस्या माधुरीरसं माधुर्यनिःस्यन्दम्, श्रवणभाजनैः कर्णपात्रैः, निपीय नितरां पीत्वा, इहलोके, वनितारदच्छदं ललनौष्ठम्, अधरमधमम् पक्षेऽधरसंज्ञितम्, सुधामपि पीयूषमपि, सुराया मदिराया उद्धृतां निष्कासितां पक्षे सुरैर्देवैरुद्धृतां ताम्, मधु पुष्पासवम् मधुपानां मधुपायिनां नीचानामिति यावत् पानयोग्यं पानार्हम्, पक्षे मधुपानां भ्रमराणां पानयोग्यम्, मेनिरे मन्यन्ते स्म । रूपकश्लेषव्यतिरेकाः । पृथ्वीच्छन्दः ॥३१॥

तदन्विति—तदनु तदनन्तरम्, प्रत्यक्षश्चासौ पञ्चशरश्चेति प्रत्यक्षपञ्चशरो दृग्गोचरकामः, पञ्चशतं ये मित्रजनाः सुहृत्समूहास्तैः परिवृतः परिवेष्टितः, जीवन्धरः सात्यन्धरिः, स्वयंवरसभाजिरं स्वयंवरपरिषदङ्गणम्, समागत्य सम्प्राप्य, वीणाकलायां विपञ्चीकलायां कुशला निपुणास्तान्, प्राज्ञाग्रेसरान् विद्वच्छ्रेष्ठान्, गुणदोषपरीक्षायां गुणावगुणनिरीक्षायाम्, विधाय कृत्वा, नियोगिजनैः सेवकजनैरानीताः प्रापितास्तासु, तिस्रश्चतस्रो वेति त्रिचतुरास्तासु, वीणासु परिवादिनीषु, केशरोमलवादिकं केशरोमलवप्रभृतिकम्, एषां लक्षणानि संगीतशास्त्रे द्रष्टव्यानि, अभिधाय च निगद्य च, अतिसंतोषस्य परवशा तथा हर्षातिशयाधीनया,

---

१ विधाय च ब० ।

आदाय तामयमथो करकौशलानि
तन्त्र्या खगेशतनया निजचित्तमस्मिन् ।
सगीतधीरपरिषच्च शिर प्रकम्प
तेने कृतघ्नमुखराजगणोऽपि लज्जाम् ॥३२॥

कुमारवरवल्लकीगुणरवेण सर्वे मृगा
विहाय मृदु शाद्वल विदधिरे क्षणात्स्तब्धताम् ।
स्वरश्च जिनशारदाश्रवसि शीर्षकम्पापतद्-
वदान्यतरुपल्लवे पदमहो विधत्ते स्म स ॥ ३३ ॥

तावत्सा गन्धर्वदत्ता पराजयमेव जय मन्यमाना व्रीलातरलनयनप्रसृतकटाक्षदुग्धधारा दिशि दिशि किरन्ती वेत्रवतीकरकलिता मालिकामादाय जीवकस्य वक्षस्यामुमोच ।

सौभाग्याम्बुधिवीचिकेव[1] विलसद्वक्ष स्थलीसैकते
शस ती सुकृतेन्दुनन्ददुदय जीवन्धरस्वामिन ।
मालासावचकादुर स्थलवसल्लक्ष्मीकटाक्षावली
प्रक्षिप्ता विजयाय भाविसमरे मालेव वीरश्रिया ॥ ३४ ॥

---

कन्यया गन्धर्वदत्तया, समर्पितां प्रदत्ताम्, निजकरालङ्कारभूता स्वहस्ताभरणभूताम्, सुघोषामेतन्नामवतीम्, वीणा घोषवतीम्, परिजग्राह गृहीतवान् ।

आदायेति—अथो तदनन्तरम्, अय जीवन्धर, ता वीणाम्, आदाय गृहीत्वा, तन्त्र्या वीणायाम्, करकौशलानि हस्तचातुर्याणि, खगेशतनया गन्धर्वदत्ता, अस्मिन् जीवन्धरे, निजचित्त स्वकीयमन, सगीतधीराणा सगीतविदुषा परिषत्सभा च, शिर प्रकम्प मूर्धान्दोलनम्, कृतघ्न काष्ठाङ्गारो मुख प्रधानो यस्येति कृतघ्नमुख स चासौ राजगणश्च नृपसमूहश्चेति तथा, सोऽपि, लज्जा त्रपाम्, तेने विस्तारयामास ॥३२॥

कुमारवरवल्लकीति—कुमारस्य जीवन्धरस्य या वरवल्लकी श्रेष्ठवीणा तस्या गुणस्तन्त्र तस्य रव शब्दस्तेन, सर्वे निखिला, मृगा कुरङ्गा, मृदु कोमलम्, शाद्वल शष्पम्, हरिद्घासमिति यावत्, विहाय त्यक्त्वा, क्षणादल्पेनैव कालेन, स्तब्धता निश्चलताम्, विदधिरे चक्रिरे, वीणाराव श्रुत्वा हरिणा भोजनाद्विरस्य निश्चला बभूवुरिति भाव । स प्रसिद्ध, स्वरश्च वीणाशब्दश्च, शीर्षकम्पेन मूर्धान्दोलनेनापतन्त स्खलन्तो वदान्यतरुपल्लवा कल्पवृक्षकिसलया यस्मात्तस्मिन्, जिनशारदाश्रवसि जिनसरस्वतीकर्णे, पद स्थानम्, विधत्ते स्म कुरुते स्म । इत्यहो आश्चर्यम् । सरस्वत्यपि तद्वीणाशब्द शुश्रावेति विस्मयस्थानम् । पृथ्वीवृत्तम् ॥ ३३ ॥

तावदिति—तावत् तावता कालेन, सा गन्धर्वदत्ता विद्याधरतनूजा, पराजयमेव पराभवमेव, जय विजयम्, मन्यमाना बुध्यमाना, व्रीलया लज्जया तरले चञ्चले ये नयने ताभ्या प्रसृता नि सृत्य बहिर्विस्तृता ये कटाक्षा केकरास्त एव दुग्धधारा क्षीरप्रवाहस्ताम्, दिशि दिशि प्रतिकाष्ठम्, किरन्ती विक्षिपन्ती, वेत्रवतीकरकलिता प्रतीहारीहस्तस्थिताम्, मालिका स्रजम्, आदाय गृहीत्वा, जीवकस्य विजयासुतस्य, वक्षसि भुजान्तरे, आमुमोचामुक्तवती ।

सौभाग्याम्बुधिवीचिकेवेति—असा माला सा स्रक्, जीवन्धरस्वामिन सत्यन्धरनृपसुतस्य, वक्ष स्थलयेव सैकतमिति वक्ष स्थलीसैकत विलसच्छोभमान यद् वक्ष स्थलीसैकतमुर स्थलसिकतामय तस्मिन्, सुकृतमेव पुण्यमेवेन्दुश्चन्द्रस्तस्य नन्दन् विलसन्य उदय उद्गमस्तम्, शसन्ती सूचयन्ती, सौभाग्यमेव वल्लभाप्रियत्वमेवाम्बुधि सागरस्तस्य वीचिकेव लहरीव, उर स्थले वक्ष प्रदेशे वसन्ती निवसन्ती या लक्ष्मी राज्यश्रीस्तस्या कटाक्षाणा केकराणा यावली पङ्क्तिस्तद्वत्, भाविसमरे भविष्यद्युद्धे, विजयाय, विजयलाभाय, वीरश्रिया वीरलक्ष्म्या, क्षिप्ता न्यस्ता, मालेव स्रगिव, अचकात्—अशोभत । 'चकासृ दीप्तौ' इत्यस्य लङि रूपम् । उत्प्रेक्षा । शार्दूलविक्रीडितवृत्तम् ॥ ३४ ॥

---

[1] सा भाग्याम्बुधि ब० ।

वीणा गन्धर्वदत्ताया मधुरा चित्तहारिणी।
कुलोचिता बभूवेय कुमारप्राप्तिदूतिका ॥ ३५ ॥

अथ जलदजलध्योर्नादशङ्कां वितन्वन्
मुखरितसकलाशाचक्रवालान्तरालः ।
निखिलपुरवधूटीचित्तहारी विशेषा-
त्समभवदिह मन्द्रस्तूर्यमूर्च्छद्विरावः ॥ ३६ ॥

तदा दिनदीपायितेन काष्ठाङ्गारेण कुप्यक्रयविक्रययोग्यो वैश्यसुतः कथं स्त्रीरत्नयोग्य इति सन्धुक्षिता क्षितिपतयो गतमतयः सर्वाभिसारेण चमूं पुरोधाय विमूढमनसः संयुगमारभन्त।

इह खलु कुमारोऽयं विद्याधरैः स्वबलावृतै-
र्जयगिरिरिति ख्याते मत्तद्विपे विनिविष्टवान्।
प्रतिभटघटाटोपं भिन्दन्नुदारपराक्रमो
दिशि दिशि सपत्नांस्तांस्तांल्लीनांश्चकार निकारतः ॥ ३७ ॥

रत्नस्तम्भविजृम्भितामलरुचा व्याप्ताखिलाशान्तरा-
मेकत्रोदितकोटिसूर्यपटलीसंदीप्तिशङ्कावहाम् ।
शालां तत्र च पद्मरागखचितां वेदीं व्यधात्तत्क्षणं
सर्वेषां हृदयस्थरागलहरीं मूर्तामिवासौ वणिक् ॥३८॥

---

वीणा गन्धर्वदत्ताया इति—मधुरा प्रियस्वरा, चित्तहारिणी मनोहारिणी, कुलोचिता कुलयोग्या, गन्धर्वदत्ताया खेचरसुतायाः, इयं जीवन्धरकरगता, वीणा परिवादिनी, कुमारस्य जीवन्धरस्य प्राप्तौ लाभे दूतिका सन्देशवाहिनीव, बभूव-अजायत ॥ ३५ ॥

अथ जलदजलध्योरिति—अथानन्तरम्, इह स्वयंवरमण्डपे, जलदश्च जलधिश्चेति जलदजलधी तयोर्मेघसागरयोः, नादस्य गर्जितस्य शङ्का सन्देहस्ताम्, वितन्वन् प्रसारयन्, मुखरितं वाचालितं, सकलाशाचक्रवालस्य निखिलदिक्समूहस्यान्तरालं मध्यावकाशो येन सः, निखिलानां समस्तानां पुरवधूटीनां नगरयुवतीनां चित्तं मनो हरतीत्येवं शीलः, मन्द्रो गभीरः, तूर्याणां वादित्रविशेषाणां मूर्च्छन्वर्धमानो विरावो विशिष्टशब्दः विशेषादाधिक्येन, समभवत्-अजायत। मालिनीवृत्तम् 'ननमयययुतेयं मालिनी भोगिलोकैः' इति लक्षणात् ॥ ३६ ॥

तदेति—तदा तस्मिन् काले, दिने दिवसे दीप इवाचरतीति दिनदीपायितस्तेन, निष्प्रभेणेति यावत्, काष्ठाङ्गारेण कृतघ्नेन, कुप्यानां भाण्डानां क्रयविक्रययोर्योग्योऽर्हः, वैश्यसुतः ऊरुजपुत्रः, कथं केन प्रकारेण, स्त्रीरत्नयोग्यः श्रेष्ठललनाप्राप्त्यर्हः, भवेदिति शेषः, इत्येवम्, सन्धुक्षिताः समुत्तेजिताः, गतमतयो मूर्खाः, विमूढं हिताहितविचाररहितं मनो हृदयं येषां ते, क्षितिपतयो राजानः, सर्वाभिसारेण सर्वारम्भेण, चमूं सेनाम्, पुरोधायाग्रे कृत्वा, संयुगं समरम्, आरभन्त-आरेभिरे।

इह खल्विति—इह लोके, खलु निश्चयेन, स्वबलावृतैः स्वकीयपृतनापरीतैः, विद्याधरैः खेचरैः, उपलक्षितः, जयगिरिरिति 'जयगिरि' इति नाम्ना, ख्याते प्रसिद्धे, मत्तद्विपे गन्धगजे, विनिविष्टवानध्यारूढः, प्रतिभटानां शत्रूणां घटाया गजगणस्याटोपं विस्तारम्, भिन्दन् खण्डयन्, उदारो महान् पराक्रमो विक्रमो यस्य सः, अयं कुमारो जीवन्धरः, तान् सम्मुखमायातान्, सपत्नान् शत्रून् 'रिपौ वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः' इत्यमरः, दिशि दिशि प्रतिकाष्ठम्, निकारतो दुःखात् लीनानन्तर्हितान्, चकार विदधे। सर्वे रिपवः पराजिता इति भावः। हरिणीच्छन्दः ॥ ३७ ॥

रत्नस्तम्भेति—असौ वणिक् गन्धोत्कटवैश्यः, तत्र राजपुरनगरे, रत्नस्तम्भानां मणिमयस्तम्भानां विजृम्भिता वृद्धिंगता यामलरुक् स्वच्छदीप्तिस्तया, व्याप्तमाच्छादितमखिलाशानां निखिलकाष्ठानामन्तरमवकाशो यस्या ताम्, एकत्रैकस्मिन् स्थान उदितोद्गता या कोटिसूर्याणां कोटिप्रमितदिवाकराणां पटली समूह-

तदनन्तर विद्याधराधिपतिर्गरुडवेगनामा समागत्य वधूवरस्य सुरदम्पतीसन्निभस्य स्फटिकमणिपट्टके विनिवेशितस्य करनखरकान्तिद्विगुणितधावल्याभिर्भुजवशाविगलन्मुक्ताभरी-सम्भावनासम्पादिकाभिर्बाहुभुजगफणामाणिक्यायितमणिमयकुम्भविगलत्पयोधराभिरभिषेक-मङ्गल निर्वर्तयामास ।

क्षीराब्धिडिण्डीरचयायमान श्लक्ष्ण दुकूल वसन वसानौ ।
तौ प्राङ्मुख भूषणगेहमध्ये निवेशितौ वज्रविकीर्णपट्टे ॥ ३९ ॥
अनयो कान्तवपुषि भूषणाना च भूषणे ।
आकल्पकल्पना नून मङ्गलैकफला भवेत् ॥ ४० ॥
यद्वा भूषणवृन्दस्य शोभासपादकाङ्क्षके ।
तयोर्नैपथ्यक्लृप्तिस्तु दृष्टिदोषस्य हानये ॥ ४१ ॥

सीमन्त परिकल्प्य खञ्जनदृशो वक्त्रप्रभानिम्नगा-
मार्गाभ सुममालिका च विदधे तत्फेनपुञ्जायिताम् ।
आस्ये नीलललाटिका सहचरीवक्त्रेन्दुलक्ष्म्यायिता-
मक्ष्णोरञ्जनमाननाक्रमकृतो सीमन्तरेखामिव ॥४२॥

---

स्तस्या सन्दीप्ति सन्तेजस्तस्या शङ्कावहा सन्देहोत्पादिकाम्, शाला विवाहमण्डपम्, सर्वेषा निखिला-नाम्, मूर्ता शरीरधारिणीम्, हृदयस्थरागलहरीमिव चित्तस्थितप्रीतिपरम्परामिव, पद्मरागखचिता लोहितक-मणिनिस्यूताम्, वेदीञ्च वितर्दिकाञ्च, तत्क्षण तत्कालम्, व्यधात-चकार । शार्दूलविक्रीडितच्छन्द ॥३८॥

तदन तरमिति—तदनन्तर तत्पश्चात , गरुडवेगनामा गरुडवेगाभिधान , विद्याधराणा खेचराणामधि-पति स्वामीति विद्याधराधिपति , समाग य विजयार्धादागत्य, जाया च पतिश्चेति दम्पती 'जायाया जम्भावो दम्भावश्च वा निपात्यते' इति निपातनाज्जायाशब्दस्य स्थाने दम्भाव , सुराणा देवाना दम्पती मिथुन तया सन्निभस्तस्य, स्फटिकमणिपट्टके सितोपलफलके, विनिवेशितस्याधिष्ठापितस्य, वधूवरस्य जायापत्यो , करनखराणा हस्तनखाना कान्त्या दीप्त्या द्विगुणित द्विगुणीभूत धावल्य शवैत्य यासा ताभि , भुजवशेभ्यो बाहुवेणुभ्यो विगलन्ती नि सृत्य पतन्ती या मुक्ताभरा, मौक्तिकसन्ततिस्तस्या सम्भावना समुत्प्रेक्षा तस्या सम्पादिका कारिकास्ताभि , बाहुभुजङ्गाना फणा भोगास्तासा माणिक्यायिता रत्नवदाचरन्ती ये मणिमय कुम्भा रत्ननिर्मितकलशास्तेभ्यो विगलन्त्य पतन्त्यो या पयोधारा जलधारास्ताभि , अभिषेकमङ्गल स्नान मङ्गलम्, निवर्तयामास रचयामास ।

क्षीराब्धीति—क्षीराब्धेर्दुग्धसागरस्य डिण्डीरचय इव फेनसमूह इवाचरतीति क्षीराब्धिडिण्डीरचयाय मानम्, श्लक्ष्ण सूक्ष्मम्, दुकूल वसन, क्षौम वस्त्रम्, वसाते इति वसानौ दधानौ तौ जायापती, भूषण-गेहमध्ये प्रातिहार्यगृहाभ्यन्तरे, वज्रविकीर्णपट्टे हीरकखचितफलके, प्राङ्मुख पूर्ववक्त्र यथा स्यात्तथा, निवेशितौ स्थापितौ ॥ ३९ ॥

अनयोरिति—अनयोर्गन्धर्वदत्ताजीवन्धरयो , भूषणानाञ्चाभरणानामपि, भूषणे शोभाधायके, कान्तवपुषि कमनीयकलेवरे, आकल्पाना भूषणाना कल्पना निक्षेप , नून निश्चयेन, मङ्गलमेवैकमद्वितीय फल प्रयोजन यस्यास्तथाभूता, भवेत् स्यात् । सुन्दरे वपुषि किमाभरणैरिति भाव ॥ ४० ॥

यद्वेति—यद्वा पक्षान्तरे, अथवेति यावत् , तयोर्जायापत्यो , भूषणवृन्दस्याभरणसमूहस्य, शोभा सम्पादकञ्च तदङ्गकञ्चेति शोभासम्पादकाङ्गक तस्मिन्, सौन्दर्याधायकशरीरे, नैपथ्यक्लृप्तिराभरणरचना, दृष्टिदोषस्य दृग्दोषस्य, हानये निरासाय, भवेदिति पूर्वोक्तक्रियया सम्बन्ध । तु पादपूरणे ॥ ४१ ॥

सीमन्तमिति—सहचरी प्रसाधनसखी, खञ्जनदृश खञ्जरीटलोचनाया , गन्धर्वदत्ताया इति यावत्, वक्त्रप्रभा मुखदीप्तिरेव निम्नगा नदी तस्या मार्गस्य वर्त्मन इवाभा दीप्तिर्यस्य तम् । सीमन्त केशवेशम्, 'शकन्ध्वादिषु पररूप वाच्यम्' इति पररूपम्, परिकल्प्य विरच्य, तस्या वक्त्रप्रभानिम्नगाया फेनपुञ्ज इव

सैरन्ध्रीजनकरकल्पिता तस्या कपोलतलमकरी, मकरकेतो पताकेयमिति समागता साक्षान्मन्मथवैजयन्तीमकरीव, गण्डमण्डललावण्यसरोवरे निपतता युवनेत्रपतता बन्धनाय वेधसा विरचित पाश इव, व्यराजत।

तस्या कपोलललितौ मृगनाभिक्लृप्त-
पत्रच्छलेन कचवृन्दतम किशोरौ।
द्राग्बाधितु रवियुग किल कर्णशोभि
ताटङ्कयुग्ममधिक रुरुचे मृगाक्ष्या ॥४३॥

जगत्त्रयजयायास्या वल्गत पुष्पधन्वन।
सबाणतूणवद्रेजे पुष्पचारु कचव्रजम् ॥ ४४ ॥

तस्या शरीरातनुचापयष्टेर्मौर्वीव रेजे फणितुल्यवेणी।
सखीप्रक्लृप्ता मुखपद्मगन्धलोभागता भृङ्गपरम्परेव ॥४५॥

एवमलङ्कृताभ्या ताभ्या यथास्थान जनेन विनिवेशिताभ्या परिष्कृता मणिदीपमङ्गल-द्रव्य[1]शोभिता मणिवेदिका सुरदम्पतीसङ्गता रत्नसानुतटीव व्यरोचत।

---

डिण्डीरपिण्ड इवाचरतीति तथा, सुममालिका च पुष्पस्रजश्च, आस्ये मुखे, वक्त्रमेवेन्दुर्वक्त्रेन्दुर्मुखचन्द्रस्तस्य लक्ष्मेव चिह्नमिवाचरतीति तथा नालललाटिका नीलमणिललाटाभरणम्, आक्रमणमाक्रम, आनन आक्रम आननाक्रमस्त कुरुत इत्याननाक्रमकर्तारौ तयो मुखाक्रमणकारिणो स्वविशालतयेति यावत्, अक्ष्णोर्नयनयो, सीम्नोऽवधेरन्त सीमान्तरतस्य रेखा लेखा तामिव, इतोऽग्रे भवतो प्रसरण निषिद्धमिति सीमनिश्चयार्थमिव, अञ्जन कज्जलम्, विदधे चकार। उपमोत्प्रेक्षे ॥ ४२ ॥

सैरन्ध्रीति—सैरन्ध्रीजनस्य प्रसाधिकाजनस्य करेण हस्तेन कल्पिता रचिता, तस्या गन्धर्वदत्ताया, कपोलतले गण्डतले मकरी कस्तूर्यादिना रचिता मकराकृतिविशेष इव कन्या, मकरकेतो कामस्य, पताका केतु, इति हेतुना, समागता समायाता, साक्षात्प्रत्यक्षम्, मन्मथस्य मदनस्य वैजयन्तीमकरीव ध्वजगत-मकरस्त्रीव, गण्डमण्डलस्य कपोलचक्रवालस्य लावण्यमेव सरोवर कासारस्तस्मिन्, निपतता स्खलताम्, युवनेत्राण्येव पतन्तस्तेषा तरुणलोचनपक्षिणाम्, बन्धनाय बन्धनार्थम्, वेधसा ब्रह्मणा, विरचित कृत, पाश इवानाय इव, व्यराजत व्यशोभत। उत्प्रेक्षा।

तस्या इति—मृगस्येवाक्षिणी यस्यास्तस्या कुरङ्गलोचनाया गन्धर्वदत्ताया, कर्णयो शोभत इत्येव शील कर्णशोभि श्रवणयो शोभमानम्, ताटङ्कयुग्म कर्णाभरणयुगलम्, मृगनाभिना कस्तूर्या क्लृप्त रचित यत्पत्र पत्राकृतिरचनाविशेषस्तस्य च्छलेन व्याजेन, तस्या गन्धर्वदत्ताया कपोलयोर्गण्डयो, फलितौ प्रति-बिम्बितौ, कचवृन्दतम किशोरौ केशसमूहान्धकारबालकौ, द्राग् झटिति, बाधितु नाशयितुम्, रवियुग किल सूर्ययुग्ममिव, अधिक सातिशयम्, रुरुचे शुशुभे। उत्प्रेक्षा ॥ ४३ ॥

जगत्त्रयेति—अस्या खेचरसुताया, पुष्पैश्चारु पुष्पचारु कुसुमकमनीयम्, कचव्रज केशसमूह, जगत्त्रयजयाय भुवनत्रयविजयार्थम्, वल्गतश्चलत, पुष्पधन्वन कामस्य, सबाणतूणवत् ससायकतूणीरमिव, रेजे शुशुभे ॥ ४४ ॥

तस्या इति—तस्या गन्धर्वदत्ताया, सख्या सहचर्या प्रक्लृप्ता रचितेति सखीप्रक्लृप्ता सहचरी-रचिता, फणितुल्या नागसदृशी चासौ वेणी च कबरी चेति फणितुल्यवेणी, अतनो कामस्य चापयष्टिर्धनु-र्यष्टिरित्यतनुचापयष्टि, शरीरमेव वर्ष्मैवातनुचापयष्टिरिति शरीरातनुचापयष्टिस्तस्या, मौर्वीव ज्येव, मुखमेव पद्म मुखपद्म वक्त्रवारिज तस्य गन्धस्य सुरभेर्लोभेन तृष्णयागता प्राप्तेति तथा, भृङ्गपरम्परेव भ्रमर-श्रेणिरिव, रेजे शुशुभे। उत्प्रेक्षा ॥४५॥

एवमिति—एवमनेन प्रकारेण, जनेन प्रसाधिकावर्गेण, अलङ्कृताभ्या शोभिताभ्याम्, यथास्थान

---

१ द्रव्यादि ब०।

वधूवरमिद तुल्यवयोरूपपरिष्कृतम् ।
सिद्धस्नानाम्भसा पूतमलचक्रे महासनम् ॥४६॥

तावत्कोणताडितनिस्साणप्रमुखवादित्ररववाचालितदिक्तटे मारसतीपदनूपुररवानुकारिमधुर-गानचतुरवाराङ्गनानर्तनविलसिते वन्दिजनसन्दोहमुखारविन्दमकरन्दायितविरुदपदस दानिते शुभ-युगुणगुम्फिते मुहूर्ते विद्याधरेश्वर करेण शयकान्तिपल्लवैरिवाशोकपल्लवतल्लजे परिष्कृतमुखभाग कनककरक बभार ।

राज्ञा कराम्भोजविकासनाय सम्प्राप्तसूराभसुवर्णकुम्भत ।
न्यपाति धारा कुरुवीरहस्ते दीर्घं भवन्ताविह जीवतामिति ॥४७॥
जग्राह पाणौ कुरुवशदीपो जीवन्धर खेचरनन्दिनी ताम् ।
निमीलिताक्षश्च बभूव सौख्य स्पर्शाहित द्रष्टुमिवान्तरङ्गे ॥४८॥
गन्धर्वदत्ता तत्पाणिस्पर्शेन समजायत ।
वधूरिन्दुकरस्पर्शाच्चन्द्रका तशिला यथा ॥४९॥

योग्यस्थानेषु, विनिवेशिताभ्यामधिष्ठापिताभ्याम्, ताभ्या गन्धर्वदत्ताजानन्दराभ्याम्, परिष्कृता सहिता शोभितेति यावत्, मणिदीपाश्च रत्नदीपाश्च मङ्गलद्रव्याणि च शुभपदार्थाश्चेति मणिदीपमङ्गलद्रव्याणि तै शोभिता समलङ्कृता, मणिवेदिका रत्नवितर्दिका, सुरम्पताभ्या देवदेवीभ्या सगता सहिता, रत्नसानो सुमेरोस्तटाव पार्श्वस्थलीव, व्यरोचत व्यशोभत । उपमा ।

वधूवरमिदमिति—वयश्च रूपञ्चेति वयोरूपे, तुल्ये च ते वयोरूपे चेति तुल्यवयोरूपे सदृशावस्था सौन्दर्ये ताभ्या परिष्कृत सहितम्, इद पूर्वोक्तम्, वधूश्च वरश्चानयो समाहार इति वधूवर जायापती, सिद्धस्नानस्य जिनाभिषेकस्याम्भो जल तेन, पूत पवित्रम्, महासन महाविष्टरम्, अलचक्रे शोभयामास, तस्योपर्युपविवेशेति भाव ॥४६॥

तावदिति—तावत् तावता कालेन, कोणेन वादनदण्डन ताडितान्याहतानि निस्साणप्रमुखानि निस्साणप्रधानानि यानि वादित्राणि वाद्यानि तेषा रवेण शब्देन वाचालितानि मुखरितानि दिक्तटानि काष्ठान्तराणि यस्मिस्तस्मिन्, मारस या रते पदनूपुराणा चरणमञ्जीरकाणा रवानुकारि शब्दानुकरणशील यन्मधुरगान मनोहरसगीत तस्मिन् चतुरा दक्षा या वाराङ्गना वेश्यास्तासा नर्तनेन नृत्येन विलसित शोभितस्तस्मिन्, वन्दीजनसदोहस्य मागधजनसमूहस्य मुखारविन्दमकरन्दायितानि वदनवारिजकौसुमायितानि यानि विरुदपदानि स्तुतिपदानि तै सन्दानितो व्याप्तस्तस्मिन्, शुभ श्रेयोऽस्त्येषामिति शुभयत्र स्ते च ते गुणाश्चेति शुभयुगुणास्तैर्गुम्फित सहितस्तस्मिन्, मुहूर्ते समये विद्याधरेश्वरो गरुडवेग, करेण हस्तेन, शयस्य हस्तस्य कान्तिपल्लवा दीप्तिकिसलयास्तैरिव, अशोकस्य वञ्जुलस्य पल्लवतल्लजा श्रेष्ठकिसलयास्ते, परिष्कृतश्शोभितो मुखभागोऽग्रप्रदेशो यस्य तम्, कनककरक सुवर्णभृङ्गारकम्, बभार दधार ।

राज्ञेति—राज्ञा गरुडवेगनृपेण, कराम्भोजयो पाणिपद्मयाविकासन विहर्पण तस्मै, सम्प्राप्त समायातो य सूर सूर्यस्तस्याभवाभा यस्येति सम्प्राप्तसूराभ स चासो सुवर्णकुम्भश्च काञ्चनकलशश्च तस्मात्, इह लोके, भवन्तौ जायापती, दीर्घं चिरकालपर्यन्तम्, जीवता जावितौ भवताम् इति हेता, कुरुवीरस्य जीवन्धरस्य हस्त पाणिस्तस्मिन्, धारा जलस्रोत, न्यपाति निपातिता ॥४७॥

जग्राहेति—कुरुवशस्य दीप इति कुरुवशदीप स्ववशप्रकाशक, जीवन्धरो विजयानन्दन, ता वीणया विजिताम्, खेचरनन्दिनी विद्याधरपुत्रीम् । पाणौ हस्ते, जग्राह स्वीचकार, स्पर्शेणामर्शेणाहित समुत्पादितमिति स्पर्शाहितम्, सौख्य सुखम्, अन्तरङ्गे चेतसि, द्रष्टुमिवावलोकयितुमिव, निमीलिते अक्षिणी यस्य तथाभूत कुड्मलितलोचनश्च, बभूव-आसीत् । उत्प्रेक्षा ॥४८॥

गन्धर्वदत्तेति—गन्धर्वदत्ता तन्नामवती, वधूर्जाया, तस्य जीवन्धरस्य पाणिर्हस्तस्तस्य स्पर्श-

तदा वधूटीमवलोक्य सोऽय नन द म देतरविस्मयेन ।
निजप्रभापूरतरङ्गमध्ये वक्षोजतुम्बीफलत प्लव तीम् ॥५०॥
सरोजयुग्म बहुधा तप स्थित बभूव तस्याश्चरणद्वय ध्रुवम् ।
न चेत्कथ तत्र च हसकाविमो समेत्य हृद्य तनुता कलस्वनम् ॥५१॥
विभान्ति तस्या नखरा पदांशुरक्ताननाः किंच विरिञ्चिक्लृप्ता ।
अ याङ्गनावक्त्रविलोकनाय विनिर्मला सन्मणिदर्पणा वा ॥५२॥
आपाटलैर्नखैरस्या जिग्ये कुरवकच्छवि ।
अशोकपल्लवो नूनमङ्घ्रिपङ्कजरोचिषा ॥५३॥
जङ्घायुग खेचरक यकाया अवैमि पञ्चायुधतूणयुग्मम् ।
यद्वा निशानाय च वज्रशाणोपल शराणा कुसुमायुधस्य ॥५४॥
मनोजगेहस्य तदङ्गकस्य वक्षोजवप्रेण विराजितस्य ।
ऊरुद्वय स्तम्भनिभ विरेजे प्रतप्तचामीकरचारुरूपम् ॥५५॥

---

स्तेन, इन्दुकरस्पर्शात् चन्द्रकिरणसपर्कात्, चन्द्रकान्तशिला यथा शशिकान्तमणिशिलेव, समजायत बभूव । नायककरस्पर्शेन प्रस्वेदवती बभूवेति भाव ॥४९॥

तदेति—तदा पाणिग्रहणवेलायाम्, निजप्रभापूरस्य स्वकान्तिप्रवाहस्य तरङ्गा भङ्गास्तेषा मध्ये, वक्षोजा स्तनावेव तुम्बीफले अलाबूफले ताभ्याम्, प्लवन्ती तरन्तीम्, वधूटी युवतिम्, अवलोक्य दृष्ट्वा, सोऽय जीवन्धर, मन्देतरविस्मयेन विपुलाश्चर्येण, ननन्द समृद्धियुक्तो बभूव । 'टुनदि समृद्धौ' इत्यस्य लिटि रूपम् ॥ ५० ॥

सरोजयुग्ममिति—बहुधा बहुप्रकारेण, आतपे घर्मे स्थित विद्यमानम्, पक्षे तप सु तपश्चरणेषु स्थित विद्यमानम्, सरोजयुग्म कमलयुगलम्, ध्रुव निश्चयेन, तस्या गन्धर्वदत्ताया, चरणद्वय पादद्वन्द्वम्, बभूवाजायत, तप स्थितस्य किं दुर्लभमिति भाव । न चेत्? एव न स्यात्तर्हि, इमौ हसका नूपुरौ पक्षे मञ्जीरे, तत्र चरणयुग्मे, समेत्य सगत्य, हृद्य मनोहरम्, कलस्वनमव्यक्तमधुरशब्दम्, कथ केन कारणेन, तनुता विस्तारयताम् । तपस्थितमित्यत्र 'खर्परे शरि वा विसर्गलोपो वक्तव्य' इति वार्तिकेन वैकल्पिको विसर्गलोप । श्लेषानुप्राणितोत्प्रेक्षा ॥ ५१ ॥

विभान्तीति—किञ्च, अन्यच्च, पदयोश्चरणयोरंशुभि किरणै रक्त लोहितमाननमग्रभागो येषा ते, तस्या वध्वा, नखरा नखा अन्याश्च ता अङ्गनाश्चेत्यन्याङ्गना इतरवनितास्तासा वक्त्रस्य मुखस्य विलोकन दर्शन तस्मै, विरिञ्चिना ब्रह्मणा क्लृप्ता रचिता विनिर्मला स्वच्छतरा, सन्मणिदर्पणा वा सुरत्नादर्शा इव, विभान्ति शोभन्ते । 'वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये' इत्यमर ॥ ५२ ॥

आपाटलैरिति—अस्या गन्धर्वदत्ताया आपाटलै श्वेतरक्तै नखैर्नखरै, कुरवकस्य पुष्पविशेषस्य छवि कान्ति, जिग्ये जिता । अङ्घ्रिपङ्कजयोश्चरणकमलयो रोचि कान्तिस्तेन, अशोकपल्लव कङ्केलिकिसलय, नूनमित्येवकारणे, जिग्ये जित ॥ ५३ ॥

जङ्घायुगमिति—खेचरकन्यकाया विद्याधरपुत्र्या, जङ्घायुग प्रसृतायुगलम्, पञ्चायुधस्य कामस्य तूणयोरिषुधयोर्युग्म द्वयमिति पञ्चायुधतूणयुग्मम्, अवैमि जानामि यद्वाथवा, कुसुमायुधस्य कामस्य, शराणा बाणानाम्, निशानाय तीक्ष्णीकरणाय, च, वज्रशाणोपल भिदुरनिकषपाषाणम्, अवैमीति क्रियया सम्बन्ध ॥ ५४ ॥

मनोजगेहस्येति—प्रतप्तस्य निष्टप्तस्य चामीकरस्येव सुवर्णस्येव चारु मनोहर रूप यस्य तत्, ऊरुद्वय सक्थियुगलम्, वक्षोजवप्रेण स्तनधूलिकुट्टिमेन 'वप्र स्याद् धूलिकुट्टिमम्' इति धनजय, विराजितस्य शोभितस्य, तदङ्गकस्य तच्छरीरस्य, मनोजगेहस्य कामनिकेतनस्य, स्तम्भनिभ स्तम्भसदृशम्, विरेजे शुशुभे ॥ ५५ ॥

अस्याश्च नितम्बतल दुकूलस्वच्छजलविलसितसैकतमिव कामाब्धिनिमज्जत्तरुणतरणाय यौवनाग्निनिष्टप्तहैमकलशयुगलमिव कन्दर्पवास्त्रचक्रयानमिव शृङ्गारमहीपतिक्रीडाशैलवलयमिव व्यराजत ।

एतस्या किल रोमराजि, चन्दनव्याप्तवक्षोरुहभूमिधरमारोहतो दर्पकस्य मरकतसोपान पङ्क्तिरिव, सौन्दर्यतरङ्गिणीविततसेतुरिव, नाभिवापिकामज्जनोद्युक्तस्य शम्बररिपुद्विपस्य गण्डमण्डलादुद्गच्छन्ती चञ्चरीकमालेव, दुर्वहस्तनभारवहनचिन्तया तानवमुपगतेन मध्येन समाश्रितालम्बनयष्टिरिव, नाभीवल्मीकमुखोद्गता कालभुजगीव, रुरुचे ।

रोमराजिलतागुच्छौ कुचावस्या मृगीदृश ।
चकर्षतु कुमारस्य नयनच्छलषट्पदम् ॥ ५६ ॥
पयोधरोन्नतिस्तस्या पुपोषाङ्गजकेकिनम् ।
हारविद्युल्लतोपेता नीलाम्बरविजृम्भिता ॥ ५७ ॥
स्तनौ सुमेषो रसपूर्णकुम्भौ विमुद्रितौ चूचुकमज्जतुभ्याम् ।
तस्या विधात्रा विनिपातभीत्या तौ कीलितावायसशङ्कुना किम् ॥ ५८ ॥

---

अस्याश्चेति—अस्याश्च गन्धर्वदत्तायाश्च, नितम्बतल कटिपश्चाद्भाग, दुकूल क्षाममेव स्वच्छजल निर्मलनीर तेन विलसित शोभित यत्सैकत सिकतामय तद्वत्, कामाब्धौ कन्दर्पपयोधौ निमज्जन्तो ये तरुणा युवानस्तेषा तरण प्लवन तस्मै, यौवनाग्निना तारुण्यानलेन निष्टप्त सन्तप्त यद् हैमकलशयुगल सौवर्णकुम्भ युग तद्वत्, वस्त्रेण परिवृत वास्त्र वास्त्रञ्च तच्चक्रयानञ्चेति वास्त्रचक्रयान कन्दर्पस्य कामस्य वास्त्र चक्रयान वस्त्रपरिवृतचक्रवाहनमिति तथा तद्वत्, शृङ्गार आद्यरस एव महीपती राजा तस्य क्रीडाशैलस्य केलिपर्वतस्य वलयमिव मण्डलमिव, व्यराजत व्यशोभत ।

एतस्या इति—एतस्या खेचरसुताया किलेति वार्तायाम्, रोमराजिर्लोमपङ्क्ति, चन्दनेन व्याप्त श्चन्दनव्याप्तो मलयजपरिवृत, स चासौ वक्षोरुहभूमिधरश्च कुचपर्वतश्चेति तम्, आरोहत उच्चटत दर्पकस्य कन्दर्पस्य 'कन्दर्पो दर्पकोऽनङ्ग काम पञ्चशर स्मृत' इत्यमर । मरकतसोपानपङ्क्तिरिव हरिन्मणिमयनिश्रेणिपरम्परेव सौन्दर्यमेव लावण्यमेव तरङ्गिणी स्रवन्ती तस्या विततसेतुरिव विस्तृतपुलिनमिव, नाभिरेव वापिका नाभिवापिका तुन्दीदीर्घिका तस्या मज्जनेऽवगाहन उद्युक्तस्तत्परस्तस्य, शम्बररिपोर्मनसिजस्य द्विपो गजस्तस्य, गण्डमण्डलात् कटप्रदेशात् 'गण्ड कट' इत्यमर । उद्गच्छन्ती समुत्पतन्ती, चञ्चरीकमालेव षट्पदश्रेणिरिव, दुःखेनोह्यत इति दुर्वहो दुर्भर स चासौ स्तनभारश्च कुचभारश्चेति दुर्वहस्तनभारस्तस्य वहनस्य धारणस्य चिन्ता तया, तानव कार्श्यम्, उपगतेन प्राप्तेन, मध्येनावलग्नेन कटिप्रान्तेनेति यावत्, समाश्रिता गृहीता चासावालम्बनयष्टिश्चाश्रयदण्डश्चेति समाश्रितालम्बनयष्टिस्तद्वत्, नाभीवल्मीकस्य तुन्दीवामलूरस्य मुखाग्रभागादुद्गतोद्भूता, कालभुजगीव कृष्णपन्नगीव, रुरुचे शुशुभे । उत्प्रेक्षा ।

रोमराजिलतागुच्छाविति—मृगीदृश कुरङ्गीलोचनाया, अस्या गन्धर्वदत्ताया, रोमराजिरेव लोमपङ्क्तिरेव लता वल्ली तस्या गुच्छौ स्तबकौ, कुचौ पयोधरौ 'स्तन पयोधर कुचो वक्षोज इति गणित' इति धनञ्जय । कुमारस्य जीवन्धरस्य, नयनस्य छल व्याज यस्य नयनच्छल स चासौ षट्पदश्च भ्रमरश्च तम्, चकर्षतुराकृष्ट चक्रतु । रूपकालङ्कार ॥ ५६ ॥

पयोधरोन्नतिरिति—हार एव मुक्तादामैव विद्युल्लता तडिद्वल्लरी तयोपेता सहिता, नीलाम्बर नीलगगनमेव नीलाम्बर नीलवस्त्र तस्मिन् विजृम्भिता वृद्धिङ्गता, तस्या गन्धर्वदत्ताया, पयोधरोन्नति पयोधरयो स्तनयो पक्षे पयोधराणा मेघानामुन्नतिरिति पयोधरोन्नति, अङ्गज एव केकी तम् कामकलापिनम्, पुपोष पुष्ट चकार । श्लेषानुप्राणितो रूपकालकार ॥ ५७ ॥

स्तनाविति—तस्या गन्धर्वदत्ताया, तौ प्रसिद्धौ, स्तनौ कुचौ, चूचुकमज्जतुभ्यामग्रभागोत्तमलाक्षाभ्याम्, विमुद्रितौ सम्यगवरुध्य मुद्रया चिह्नितौ, सुमेषो पुष्पेषो कामस्येति यावत्, रसेन पूर्णौ रसपूर्णौ तौ च तौ कुम्भौ च कलशौ चेति रसपूर्णकुम्भौ विधात्रा ब्रह्मणा, विनिपातस्य भीतिस्तया उन्मुद्रणभयेन, आयसशङ्कुना लोहकीलकेन, कीलितौ खचितौ, किमिति वितर्के । उत्प्रेक्षा ॥ ५८ ॥

सुरापगाशोभितहेमपद्मिनीमृणालतुल्यौ सुदृशो महाभुजौ ।
भुजङ्गबन्धार्थमजेन निर्मितौ विशालपाशाविव तौ व्यराजताम् ॥ ५९ ॥

सुतनुतनुलताया विस्तृते बाहुशाखे
मृदुलमसृणशोभे स्वाङ्गुलिश्रीप्रबाले ।
नखरुचिरलतान्ते मञ्जुगुञ्जद्विलोल-
न्मरकतवलयालिव्याप्तते ते व्यभाताम् ॥ ६० ॥

शिरोधरे खञ्जनलोचनायाः कम्बुप्रतीपे किल पञ्चबाणः ।
जगत्त्रयं निर्जितमेतयेति रेखात्रयं मङ्क्षु चकार वीरः ॥ ६१ ॥

जगदुरधरं तस्याः केचित्तु वक्त्रसुधाकरा-
न्तिमविलसितं सन्ध्यारागं परे नवपल्लवम् ।
कतिचन मुखाभाम्भोराशिप्रवालममी वयं
रदततिमणीरक्षालाक्षात्तमञ्जुलमुद्रिकाम् ॥ ६२ ॥

वाणी तस्याः पिककुलकलारावनिन्दाधुरीणा
पीयूषाणां वितरति ह्रियं गोस्तनीं न्यक्करोति ।
पुण्ड्रेक्षूणां रसघनसितां खण्डितामातनोति
साध्वी माध्वीमवरयति च प्राज्यमाधुर्यपूरा ॥६३॥

---

सुरापगेति—सुरापगायाः गङ्गायाः शोभिता विराजिता या हेमपद्मिन्यः सुवर्णसरोजिन्यस्तासां मृणालानि बिसानि तैस्तुल्यौ सदृशौ, सुदृशः सुलोचनायाः, तौ प्रसिद्धौ, महाभुजौ सुदीर्घबाहू, भुजङ्गानां कामुकानां बन्धार्थं बन्धनाय, अजेन ब्रह्मणा, निर्मितौ रचितौ, विशालपाशाविव दीर्घजाले इव व्यराजताम्—व्यशोभेताम् । उत्प्रेक्षा ॥ ५९ ॥

सुतनुतनुलताया इति—मृदुला कोमला मसृणा स्निग्धा च शोभा दीप्तिर्ययोस्ते, स्वाङ्गुलीनां निजहस्तशाखानां श्रियः शोभा एव प्रवालाः किसलया ययोस्ते, नखान्येव नखराण्येव रुचिरलतान्तानि सुन्दरपुष्पाणि ययोस्ते, मञ्जु मनोहरं यथा स्यात्तथा गुञ्जन्ति शब्दं कुर्वन्ति विलोलानि चपलानि च यानि मरकतवलयानि हरिन्मणिमयकटकास्तान्येवालयो भ्रमरास्तैः व्याप्तते, विस्तृते सुदीर्घे, सुतनुतनुलताया गन्धर्वदत्ताशरीरवल्लर्याः ते प्रसिद्धे, बाहुशाखे भुजशाखे, व्यभाताम् व्यराजताम् । रूपकालङ्कारः ॥६०॥

शिरोधर इति—खञ्जनलोचनायाः खञ्जरीटदृशः, गन्धर्वदत्तायाः कम्बुप्रतीपे शङ्खसन्निभे, शिरोधरे कण्ठे 'शिरोधरो गलो ग्रीवा कण्ठश्च धमनीधमः' इति धनञ्जयः, वीरः सुभटः, पञ्चबाणः कामः, एतयानया, जगत्त्रयं लोकत्रितयम्, निर्जितं निःशेषेण पराजितम्, स्वसौन्दर्यातिशयेनेति यावत्, इत्येव सूचनार्थमिव, मङ्क्षु शीघ्रम्, रेखात्रयं चिह्नत्रयम्, चकार विदधे, किलेति वार्तायाम् । उत्प्रेक्षा ॥ ६१ ॥

जगदुरधरमिति—केचित्तु केचन तु कवयः तस्याः गन्धर्वदत्तायाः, अधरं दशनच्छदम्, वक्त्रं मुखमेव सुधाकरश्चन्द्रस्तस्यान्तिके समीपे विलसितं शोभितस्तम्, सन्ध्यारागं पितृप्रसूलोहितिमानम्, परेऽन्ये, नवश्चासौ पल्लवश्च तं नूतनकिसलयम्, कतिचन केचन, मुखाभा वदनकान्तिरेवाम्भोराशिः सागर-स्तस्य प्रवालो विद्रुमस्तम्, जगदुः कथयाञ्चक्रुः, अमी एते, वयम्, रदततयो दन्तपङ्क्तय एव मण्यो रत्नानि तेषां रक्षायै लाक्षात्ता जतुनिबद्धा या मञ्जुलमुद्रिका सुभगावरोधिका ताम्, गदाम इति शेषः । रूपकालङ्कारः । हरिणीवृत्तम् ॥ ६२ ॥

वाणी तस्या इति—तस्याः गन्धर्वदत्तायाः, प्राज्यः प्रकृष्टः यन्माधुर्यं माधुरी तत्पूरयतीति प्राज्यमा-धुर्यपूरा, प्रकृष्टमाधुरीनिभृता, पिककुलस्य कोकिलकलापस्य यः, कलारावो मनोहरशब्दस्तस्य निन्दाया गर्हाया धुरीणा निपुणा, वाणी भारती, पीयूषाणां सुधानाम्, ह्रियं त्रपाम् 'मन्दाक्षं ह्रीस्त्रपा व्रीडा' इत्यमरः, वितरति ददाति जनयतीत्यर्थः, गोस्तनीं द्राक्षाम्, न्यक्करोति तिरस्करोति, पुण्ड्रेक्षूणां पुण्ड्ररसालानाम्, रसेन घना रसघना रसनिबिडा सा चासौ सिता च शर्करा चेति रसघनसिता ताम्, खण्डितां विगतमानाम्,

नासा तदीया मुखचन्द्रबिम्बाद्विनिर्गलन्नव्यसुधोरुधारा ।
घनत्वमाप्तेव रदालिमुक्तामणीतुलायष्टिरिव व्यलासीत् ॥६४॥

वदनसदने तस्यास्तिष्ठञ्जगद्विजयी स्मर
सपदि कुटिलभ्रूबाणासे दृशौ विशिखौ व्यधात ।
सकलतरुणश्रेणीमर्मच्छिदाहितरक्तता-
मधिमुखमिते चैतेऽभाता पयोजसलक्षणे ॥६५॥

जनदृक्पक्षिबन्धाय पाशौ कि वेधसा कृतौ ।
तत्कर्णावुत्पलव्याजाज्जनदृक्पक्षिरक्षिणौ ॥६६॥

तदाननवसुव्रज निशि हरन्निशानायको
वियत्सरणिकानने विरचयन्गति वेगत ।
दिवा क्वचन लीनतामुपगतोऽयमालक्ष्यते
न चेत्स वसुहारक कथमय कलङ्कोऽन्तत ॥६७॥

मुखेन्दुरुचिवारिधेर्विततशैवलो वा घना-
घनालिरिव चन्द्रिर मुखमितस्तत सगता ।
मनोजदहनोद्भवान्निविडधूमधारोऽथवा
मुखाब्जमधुपोत्कर किमथवा कृशाङ्ग्या कच ॥६८॥

---

आतनोति विदधाति, साध्वी श्रेष्ठाम्, माध्वी मधुरमदिरा च, अधरयति तिरस्करोति । उपमा, मन्दाक्रान्ताच्छन्द ॥ ६३ ॥

नासा तदीयेति—तदीया तत्सम्बन्धिनी, नासा घ्राणम्, घनत्व निविडत्वम्, आप्ता प्राप्ता, मुखमेव चन्द्रबिम्ब तस्माद् वदनशशिमण्डलात्, विनिर्गलन्ती निष्पतन्ती नव्या नूतना च या सुधाया पीयूषस्योरुधारा दीर्घसन्ततिस्तद्वदिति विनिर्गलन्नव्यसुधोरुधारेव, यद्वा, रदालयो दन्तपङ्क्तय एव मुक्तामण्यो मुक्ताफलरत्नानि तेषा तुलायष्टिरिव तोलनदण्ड इव, व्यलासीत्-शुशुभे । उत्प्रेक्षा ॥ ६४ ॥

वदनसदन इति—तस्या गन्धर्वदत्ताया, वदनमेव सदन तस्मिन् मुखमन्दिरे, तिष्ठन् निवसन्, जगद्विजयी त्रिभुवनजित्वर, स्मर काम, सपदि क्षिप्रम्, कुटिलभ्रुवावेव वक्रभ्रुकुट्यावेव बाणासश्चापस्तस्मिन्, दृशौ नयने, विशिखौ बाणौ, व्यधात्-चकार, अतएव, मुख इत्यधिमुखमध्यग्रभागम्, पयोजसलक्षणे कमलतुल्ये, एते दृशौ, सकलतरुणश्रेण्या निखिलयुवसमूहस्य मर्मच्छिदया मर्मस्थानविघातेनाहिता प्रापिता या रक्तता लोहितता ताम्, इते च प्राप्ते च, अभाताम् शुशुभाते । रूपकोत्प्रेक्षे । हरिणीच्छन्द ॥६५॥

जनदृगिति—उत्पलाना नीलारविन्दाना व्याज छल तस्मात्, जनदृशो नरनयनान्येव पक्षिणो विहङ्गमास्तान् रक्षतो निधत्त इत्येव शीलौ, तस्या गन्धर्वदत्ताया, कर्णौ श्रवणे, जनदृश एव पक्षिणस्तेषा बन्धोऽवग्रहण तस्मै, वेधसा ब्रह्मणा, कृतौ विहितौ, किं पाशौ कि बन्धने, आस्तामिति शेष । रूपकोत्प्रेक्षे ॥६६॥

तदाननवसुव्रजमिति—तस्या गन्धर्वदत्ताया आनन मुखमिति तदानन तस्य वसुव्रज एव किरणकलाप एव वसुव्रजो धनसमूहस्तम् 'वसुर्मयूखाग्निधनाधिपेषु' इति वैजयन्ती, हरन् चोरयन्, अयमेष, निशानायकश्चन्द्र, निशि रजन्याम्, वियत्सरणिराकाशमार्ग एव कानन वन तस्मिन्, वेगतो रहसा, गति गमनम्, विरचयन् कुर्वन्, दिवा दिवसे, क्वचन कुत्रापि, लीनतामन्तर्हिततताम्, उपगत प्राप्त, आलक्ष्यते दृश्यते, चेद्यदि, स निशानायक, वसुहारको धनापहर्ता, न नो अस्ति, तर्हि, अन्ततो मध्ये, अय दृश्यमान कलङ्क पापचिह्नम्, पक्षे लाञ्छनम्, कथ केन कारणेन, अस्तीति शेष । अन्योऽपि कश्चित्कस्यचित्किमपि धनजात चोरयित्वा रात्रौ वेगेन काननमार्गं समुल्लङ्घ्य कुत्रापि सुरक्षितस्थाने तिरोभवति तद्वच्चन्द्रोऽपीति भाव । श्लेषरूपकानुप्राणितोत्प्रेक्षा । पृथ्वीच्छन्द ॥ ६७ ॥

मुखेन्दुरुचिवारिधेरिति—मुखेन्दोर्वदनविधो रुचिरेव कान्तिरेव वारिधि सागरस्तस्य, वितत-

किन्नरी किमसुरी किमु नारी मन्मथस्य किमु हेमलता किम् ।
चञ्चला किमुत तारकाथवा सा ध्रुव नयनभाग्यरेखिका ॥६६॥

क्रमेण विवर्धितरागा स ध्यालललनामिव सुधासूतिरेष जीवन्धरस्वामी गन्धर्वदत्तामाश्लिष्य मारवीरनिक्षिप्तनाराचनवमल्लिकाकोरकायमाणरोमाञ्चप्रपञ्चकञ्चुकिताङ्ग सुरतनाटकनान्दीपदानीव चाटुवचनानि प्रयुञ्जान उत्तरीयापनयनत्रपमाणाया कोमलभुजस्वस्तिकापिहितकुचकुड्मलतया वीक्षणमार्ग रुन्धत्यास्तस्या वक्षोरुहपूर्वाचलशृङ्गे कथचिल्लब्धोदयेन निजलोचनचन्द्रेणाभिवर्धितकामार्णवसलिलपूरै श्रोणिक्षोणीमण्डल सावयन्, सलापपल्लवितकुतुकामप्यभिधातुमनीशाम्, प्रियवदनचन्द्रोपकण्ठे नयनचकोरविहरणाय स्पृहयालुमपि लज्जया सम्मुखीभवितुमपारयन्तीम्, कुसुममृदुलदयिताङ्गस्पर्शनलोलुपामपि कम्पमानामेनाम, भ्रुकुटीकपोलचुबुकरदनवसननयनचूचुकादिपदे परिचुम्बन, स्वेदसलिलसञ्जातमार्दवै कररुहै कठिनतरकुचकलशतटे पदानि

---

शेवलो विस्तृतजलनीली, वा अथवा, इतस्तत —यत कुतोऽपि, मुग्ध वक्त्रम्, चन्दिर चन्द्रमसम्, सगता प्राप्ता, घना निविडा, घनालिरिव मेघपङ्क्तिरिव, अथवा-यद्वा, मनोजदहनात्कन्दर्पपावकादुद्भवन्नुत्तिष्ठन् निविडो विकटो धूमभारो धूम्रसमूह, अथवा, मुखाब्जे वदनवारिजे विद्यमानो मधुपोत्करो भ्रमरसमूह, अथवा किम्, कृशाङ्ग्यास्तन्वङ्ग्या गन्धर्वदत्ताया इति यावत्, कच केश, आसीदिति शेष । रूपकानुप्राणित सशयालङ्कार । पृथ्वीच्छन्द ॥ ६८ ॥

किन्नरीति—सा गन्धर्वदत्ता, कि किन्नरी किन्नराङ्गना, किमु असुरी—असुराङ्गना, किमु मन्मथस्य कामस्य नारी कामिनी रतिरिति यावत्, किम् हेमलता सुवर्णवल्लरी, किम् चञ्चला सौदामिनी, 'तडित्सौदामिनीविद्युच्चञ्चला चपला अपि' इत्यमर । उत आहोस्वित्, तारका तारा, अथवा ध्रुव निश्चयेन नयनयोर्भाग्यरेखिकेति नयनभाग्यरेखिका लोचनभागधेयलेखा, आसीदिति शेष, सशयालङ्कार, । स्वागता रथोद्धतयोमिश्रणादुपजाति ॥ ६६ ॥

क्रमणेति—क्रमेण क्रमश, विवर्धितो वृद्धिङ्गतो रागोऽरुणिमा पक्षे प्रीतिर्यस्यास्ताम्, सन्ध्याललना पितृप्रसूप्रियाम्, सुधासूतिरिव शशीव, 'शशी विधु सुधासूति' इति धनजय, एष जीवन्धरस्वामी सत्यन्धरतनय, गन्धर्वदत्ता गरुडवेगसुताम्, आश्लिष्य समालिङ्ग्य, मारवीरेण मदनसुभटेन निक्षिप्ता निखाता या नाराचरूपा बाणरूपा नवमल्लिका नूतनमालयस्तास्या कोरकायमाणा कुड्मलायमाना ये रोमाञ्चा रोमहर्षणानि तेपा प्रपञ्चेन समूहेन कञ्चुकित व्याप्तमङ्ग शरीर यस्य तथाभूत सन्, सुरत सभोग एव नाटक रूपक तस्य नान्दीपदानीव नान्दीवचनानीव चाटुवचनानि प्रियवाक्यानि, प्रयुञ्जान प्रयुक्तानि कुर्वाण, 'आशीर्वचनसयुक्ता स्तुतिर्यस्मात्प्रयुज्यते । देवद्विजनृपादीना तस्मान्नान्दीति सज्ञिता' इति नान्दीलक्षणम् । उत्तरीयस्योपरि वस्त्रस्यापनयनेन दूरीकरणेन त्रपमाणाया लज्जमानाया, कोमलभुजयोर्मृदुलबाह्वो स्वस्तिकया स्वस्तिकाकृत्या पिहिते तिरोहिते कुचकुड्मले स्तनमुकुलके यस्यास्तस्या भावस्तया, वीक्षणमार्ग नयनमार्गम्, रुन्धन्त्या आवृण्वत्या, तस्या गन्धर्वदत्ताया, वक्षोरुह स्तन एव पूर्वाचल उदयशैलस्तस्य शृङ्गे शिखरे, कथञ्चित्केनापि प्रकारेण, लब्ध उदयो येन तेन प्राप्तोद्गमेन, निजलोचन स्वनयनमेव चन्द्रो विधुस्तेन, अभिवर्धितानि वृद्धिगतानि यानि कामार्णवसलिलानि कन्दर्पपारावारजलानि तेषा पूरै प्रवाहै, श्रोणिक्षोणीमण्डल नितम्बमहीवलयम्, प्लावयन् प्लुत कारयन् सन्, सलापे वार्तालापे पल्लवित वृद्धिगत कुतुक कौतूहल यस्यास्तथाभूतामपि, अभिधातु निगदितुम्, अनीशामसमर्थाम्, प्रियस्य वल्लभस्य वदनमेव मुखमेव चन्द्र शशी तस्योपकण्ठे समीपे, नयने एव चकोरौ नयनचकोरौ लोचनजीवजीवौ तयोर्विहरण भ्रमण तस्मै, स्पृहयालुमपि स्पृहायुक्तामपि, लज्जया ह्रिया, सम्मुखीभवितु पुरस्तात्स्थातुम्, अपारयन्तीमशक्नुवानाम्, कुसुममिव मृदुल कुसुममृदुल पुष्पकोमल ,तच्च तद्दयिताङ्गञ्चेति कुसुममृदुलदयिताङ्ग तस्य स्पर्शनमामर्शन तस्मिन् लोलुपा लुब्धा ता तथाभूतामपि, कम्पमाना त्रस्यन्तीम्, एना प्रियाम्, भ्रुकुट्यौ च भ्रुवौ च, कपोलौ च गण्डौ च, चुबुकश्च हनुश्च, रदनवसन च दन्तच्छदश्च, नयन च लोचन च, चूचुक च स्तनाग्रभागश्चेति भ्रुकुटीकपोलचुबुकरदनवसनचूचुक तदादो यस्य तत्, तच्च तत्पद चेति तस्मिन्, परिचुम्बन्

विदधान, नखम्पचोष्मलवक्षोरुहशिखरादपकर्ष्य पञ्चशाखपङ्कज निम्ने नाभिसरसि निदधान, मदनकदनारम्भससूचककाञ्चीकलापकलकलपटुपटहारवपरिशोभित नीवीबन्धनभेदन कुर्वाण, मदनमत्तदन्तावलालानस्तम्भायमानमूरुस्तम्भ मारमदेभमोचनायेव परिमृशन्, अधिकतरमरमत ।

जायापती तौ जगता स्तुत्यौ निस्तुलसम्पदा ।
आसामासतुरानन्दनिधे पारे गिरामपि ॥७०॥

*इति महाकविहरिचन्द्रविरचिते जीवन्धरचम्पूकाव्ये गन्धर्वदत्तालम्भो नाम तृतीयो लम्भ ।*

---

परिचुम्बिता कुर्वन्, स्वेदसलिलेन घर्मोदकेन सजात समुत्पन्न मार्दव कोमलत्व येषा तै, कररुहैर्नखै, कठिनतर परुषतर यत्कुचकलशतट स्तनकुम्भतीर, पदानि चिह्नानि नखक्षतानीति यावत्, विदधान कुर्वाण, नखम्पचावूष्मलो च यो वक्षोरुहौ तयो शिखर तस्मात्, नखम्पचोष्णताशालिकुचाग्रभागात्, पञ्चशाखपङ्कज करकमलम्, अपकर्ष्यावतार्य, निम्ने गर्भीरे, नाभिसरसि तुन्दिकासारे, निदधत् इति निदधानो निक्षिपन्, मदनकदनस्य कामयुद्धस्य सुरतस्येति यावत्, आरम्भ प्रारम्भस्तस्य ससूचको विनिवेदको य काञ्चीकलापस्य मेखलामण्डलस्य कलकलोऽव्यक्तशब्दविशेष, स एव पटुपटहाना श्रेष्ठवाद्यानामारव शब्दस्तेन परिशोभित समलङ्कृतम्, नीवीबन्धनस्य अधोवस्त्रग्रन्थेर्भेदनमुद्घाटनम्, कुर्वाणो विदधान, मदन एव काम एव मत्तदन्तावलो गन्धगजस्तस्यालानस्तम्भ इव बन्धस्तम्भ इवाचरतीति तथाभूतम्, ऊरुस्तम्भ सक्थिस्तम्भम्, मारमदेभस्य मदनमत्तमतङ्गजस्य मोचन स्वतन्त्रीकरण तस्मायिव, परिमृशन् सन्, अधिकतर सातिशय यथा स्यात्तथा, अरमत रमणञ्चकार ।

जायापतीति—निस्तुलसम्पदा निरुपमसम्पत्त्या, जगता लोकानाम्, स्तुत्यौ स्तुत्यर्हौ, तौ पूर्वोक्तौ, जायापती दम्पती, आनन्द एव निधिस्तस्य हर्षशेवधे, गिरामपि वाचामपि पारे परतट, अगोचर इति यावत्, आसामासतु स्थितौ बभूवतु 'दयायासश्च' इत्याम्प्रत्यय ॥ ७० ॥

इति महाकविहरिचन्द्रविरचिते कौमुदीव्याख्याधरे जीवन्धरचम्पूकाव्ये गन्धर्वदत्तालम्भो नाम तृतीयो लम्भ ।



# चतुर्थो लम्भः

[अथ[1] जीवन्धरो वीरो रेमे गन्धर्वदत्तया ।
समं भोगं यथायोग्यं संसारविषयोद्भवम् ॥ १ ॥
ततः समागतः कालो वसन्तसमयाभिधः ।
वनं वृक्षलताव्याप्तं जननेत्रसुखावहम् ॥ २ ॥]

माकन्दद्रुममञ्जरीमधुझरीसंसक्तमाध्वीलिहां
झङ्कारैः पिकमञ्जुगानकलितैर्मारोत्सवाशंसिनः ।
प्राप्ताः केचन वासराः कुरवकप्रोन्मीलितैः कोरकै-
र्दन्ताभैर्विहसन्मुखा विरहिणां मर्मच्छिदाकर्मठाः ॥ १ ॥

तदानीं जगज्जयोद्युक्तपञ्चबाणप्रयाणसूचकमाञ्जिष्ठदूष्यनिलयनिकाशपल्लवितोशोकपेशलं सुवर्णशृङ्खलसनद्धवनदेवताञ्चितपेटिकायमानरसालपल्लवसमासीनकोकिलकुलं तरुणजनहृदयविदारणदारुणकुसुमबाणनखरायमाणकिंशुककुसुमसङ्कुलं मदननरपालकनककदण्डायितकेसरकुसुमभासुरं

[ अथेति—अथ विवाहानन्तरं वीरः शूरो जीवन्धरः सात्यन्धरिः, गन्धर्वदत्तया वीणाविजयलब्धया खेचरसुतया, समं सार्धं, संसारविषयोद्भवं संसारविषयसमुत्पन्नं यथायोग्यं यथार्हं भोगं पञ्चेन्द्रियविषयम्, अनुभवन्निति शेषः । रेमे रमते स्म ॥ १ ॥

तत इति—ततस्तदनन्तरं, वसन्तसमयाभिधो वसन्तकालनामधेयः, कालः समयः समागतः सम्प्राप्तः । वनं च काननं च, वृक्षलताव्याप्तं तरुव्रततिव्याप्तं, जननेत्रसुखावहं लोकलोचनाह्लाददायकम् अभूदिति शेषः ॥ २ ॥ ]

माकन्देति—पिकानां कोकिलानां मञ्जुगानेन मनोहरसंगीतेन कलिताः सहितास्तैः, माकन्दद्रुमाणामाम्रानोकहानां मञ्जर्यः पुष्पस्रजस्तासां मधुझर्यो मकरन्दप्रवाहास्तासु संसक्ता निलीना ये माध्वीलिहो भ्रमरास्तेषाम्, झङ्कारैरव्यक्तशब्दविशेषैः, मारोत्सवं कामोल्लासमाशंसन्ति सूचयन्तीत्येवं शीलाः, कुरवेषु वृक्षविशेषेषु प्रोन्मीलितैर्विकसितैः, दन्ताभैर्दशनसदृशैः, कोरकैः कुड्मलैः, विहसत् हास्यसहितं मुखं येषां ते, विरहिणां वियोगिनाम्, मर्मच्छिदायां मर्मस्थानविदारणे कर्मठा दक्षाः, केचन केऽपि, वासन्तिका इति यावत्, वासरा दिवसाः, प्राप्ताः समागताः । शार्दूलविक्रीडितच्छन्दः ॥ १ ॥

तदानीमिति—तदानीं तस्मिन् काले, वनं विपिनम्, ईदृग् अजायत बभूव, कीदृगित्याह—जगज्जयाय लोकविजयायोद्युक्तस्तत्परो यः पञ्चबाणः कामस्तस्य प्रयाणं प्रस्थानं तस्य सूचका निवेदका ये माञ्जिष्ठा मञ्जिष्ठेन वर्णेन रक्ता दूष्यनिलयाः पटगृहाणि तेषां निकाशाः सदृशा ये पल्लविताशोकाः किसलयितकङ्केलयस्तैः पेशलं सुभगम्, सुवर्णशृङ्खलैः कनकशृङ्खलैः सनद्धाः समन्ताद्बद्धा वनदेवतानां वनाधिष्ठातृदेवीनां या अञ्चितपेटिकाः सुन्दरमञ्जूषास्तद्वदाचरन्तो ये रसाला आम्रवृक्षास्तेषां पल्लवेषु किसलयेषु समासीनं समुपविष्टं कोकिलकुलं परपुष्टसमूहो यस्मिंस्तत्, तरुणजनस्य युवसमूहस्य हृदयं चित्तं तस्य विदारणे द्वैधीकरणे दारुणानि कठोराणि यानि कुसुमबाणस्य कामस्य नखराणि नखानि तद्वदाचरन्ति यानि किंशुककुसुमानि पलाशपुष्पाणि तैः सङ्कुलं व्याप्तम्, मदननरपालस्य कामभूपालस्य कनकदण्डायितानि सुवर्णदण्डसन्निभानि यानि केसरकुसुमानि वकुलपुष्पाणि तैर्भासुरं शोभमानम्, विलीना अन्तर्गताः शिलीमुखा बाणा यस्य

१ एतच्छ्लोकद्वयं मुद्रितपुस्तके नास्ति । २ घन ब० ।

विलीनशिलीमुखजराभीरुशरधिसरूपपाटलपटल वियोगिजनस्वा तनिता तक्कन्तनकुन्तायितकेतक-दन्तुरित वनमजायत ।

मार्गे मार्गे माधवीमानिनीभि सूनार्चाभिर्मानितो वातपोत ।
भृङ्गस्त्रीणा गीतसक्त कुरङ्गमारुह्यासावाववो मन्दमन्दम् ॥ २ ॥
पुरान्निरीयु प्रमदाजनेन पौरा समस्ता नरपालमुख्या ।
क्रीडा विधातु द्विविधे वनेऽपि मधौ दुरन्ते विरहिव्रजस्य ॥ ३ ॥
तुङ्ग शताङ्गमारूढ स्वामी सहचरै सह ।
पौरस्त्रीनयनानन्दमातन्वन्निरगात्पुरात् ॥ ४ ॥

ततो जनकोलाहलोद्भ्रान्तशकुन्तवृन्दतया माधवागमनकौतुकेनात्क्षिप्तवैजयन्तीमिव सञ्च-रच्चञ्चरीकधोरणीहरिन्मणिमयतोरणमालाविराजिता पल्लवकवलनतत्परपयोजबान्धवस्यन्दनगन्धर्व-वदनबिलनिपतितफेनशकलसभाव्यकलिकाविलसितोन्नतमहीरुहराजितामभिसारिकामिवोच्चै स्तन-शिखरशोभितपत्रविचित्रामनेकविटपसस्पृष्टपयोधरतटा चारामवीथीमासाद्य पौरा पुष्पापचय

---

तथाभतो यो जराभीरो कामस्य शरधिरिषुधिस्तस्य सरूप सदृश पाटलपटल स्थलकमलसमहो यस्मिस्तत्, वियोगिजनस्य विरहिमर्त्यस्य स्वान्त चित्त तस्य नितान्तमयन्त यत्कृन्तन छेदन तस्मिन् कुन्तायितानि भल्लायितानि यानि कैतकानि केतकीपुष्पाणि तैर्दन्तुरित व्याप्तम् ।

मार्गे मार्ग इति—मार्गे मार्गे प्रतिमार्गम्, माधव्य एव मानिन्यस्ताभिर्वासन्तीललनाभि 'अतिमुक्त पुण्ड्रक स्याद्वासन्ती माधवीलता' इत्यमर, सूनैरर्चा सूनार्चा पुष्पपूजास्ताभि पुष्पवृष्टिभिरिति यावत्, मानित समादृत असौ वातपोत पवनबालको मन्थरसमीर इति यावत्, भृङ्गस्त्रीणा भ्रमरीणाम्, गीते सक्तो गीतसक्तस्त गानावलीनम्, कुरङ्ग हरिणम्, आरुह्याधिष्ठाय, मन्दमन्द यथा स्यात्तथा, आववौ वाति स्म 'वा गतिगन्धनयो' इत्यस्य लिटि रूपम् । भृङ्गस्त्रीणा गीतावसक्तत्वात्कुरङ्गो मन्द मन्द यात्यत-स्तत्रारूढो वातपोतोऽपि मन्द मन्द याति स्मेति स्वत सिद्धमेतत् ॥ २ ॥

पुरान्निरीयुरिति—विरहिणा वियोगिना व्रज समूहस्तस्य, दुरन्ते दु खस्वरूपे, मधौ वसन्ते, द्विविधेऽपि द्विप्रकारेऽपि, वने कानने सलिले च 'वन नपुसक नीरे निवासालयकानने' इति मेदिनी, क्रीडा केलिम्, विधातु कर्त्तुम्, नरपालो नृपतिर्मुख्य प्रधानो येषु ते, समस्ता निखिला, पुरे भवा पौरा नागरिका प्रमदाजनेन वनिताजनेन सार्धमिति शेष, पुरान्नगरात्, निरीयुनिर्जग्मु ॥ ३ ॥

तुङ्ग शताङ्गमिति—तुङ्ग समुन्नतम्, शताङ्ग रथम्, आरूढोऽधिष्ठित, स्वामी जीवन्धर, पौरस्त्रीणा नारीणा नयनाना लोचनानामानन्द हर्षम्, आतन्वन् विस्तारयन्, सन् सहचरैर्मित्रै, सह साकम्, पुरात् नगरात्, निरगान्निर्जगाम, 'इण् गतौ' इत्यस्य लुङि रूपम् 'इणो गा लुङि' इति गातोर्गादेश, गातिस्थेति—सिचो लोप ॥ ४ ॥

तत इति—ततस्तदनन्तरम्, आरामवीथीमुपवनपङ्क्तिम्, आसाद्य प्राप्य, पौरा नागरा, पुष्पाणा-मवचय पुष्पावचयस्त कुसुमत्रोटनम्, कर्तुं विधातुम्, आरभन्त तत्परा बभूवु, अथ कथम्भूतामारामवीथी-मिति वर्णयति—जनाना लोकाना कोलाहलेन कलकलशब्देनोद्भ्रान्त समुत्पतित शकुन्तवृन्द पक्षिसमूहो यस्यास्तस्या भावस्तत्ता तया, माधवस्य वसन्तस्यागमनमापतन तस्मिन् कौतुक कुतुक समुल्लास इति यावत्, तेन, उत्क्षिप्तोपरि धारिता वैजयन्ती पताका यया तथाभूतामिव, सञ्चरता भ्रमता चञ्चरीकाणा भ्रमराणा धोरण्य पङ्क्तय एव हरिन्मणिमयतोरणमाला मरकतमणिनिर्मितवन्दनस्रजस्ताभिर्विराजिता शोभिता ताम्, पल्लवाना किसलयाना कवलने भक्षणे तत्परा उद्युक्ता ये पयोजबान्धवस्यन्दनस्य सूर्यरथस्य गन्धर्वा हयास्तेषा वदनबिलेभ्यो मुखगुहाभ्यो निपतितै स्खलितै फेनशकलै डिण्डीरखण्डै सम्भाव्या समुत्प्रेक्ष्या या कलिका कुड्मलानि ताभिविलसिता विशोभिता य उन्नतमहीरुहा समुत्तुङ्गवृक्षास्तै राजिता शोभिता ताम्, अभिसारिकामिव कुलटामिव, उभयो सादृश्यमाह—उच्चैर्यौवनातिरेकेण समुत्थितयो स्तनयो कुचयो शिखरेऽग्रभागे, शोभितानि विलसितानि यानि पत्राणि कुङ्कुमकस्तूर्यादिरचितरचनाविशे-

कर्तुमारभन्त । तत्र निजकान्तां कोपकलुषितस्वान्तामाध्याय कश्चिदाह ।

प्रसारय दृशं पुरः क्षणमिदं वनं विन्दतां
स्थलोत्पलकुलानि वै कलय तन्वि मन्दस्मितम् ।
पतन्तु कुसुमोच्चया दिशि दिशि प्रहृष्टालयः
स्फुटीकुरु गिरं पिकः सपदि मौनमाढौकताम् ॥ ५ ॥

परिफुल्लनवपल्लवतल्लजाधरपुटां विकचकुसुममन्दहासां चञ्चरीकचूचुकमेचकितगुलुच्छ-स्तनयुगलां वासन्तीलतामन्यामिव लताङ्गीं पश्यन्तमात्मानं प्रति कुपितां प्रेयसीं परिसान्त्वयितुकामः कश्चिदेवमब्रवीत् ।

सञ्चारिणी खलु लता त्वमनङ्गलक्ष्मी-
रम्लानपल्लवकरा प्रमदालिजुष्टा ।
यस्या गुलुच्छयुगलं कठिनं विशाल-
शाखे शिरीषसुकुमारतमे मृगाक्षि ॥ ६ ॥
उपरिजतरुजार्थं वामहस्तेन काचिद्-
विधृतसुरभिशाखा सव्यहस्ताग्रकाङ्क्षी ।
अमलकनकगौरी निर्गलन्नीविबन्धा
नयनसुखमनन्तं कस्य वा द्राङ् न तेने ॥ ७ ॥

---

षास्तैर्विचित्राद्भुता ताम्, पक्षे उच्चैस्तनेषु समुन्नतेषु शिखरेष्वग्रभागेषु शोभितैर्विलसितैः पत्रैर्दलैर्विचित्रा मञ्जुताम्, अनेकैर्बहुभिर्विटपैर्भुजङ्गैः सस्पृष्टे समर्दिते पयोधरतटे स्तनतीरे यस्यास्तामभिसारिकाम्, पक्षे-ऽनेकविटपैर्बहुशाखाभिः सस्पृष्टमामृष्टं पयोधरतटं मेघतीरं यया ताम् । श्लिष्टोपमा । तत्रारामवीथ्याम्, कोपेन क्रोधेन कलुषितं मलिनं स्वान्तं चित्तं यस्यास्ताम्, निजकान्तां स्ववल्लभाम्, आध्याय विचार्य, कश्चित्कोऽपि युवा, आह कथयति ।

प्रसारयेति—हे तन्वि हे कृशाङ्गि ! पुरोऽग्रे दृशं दृष्टिम्, प्रसारय क्रोधजन्यनिमीलनं त्यक्त्वा प्रसृतां कुरु, येन, इदमेतत्, वनं गहनम्, वै निश्चयेन, क्षणं क्षणकालं यावत्, स्थलोत्पलानां स्थलारविन्दानां कुलानि समूहान्, विन्दतां लभताम्, मन्दस्मितं मन्दहसितम्, कलय धारय, येन दिशि दिशि प्रतिकाष्ठम्, प्रहृष्टाः प्रसन्ना अलयो भ्रमरा यैस्ते तथाभूताः, कुसुमोच्चयाः पुष्पसमूहाः, पतन्तु वर्षन्तु, गिरं वाणीम्, स्फुटीकुरु प्रकटय, येन, पिको वनप्रियः, सपदि झटिति, मौनं लज्जाजन्यं तूष्णीम्भावम्, आढौकताम् प्राप्नोतु । पृथ्वीच्छन्दः ॥५॥

परिफुल्लेति—परिफुल्लाः समुल्लसिता ये नवपल्लवतल्लजाः प्रत्यग्रकिसलयश्रेष्ठास्त एवाधरपुटं दन्तच्छदपुटं यस्यास्ताम्, विकचानि प्रफुल्लानि कुसुमानि पुष्पाण्येव मन्दहासो मन्दस्मितं यस्यास्ताम्, चञ्चरीकचूचुकाभ्यां भ्रमरस्तनाग्राभ्यां मेचकितं मलिनं गुलुच्छस्तनयुगलं स्तवककुचद्वन्द्वं यस्यास्ताम्, वासन्तीलतां माधवीवल्लीम् अन्यां द्वितीयाम्, लताङ्गीमिव ललनामिव, पश्यन्तमवलोकयन्तम्, आत्मानं स्वम्, प्रतिकुपितां कोपयुक्ताम्, प्रेयसीं प्रियाम्, परिसान्त्वयितुकामः शमयितुमनाः, कश्चित्कोऽपि युवा, एवमनेन प्रकारेण, अब्रवीत् जगाद ।

सञ्चारिणीति—हे मृगाक्षि हे मृगलोचने ! खलु निश्चयेन, अनङ्गलक्ष्मीः कामश्रीः, त्वम्, सञ्चारिणी सञ्चरणशीला, लता वल्लरी, असीति शेषः, कथम्भूता त्वमिति चेत् ? अम्लानावशुष्कौ पल्लवौ किसलया-विव करौ हस्तौ यस्याः सा, प्रमदालिभिः प्रहृष्टसखीभिरेव प्रमदालिभिः प्रमत्तभ्रमरैर्जुष्टा सेविता यस्यास्तव, कठिनं कठोरम्, कुचद्वन्द्वमिति शेषः, गुलुच्छयुगलं स्तवकयुगम्, शिरीषादपि कपीतनादपि सुकुमारतमे मृदुलतमे बाहू इति शेषः, विशालशाखे सुदीर्घलते स्त इति शेषः । वसन्ततिलकावृत्तम् ॥ ६ ॥

उपरिजतरुजार्थम्—उपरिजमूर्ध्वोत्पन्नं यत्तरुजं पुष्पं तस्मायिदमित्युपरिजतरुजार्थम् वामहस्तेन

---

१ उदञ्चय ब० । २ ममन्द ब० ।

काचिद्वराङ्गी कमितु पुरस्तादुदस्तबाहो कुसुमोद्यतस्य ।
मूल नखाङ्काञ्चितमशुकेन तिरोदधे मङ्क्षु करान्तरेण ॥ ८ ॥

अन्तर्वण करसरोरुहकान्तिभिन्न
पत्रव्रज सपदि पल्लवशङ्कया या ।
सस्पर्शमार्दवकलाविरहाद्विसृज्य
गुच्छभ्रमेण नखकान्तिमहो चकर्ष ॥ ९ ॥

वपुषि कनकगौरे चम्पकाना स्रगेषा
वितरति परभाग नेति कश्चित्प्रियाया ।
उरसि बकुलमालामाबबन्धाम्बुजाक्ष्या
स्तनकलशसमीपे चालयन्पाणिपद्मम् ॥१०॥

वक्ष स्थलेष्वत्र चकोरचक्षुषा प्रियै प्रक्लृप्ता सुममालिका बभु ।
अन्त प्रवेशोद्यतशम्बरद्विप सूनाततास्तोरणमालिका इव ॥११॥

एव वनविहारपरेषु पौरेषु, तत्र सप्ततन्तुमारभमाणैर्द्विजैर्हविःस्पर्शनजनितकोपनैर्हन्यमान-

---

सव्यकरेण, त्रिधृता गृहीता सुरभिशाखा चम्पकशाखा यया सा 'सुरभि शल्लकी मातृभिन्मुरागोषु योषिति । चम्पके च वसन्ते च तथा जातीफले पुमान्' इति मेदिनी, अन्यहस्तेन दक्षिणकरेणात्ता गृहीता काञ्ची मेखला यया सा, अमलकनकमिव निर्मलकाञ्चनमिव गौरी पीतवर्णा, निर्गलन् स्रसमानो नीविबन्धोऽधोवस्त्र ग्रन्थिबन्धन यस्या सा, काचित्कापि, कामिनी कस्य वा दर्शकस्य, द्राग् झटिति, अनन्तमपरिमितम्, नयनसुख लोचनानन्दम्, न तेने न विस्तारयामास, अपितु सर्वस्यापीति भाव ॥ मालिनीच्छन्द ॥७॥

काचिदिति—काचित्कापि, वराङ्गी ललना, कमितु पत्यु पुरस्तादग्रे, कुसुमाय पुष्पायोद्यत समुत्थापितस्तस्य, उदस्तबाहोरुत्क्षिप्तभुजस्य, नखाङ्काञ्चित नखक्षतसहितम्, मूल कक्षम्, मङ्क्षु क्षिप्रम्, करान्तरेण हस्तान्तरेण अशुकेन वस्त्रेण, तिरोदधे तिरोहित चकार । स्वभावोक्ति ॥८॥

अन्तर्वणमिति—अन्तर्वण वनमध्ये 'प्रनिरन्त शरेक्षुप्लक्षाम्र'—इति णत्वम् । अन्या काचित् कामिनी, सस्पर्शे स्पर्शने मार्दवकलाया कोमलताविज्ञानस्य विरहादभावात्, करसरोरुहस्य पाणिपद्मस्य कान्त्या दीप्त्या भिन्न मिश्र भिन्नवर्णमिति यावत्, पत्रव्रज पत्रसमूहम्, सपदि शीघ्रम्, पल्लवशङ्कया किसलय भ्रान्त्या, विसृज्य त्यक्त्वा, गुच्छभ्रमेण स्तवकसन्देहेन, नखकान्ति नखरदीप्तिम्, चकर्ष कर्षतिस्मेत्यहो आश्चर्यम् । भ्रान्तिमान् । वसन्ततिलकावृत्तम् ॥९॥

वपुषीति—कश्चित्कोऽपि युवा, प्रियाया प्रेयस्या, कनकमिव सुवर्णमिव गौर पीत तस्मिन्, 'गौर श्वेतेऽरुणे पीते विशुद्धे चाभिधेयवत्' इति मेदिनी, वपुषि शरीरे, एषा चम्पकाना षट्पदातिथीनाम्, स्रक् माला, परभाग शोभातिशयम्, न वितरति न ददाति, पीते शरीरे चम्पकाना पीता माला न शोभत इति भाव, इति हेतो, अम्बुजाक्ष्या कमललोचनाया उरसि वक्षसि, स्तनकलशसमीपे कुचकुम्भाभ्यर्णे, पाणिपद्म करकमलम्, चालयन् सचारयन्, वकुलमाला केसरस्रजम्, आबबन्ध बध्नाति स्म । कुचस्पर्शलोभाद्बकुलमालामाबध्नाति स्मेति भाव । मालिनीच्छन्द । काव्यलिङ्गम् ॥१०॥

वक्ष स्थलेष्विति—अत्रारामवीथ्याम्, प्रियैर्वल्लभै, चकोरचक्षुषा जीवजीवलोचनानाम्, वक्ष-स्थलेषु बाह्वन्तरप्रदेशेषु, प्रक्लृप्ता रचिता, सुममालिका पुष्पस्रज, अन्त प्रवेशे हृदयाभ्यन्तरप्रवेश उद्यतस्तत्परो य शम्बरद्विट् कामस्तस्य, सूनै पुष्पैरातता व्याप्ता, तोरणमालिका इव वन्दनस्रज इव, बभु शुशुभिरे । उत्प्रेक्षा । इन्द्रवंशावंशस्थयो सम्मिश्रणादुपजातिवृत्तम् ॥११॥

एवमिति—एवमनेन प्रकारेण, पौरेषु नागरिकजनेषु, वने विहारो वनविहारस्तस्मिन्परास्तेषु कान्तारभ्रमणासक्तेषु सत्सु, तत्र वने, सप्ततन्तु मखम् 'सप्ततन्तुर्मख क्रतु' इत्यमर, आरभमाणै प्रारब्ध कुर्वद्भि, हविषो होमद्रव्यस्य स्पर्शनेनामर्शेन जनित समुत्पन्न कोपन क्रोधो येषा तै, द्विजैर्विप्रै 'दन्तविप्राण्डजा

मन्तरुत्कूलितदुःखाम्बुधिघोषमिव प्राणमहीपालस्य प्रयाणससूचकभेरीभाङ्कारमिवाक्रन्दनारावमातन्वानमन्तरुज्ज्वलितदुःखाग्निज्वालामिव शोणितधारामुद्गिरन्तं सारमेयमवलोक्य, अपारकरुणाकरो जीवन्धरो बहुप्रयत्नैरपि प्रत्युज्जीवयितुमशक्नुवान् परलोकसमर्पणपरतन्त्रं पञ्चमन्त्रमुपादिक्षत् ।

श्रवसा परमं मन्त्रं मनसा हन्त मा स्पृशन् ।
कुक्कुरो विजहौ प्राणान्दुःखलेशविवर्जितः ॥१२॥

चन्द्रोदयाह्वयगिरौ विमलोपपाद-
शय्यातले रुचिरवैक्रियिकाख्यदेहे ।
स्रग्वी सदंशुकधरो नवयौवनश्री
प्रादुर्बभूव स सुदर्शननामयक्षः ॥१३॥

राकाचन्द्रिरदत्तदास्यममलं यस्यास्यपङ्केरुहं
नेत्रे वीतनिमेषकेऽकलयतां निष्कम्पमीनश्रियम् ।
पाणी कल्पकपल्लवप्रतिघृणी माणिक्यभूषोज्ज्वला[1]
मूर्तिः पुष्पितकल्पपादपलतास्फूर्तिस्तदाजृम्भत ॥१४॥

द्विजा' इत्यमरः, हन्यमानं मार्यमाणम्, अन्तरभ्यन्तरं उत्कूलितं कूलमुत्क्रान्त्य वृद्धिंगतो दुःखाम्बुधिरसातसागरस्तस्य घोषः शब्दस्तमिव, प्राणमहीपालस्य जीवितजगतीपतेः, प्रयाणससूचकः प्रस्थाननिवेदको यो भेरीभाङ्कारस्तमिव, आक्रन्दनारावं रोदनध्वनिम्, आतन्वानं विस्तारयन्तम्, अन्तरभ्यन्तरं उज्ज्वलितः प्रदीप्तो यो दुःखाग्निर्व्यथावैश्वानरस्तस्य ज्वालार्चिस्तामिव, शोणितधारा रुधिरसन्ततिम्, उद्गिरन्तं वमन्तम्, सारमेयं सरमासुतं कुक्कुरमिति यावत्, अवलोक्य दृष्ट्वा, अपारकरुणाकरोऽनन्तदयासागरः, जीवन्धरः सत्यन्धरसुतः, बहुप्रयत्नैरपि भूरिप्रयासैरपि, प्रत्युज्जीवयितुं प्रत्युज्जीवितं कर्तुम्, अशक्नुवानोऽसमर्थः सन्, परलोकस्य स्वर्गादेः समर्पणे प्रापणे परतन्त्रं समर्थम्, पञ्चमन्त्रं नमस्कारमन्त्रम्, उपदिदेश, 'शल इगुपधादनिटः क्सः' इति क्सः । पञ्चमन्त्रोऽयं यथा 'णमो अरहंताणं णमो सिद्धाणं णमो आइरियाणं । णमो उवज्झायाणं णमो लोए सव्वसाहूणम्' ।

श्रवसेति—कुक्कुरो मण्डलः, परमं सर्वोत्कृष्टम्, मन्त्रं पञ्चनमस्कारमन्त्रम्, श्रवसा कर्णेन स्पृशन् स्पृष्टं कुर्वन्, मनसा चेतसा मा स्पृशन् नो स्पृशन्, दुःखस्य लेशेन विवर्जितो दुःखलेशविवर्जितः असाताशपरिमुक्तः सन्, प्राणान्—आयुःप्रभृतीन्, विजहौ तत्याज, 'ओहाक् त्यागे' इत्यस्य लिटि रूपम् । हन्तेति हर्षे । यद्यसौ मनसापि मन्त्रं स्पृशेत्तर्हि सर्वदुःखेन परिवर्जितो भवेदिति तत्त्वम् ॥ १२ ॥

चन्द्रोदयाह्वयगिराविति—स कुक्कुरः, चन्द्रोदयाह्वयगिरौ चन्द्रोदयनामपर्वते, विमलञ्च तदुपपादशय्यातलञ्चेति विमलोपपादशय्यातलं तस्मिन् निर्मलोपपादशयनतले, देवनारकाणां हि जन्म स्वावासेषु निश्चितेषु शयनविशेषेषु भवति । ते च शयनविशेषा 'उपपादशय्या' इति नाम्ना प्रकीर्त्यन्ते, देवनारका अगर्भजन्मानो भवन्तीति तत्त्वम् । रुचिरो मनोहरश्चासौ वैक्रियिकाख्यदेहश्च वैक्रियिकनामशरीरश्च तस्मिन्, स्रग्वी मालाधरः 'अस्मायामेधास्रजो विनिः' इति विनिप्रत्ययः । सदंशुकधरः सद्वस्त्रधारकः, नवयौवनश्रीर्नूतनतारुण्यलक्ष्मीकः, सुदर्शननामयक्षः सुदर्शनाभिधानव्यन्तरविशेषः, प्रादुर्बभूव समुत्पन्नो बभूव । यक्षोऽष्टविधव्यन्तरदेवान्यतमः । तथाहि—'व्यन्तराः किन्नरकिम्पुरुषमहोरगगन्धर्वयक्षराक्षसभूतपिशाचाः' इति ॥ १३ ॥

राकाचन्द्रिरेति—यस्य सुदर्शनयक्षस्य, तदा प्रादुर्भूतिसमय एव, अमलं निष्कलङ्कम्, आस्यमेव पङ्केरुहमित्यास्यपङ्केरुहं मुखकमलम्, राकाचन्द्रिराय पूर्णिमारजनीशाय दत्तं दास्यं येन तत् तथाभूतम्, अभूदिति शेषः । वीतं गतं निमेषकं पक्ष्मस्पन्दनं ययोस्ते, नेत्रे नयने, निष्कम्पयोर्निश्चलयोर्मीनयोः श्रीः शोभा ताम्, अकलयताम्—अबिभृताम्, पाणी हस्तौ, कल्पपल्लवयोः सुरतरुकिसलययोः प्रतिघृणी प्रतिद्वन्द्विनौ, आस्तामिति शेषः, माणिक्यानां रत्नानां भूषा आभरणानि ताभिरुज्ज्वला निर्मला, मूर्तिः शरीरम्, पुष्पिता चासौ कल्पपादपलता चेति पुष्पितकल्पपादपलता कुसुमितकल्पानोकहवल्ली तस्या स्फूर्तिरिव स्फूर्ति

१. भूषोज्ज्वला ब० ।

तत कल्पतरुषु प्रमोदबाष्पबिन्दूनिव प्रसूननिकरानवकिरत्सु, दुन्दुभिस्वनितेषु दिगन्तरालविजृम्भितेषु, मन्दारवनकुटुम्बिगन्धवहस्तनन्धये मन्दसञ्चारमन्थरे, रविकोटिसदृक्षेषु यक्षेषु समन्तात्प्रणामदक्षेषु, मञ्जुमञ्जीररवमुखरितदिगन्तरासु सुराङ्गनासु मधुरगानकलाविलसितनर्तनकुशलासु, सुप्तोत्थित इवाय दिशि दिशि दृश व्यापारयन्, विस्मयसमदपूरयो सगमे निमग्न, तत्क्षणजनितावधिज्ञानतरणिमवलम्ब्य प्रबुद्धजीवकोपदिष्टमन्त्रप्रभावविलसितदेवभूय, तत्र जयेत्यादिशब्दमुखरमुखैर्निलिम्पै सप्रश्रयमेत्य किरीटमणिघृणिराजिनीराजितचरणनीरेजैर्विज्ञापित मङ्गलमज्जनजिनेन्द्रपूजादिक यथानियोगमातन्वन्, जीवन्धरस्वामिवरिवस्यापरायण परिवारै सह तदुपकण्ठमाटिटीके।

तवार्य मन्त्रप्रभवा ममेदृशी विभूतिरित्यादिनुतिं समाचरन्।
विधाय पूजामिह जीवकस्य वै प्रादात्मुदा दिव्यविभूषणान्यसौ ॥१५॥
[ [1]स्मर्तव्योऽस्मि महाभाग व्यसनोत्सवयोस्त्वया।
कर्त्तव्योऽह कृतार्थश्चेत्युक्त्वा देवस्तिरोऽभवत् ॥ ]

शोभा यस्य तथाभूता, अजृम्भत वृद्धे, पूर्णतारुण्यवती बभूवेति भाव । उपमाशार्दूलविक्रीडितच्छन्द ॥१४॥

तत इति—ततस्तदनन्तरम्, कल्पतरुषु देवानोकहेषु, प्रमोदबाष्पबिन्दूनिव हर्षाश्रुसीकरानिव, प्रसूननिकरान् पुष्पसमूहान्, अवकिरत्सु वर्षत्सु, दुन्दुभीना भेरीणा स्वनितानि शब्दास्तेषु, दिगन्तरालेषु काष्ठामध्येषु विजृम्भितानि प्रसृतानि तेषु, मन्दारवनमेव कल्पानोकहकाननमेव कुटुम्बी गृहस्थस्तस्य गन्धवह एव वायुरेव स्तनन्धयो बालकस्तस्मिन्, मन्दसञ्चारेण शनै शनैर्गमनेन मन्थरो मन्दस्तथाभूते, रविकोटिभि र्बहुभि सूर्यै सदृक्षा सदृशास्तेषु, यक्षेषु व्यन्तरामरविशेषेषु, समन्तात्परित, प्रणामे नमस्करणे दक्षा समर्थास्तेषु, मञ्जुना मनोहरेण मञ्जीररवेण नूपुरनिनादेन मुखरितानि वाचालितानि दिगन्तराणि काष्ठामध्यानि याभिस्तासु, सुराङ्गनासु देवीषु, मधुरगानकलया सुन्दरसङ्गीतवैदग्ध्या विलसित शोभित यन्नर्तन नृत्य तस्मिन् कुशला निष्णातास्तासु सतीषु, अत्र सर्वत्र 'यस्य च भावे भावलक्षणम्' इत्यनेन सप्तमी, आदौ सुप्त पश्चादुत्थित इति सुप्तोत्थित शयनानन्तरमुत्थित स इव, दिशि दिशि प्रतिदिशम्, वीप्सार्थे द्वित्वम्, दृश लोचनम्, व्यापारयन् सचारयन्, विस्मयश्चाद्भुत च समदपूरश्च हर्षसमूहश्चेति तौ तयो, सगमे समेलने, निमग्नो ब्रुडित, तत्क्षण तत्काल जनित समुत्पन्न यदवधिज्ञानमेव अवधिबोध एव तरणि सूर्यस्तम्, अवलम्ब्य समाश्रित्य तत्प्रयोगेणेति यावत्, जीवकेन जावन्धरेणोपदिष्ट श्रावितो यो मन्त्र पञ्चनमस्कारमन्त्रस्तस्य प्रभावेण माहात्म्येन विलसित प्राप्त यद् देवभूय देवत्वम् तत्, प्रबुद्ध ज्ञात जीवकोपदिष्टमन्त्रप्रभावविलसितदेवभूय येन तथाभूत, अय कुक्कुरचरो यक्ष, अत्र स्वावासे, जयेत्यादिशब्दैर्मुखराणि वाचालितानि मुखानि वदनानि येषा तै, निलिम्पैर्देवै सप्रश्रय सविनयम्, एत्यागत्य किरीटमणीना मौलिरत्नाना घृणिराजिभि किरणपङ्क्तिभिर्नीराजिते कृतारात्रिके चरणनीरेजे पादारविन्दे येस्तथाभूतै सद्भि, विज्ञापित निवेदितम्, मङ्गलमज्जन मङ्गलस्नान जिनेन्द्रपूजा जिनसपर्या चादौ यस्मिस्तत्, कार्यम्, नियोगमनतिक्रम्येति यथानियोग यथानियमम्, आतन्वन् कुर्वन्, जीवन्धरस्वामिनो वरिवस्याया पूजाया परायणस्तत्पर सन्, परिवारै परिजनै, सह साधम्, तदुपकण्ठ जीवन्धरपार्श्वम्, आटिटीके—आजगाम। 'टीकृ गतौ' इत्यस्याड्पूर्वस्य लिटि रूपम्।

तवार्य मन्त्रप्रभवेति—हे आर्य! हे पूज्य! मम मण्डलचरस्य, ईदृशी भवन्नयनगोचरा, विभूतिरैश्वर्यम्, तव भवत, मन्त्र पञ्चनमस्कारात्मक प्रभव कारण यस्यास्तथाभूता, अस्तीति शेष, इत्यादिनुतिमित्येवमादिकस्तुतिम्, समाचरन्कुर्वन्, असौ यक्ष, इह राजपुरनगरोपवने, जीवकस्य जावन्धरस्य, पूजा सपर्याम्, विधाय कृत्वा, मुदा हर्षेण, दिवि भवानि दिव्यानि तानि च तानि विभूषणानि चेति दिव्यविभूषणानि स्वर्गीयाभरणानि तानि, प्रादाद् दत्तवान्, वै पादपूरणे निश्चये वा। वशस्थेन्द्रवशयोरुपमिश्रणादुपजातिवृत्तम् ॥ १५ ॥

[स्मर्तव्योऽस्मीति—हे महाभाग हे महेच्छ! अहमेष मण्डलचरो जीवस्त्वया भवता व्यसनोत्सवयो

[1] एष श्लोको मुद्रितपुस्तके नास्ति।

अथ ललाटंतपतपनबिम्बे गगनकाननमध्यपुञ्जीभूतदवहुताशनसङ्काशे, सशावकमृगपूगेन सह मूलतलमाश्रिते नमेरुतरुच्छाये, सरोराजहंसेषु नलिनमुत्सृज्य पत्रच्छायामाश्रितेषु दीर्घिका-जलेषु शफरोद्वर्तनैरार्कसंतापादिव क्वथत्सु, शिखण्डिसु नृत्तलीलाविरहेऽपि बर्हभारं छत्रीकृत्य केकिनीं सेवमानेषु, मधुकरेषु गजगण्डतलात्कर्णपालीमाश्रितेषु, कुसुमावचयश्रान्ताभिः कान्ताभिः सह व्यात्युक्षिकां कर्तुकामा भर्तारः शनैः शनैर्नवापगामाजग्मुः ।

नवापगेयं नलिनेक्षणानां द्विजारवैर्द्राक्कुशलानुयोगम् ।
विधाय डिण्डीरमनोज्ञहासा चलोर्मिहस्तैर्दिशति स्म पाद्यम् ॥१६॥

तावद्यौवनदिनमणिप्रकाशपरिवर्धितामोदवक्षोरुहचक्रवाकयुगलासु कान्तिकल्लोलनिर्लोलासु मञ्जुगुञ्जत्कलहंसकास्वपरास्विव तरङ्गिणीषु पुरतरुणीषु दयितैः समं सरितमवगाह्य जलक्रीडा-मातन्वतीषु—

कश्चिदम्भसि विकूणितेक्षणं हेमयन्त्रविगलज्जलैर्मुहुः ।
कामिनीमुखमसिञ्चदञ्जसा चन्द्रबिम्बमिव द्रष्टुमागतम् ॥१७॥

---

दुःखसुखयोः, स्मर्तव्यः स्मरणीयः अस्मि । अहं कृतार्थः कृतकृत्यः, कर्तव्यो विधातव्यः । इत्युक्त्वा देवो यक्षः, तिरोऽभवत् अन्तर्दधे । ]

अथ ललाटंतपतपनबिम्ब इति—अथानन्तरम्, ललाटं भालं तपतीति ललाटंतपः तच्च तत्तपन-बिम्बञ्च सूर्यबिम्बञ्चेति तस्मिन्, गगनकाननस्यान्तरिक्षारण्यस्य मध्ये पुञ्जीभूतो राशीभूतो यो दवहुता-शनो वनानलस्तस्य सङ्काशः सदृशः तस्मिन् सति, नमेरुतरोश्छायावृक्षस्य छायानातपः इति नमेरुतरुच्छायम् तस्मिन् 'छाया बाहुल्ये' इति क्लीबत्वम्, सशावकानां *शिशुसहितानां मृगाणां हरिणाणां पूगः समूहस्तेन, सह साधर्म्, मूलतलमधस्तलम् आश्रिते प्राप्ते सति, सरसि विद्यमाना राजहंसा इति सरोराजहंसास्तेषु, कासारसितच्छदविशेषेषु, नलिनं कमलम्, उत्सृज्य त्यक्त्वा, पत्रच्छायां दलानातपम्, आश्रितेषु प्राप्तेषु सत्सु, दीर्घिकाणां वापिकानां जलानि तोयानि तेषु, शफराणां तिमीनामुद्वर्तनानि समुच्छलनानि तैः, आर्कसन्तापात् सूर्यकृतसन्तापात्, क्वथत्सु पच्यमानेषु सत्सु, शिखण्डिषु मयूरेषु, नृत्तलीलाविरहेऽपि नृत्यक्रीडाऽभावेऽपि, बर्हभारं पिच्छसमूहम्, छत्रीकृत्यातपत्रीकृत्य, केकिनीं मयूरीं, सेवमानेषु समुपचरत्सु सत्सु, मधुकरेषु भ्रमरेषु, गजानां करिणां गण्डतलात्कटप्रदेशात्, कर्णपालीं श्रवणतटम्, आश्रितेषु प्राप्तेषु सत्सु, कुसुमावचयेन पुष्प-त्रोटनेन श्रान्ताः खिन्नास्ताभिः, कान्ताभिः कामिनीभिः, सह सार्धम्, व्यात्युक्षिकां जलकेलिम्, कर्तुकामाः विधातुमुत्सुकाः, भर्तारः स्वामिनः, शनैः शनैर्मन्दं मन्दम्, नवापगां प्रत्यग्रतरङ्गिणीम्, आजग्मुराययुः ।

नवापगेयमिति—इयमेषा, नवापगा नूतननदी, द्विजानां पक्षिणामारवाः शब्दास्तैः, द्राक् झटिति, नलिनेक्षणानां कमललोचनानाम् नारीणामिति यावत्, कुशलानुयोगं क्षेमप्रश्नम्, विधाय कृत्वा, डिण्डीर एव फेन एव मनोज्ञहासो मनोहरहासो यस्यास्तथाभूता सती, चलोर्मय एव चपलतरङ्गा एव हस्ताः करास्तैः, पाद्यं पादोदकम्, दिशति स्म दत्तवती ॥१६॥

तावद्यौवनेति—तावत् तावता कालेन, यौवनमेव तारुण्यमेव दिनमणिः सूर्यस्तस्य प्रकाशेना-लोकेन परिवर्धितामोदं समेधितहर्षं वक्षोरुहचक्रवाकयुगलं कुचकोकयुग्मं यासु तासु, कान्तयो दीप्तय एव कल्लोलास्तरङ्गास्तैर्निर्लोलाश्चञ्चलास्तासु, मञ्जु मनोज्ञं यथा स्यात्तथा गुञ्जन्ति शब्दं कुर्वन्ति यानि मञ्जीरकाणि तुलाकोटयस्तान्येव कलहंसाः कादम्बा यासु तासु, अपरासु द्वितीयासु, तरङ्गिणीषु नदीषु, इव यथा, पुरतरुणीषु नगरनारीषु, दयितैर्वल्लभैः, समं सार्धम्, सरितं स्रवन्तीम्, अवगाह्य प्रविश्य, जलेन जले वा क्रीडा जलक्रीडा तां जलकेलिम्, आतन्वतीषु विस्तारयन्तीषु सतीषु—

कश्चिदम्भसीति—कश्चित्कोऽपि नायकः, अम्भसि सलिले, विकूणितेक्षणं सङ्कोचितनयनम्, द्रष्टु-मवलोकयितुम्, जलक्रीडामिति यावत्, आगतमायातम्, अञ्जसा साक्षात्, चन्द्रबिम्बमिव शशिमण्डलमिव, कामिनीमुखं वनितावदनम्, हेमयन्त्रात्सुवर्णयन्त्राद्विगलन्ति पतन्ति यानि जलानि तोयानि तैः, मुहुरनेक-वारम्, असिञ्चत सिषेच । रथोद्धतावृत्तम् 'रान्नराविह रथोद्धता लगौ' इति लक्षणात् ॥१७॥

काचन चपलजडापहृतदुकूलपट्टे रुचिविजितस्फटिकपट्टे घनजघनफलके नखक्षतिव्याजेन मकरकेतनस्य जगज्जयप्रशस्तिवर्णावलिमिव बिभ्राणा, करनिपीडनोद्गीर्णरक्तिमधारामिव विद्रुमयन्त्रनिर्गलत्पयोधारा शयकान्तिसङ्क्रान्तरक्तवर्णतया कुङ्कुमरसानुकारिणी प्रियलपनतले सहर्षं ववर्ष ।

सुदतीकुचकुड्मलाग्रमारात्तरुण कश्चिदसिञ्चदम्बुभि ।
हृदयस्थलजातरागकल्पद्रुमवृद्ध्यै किमु कामुक परम् ॥१८॥
अन्या काचिद्वल्लभ वञ्चयित्वा सख्या साक वारिमग्ना मुहूर्तम् ।
तस्या गात्रामोदलोभाद्भ्रमद्भिर्भृङ्गैर्ज्ञाता सामुनालिङ्गिता च ॥१९॥
सरोजिनीमध्यविराजमाना काचिन्मृगाक्षी कमनीयरूपा ।
वक्षोजकोशा मृदुबाहुनाला नालक्षि वक्त्रायतफुल्लपद्मा ॥२०॥
च्युतै प्रसूनैर्घनकेशबन्धान्मृगीदृशा तारकिते जलेऽस्मिन् ।
निरीक्ष्यमाण तरुणैश्चकोरै कस्याश्चिदास्य शशभृद्बभूव ॥२१॥

एव जलक्रीडापरायणेषु पुरतरुणेषु, तटिनीतटालङ्कारभूतयो कुबेरमित्रकुबेरदत्तनामजलधि-

काचनेति—चपल चञ्चल पक्षे चञ्चल कृतत्वर इति यावत्, यत् जड डलयोरभेदाज्जल नीर पक्षे जडो धूर्तो नायकस्तेनापहृत दूरीकृत दुकूलपट्ट यस्मात्तस्मिन्, रुच्या कान्त्या विजित पराजित स्फटिकपट्ट सितोपलफलको येन तस्मिन्, घनश्चासो जघनफलकश्च नितम्बपट्टश्चेति घनजघनफलकस्तस्मिन्, नखक्षति व्याजेन नखराघातदम्भेन, मकरकेतनस्य कामस्य, जगता जयो जगज्जयस्त्रिभुवनविजयस्तस्य प्रशस्ति कार्त्यङ्कनम्, तस्या वर्णावलिरक्षरपङ्क्तिस्तामिव, बिभ्राणा दधाना, काचन कामिनी, करयो पाण्योर्निपीडनेन समर्दनातिशयेनोद्गीर्णा प्रकटिता या रक्तिमधारा रुधिरसन्ततिस्तामिव, शययोर्हस्तयो कान्त्या दीप्त्या सक्रान्तो विपरिवर्तितो रक्तवर्णो लोहितवर्णो यस्यास्तस्या भावस्तत्ता तया, कुङ्कुमरस काश्मीरद्रवमनु करोतीत्येव शीला ताम्, विद्रुमयन्त्रात्प्रवालनिर्मितयन्त्रान्निर्गलन्ती चासौ पयोधारा चेति विद्रुमयन्त्रनिर्गलत्पयोधारा ताम्, प्रियलपनतले वल्लभवदनतले, सहर्ष सप्रमोदम्, ववर्ष वर्षति स्म ।

सुदतीति—तरुणो युवा, कश्चित्कोऽपि, कामुक प्रिय 'प्रिय कामी च कामुक' इति धनजय, आरात् समीपे 'आराद्दूरसमीपयो' इत्यमर, शोभना दन्ता यस्या सा सुदती स्वकीयवल्लभा तस्या कुचकुड्मलयो स्तनमुकुलकयोरग्र पुर प्रदेशम्, हृदयस्थले मन प्रदेशे जात समुत्पन्नो यो राग एव प्रीतिरेव कल्पद्रुम कल्पवृक्षस्तस्य वृद्ध्यै वर्धनाय, किमु-इति वितर्के, अम्बुभि सलिलै, परमत्यन्तम्, असिञ्चत् सिषेच ॥१८॥

अन्या काचिदिति—अन्या इतरा, काचित्कापि, वल्लभा, वल्लभ प्रियम्, वञ्चयित्वा प्रतार्य, मुहूर्त घटिकाद्वय यावत्, सख्या सहचर्या, साक सार्धम्, वारिणि जले मग्ना ब्रुडितेति वारिमग्ना, अभूदिति शेष, सा च वल्लभा, अमुना वल्लभेन, तस्या वारिमग्नाया, गात्रामोदलोभाच्छरीरसुगन्धिलोभात्, भ्रमद्भि पार्श्वे पर्यटद्भि भृङ्गैरलिभि, ज्ञाता बुद्धा, आलिङ्गिता समाश्लिष्टा च । शालिनीवृत्तम् ॥१९॥

सरोजिनीमध्येति—सरोजिनीना कमलिनीना मध्येऽभ्यन्तरे विराजमाना शोभमाना, कमनीय मनोज्ञ रूप सौन्दर्य यस्या सा, वक्षोजो स्तनो कोशाविव कमलकुड्मलाविव यस्या सा, वक्त्र वदन मायतफुल्लपद्ममिव विशालविकसितारविन्दमिव यस्या सा, काचित् कापि, मृगाक्षी मृगनयनी, नालक्षि नो दृष्टा, सरोजिनी सादृश्यात्पृथङ् नाभिज्ञातेति भाव । उपजातिवृत्तम् ॥२०॥

च्युतैरिति—मृग्या इव दृशो नयने यासा तासा मृगलोचनानाम्, घनश्चासो निविडश्चासो केशबन्धश्च कचबन्धश्चेति घनकेशबन्धस्तस्मात्, च्युतै पतितै, प्रसूनै कुसुमै, तारकिते सजाततारके व्याप्त इति यावत्, अस्मिन् जले नवापगानीरे, तरुणैर्युवभि, चकोरैर्जीवजीवै, निरीक्ष्यमाणमवलोक्यमानम्, कस्याश्चित्कस्या अपि नायिकाया, आस्य मुखम्, शशभृच्चन्द्र, बभूव आसीत् ॥२१॥

एव जलक्रीडापरायणेष्विति—एवमनेन प्रकारेण, पुरतरुणेषु नगरनिर्जरेषु, जलक्रीडाया वारिकेल्या परायणास्तत्परास्तेषु सत्सु, तटिन्या नवापगायास्तटस्य तीरस्यालङ्कारभूते भूषणीभूते तयो कुबेरमित्रकुबेर

सम्भूतयोर्गुणमालासुरमञ्जरीनामधेययो कन्यारत्नयो, चन्द्रोदयसूर्योदयाभिधपरस्परपटवासचूर्णोत्कर्षस्पर्धया पराजिता नवापगाजलस्नाता मा भूदिति कृतसगरयो, कुट्टिन्यो, चूर्णमादाय, तत्र तत्र विचार्य, क्रमेण जीवन्धरनिकटमागत्य, चन्द्रोदयसूर्योदययोर्मध्ये क श्लाघ्य इति पृच्छाञ्चक्रतु ।

स्वामी च चन्द्रोदयचूर्णमूचे श्लाघ्य तदन्यद्घनकालयोग्यम् ।
आद्य किरन्व्योम्नि समावृतालि निर्दिश्य च प्रत्ययमाततान ॥२२॥
तत कुमार कुरुवशवीर नत्वा च नुत्वा विनिवृत्य चेट्यौ ।
स्वस्वामिनीसन्निधिमेत्य वेगाद्विज्ञापयामासतुरेवमेव ॥२३॥
उभयोश्चूर्णयोरात्तगन्धभावे समेऽपि च ।
जीवकेन विनिर्दिष्टे शुशोच सुरमञ्जरी ॥२४॥
उल्लासयामास मुखाम्बुजात चन्द्रोदयोऽय गुणमालिकाया ।
सूर्योदयो द्राक्सुरमञ्जरीश्रीवक्त्राब्जशोष व्यतनोद्विचित्रम् ॥२५॥

तत पराभवजनितदुरासदेर्ष्याकलुषितचेतना सुरमञ्जरी सख्या गुणमालया बहुधा प्रार्थिताप्यकृतस्नानैव निवृत्य जीवकादपर नर न पश्यामीति निश्चित्य कृतसन्धाबन्धा रोषा धा कन्यागार प्रविवेश ।

---

दत्तौ नामनी ययोस्तथाभूतो जलक्रीडासागरौ तयो सम्भूते समुत्पन्ने तयो, गुणमालासुरमञ्जर्यौ नामधेये नामनी ययोस्तयो, चन्द्रोदयसूर्योदयावभिधे ययोस्तौ तथाभूतो यो परस्परपटवासचूर्णौ तयोरुत्कर्षे प्रकर्षतायां स्पर्धासूया तया, पराजिता विजिता, आवयोरिति शेष, नवापगाया नवनद्या जले नीरे स्नाता कृतस्नाना, मा भूत् न स्यात्, इत्येव कृतसगरयो कृतप्रतिज्ञयो, कन्यारत्नयो पतिवराश्रेष्ठयो 'जातौ जातौ यदुत्कृष्ट तद्रत्नमिहोच्यते' इति रत्नलक्षणम्, कुट्टिन्यो दास्यौ, चूर्ण पटवासद्रव्यम्, आदाय गृहीत्वा, तत्र तत्र तत्तत्स्थानेषु, विचार्य विचार कारयित्वा, क्रमेण क्रमश, जीवन्धरनिकट जीवकसमीपम्, आगत्य, चन्द्रोदयसूर्योदययोरेतन्नाम्नो, चूर्णयो, मध्ये, कश्चूर्ण, श्लाघ्य प्रशसनीय, इति पृच्छाञ्चक्रतु पप्रच्छु ।

स्वामी चेति—स्वामी च जीवन्धरश्च, चन्द्रोदयचूर्ण गुणमालाचूर्णम्, श्लाघ्यमुत्तमम्, तदन्यत् तदितरत्, घनकालयोग्य प्रावृट्समयार्हम्, ऊचे जगाद । आद्य प्रथम चूर्णम्, व्योम्नि गगने, किरन् प्रक्षिपन्, समावृता समाकृष्टा अलयो भ्रमरा येन त तथाभूतम्, निर्दिश्य प्रदर्श्य, प्रत्यय विश्वासम्, आततान च विस्तारयामास च ॥२२॥

तत कुमारमिति—ततस्तदनन्तरम्, चेट्यो दास्यौ, कुरुवशवीर कुरुवशसुभटम्, कुमारजीवन्धरम्, नत्वा नमस्कृत्य, नुत्वा च स्तुत्वा च, विनिवृत्य परावृत्य, स्वस्वामिनीसन्निधि गुणमालासुरमञ्जरीसमीपम्, वेगाज्जवेन, एत्यागत्य, एवमेव पूर्वोक्तप्रकारेणैव, विज्ञापयामासतु कथयामासतु ॥२३॥

उभयोरिति—उभयोर्गुणमालासुरमञ्जर्यो, आत्तगन्धभावे गृहीतसौगन्ध्ये, समेऽपि सदृशेऽपि च सति, सुरमञ्जरी कुबेरदत्ततनया, जीवकेन जीवन्धरेण, विनिर्दिष्टे कथिते, शुशोच शोकञ्चकार ॥२४॥

उल्लासयामासेति—अयमेष, चन्द्रोदयो निशाकरोद्गम पक्षे तन्नामा चूर्ण, गुणमालिकाया कुबेरमित्रसुताया, मुखाम्बुजात वदनवारिजम्, उल्लासयामास प्रहृष्ट चकार, सूर्योदयो दिवाकरोदय पक्षे तन्नामा चूर्ण, द्राक् झटिति, श्रियोपलक्षित वक्त्राब्ज श्रीवक्त्राब्ज सुरमञ्जर्या श्रीवक्त्राब्जमिति सुरमञ्जरीश्रीवक्त्राब्ज तस्य शोष' शोषण तम्, व्यतनोच्चकार, इति विचित्रमद्भुतम्, परिहारस्तूक्त । विरोधाभासोऽलङ्कार ॥ इन्द्रवज्रावृत्तम् 'स्यादिन्द्रवज्रा यदि तौ जगौ ग' इति लक्षणात् ॥२५॥

तत पराभवेति—ततस्तदनन्तरम्, पराभवेन पराजयेन जनिता समुत्पन्ना या दुरासदा दुष्प्राप्या विकटेति यावत्, ईर्ष्या मत्सरता तया कलुषित मलिन चेतन चित्त यस्या सा, सुरमञ्जरी, सख्या वयस्यया, गुणमालया, बहुधा विविधप्रकारेण, प्रार्थिताप्यभ्यर्थितापि, न कृत स्नान यया तथाभूतैवाविहितमज्जनैव, निवृत्य नवापगातीरात्प्रत्यावृत्य, जीवकात् सत्यन्धरसुतात्, अपर भिन्नम्, नर पुरुषम्, न पश्यामि

वयस्याविप्रयोगेन गुणमाला शुशोच सा।
चन्द्रिकाया वियोगेन प्रातरुत्पलिनी यथा ॥२६॥

तावत्सक्थिजवप्रणुन्नपवनाटोपोत्कटोत्पाटितै
शाखाना वलयैर्निरभ्रगगनेऽप्यभ्रभ्रम भावयन्।
हाहाकारपराञ्जनान्विरचयन् राज्ञो मदान्धो गजो
वेगाज्जङ्गमशैलराजगरिमा पौरव्रज प्राविशत् ॥ २७ ॥

करटोद्यन्मदाम्भोभि सृजन्कल्लोलिनीयुगम्।
अधावन्मत्तकुम्भीन्द्रो गुणमालारथ प्रति ॥ २८ ॥

तदा परिजनेषु परिणतकरेणुराजभयेन दूरदूरमपसर्पत्सु, कस्मिंश्चिद्धात्रीजने समसुखदु खतया मा हत्वा मा हन्यतामिति गुणमालाया पुरत स्थिते, हतेति शब्दमुखरेषु समीपवर्तिषु जनेषु, करुणापरिणाहितहृदयो जीवन्धर समुपेत्य, केसरीव सिहनादप्रतिध्वनितदिक्तटो हेलयैव सिन्धुर भीकरमपि सूकर विधाय तदीयस्कन्धमलङ्कुर्वन्, कुम्भस्थलसाम्यविलुलोकिषयेव कुम्भस्थले कर, तस्या स्तनकलशे दृष्टि, मनसि तत्प्रस्ताव च वितस्तार।

---

नावलोकयामि, इत्येवम्, निश्वस्य निश्वासमादाय, कृता विहित सन्धाया प्रतिज्ञाया अन्धो यया सा, रोषेण क्रोधेनान्धा विवेकरहिता, सता, कन्यागार कन्यागृहम्, प्रविवेश प्रविष्टवती।

वयस्याविप्रयोगेनेति—सा पूर्वोक्ता गुणमाला, वयस्याया आल्या विप्रयोगो विरहस्तेन, चन्द्रिकाया ज्योत्स्नाया वियोगेन विरहेण, प्रातरुत्पलिनी यथा प्रभातपद्मिनीव, शुशोच शोकमकार्षीत् ॥ २६ ॥

अथ गजोपद्रव वर्णयितुमाह—तावत् तावता कालेन, सक्थिनामूरूणा जवेन वेगेन प्रणुन्न प्रेरितो य पवनाटोपो वायुविस्तारस्तेनोत्कट विकट यथा स्यात्तथोत्पाटितानि निर्मूलितानि तै, शाखाना वलयै शाखासमूहे, निरभ्रगगनेऽपि निर्मेघाकाशेऽपि, अभ्राणा मेघाना भ्रम सशयस्तम्, भावयन् उत्पादयन्, जनाल्लोकान्, हाहाकारे हाहाशब्दे परास्तत्परास्तान्, विरचयन् कुर्वन्, जङ्गमशैलराजस्य गच्छत्पर्वतेश्वरस्येव गरिमा गौरव यस्य स, तथाभूत, मदेन दानेनान्धो विगतदृष्टि, राज्ञ काष्ठाङ्गारस्य, गजो हस्ती, पौरव्रज नागरिकसमूह, प्राविशत् प्रविवेश। शार्दूलविक्रीडित च्छन्द ॥ २७ ॥

करटेति—मदा एवाम्भासीति मदाम्भासि करटाभ्या गण्डाभ्यामुद्यन्ति नि सरन्ति यानि मदाम्भासि दानजलानि तै, कल्लोलिनीयुग नदीद्वयम्, सृजन् रचयन् मत्तकुम्भीन्द्रो गन्धगजेन्द्र, गुणमालारथ प्रति गुणमालास्यन्दनमुद्दिश्य, अधावत् वेगेन जगाम ॥ २८ ॥

तदेति—तदा गजाक्रमणकाले, परिजनेषु परिवारपुरुषेषु, परिणतस्य कृततिर्यग्दन्तप्रहारस्य करेणुराजस्य गजेन्द्रस्य भय त्रासस्तेन, दूरदूरमतिदूरम्, अपसर्पत्सु गच्छत्सु सत्सु, कस्मिंश्चित्कस्मिन्नपि, धात्रीजने—उपमातृजने, समे सुखदु खे यस्यास्तस्या भावस्तत्ता तया, मा धात्रीम्, हत्वा मारयित्वा, मा गुणमाला, हन्यता मार्यताम्, इत्येतदभिप्रायेण, गुणमालाया, पुरतोऽग्रे, स्थिते विद्यमाने सति, समीपवर्तिषु निकटस्थेषु नरेषु, पुरुषेषु, हता मृता, इत्येवम् शब्दैर्ध्वनिभिर्मुखरा वाचालास्तेषु तथाभूतेषु सत्सु, करुणयानुकम्पया परिणाहित विस्तारित हृदय चित्त यस्य स जीवन्धरो विजयासूनु, समुपेत्य समागत्य, केसरीव सिंह इव, सिहनादेन क्ष्वेलारवेण प्रतिध्वनितानि प्रतिनादितानि दिक्तटानि येन तथाभूत सन्, हेलयैव, क्रीडयेव, भीकरमपि भयोत्पादकमपि, सिन्धुर हस्तिनम्, सूकर वराह निर्दलमिति यावत्, विधाय कृत्वा, तदीयस्कन्ध तत्सम्बन्धिग्रीवापृष्ठम्, अलङ्कुर्वन् शोभयन् तत्र स्थित सन्निति यावत्, कुम्भस्थलेन गण्डस्थलेन यत् साम्य सादृश्य तस्य विलुलोकिषा दिदृक्षा तयेव, कुम्भस्थले गण्डस्थले, कर हस्तम्, तस्या गुणमालाया, स्तनकलशे कुचकुम्भे, दृष्टि नयनम्, मनसि चेतसि, तस्या प्रस्तावस्त गुणमालावसरम् च, वितस्तार विस्तारयामास।

१ प्रभुग्न— मु०।

मदकलकलभस्य यानतुल्या गतिरिह यूथपयूथिकाभकेश्या ।
मृदुकरनिभमूरुयुग्ममस्या कुचयुगमातनुते च कुम्भसाम्यम् ॥ २९ ॥

इति मनसि चिन्तयन्नेव पञ्चशरप्रहारपरवशो गजराजमालानमानीय, सहचरैः सह रथमलङ्कुर्वन्, गजविज्ञानप्रशंसापरैः पौरैः स्तूयमानो निजमन्दिरान्तरं प्रविवेश ।

साक्षात्पञ्चशरं कुमारमतुलं निध्याय [1]रुद्ध्वा तरं
कामार्ता गुणमालिका च सदनं गत्वा चिरं विह्वला ।
ध्यायन्ती मनसा तमेव सततं सन्तापशुष्यन्मुखी
पृष्टाप्यत्र सखीजनैर्बहुतरं नैवोत्तरं सा ददे ॥ ३० ॥

बलवदस्वस्था गुणमाला कन्दर्पनिन्दामेवमकरोत्—
कुसुमायुध पञ्च ते कलम्बा नियता लक्ष्यजनस्त्वनेककः ।
इति चेदहमेकिका कथं वा गमितानन्तशरैश्च पञ्चताम् ॥ ३१ ॥

---

मदकलेति—यूथपो गणनाथो गजश्रेष्ठ इति यावत्, तस्य या यूथिका वैशिष्ट्यार्थमधिमस्तकं धारिता मागधी 'जुही' इति प्रसिद्धा पुष्पसन्ततिः तदाभास्तत्तुल्याः केशाः कचाः यस्यास्तस्याः, अस्याः गुणमालायाः, गतिर्गमनम्, इह लोके, मदकलश्चासौ मदोत्कटश्चासौ कलभश्च करी चेति मदकलकलभस्तस्य, 'मदोत्कटस्तु मदकलः' इत्यमरः । यानेन गमनेन तुल्या सदृशीति यानतुल्या, ऊरुयुग्मं सक्थियुगलम्, मृदुकरनिभं कोमलशुण्डादण्डसदृशम्, अस्तीति शेषः । कुचयुगं च स्तनयुग्मं च, कुम्भसाम्यं गण्डस्थलसादृश्यम्, आतनुते विस्तारयति । पुष्पिताग्रावृत्तम् 'अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा' इति लक्षणात् ॥ २९ ॥

इति मनसीति—इति पूर्वोक्तप्रकारेण, मनसि चेतसि, चिन्तयन्नेव विचारयन्नेव, पञ्चशरस्य कामस्य प्रहारेणाघातेन परवशः परायत्तः, जीवन्धरः, गजराजं करीन्द्रम्, आलानं बन्धनस्तम्भम्, आनीय प्रापय्य, सहचरैः सखिभिः, सह सार्धम्, रथं स्यन्दनम्, अलङ्कुर्वन् शोभयन्, गजविज्ञानस्य हस्तिविज्ञानस्य प्रशंसायां श्लाघायां परास्तत्परास्तैः, पौरैर्नागरैः, स्तूयमानो नूयमानः सन्, निजमन्दिरान्तरं स्वसदनाभ्यन्तरम्, प्रविवेश प्रविष्टवान् ।

साक्षादिति—अतुलमनुपमम्, कुमारं जीवन्धरम्, साक्षात्प्रत्यक्षम्, पञ्चशरं कामम्, निध्याय नितरां ध्यात्वा तं प्रत्यक्षकामं मत्वेति यावत्, अन्तरं हृदये रुद्ध्वा स्थापयित्वा, कामेन मदनव्यथयार्ता पीडितेति कामार्ता, गुणमालिका च कुबेरमित्रतनया च, सदनं गृहम्, गत्वा व्रजित्वा, चिरं चिरकालपर्यन्तम्, विह्वला विचित्ता अभवदिति शेषः । अत्र सदने, मनसा चेतसा, सततं सर्वदा, तमेव जीवन्धरमेव, ध्यायन्ती चिन्तयन्ती, सन्तापेन मदनजतापेन शुष्यन्नीरसीभवन्मुखं वक्त्रं यस्यास्तथाभूता, सा गुणमालिका, सखीजनैः सहचरीसमूहैः, बहुतरमनेकवारम्, पृष्टाप्यनुयोजितापि, उत्तरं प्रत्युत्तरम्, नैव ददे न दत्तवती ॥३०॥

बलवदस्वस्थेति—बलवदस्वस्था-अतिशयेनास्वस्था, गुणमाला, एवं वक्ष्यमाणप्रकारेण, कन्दर्पस्य कामस्य निन्दामपवादम्, अकरोद् व्यधात् ।

कुसुमायुधेति—कुसुममेव पुष्पमेवायुधं शस्त्रं यस्य तत्सम्बुद्धौ हे कुसुमायुध हे मदन ! ते भवतः, कलम्बा बाणा नियता नियतसङ्ख्याकाः पञ्चेति यावत्, लक्ष्यजनस्तु शरव्यजनस्तु, अनेकको विविधः अस्तीति शेषः, इतीत्थम्, चेद्यदि, तर्हि, एकिका एकाकिनी, अहं गुणमाला, अनन्तशरैश्च सङ्ख्यातीतबाणैश्च, पञ्चतां पञ्चसङ्ख्यात्वम् मृत्युं च मृतप्रायदशामिति यावत्, कथं वा केन प्रकारेण वा, गमिता प्रापिता । तव नियतकलम्बा अनन्ताः कथं जाताः, अहमेकिका च तैः पञ्चतां कथं प्रापितेति विरोधः, परिहारस्तूक्तः । 'पञ्चता मृत्युमात्रेऽपि पञ्चभावेऽपि पञ्चता' इति विश्वलोचनः ॥३१॥

---

१ रूढान्तरं मु० ।

इति बहुधा प्रलपन्ती, तीव्रतरमदनसन्तापमसहमाना क्षण घनसारदीर्घिकापरिसरे क्षणमुपवनतटमञ्जुलनिकुञ्जे क्षणमास्तृतकुसुमतल्पे क्षण मृदुलप्रवालशय्यातले क्षण सुकुमारहसतूलशयने क्षण नवकदलीकानने काल क्षिपन्ती, क्रमेण पत्रिका विलिख्य, कञ्चन क्रीडाशुक जीवन्धराय प्राहैषीन् ।

जीवन्धरोऽपि बहुधा विरहाग्निलीढ-
मङ्ग दधन्निजगृहोपवने निषण्ण ।
चित्रे विलिख्य कमनीयतम तदङ्ग
नि श्वस्य विश्वमहित सुचिर लुलोके ॥ ३२ ॥

तावदागत्य चाटुवचनचतुरेण कीरेण प्रसगात्समर्पित पत्र फलितमनोरथसुरतपत्रमिवादाय तत्क्षणमेव द्रष्टुकामोऽप्यानन्दबाष्पनिरुद्धनयनमार्गतया विघ्नितो मोदपरीवाह कथ कथमपि नियम्य जीवन्धरो वाचयति स्म ।

मदीयहृदयाभिध[1] मदनकाण्डकाण्डोद्यत[2]
नव कुसुमकन्दुक[3] वनतटे त्वया चोरितम्[4] ।
विमोहकलितोत्पल रुचिररागसत्पल्लव
तदद्य हि वितीर्यता विजितकामरूपोज्ज्वल ॥ ३३ ॥

---

इति बहुधेति—इतीत्थम्, बहुधा नानाप्रकारेण, प्रलपन्ती निरर्थक कथयन्ती, 'प्रलापोऽनर्थक वच ' इत्यमर । अतिशयेन तीव्रस्तीव्रतर स चासौ मदनसन्तापश्चेति तीव्रतरमदनसन्तापस्त तीक्ष्णतरकामतापम्, असहमाना सोढुमशक्नुवती, क्षण क्षणकाल यावत्, घनसारस्य कर्पूरस्य दीर्घिका वापिका तस्या परिसरो निकटप्रदेशस्तस्मिन्, क्षणम्, उपवनतटे विद्यमान यन्मञ्जुलनिकुञ्ज तस्मिन् उद्यानतटकमनीयलतागृहे, क्षणम्, आस्तृत विस्तारित यत्कुसुमाना पुष्पाणा तल्प शयन तस्मिन्, क्षणम्, मृदुलाश्च ते कोमलाश्च ते प्रवालाश्च किसलयाश्चेति मृदुलप्रवालास्तेषा शय्यातल शयनपृष्ठ तस्मिन्, क्षणम्, सुकुमारमतिमृदुल यद्धसतूलशयन तस्मिन्, क्षणम्, नव च तत् कदलीकाननञ्चेति नवकदलीकानन तस्मिन् प्रत्यग्रमोचारामे, कालमनेहसम्, क्षिपन्ती गमयन्ती, क्रमेण क्रमश , पत्रिका सदेशपत्रीम्, विलिख्याङ्कयित्वा, कञ्चन कमपि, क्रीडाशुक केलिकीरम्, जीवन्धराय जीवकाय, प्राहैषीत्प्रेषयामास । 'हि गतौ वृद्धौ च' इत्यस्य लुङि रूपम् । 'सिचि वृद्धि परस्मैपदेषु' इति वृद्धि ।

जीवन्धरोऽपीति—विश्वैर्महितो विश्वमहित सर्वपूजित , जीवन्धरोऽपि जीवकोऽपि, बहुधा बहुप्रकारेण, विरहाग्निना विप्रलम्भानलेन लीढ व्याप्तमिति विरहाग्निलीढम्, अङ्ग शरीरम्, दधन् बिभ्रन्, निजगृहस्य स्वभवनस्योपवने वाटिकायाम्, निषण्ण उपविष्ट सन्, कमनीयतममतिमनोहरम्, तस्या अङ्ग तदङ्ग गुणमालाशरीरम्, चित्रे आलेख्ये, विलिख्य लिखित्वा, नि श्वस्य साक्षात्प्राप्त्यभावजन्यदु खेन दीर्घ श्वासमादाय, सुचिर सुदीर्घकालेन, लुलोकेऽद्राक्षीत् । वसन्ततिलकावृत्तम् ॥३२॥

तावदागत्येति—तावत् तावता कालेन, आगत्य समेत्य, चाटुवचने मधुरालापे चतुरो विदग्धस्तेन, कीरेण शुकेन, प्रसङ्गादवसरात्, समर्पित प्रदत्तम्, पत्र सदेशकर्गलम्, मनोरथ एव सुरतरुरिति मनोरथसुरतरु, फलितश्चासौ मनोरथसुरतरुश्चेति फलिमनोरथसुरतरु तस्य पत्रमिव, फलितवाञ्छितकल्पानोकहकिसलयमिव, आदाय गृहीत्वा, द्रष्टुकामोऽप्यवलोकयितुमना अपि, आनन्दबाष्पेण हर्षाश्रुणा निरुद्धोऽवरुद्धो नयनमार्गो यस्य तस्य भावस्तत्ता तया, विघ्नित प्राप्तान्तराय , जीवन्धरो जीवक , कथ कथमपि केन केनापि प्रकारेण, मोदपरीवाह प्रहर्षपरम्पराम्, नियम्य, निरुध्य, वाचयतिस्म वाचयामास ।

मदीयेति—विजित पराजित कामो येन तथाभूतेन रूपेण सौन्दर्येणोज्ज्वलो विमलस्तत्सम्बुद्धौ हे विजितकामरूपोज्ज्वल ! वनतटे काननतीरे, त्वया भवता, मदनस्य कामस्य काण्डो बाण एव काण्डो दण्डस्तेनोद्यतमुच्छालितम्, 'काण्डोऽस्त्री वर्गबाणार्थनालावसरवारिषु । दण्डे प्रकाण्डे रहसि स्तम्बे कुत्सितकुत्सयो '

---

१ मिधो, ब० । २ द्यतो ब० । ३ कन्दुको ब० । ४ चारित ब० । ५ स एष हि ब० ।

आनन्दबाष्पसरुद्धकन्धरो गद्गदं पठन् ।
तन्त्वं विलिलेखाशु पत्रं तां प्रति मोदतः ॥ ३४ ॥

मम नयनमराली प्राप्य ते वक्त्रपद्मं
तदनु च कुचकोशप्रान्तमागत्य हृष्टा ।
विहरति रसपूर्णे नाभिकासारमध्ये
यदि भवति वितीर्णा सा त्वया तं ददामि ॥ ३५ ॥

तावदन्तरुज्ज्वलितमनसिजाग्निधूमनिकरेणेव निश्वासेन नीलमणीकृतनासामौक्तिका, क्षामक्षामाङ्गतया वलयीकृतकनकोर्मिका, मुखसुधाकरकौमुदीलिप्तयेव[1] परिपाण्डरतनुवल्ली, भावनाप्रकर्षवशेन दिशि दिशि परिस्फुरन्तं जीवन्धरमालोक्य प्रत्युत्थानाय कृतप्रयत्नापि मृणालकोमलैरङ्गैरपारयन्ती, प्रेषितशुकागमनविलम्बासहतया त्रस्तैकहायनकुरङ्गीवापाङ्गतरङ्गान्दिशि दिशि किरन्ती गुणमाला, समागतं जात्या कृत्येन च पत्रिणं शुकमुद्वीक्ष्य, एह्येहि न सहे विलम्बमिति समालपन्ती, सन्निहितं तं तत्समयजातप्रमोदोच्छूनाङ्गतया स्फुटितकञ्चुकेन भुजयुगलेनादाय च पत्रं निरन्तर-

---

इति विश्वलोचन, मदीयहृदयाभिध मच्चित्तनामधेयम्, नव नूतनम्, कुसुमकन्दुकं पुष्पमयगेन्दुकम्, चोरितमपहृतम्, अद्यास्मिन् दिवसे, विमोहेन विभ्रमेण कलितोत्पल धृतोत्पलम्, रुचिरेण मनोज्ञेन रागेण प्रेम्णा सत्पल्लव विद्यमानकिसलयम्, तत् पूर्वोक्तं कुसुमकन्दुकम्, हि निश्चयेन, वितीर्यतां प्रदीयताम्, रूपकालङ्कारः । पृथ्वीच्छन्दः ॥३३॥

आनन्दबाष्पेति—आनन्दबाष्पेण हर्षाश्रुणा सरुद्धो निरुद्धः कन्धरो गलो यस्य तथाभूतः, जीवन्धरः, गद्गदं भिन्नस्वरं यथा स्यात्तथा, तत्पत्रम्, पठन् वाचयन्, तां प्रति गुणमालामुद्दिश्य, मोदतः समदात्, आशु क्षिप्रम्, एवं वक्ष्यमाणप्रकारम्, पत्रं सदेशार्गलम्, विलिलेख लिखितवान् ॥३४॥

मम नयनमरालीति—मम जीवन्धरस्य, नयनमराली लोचनहंसी, ते भवत्याः, वक्त्रपद्मं मुखकमलम्, प्राप्य लब्ध्वा, तदनु च मुखकमलप्राप्त्यनन्तरम्, कुचकोशप्रान्तं स्तनकुड्मलोपान्तम्, आगत्य समेत्य, हृष्टा प्रसन्ना सती, रसपूर्णे स्नेहसलिलपूर्णे, नाभिरेव कासारो नाभिकासारस्तुन्दिसरोवरस्तस्य मध्येऽभ्यन्तरे, विहरति विहारं करोति, क्रीडतीति यावत्, सा मम नयनमराली, त्वया भवत्या, वितीर्णा प्रदत्ता, भवति जायते, यदि चेत्, तर्हि तं त्वदीयहृदयाभिधं कुसुमकन्दुकम्, ददामि वितरामि । रूपकालङ्कारः । मालिनीच्छन्दः ॥ ३५ ॥

तावदन्तरिति—तावत् तावता कालेन, अन्तर्मध्ये हृदयम्, उज्ज्वलितो ज्वालायुक्तो यो मनसिज एव काम एवाग्निर्वैश्वानरस्तस्य धूमनिकरेणेव धूम्रसमूहेनेव, निःश्वासेन श्वासोच्छ्वासपवनेन, नीलमणीकृतं नासामौक्तिकं यया सा श्यामलीकृतनासिकामुक्ताफला, क्षामक्षाममतिशयेन कृशमङ्गं शरीरं यस्यास्तस्या भावस्तत्ता तया, वलयीकृता हस्ताभरणीकृतोर्मिकाङ्गुलीयकं यया सा, मुखमेव वक्त्रमेव सुधाकरस्तस्य कौमुद्या ज्योत्स्नया लिप्तयेव, व्याप्तयेव, परिपाण्डुरा धवलपीता तनुवल्ली शरीरलता यस्याः सा, भावनाया संस्कारस्य प्रकर्षं आधिक्यं तस्य वशस्तेन, दिशि दिशि प्रतिकाष्ठम्, परिस्फुरन्तं देदीप्यमानम्, जीवन्धरं जीवकम्, आलोक्य दृष्ट्वा, प्रत्युत्थानाय प्रत्युद्गमनाय, कृतप्रयत्नापि विहितायासापि, मृणालकोमलैर्बिसमृदुलैः, अङ्गैरवयवैः, अपारयन्ती समर्था न भवन्ती, प्रेषितः प्रहितो यः शुकः कीरस्तस्यागमने प्रत्यावर्तने विलम्बं कालक्षेपं न सहते तस्या भावस्तया, त्रस्ता चासौ भीता चासावेकहायनकुरङ्गी चैकवर्षहरिणी चेति त्रस्तैकहायनकुरङ्गी तद्वत्, अपाङ्गतरङ्गान् कटाक्षभङ्गान्, दिशि दिशि प्रत्याशम्, किरन्ती प्रक्षिपन्ती, गुणमाला, समागतं समायातं, जात्या ज्ञात्या, कृत्येन च कार्येण च, पत्रिणं पक्षिणं पत्रे पत्रयुक्तम्, शुकं हरितच्छदम्, उद्वीक्ष्य उदवलोक्य, एह्येहि आगच्छ-आगच्छ, विलम्बं कालक्षेपम्, न सहे न सोढुं शक्नोमि, इत्येवं समालपन्ती समालापं कुर्वन्ती, सन्निहितं निकटवर्तिनम्, तं कीरम्, तत्समयजातेन तत्कालोत्पन्नेन प्रमोदेन

---

१. वाण्या ब० ।-२ पाण्डुर ब० ।

निपतितैरपाङ्गै सर्वत्र मषिलिप्त इव विचित्रे पत्रे रमणीयाक्षरमणीनपश्यन्ती, प्रीतिलतापुष्पायमाण-मन्दहासधवलीकृते तस्मिन्विलिखित पद्य वाचयन्ती वाचामगोचरमानन्दमभजत।

तदिद वृत्तमवेत्य कन्यकाया पितराविङ्गितचेष्टितादिभिश्च।
मुमुदाते स्म वरो हि योग्यभाग्यप्रथितो दुर्लभ एव बोभवीति ॥ ३६ ॥

तदनु गन्धोत्कटान्तिक नीताभ्या काभ्याश्चिदामुष्यामाणाभ्यामिम वृत्ता त श्रवणपुटेनाघ्राया-श्चर्यवृत्तिरय मनस्यामोदमातन्वन् रसनयानुमतिवचनमकरन्दधारामुद्गिरति स्म।

शुभयुगुणसम्पन्ने मुहूर्ते गुणमालिकाम्।
पुत्री कुबेरमित्रस्य परिणिन्येऽथ जीवक ॥ ३७ ॥

तदा परिणयोचितभूषावेपोज्ज्वल साक्षात्कन्दर्प इव सन्तर्पितसकलमनुजनयन कुरुवशवीरो जीवन्धर सम्मदविस्तारितलोचनाभ्या नयमालानन्दिनीमपि विनयमालानन्दिनी गुणमाला विलोकयामास।

हर्षेणोच्छून स्थूलमङ्ग देहो यस्यास्तस्या भावस्तत्ता तया, स्फुटित भुजयुगलस्य पीनतया भिन्न कञ्चुक कूर्पासक यस्य तेन, भुजयुगलेन प्रवेष्टद्वयेन 'भुजबाहू प्रवेष्टो दो' इत्यमर, आदाय गृहीत्वा, च पत्र जीवन्धरप्रेषित सदेशकर्गलम्, निरन्तर निर्व्यवधान यथा स्यात्तथा निपतितैरुपरि प्राप्तै, अपाङ्गै कटाक्षै, सर्वत्र सर्वप्रदेशेषु, मषिलिप्त इव मेलानन्दव्याप्त इव, विचित्रेऽद्भुतप्रकारे, पत्रे सन्देशकर्गले, रमणीयाक्षराण्येव सुन्दरवर्णा एव मणयो रत्नानि तान्, अपश्यन्ती अनवलोकयन्ती, प्रीतिलताया स्नेहव्रतते पुष्पायमाणेन कुसुमायमानेन मन्दहासेन धवलीकृते वलक्षीकृते, तस्मिन् पत्रे, विलिखितमङ्कितम्, पद्य सन्देशश्लोकम्, 'मम नयनमराली' इत्यादिकम्, पठन्ती, वाचा गिराम्, अगोचरमविषयम्, आनन्द हर्षम्, अभजत प्राप्तवती।

तदिदमिति—माता च पिता चेति पितरौ मातापितरौ 'मातापितरौ पितरौ मातरपितरौ स्वसू जनयितारौ' इत्यमर, इङ्गित हृद्गतो विकार, चेष्टित शारीरिकचेष्टा, ते आदौ येषा तै, कन्यकाया पतिवराया इद तत्पूर्वोक्तम्, वृत्तमुदन्तम्, अवेत्य ज्ञात्वा, मुमुदाते स्म प्रसन्नौ बभूवतु, हि यत, योग्यभाग्येन समी-चीनादृष्टेन प्रथित प्रसिद्ध, वरो वरेण्य, दुर्लभ एव दुष्प्राप्य एव, बोभवीति अतिशयेन भवति, 'धातो-रेकाचो हलादे क्रियासमभिहारे यङ्' इति यङ्, 'यङोऽचि च' इति यङो लुक् ॥ ३६ ॥

तदन्विति—तदनु तदनन्तरम्, गन्धोत्कटस्य वणिग्वरस्यान्तिक निकटम्, नीताभ्या प्रेषिताभ्याम्, काभ्याचित् आमुष्यामाणाभ्या गुणमालासम्बन्धिभ्याम्, पुरुषाभ्यामिति यावत्, इम पूर्वोक्तम्, वृत्तान्त समाचारम्, श्रवणपुटेन कर्णपुटेन, आघ्राय गृहीत्वा, आश्चर्यवृत्तिर्विस्मितमना अय गन्धोत्कट, मनसि स्वान्ते, आमोद हर्षम्, आतन्वन् विस्तारयन्, रसनया जिह्वया, अनुमतिवचनमेव स्वीकृतिवाण्येव मक रन्दधारा पुष्पासवश्रेणिस्ताम्, उद्गिरति स्म प्रकटयति स्म ॥

शुभयुगुणसम्पन्न इति—अथोभयपक्षगतप्रमुखजनस्वीकृत्यनन्तरम्, जीवको जीवन्धर, शुभमस्ति येषा ते शुभयव 'अहशुभमोर्युस्' इति मत्वर्थे युस्प्रत्यय, शुभयवश्च ते गुणाश्चेति शुभयुगुणा मङ्गलगुणा स्तै सम्पन्ने सहिते, मुहूर्ते समये, कुबेरमित्रस्य तन्नाम्नो वणिग्वरस्य, पुत्री तनयाम्, गुणमालिकाम्, परिणिन्ये परिणीतवान्, उन्वोढेति भाव ॥ ३७ ॥

तदेति—तदा परिणयनकाले, परिणयोचिताभ्या विवाहयोग्याभ्या भूषावेषाभ्यामलङ्करणनेपथ्याभ्या मुज्ज्वल शोभमान, साक्षात्कन्दर्प इव, प्रत्यक्षकाम इव, सन्तर्पितानि प्रीतानि सकलमनुजाना निखिलनराणा नयनानि लोचनानि येन स, कुरुवशवीर कुरुवशसुभट, जीवन्धरो जीवक, सम्मदेन हर्षेण विस्तारिते वर्धिते ये लोचने नयने ताभ्याम्, नयमालया नीतिपरम्परया नन्दयतीत्येव शीला तामपि सतीम्, न तथा-भूतामिति विनयमालानन्दिनीमिति विरोध, पक्षे विनयस्य नम्रताया माला पङ्क्तिस्तया नन्दिनी नन्दन-शीलामिति, गुणमाला कुबेरमित्रपुत्रीम्, विलोकयामास ददर्श।

कुसुमातिशायि सुकुमारमङ्गक दधती नभ स्थलनिकाशमध्यमम् ।
कुसुमेषुकार्मुकलतेव भाति या त्रिवली तदङ्गुलिसुसन्धिरेखिका ॥ ३८ ॥

यस्या सुधासमरसाधरपल्लवाग्रे
　　मन्दस्मितै कुसुमितै कुरुवशकेतो ।
नेत्राम्बुजे तु फलिते हृदय रसस्य
　　धारामसूत सपदीति विचित्रमेतत् ॥ ३९ ॥

तामेनामुपयम्याय　कुरुस तानकुञ्जर ।
चिक्रीडाधित्यकाभागे चिर मोदमहीभृत ॥ ४० ॥

*इति महाकविहरिचन्द्रविरचिते श्रीमति जीवन्धरचम्पूकाव्ये*
*गुणमालालम्भो नाम चतुर्थो लम्भ*

---

कुसुमातिशायीति—कुसुम पुष्पमतिशेत इत्येव शीलमिति कुसुमातिशायि, सुकुमारमतिमृदुलम्, नभ स्थलनिकाश गगनोपमान शून्यमतिकृशमिति यावत्, मध्यममवलग्न यस्य तत् 'मध्यम चावलग्न च मध्योऽस्त्री' इत्यमर, अङ्गक शरीरम्, दधती बिभ्रती, त्रिवल्यो नाभेरधस्ताद्विद्यमानास्तिस्र रेखा एव तदङ्गुलीना कामकरशाखाना सुसन्धिरेखिका सङ्गमलेखिका यस्या तथाभूता, या गुणमाला, कुसुमेषोर्मदनस्य कार्मुकलतेव चापवल्लरीव, भाति शोभते । उपमालङ्कार । मञ्जुभाषिणीवृत्तम् 'सजसा जगौ भवति मञ्जुभाषिणी' इति लक्षणात् ॥ ३८ ॥

यस्या इति—यस्या गुणमालाया, सुधासम पीयूषतुल्यो रसो यस्य, स चासावधरपल्लवश्च तस्याग्रे, कुसुमितै पुष्पवदाचरितै, मन्दस्मितैर्मन्दहसितै, कुरुवशकेतोर्जीवन्धरस्य, नेत्राम्बुजे नयनकमले फलिते सञ्जातफले बभूवतुरिति शेष । हृदय तु चित्त तु, सपदि शीघ्रम्, रसस्य फलसारस्य धारा सन्ततिम्, असूत जनयामास, इत्येतत्, विचित्रमाश्चर्यम्, अस्तीति शेष । ये फलिते तयोरेव रसधारोत्पत्तिरुपपद्यते, अत्र तु स्थानभेदादाश्चर्यमिति भाव । गुणमालाया अधरबिम्बे मन्दस्मित दृष्ट्वा जीवन्धरस्य नेत्रे सफले जाते, हृदयञ्च तस्य शृङ्गाररसाप्लुत बभूवेति परिहार । असङ्गतिरलङ्कार । वसन्ततिलकावृत्तम् ॥ ३९ ॥

तामेनामिति—अयमेष, कुरुसन्तानकुञ्जरो जीवन्धरगज, एना ताम् गुणमालाम्, उपयम्य विवाह्य, मोदमहीभृत सम्मदशैलस्य 'मुत्प्रीति प्रमदो हर्ष प्रमोदामोदसम्मदा' इत्यमर, अधित्यकाभागे उपरि भागे 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमर, चिर चिरकालपर्यन्तम्, चिक्रीड क्रीडति स्म । रूपकालङ्कार ॥ ४० ॥

इति महाकविहरिचन्द्रविरचिते श्रीमति कौमुदीव्याख्याधरे जीवन्धरचम्पूकाव्ये
गुणमालालम्भो नाम चतुर्थो लम्भ



# पञ्चमो लम्भः

शत्रुजीवकबलीकरणेषु दक्षजीवकबलं मनसैव ।
आलिहन्नथ करी तृणरूपं प्रागिव स्वकबलं विजहौ सः ॥ १ ॥
कुण्डलेन हतः सोऽयं कुण्डलीकृतदुर्मदः ।
रोषं सोर्मिकमातेने कटकाश्रितकुञ्जरः ॥ २ ॥

तदेतन्निशम्य विशांपतिर्विशालक्रोधानलः वनौकःसङ्घविजयेन सञ्जातः वल्लकीविजयेन पल्लवितमनङ्गमालासङ्गेन सन्दीपितः शुण्डालपतिशिरोमण्डलकुण्डलताडनेन जाज्वल्यमानः कुमारनिकारेण शिशमयिषुः काष्ठाङ्गारः, सङ्गरे भङ्गुरं कुमारं हस्तग्राहं गृह्णीध्वमिति मथनप्रमुखान्नियोज्य, सयोज्य च गजरथतुरगपादातशबलेन बलेन सह प्राहैषीत् ।

बलं पुरोधाय रथाधिरूढः प्रचण्डवृत्तिर्मथनश्चचाल ।
ज्ञात्वा कुमारोऽपि सहायजुष्टो रथी युयुत्सू रिपुमानशे तम् ॥ ३ ॥

---

शत्रुजीवेति—अथ जीवन्धरकृतताडनानन्तरम्, स पूर्वोक्तः, करी हस्ती, शत्रुजीवानामरातिप्राणानां कबलीकरणेषु ग्रासीकरणेषु, दक्षः समर्थो यो जीवको जीवन्धरस्तस्य बलं शक्त्यतिशयम्, अथ च कस्यात्मनो बलं कबलं, दक्षजीवस्य पराक्रमपटुजीवन्धरस्य कबलमात्मबलमेव कबलं ग्रासम्, मनसैव चेतसैव, आलिहन् आस्वादयन् सन्, प्रागिव पूर्वमिव, तृणरूपं घासात्मकम्, स्वकबलं स्वग्रासम्, विजहौ तत्याज, 'ओहाक् त्यागे' इत्यस्य लिटि रूपम् । स्वागताच्छन्दः ॥ १ ॥

कुण्डलेनेति—कुण्डलीकृता नम्रीकृता दुर्मदा दुर्मानिनो येन सः, सोऽयं पूर्वोक्तः, कटकाश्रितश्चासौ कुञ्जरश्चेति कटकाश्रितकुञ्जरः सेनागतो राजधानीगतो वा हस्ती 'कटकोऽस्त्री राजधान्यां सानौ सेनानितम्बयोः । वलये सिन्धुलवणे दन्तिदन्तविभूषणे' इति विश्वलोचनः, कुण्डलेन वलयेन हस्तकटकेनेति यावत् 'कुण्डलं कर्णभूषायां पाशेऽपि वलयेऽपि च' इति मेदिनी, हतस्ताडितः सन्, सोर्मिकं सतरङ्गम्, उत्तरोत्तरवर्धमानमिति यावत्, रोषं क्रोधम्, आतेने विस्तारयामास ॥ २ ॥

तदेतदिति—तदेतत् कुञ्जराहारवर्जनवृत्तम्, निशम्य श्रुत्वा, विशाम्पतिः प्रजापतिः, वनं काननमोकः स्थानं येषां ते वनौकसः शबरास्तेषां सङ्घः समूहस्तस्य विजयः पराजयस्तेन, सञ्जातः समुत्पन्नः, वल्लक्या वीणाया विजयः उत्कर्षप्राप्तिस्तेन, पल्लवितः वृद्धिङ्गतः, अनङ्गमालासङ्गेन तन्नामाङ्गनासमागमेन, सन्दीपितः सन्धुक्षितः, शुण्डालपतेर्गजेन्द्रस्य शिरोमण्डलं मूर्धमण्डलं तस्य कुण्डलेन हस्तकटकेन ताडनं पीडनं तेन, जाज्वल्यमानमतिशयेन प्रज्वलन्तम्, विशालश्चासौ क्रोधानलश्चेति विशालक्रोधानलस्तम् प्रभूतकोपपावकम्, कुमारस्य निकारो विप्रकारस्तेन 'निकारो विप्रकारः स्यात्' इत्यमरः, शिशमयिषुः शमयितुमिच्छुः, काष्ठाङ्गारः कृतघ्नशिरोमणिः, सङ्गरे युद्धे, अभङ्गुरमविनाशिनम्, कुमारं जीवन्धरम्, हस्तेन गृहीत्वेति हस्तग्राहं करग्राहम् 'हस्ते वर्तिग्रहोः' इति णमुल्, गृह्णीध्वं गृहीतः कुरुध्वम्, इत्येवम्, मथनप्रमुखान् मथनप्रधानान्, नियोज्य नियुक्तान् विधाय निदेशं दत्त्वेति यावत्, गजाश्च रथाश्च तुरगाश्च पादाताश्चेति गजरथतुरगपादाताः वारणशताङ्गहयपत्तिसमूहस्तेन शबलेन कर्बुरेण, बलेन सैन्येन, सह सार्धम् प्राहैषीत् प्रजिघाय ।

बलमिति—रथाधिरूढः स्यन्दनमधिष्ठितः, प्रचण्डातितीक्ष्णा वृत्तिर्व्यवहृतिर्यस्य तथाभूतः, मदनः काष्ठाङ्गारश्यालः, बलं सैन्यम्, पुरोधायाग्रे कृत्वा, चचाल, चलति स्म । सहायैर्मित्रैर्जुष्टः सेवित इति सहायजुष्टः, रथी रथाधिष्ठितः, कुमारोऽपि सात्यन्धरिरपि, ज्ञात्वा मथनाभियानं बुद्ध्वा, योद्धुमिच्छुः युयुत्सुः सन्, तं मथनम्, आनशे प्राप 'अशू व्याप्तौ संघाते च' इत्यस्य लिटि रूपम्, 'अश्नोतेश्च' इति नुट् ॥ ३ ॥

गजा जगर्जु प्रटहा प्रणेदुर्जिहेषुरश्वाश्च तदा रणाग्रे।
कुमारबाहासुखसुप्तिकाया प्रबोधनायेव जयेन्दिराया ॥ ४ ॥
कराञ्चितशरासनादविरलगलद्भि शरै-
र्लुलाव कुरुकुञ्जरो रिपुशिरासि चापैरमा।
बिभेद गजयूथपान् सुभटधैर्यवृत्त्या सम
ववर्ष शरसन्तति सममिभोद्गतैर्मौक्तिकै ॥ ५ ॥

ततश्च हतशेषेषु सैनिकेषु तदीयप्रक्ष्वेडनाध्यापकादधीतवेगेषु तदभ्यासायेव दिशि दिशि पलायमानेषु विच्छिन्नशरासनरथादिपरिकरतया कम्पमानमवलोक्य कुरुवीरो गभीरतरमेवमवादीत्।

भवादृशे भुजोऽय मे न बाण मोक्तुमीहते।
गच्छ गच्छ भयेनाल ब्रूहि राज्ञे कथामिमाम् ॥ ६ ॥
जेतुमस्मान् मृ[1]धारम्भे नेतु कीर्ति दिगन्तरम्।
भवान्तरे च चतुर मन्यते य स दुर्मति ॥ ७ ॥

तावदिद वृत्तमाकर्ण्य कोपसज्वलितनयनाङ्गारेण काष्ठाङ्गारेण पुनरपि सर्वाभिसारेण प्रेषिता

---

गजा इति—तदा तस्मिन्काले, रणाग्रे समराग्रे, कुमारस्य जीवन्धरस्य बाहाया भुजे सुखसुप्ति सुखशयन यस्यास्तस्या जयेन्दिराया विजयलक्ष्म्या, प्रबोधनायेव जागरणायेव, गजा हस्तिन, जगर्जुर्गर्जन्ति स्म, पटहा ढक्का, प्रणेदु प्रणदन्ति स्म, अश्वाश्च हयाश्च, जिहेषुर्हेषन्ते स्म, अत्र परस्मैपदप्रयोगोऽपाणिनीय। 'बाहो बाहुरिति स्मृत' इति देशिकोश, 'स्त्रिया तु भुजा बाहा' इति च। उत्प्रेक्षा ॥४॥

कराञ्चितशरासनादिति—कुरुकुञ्जर कुरुश्रेष्ठो जीवन्धर इति यावत्, कराञ्चित हस्तशोभितञ्च तच्छरासन धनुश्चेति तस्मात्, अविरल निरन्तरायम्, गलद्भि पतद्भि, शरैर्बाणै, चापै रिपुकोदण्डै, अमा सह, रिपूणा शत्रूणा शिरासि मस्तकानि, लुलाव चिच्छेद, सुभटाना योद्धृणा धैर्यवृत्तिर्धीरतावृत्तिस्तया, सम सह, गजयूथपान् गजगणनाथान् 'गणनायस्तु यूथप' इत्यमर, बिभेद भिनत्ति स्म, इभोद्गतैर्गज-समुच्छलितै, मौक्तिकैर्मुक्ताफलै, सम सार्धम्, शरसन्तति बाणसमूहम्, ववर्ष वर्षति स्म। सहोक्तिरलङ्कार, पृथ्वीच्छन्द ॥५॥

ततश्चेति—ततश्च तदनन्तरञ्च, हतशेषेषु मृतावशिष्टेषु, सैनिकेषु सैन्येषु, तस्याय तदीय स चासौ प्रक्ष्वेडनश्च नाराचश्चेति तदीयप्रक्ष्वेडन स एवाध्यापक उपाध्यायस्तस्मात्, 'प्रक्ष्वेडनास्तु नाराचा' इत्यमर, नाराचो लोहमयो बाण इति यावत्। अधीत शिक्षितो वेगो रयो यैस्तेषु, तदभ्यासायेव तद्गुणनिकार्थमिव 'योग्या गुणनिकाभ्यास' इति धनञ्जय, दिशि दिशि प्रतिकाष्ठम्, पलायमानेषु धावमानेषु सत्सु, विच्छिन्नो व्युच्छेद गत शरासनरथादिपरिकरो धनुस्यन्दनप्रभृतिसामग्री यस्य तस्य भावस्तया, कम्पमान भय-चञ्चलम्, मथन कृतभ्रश्यालम्, अवलोक्य दृष्ट्वा, कुरुवीरो जीवन्धर, गभीरतरमतिशयेन गभीर यथा स्यात्तथा, एव वक्ष्यमाणप्रकारेण, अवादीत् कथयाञ्चकार।

भवादृश इति—मे मम, अयमेष भुजो बाहु, भवादृशे त्वत्सदृशे, बाण शरम्, मोक्तु त्यक्तुम्, नेहते न चेष्टते, तद् गच्छ गच्छ याहि याहि, भयेन भीत्या, अल व्यर्थम्, राज्ञे काष्ठाङ्गाराय, इमामेताम्, कथा वार्ताम्, ब्रूहि कथय ॥६॥

जेतुमिति—य कोऽपि भवान्तरे ससारमध्ये, मृधारम्भे समरारम्भे, अस्मान् गन्धोत्कटसुतान् जेतु पराभवितुम्, कीर्ति यशश्च, दिगन्तर काष्ठान्तरम्, चतुर विदग्ध स्वमिति शेष, मन्यते जानाति, स दुर्मति दुर्बुद्धि, अस्तीति शेष ॥७॥

तावदिदमिति—तावत् तावता कालेन, इदमेतत्, वृत्त समाचारम्, आकर्ण्य श्रुत्वा, कोपेन सज्वलितमरुणीभूत नयनमेव नेत्रमेवाङ्गारो यस्य तेन, काष्ठाङ्गारेण राजघ्नेन, पुनरपि भूयोऽपि, सर्वाभि-

---

१ मुधारम्भे ब०।

चमूमवलोक्य करुणार्द्रमानस कुरुकुलोत्तस क्षुद्रप्राणिवधेन किमिति युयुत्सामपास्य सकलापायापनयनदक्षस्य सुदर्शनयक्षस्य सस्मार ।

यक्षाधिप पृतनया सह त समेत्य
शान्ति निनाय नरपालबलानि सद्य ।
जीवन्धर जयगिरिप्रथित करीन्द्र
कौतूहल च हृदय कृतकृत्यता स्वम् ॥ ८ ॥

दन्तावलोऽय कटदानधारासौरभ्यलोभागतभृङ्गसङ्घै ।
जीवन्धरश्रीपदपद्मसङ्गाद् रराज पापैरिव मुच्यमान ॥ ९ ॥

तदनु सुरवारणमारूढ , पार्श्वद्वयविधूयमानाभ्या मुखकमलभ्रान्तिसमागतहसमिथुनशङ्कावहाभ्यामनुरक्तयक्षाधिपराज्यलक्ष्मीप्रहितकटाक्षच्छटाभ्यामिवोर्ध्वप्रसृतदन्तयुगलनिर्गलत्कान्तिकल्लोलाभ्यामिव कमलशशाङ्कयोर्विजयेन मुखमभित सेवमानाभ्यामिव कीर्तिशावकाभ्या भुजदण्डवास्तव्यजयलक्ष्मीमन्दहासरुचिपूराभ्यामिव क्षीराब्धिडिण्डीरचयाभ्यामिव चामराभ्या विभ्राजित , यशोविजिततया सेवार्थमागतेन परितोलम्बमानमुक्ताफलच्छलतारामण्डलमण्डितचन्द्रबिम्बेनेव कीर्तिक्षीरवाराशिफेनपुञ्जेनेव मुखचन्द्रभ्रमसमागतपरिवेषेणेव सुरकराम्बुरुहविधृतकनकदण्डरुचिर-

---

सारेण सर्वारम्भेण, प्रेषिता प्रहिताम्, चमू सेनाम्, अवलोक्य दृष्ट्वा, करुणयानुकम्पयार्द्र क्लिन्न मानस चित्त यस्य स , कुरुकुलोत्तस कुरुवशालङ्कार , जीवन्धर इति यावत्, क्षुद्राणा प्राणिना वधस्तेन दुर्बलजनसहारेण, कि किं प्रयोजनम्, इति विचार्य, योद्धुमिच्छा युयुत्सा ताम्, अपास्य त्यक्त्वा, सकलाश्च तेऽपायाश्चेति सकलापाया निखिलविघ्नानि तेषामपनयने दूरीकरणे दक्ष समर्थस्तस्य, सुदर्शनयक्षस्य कुक्कुरचरव्यन्तरस्य, सस्मार स्मरणञ्चकार । 'अधीगर्थदयेषा कर्मणि' इति षष्ठी ।

यक्षाधिप इति—यक्षाणामधिपो यक्षाधिप सुदर्शन , पृतनया सेनया, सह सार्धम्, त जीवन्धरम्, समेत्यागत्य, सद्यो झटिति, नरपालस्य बलानि नरपालबलानि राजसैन्यानि, शान्ति विवशताम्, निनाय प्रापयामास, जीवन्धर सात्यन्धरिम्, जयगिरिरिति नाम्ना प्रथित प्रसिद्धस्त जयगिरिप्रथितम्, करीन्द्र गजेन्द्रम्, निनाय, हृदय चित्त , सर्वेषामिति शेष , कौतूहल कुतुकम्, निनाय, स्वञ्च आत्मानञ्च, कृतकृत्यता विहितप्रत्युपकारताम्, निनाय । वसन्ततिलकावृत्तम् ॥८॥

दन्तावलोऽयमिति—अय सुदर्शनसमर्पित , दन्तावलो गज , कटयोर्गण्डयोर्या दानधारा मदसन्ततिस्तस्या सौरभ्य सौगन्ध्य तस्य लोभेन तृष्णया आगता प्राप्ता ये भृङ्गसङ्घा भ्रमरसमूहास्तै , जीवन्धरस्य सात्यन्धरे श्रिया शोभयोपलक्षिते पदपद्मे चरणकमले तयो सङ्ग ससर्गस्तस्मात्, पापै कल्मषै , मुच्यमानस्त्यज्यमान इव, रराज शुशुभे । उत्प्रेक्षालङ्कार ॥ ९ ॥

तदन्विति—तदनु तदनन्तरम्, सुरवारण देवगजम्, आरूढोऽधिष्ठित , पार्श्वद्वये तटयुगले विधूयमानाभ्या कम्प्यमानाभ्याम्, मुखे वदने कमलस्य पद्मस्य भ्रान्त्या सन्देहेन समागत समायात यद्धसमिथुन मरालदम्पती तस्य शङ्कावहाभ्या सन्देहधारकाभ्याम्, अनुरक्ता प्राप्तानुरागा या यक्षाधिपराज्यलक्ष्मी सुदर्शनराज्यश्रीस्तया प्रहिता प्रेरिता ये कटाक्षा केकरास्तेषा छटाभ्यामिव श्रेणिभ्यामिव, ऊर्ध्वप्रसृतमुपरि विस्तृत यद्दन्तावलदन्तयुगल द्विरदरदनयुग्म तस्मान्निर्गलन्त्या नि सरन्त्या कान्तेर्दीप्ते कल्लोलौ तरङ्गौ ताभ्यामिव, कमलशशाङ्कयो पद्मचन्द्रयो , विजयेन पराभवेण, मुखमभितो वक्त्रस्योभयपार्श्वयो , सेवमानाभ्या शुश्रूषाकुर्वाणाभ्याम्, कीर्तिशावकाभ्यामिव यशोबालकाभ्यामिव, भुजदण्डयोर्बाहुदण्डयोर्वास्तव्या निवासिनी या जयलक्ष्मीर्विजयश्रीस्तस्या मन्दहास्यरुचे स्मितकान्ते पूराभ्यामिव प्रवाहाभ्यामिव, क्षीराब्धे क्षीरसागरस्य डिण्डीरोऽब्धिकफस्तस्य चयाभ्यामिव समूहाभ्यामिव, चामराभ्या बालव्यजनाभ्याम् , विभ्राजित शोभित , यशसा कीर्त्या विजिततया पराभूतत्वेन, सेवार्थ शुश्रूषार्थम्, आगतेन प्राप्तेन, परितो लम्बमान समन्ताल्लम्बमान मुक्ताफलच्छल मौक्तिकव्याज तारामण्डल नक्षत्रसमूहस्तेन मण्डित शोभित यच्चन्द्रबिम्ब विधुमण्डल तेनेव, कीर्तिरेव यश एव क्षीरवाराशि पय सागरस्तस्य फेनपुञ्जेनेव डिण्डीरसमूहेनेव, मुखे वदने चन्द्रभ्रमेण

धवलातपत्रेण विराजित , सकलदिविजकुड्मलीकृताञ्जलिकञ्जपुञ्जमध्यराजहसायमान , शिखावलकुल-नृत्यकलाविलाससम्पादकैर्गभीरतरतूर्यनिनादैर्वाचालितदशदिक्तट , निरन्तरदन्दह्यमानकालागुरुधूम-रेखया धवलातपत्रे शशिशङ्कासमागतविधुन्तुदसम्भाव्यमानया सुरभितसविधप्रदेश , निरन्तर-नि सरत्पदनखकान्तिभिर्निजाक्रमणभिन्नकुम्भस्थलविगलन्मौक्तिकनिचयशङ्कामङ्कुरयन् , एकदोदित-कोटिसूर्यैरिव विमानारूढैर्यक्षै परित स्तूयमानवैभव , नटन्ती सौदामिनीलता इव त्रिदशवनिता नि सरदपाङ्गसुधातरङ्गिणीमध्ये भुजोल्लासितलास्यलीलावशेन प्लवन्तीरिव समाकलयन् , शनै शनै-र्वृन्दारकवन्दिसन्दोहपापठ्यमानविरुदावलिमुखरीकृतकन्दरतया प्रतिध्वानवशेन स्वयमपि स्तुति-माचरन्तमिव चन्द्रोदयनामान भूमिधरमेत्य, तत्र विचित्ररत्नमयमण्डपमध्ये सरभससन्नाहैर-मृतान्धसमूहै समानीत मूर्तमिव सकलानुराग पद्मरागमय सिहविष्टरमलञ्चकार ।

प्रणेदु पटहास्तत्र प्रतिध्वानितकन्दरा ।
गायन्त्यो मञ्जु किन्नर्यो ननृतुश्च समन्तत ॥ १० ॥

तत कलशवारिधि प्रति चचाल यक्षाधिप
सुरै करसरोरुहाञ्चितसुवर्णकुम्भै सह ।

---

शशिसन्देहेन समागत समायातो य परिवेप परिधिस्तेनेव, सुरकराम्बुरुहेण देवपाणिपद्मेन विधृत सन्धारित कनकदण्डरुचिर सुवर्णदण्डसुभग च यद् धवलातपत्र श्वेतच्छत्र तेन, विराजित शोभित , सकलदिविजाना समस्तदेवाना कुड्मलीकृतो योऽञ्जलिकञ्जपुञ्जो हस्तबन्धकमलसमूहस्तस्य मध्ये राजहस इवाचरतीति राजह-सायमानो मरालायमान , शिखावलकुलस्य मयूरसमूहस्य यो नृत्यकलाविलासस्ताण्डवकलाविभ्रमस्तस्य सम्पादका विधायकास्तै , गभीरतराश्च ते तूर्यनिनादाश्चेति तैस्तारतरवादित्रशब्दै , वाचालिता मुखरिता दशदिक्तटा दशाशातीराणि येन स , धवलातपत्रे शुक्लच्छत्रे, शशिशङ्कया चन्द्रभ्रान्त्या समागत सम्प्राप्तो यो विधुन्तुदो राहुस्तेन सम्भाव्यमाना समुत्प्रेक्ष्यमाणा तया, निरन्तरमनवरत दन्दह्यमान पुन पुनरतिशयेन वा दह्यमानो य कालागुरु कृष्णागुरुस्तस्य धूमरेखा धूम्रश्रेणिस्तया, सुरभित सुगन्धित सविधप्रदेशो निकटप्रदेशो यस्य स , निरन्तर सतत नि सरन्त्यो निर्गलन्त्यो या पदनखकान्तयश्चरणनखर-दीप्तयस्ताभि , निजाक्रमणेन स्वाधिष्ठानेन भिन्न विदारित यत्कुम्भस्थल गण्डस्थल तस्माद्विगलन्पतन् यो मौक्तिकनिचयो मुक्ताफलसमूहस्तस्य शङ्का सन्देहम्, अङ्कुरयन्नुत्पादयन् , एकदा युगपद् उदिता उद्गता ये कोटिसूर्या कोटिसख्याप्रमितदिवाकरास्तैरिव, विमानरूढैर्व्योमयानाधिष्ठितै , यक्षैर्व्यन्तरामरविशेषै , परित समन्तात् , स्तूयमान श्लाघ्यमान वैभवमैश्वर्यं यस्य स , नटन्तीर्नृत्य कुर्वन्ती सौदामिनीलता इव विद्यु-द्वल्लरीरिव, त्रिदशवनिता देवाङ्गना , नि सरन्तो निर्गलन्तो येऽपाङ्गा कटाक्षास्त एव सुधातरङ्गिणी पीयूषसरित् तस्या मध्ये, भुजाभ्या बाहुभ्यामुल्लासिता प्रकटिता या लास्यलीला नृत्यकेलि-स्तस्या वशेन, प्लवन्तीरिव तरन्तीरिव, समाकलयन्पश्यन् , शनै शनै मन्द मन्द क्रमश इति यावत् , वृन्दारका देवा एव वन्दिसन्दोहा स्तुतिपाठकसमूहास्तै पापठ्यमाना पुन पुनरतिशयेन वा पठ्यमाना या विरुदावलि कीर्तिगाथा तया मुखरीकृतकन्दरतया वाचालितगह्वरतया, प्रतिध्वानवशेन प्रतिध्वनिवशेन, स्वयमपि स्वतोऽपि, स्तुतिं स्तवनम्, आचरन्तमिव कुर्वन्तमिव, चन्द्रोदयनामान चन्द्रो-दयाभिधानम्, भूमिधर पर्वतम्, एत्य प्राप्य, तत्र चन्द्रोदयपर्वते, विचित्रो विलक्षणो यो रत्नमयमण्डपो मणिमयास्थान तस्य मध्ये, सरभस सवेग, सन्नाह उद्योगो येषा तै , अमृत पीयूषमन्धो भोजन येषा तेऽमृतान्धसस्तेषा समूहास्तै , समानीत प्रापितम्, मूर्तं सदेहम्, सकलानुरागमिव सर्वप्रीतिपुञ्जमिव, पद्मरागमय लोहितकमणिनिर्मितम्, सिहविष्टर सिहासनम्, अलञ्चकार भूषयामास ।

प्रणेदुरिति—तत्र मण्डपे, प्रतिध्वानिता प्रतिनादिता कन्दरा गुहा यैस्ते, पटहा आनका प्रणेदु प्रणदन्ति स्म, मञ्जु मनोहर यथा स्यात्तथा, गायन्त्यो गान कुर्वन्त्य , किन्नर्य किन्नरस्त्रिय , समन्ताद् विष्वग् , ननृतुश्च नृत्यन्ति स्म च ॥१०॥

तत कलशवारिधिमिति—ततस्तदनन्तरम्, यक्षाधिप सुदर्शन , करसरोरुहेषु पाणिपद्मेष्वञ्चिता

सता पथि समावहन्विततसान्ध्यमेघभ्रम
किरीटमणिकान्तिभि सुरपचापसम्भावनाम् ॥ ११ ॥

एते देवा पूर्वमागत्य लक्ष्मीं धेनु चिन्तारत्नम याश्च हृत्वा ।
आशापाशादागतास्ते पुनश्चेत्येव दुग्धाम्भोधिरार्त रराास ॥ १२ ॥

ततश्च, कुरुवीर धैर्यगुणेन स्पर्धमानश्चन्द्रोदयगिरिस्तदीयपादस्पर्शेन कृतार्थतामाससाद, अहमपि गाम्भीर्ययशोभ्या स्पर्धमानस्तदीयसर्वाङ्गस्पर्शेन कृतकृत्यतामनुभवामि, इति चलाचलवीचिबाहुभिर्नृत्यत इव फेनकूटेन, घोषकपटेन चाट्टहासमातन्वानस्येव, दुग्धसागरस्य पयोभि पूरितान्कनककलशान्बिभ्राणास्ते यक्षाध्यक्षमुखा, सत्वरमागत्याभिषेकमङ्गल कर्तुमारभन्त ।

यक्षेशमुख्यकरलम्बितहेमकुम्भ-
पङ्क्ते पपात कुरुकुञ्जरमूर्ध्नि तोयम् ।
सन्ध्याभ्रसङ्घविगलद्विमलाम्बुवर्ष
प्रालेयशैलशिखराग्र इवातिसान्द्रम् ॥ १३ ॥

समापिते साध्वभिषेकमङ्गले निलिम्पकान्तानयनान्तवारिभि ।
परीतमूर्ति पुनराबभावसौ पयोऽधिपूरैरिव सिच्यमान ॥ १४ ॥

---

शोभिता सुवर्णकुम्भा काञ्चनकलशा येषा तै, सुरैर्देवै, सह सार्धम्, सता नक्षत्राणाम्, पथि मार्गे गगन इति यावत्, वितताना व्याप्ताना सान्ध्यमेघाना पितृप्रसूवारिदाना भ्रम सन्देहम्, किरीटमणिकान्तिभिर्मौलिरत्नदीप्तिभि, सुरपचापस्य शक्रशरासनस्य सम्भावना समुत्प्रेक्षा ताम् च, समावहन् उत्पादयन्, कलशवारिधि क्षीरसागरम्, प्रति, चचाल चलति स्म । पृथ्वीच्छन्द ॥११॥

एते देवा इति—एते दृश्यमाना इमे, देवा सुरा, पूर्वं पुरा, आगत्य समेत्य, लक्ष्मीं श्रियम्, धेनु सुरगवीम्, चिन्तारत्न चिन्तामणिम्, अन्यांश्च कल्पवृक्षादीन्, हृत्वा समादाय, गता इति शेष । ते देवा, आशापाशात् तृष्णाबन्धात्, पुनर्भूय, आगता प्राप्ता, इत्येवम् इति प्रकारेण, दुग्धाम्भोधि क्षीरसागर आर्त्त पीडित यथा स्यात्तथा, रराास शब्दञ्चकार । उत्प्रेक्षा । शालिनीच्छन्द 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकै' इति लक्षणात् ॥१२॥

ततश्चेति—ततश्च तदनन्तरञ्च, धैर्यमेव गुणस्तेन स्थैर्यगुणेन, कुरुवीर जीवन्धरम्, स्पर्धमान स्पर्धां कुर्वाण, चन्द्रोदयगिरिश्चन्द्रोदयाभिधानपर्वत, तदीयपादस्य कुरुवीरचरणस्य स्पर्श स्पर्शन तेन कृतार्थता कृतकृत्यताम्, आससाद प्राप, अहमपि दुग्धसागरोऽपि, गाम्भीर्यञ्च यशश्चेति गाम्भीर्ययशसी ताभ्याम् अगाधत्वकीर्तिभ्याम्, स्पर्धमानोऽसूयन्, तदीयस्य कुरुवीरीयस्य सर्वाङ्गस्य सर्वशरीरस्य स्पर्श सम्बन्धस्तेन कृतकृत्यताम्, कृतार्थताम्, अनुभवामि, इति हेतो, चलाचला अतिशयेन चला वीचय एव तरङ्गा एव बाहवस्तै, फेनकूटेन डिण्डीरपिण्डेन, नृत्यत इव नृत्य कुर्वत इव, घोषकपटेन गर्जितव्याजेन, अट्टहास सशब्दोच्चहासम्, आतन्वानस्येव विस्तारयत इव, दुग्धसागरस्य क्षीरपाथोधे, पयोभिर्जलै, पूरितान् भृतान्, कलशान् कुम्भान्, बिभ्राणा दधाना, यक्षाध्यक्षमुखा सुदर्शनप्रधाना, देवा, सत्वर शीघ्रम्, आगत्य समेत्य, अभिषेकमङ्गल मङ्गलस्नानम्, कर्तुं विधातुम्, आरभन्त उपचक्रमिरे ।

यक्षेशेति—प्रालेयशैलस्य हिमाचलस्य शिखराग्र शृङ्गाग्र तस्मिन्, अतिसान्द्रम् अतिनिबिडम्, सन्ध्याभ्रसङ्घात्सन्ध्यावारिदव्यूहाद् विगलत्पतत् यद्विमलाम्बुवर्षं निर्मलनीरवृष्टिस्तद्वत्, कुरुकुञ्जरमूर्ध्नि जीवन्धरोत्तमाङ्गे, यक्षेश सुदर्शनो मुख्य प्रधानो येषा ते यक्षेशमुख्यास्तेषा पङ्क्तिस्तस्या, तोय जलम्, पपात पतति स्म । वसन्ततिलकाछन्द ॥१३॥

समापित इति—अभिषेकमङ्गले स्नपनकल्याणके, साधु सम्यग् यथा स्यात्तथा, समापिते निष्ठापिते सति, निलिम्पकान्ताना निर्जरनारीणा नयनान्ता एव कटाक्षा एव वारीणि जलानि तै, परीता व्याप्ता मूर्ति शरीर यस्य तथाभूत, असौ जीवन्धर, पुनर्भूय, पयोऽधिपूरै पयसा दुग्धानामधिपूरैर्भूरि प्रवाहै अथवा

ततो दिव्याम्बरधरो मणिभूषणमण्डित ।
रेजे जीवन्धरस्वामी सचापशरदभ्रवत् ॥ १५ ॥
यक्षाधिपार्पित कल्पवृक्षाञ्चितफलादिकम् ।
जग्राह जीवकस्वामी निग्राहचतुरो द्विषाम ॥ १६ ॥

तत क्रमेण यक्षाध्यक्षेणोपदिष्ट कामरूपविधानगानविषहानशक्तियुक्त चिरत्न मन्त्ररत्न बहुम यमान, 'एकहानमात्रेण राज्यलक्ष्मीकटाक्षा प्रवेक्ष्यसि' इति तद्वचनेन सन्तुष्ट, सन्तत प्रश्रयवशवदैर्यक्षै सम्भाव्यमान कुरुवीर, कदाचिद्देशान्तरदिदृक्षामिङ्गितैर्यक्षाध्यक्ष ज्ञापयामास ।

मनीषित तस्य कुरूत्तमस्य ज्ञात्वा मनीषी स हि यक्षराज ।
मार्गस्य भङ्गी स्फुटतोऽभिधाय सम्प्रापयामास तदद्रिसीमाम ॥ १७ ॥

तदनु कुरुवशकेसरी केसरीव तत्र तत्र निर्भय एव विहरन्, क्वचिदतिविततानोकहकुलविलसितमसूर्यपश्य तरक्षुमृगाधिष्ठानम्, क्वचन तरुषण्डे कादम्बिनीभ्रान्त्या दूरोन्नमितकेकागर्भकण्ठ प्रबलपुरोवातसन्ताडितशिखण्ड नीलकण्ठम्, कुत्रचि महागुल्मान्तरकुटुम्बिशबरकदम्बकम्, कुत्र च

---

पयोऽब्धिपूरै क्षीरसागरप्रवाहै सिच्यमान इव समुच्यमान इव, आबभौ शुशुभे । उत्प्रेक्षालङ्कार । उपेन्द्रवज्रावृत्तम् ॥१४॥

तत इति—ततस्तदनन्तरम्, दिव्याम्बरधर स्वर्गीयवस्त्रधारक, मणिभूषणै रत्नालङ्कारैर्मण्डित शोभित, जीवन्धरस्वामी सात्यन्धरि, सचापशरदभ्रवत् सशक्रशरासनशरन्मेघ इव, रेजे शुशुभे । उपमालङ्कार ॥१५॥

यक्षाधिपार्पितमिति—द्विषा शत्रूणाम्, निग्राहे दमने चतुरो दक्ष इति निग्राहचतुर जीवकस्वामी जीवन्धर, यक्षाधिपेन सुदर्शनेनार्पित प्रदत्तमिति यक्षाधिपार्पितम्, कल्पवृक्षेषु सुरतरुष्वञ्चित शोभित यत्फलादिक फलप्रभृतिक तत्, जग्राह गृह्णाति स्म ॥१६॥

तत क्रमेणेति—ततस्तदनन्तरम्, क्रमेण क्रमश, यक्षाध्यक्षेण सुदर्शनेन, उपदिष्ट निर्दिष्टम्, कामरूपविधान च, गान च, विषहानञ्चेति कामरूपविधानगानविषहानानि तेषा शक्ति सामर्थ्यं तया युक्त सहितम्, चिरत्न प्राचीनम्, मन्त्ररत्न मन्त्रश्रेष्ठम्, बहु मन्यमान समादरेण स्वीकुर्वाण, 'एकहायन मात्रेण एकवर्षमात्रेण, राजलक्ष्म्या नृपतिश्रिया कटाक्षा अपाङ्गास्तान् प्रवेक्ष्यसि प्राप्स्यति', इत्येवम्, तद्वचनेन, तत्कथनेन, सन्तुष्ट सम्प्रीत, सन्तत निरन्तरम्, प्रश्रयवशवदैर्विनयानुकूलै, यक्षैर्व्यन्तरामरै, सम्भाव्यमान सत्क्रियमाण, कुरुवीरो जीवन्धर, कदाचिज्जातुचित्, इङ्गितैश्चेष्टितै, यक्षाध्यक्ष सुदर्शनम्, देशान्तराणा जनपदान्तराणा दिदृक्षा द्रष्टुमिच्छाम्, ज्ञापयामास कथयामास ।

मनीषितमिति—हि निश्चयेन, मनीषी बुद्धिमान्, स पूर्वोक्त, यक्षराज सुदर्शन, तस्य पूर्वोक्तस्य, कुरूत्तमस्य जीवन्धरस्य, मनीषितमभिलषितम्, ज्ञात्वा बुद्ध्वा, मार्गस्य वर्त्मन, भङ्गीं परम्पराम्, स्फुटत स्पष्टप्रकारेण, अभिधाय निगद्य, तदद्रिसीमाम् तत्पर्वतावधिम्, सम्प्रापयामास लम्भयामास, तमिति शेष ॥१७॥

तदन्विति—तदनु तदनन्तरम्, कुरुवशकेसरी कुरुकुलसिंह, जीवन्धर इति यावत्, केसरीव सिंह इव, तत्र तत्र तेषु तेषु प्रदेशेषु, निर्भय एव भीतिरहित एव, विहरन् विहार कुर्वन्, क्वचित्कुत्रचित्, अतिविततमतिविस्तृत यदनोकहकुल वृक्षसमूहस्तेन विलसित शोभितम्, न सूर्यं पश्यतीत्यसूर्यंपश्य सघनत्वात् सूर्यदर्शनरहितम्, तरक्षवश्च मृगादनाश्च मृगाश्च हरिणाश्चेति तरक्षुमृगास्तेषामधिष्ठान निवासस्थानम्, क्वचन कुत्रापि, तरुषण्डे वृक्षसमूहे, कादम्बिन्या मेघमालाया भ्रान्तिस्सन्देहस्तया, दूरेणोन्नमितो दूरोन्नमित केका मयूरवाणी गर्भे मध्ये यस्य स केकागर्भ, केकागर्भश्चासौ कण्ठश्चेति केकागर्भकण्ठ, दूरोन्नमित केकागर्भकण्ठो यस्य तम्, प्रबलेन दृढेन पुरोवातेन सम्मुखागतवायुना सन्ताडित समाहत शिखण्डो बर्हं यस्य तम्, नीलकण्ठ मयूरम्, कुत्रचित्क्वचित्, महागुल्मान्तरेषु दीर्घस्तम्बमध्येषु कुटुम्बयते वसतीति महागुल्मा-

नीपपादपस्कन्धनिषण्णशुण्डादण्ड करिणीसहाय शुण्डालमण्डलम् , कुत्रचित्स्तनन्धयशिशुसरुद्धा हरिणी भुग्नग्रीवमवलोकयन्त धावमानहरिणम् , कुत्रचन दशनान्तरस्थिततृणकबलच्छेदशब्द नियम्य व्याजिह्माङ्गै कुरङ्गै श्रूयमाणगानकलाप्रवीण किरातस्त्रैणम्, क्वचन गर्जनतर्जितस्तम्बेरमनिचय मृगेन्द्रचयम्, कुत्रचिद्भूधराकारमजगरनिकर पश्यन् , क्रमेणातिलङ्घितविपिनपथ , क्वचिदरण्ये समुद्गतधूमपरीताभ्रङ्कषभूमिरुहतया सजलजलधरश्यामल तरुनिकरमिव कुर्वन्त प्लोषघटचटात्कारेणाट्टहासमिवातन्वानमतिवेगसमाक्रान्तकानन दवदहन ददर्श ।

असूर्यम्पश्येषु प्रचुरतरुषण्डान्तरतल-
प्रदेशेष्वत्यन्त यदुषितमभूदन्धतमसा ।
तदग्नित्रासेनोद्यतमिव तदा धूमपटल
तमालस्तोमाभ गगनतलमालिङ्ग्य ववृधे ॥ १८ ॥

दवानलोद्गता धूम्या महती गगनश्रिया ।
धृतनीलपटीवासौ बभौ व्याप्तदिगन्तरा ॥ १९ ॥

तदानी दवहुताशनपरीत विपिनम् , अनलवृद्धिलिङ्गै विस्फुलिङ्गैरुडुनिकरमिव, देदीप्यमान-

---

न्तरकुटुम्बि, तच्च तच्छबरकदम्बकञ्च भिल्लसमूहश्चेति तत् । कुत्र च क्वापि, नीपपादपाना कदम्बवृक्षाणा स्कन्धेषु प्रकाण्डेषु निषण्ण स्थापित शुण्डादण्ड करदण्डो यस्य तत् । करिणीना हस्तिनीना सहायस्तम्, हस्तिनीसहितमिति यावत्, शुण्डालमण्डल हस्तिसमूहम्, कुत्रचित् क्वचित्, स्तनधयैर्दुग्धपायिभि शिशुभि शावकै सरुद्धा बाधितगमना ताम्, हरिणी मृगीम्, भुग्ना वक्रीकृता ग्रीवा कण्ठो यस्मिन्कर्मणि तद्यथा स्यात्तथा, अवलोकयन्त पश्यन्तम्, धावमानश्चासौ हरिणश्चेति त पलायमानमृगम्, कुत्रचन क्वापि, दशनान्तरे दन्तमध्ये स्थितस्य विद्यमानस्य तृणकबलस्य शष्पग्रासस्य च्छेदशब्द खण्डनध्वनिस्तम्, नियम्य निरुध्य, व्याजिह्माङ्गैरायतशरीरै , कुरङ्गैर्हरिणै , श्रूयमाणाकर्ण्यमाना या गानकला गायनचातुरी तस्या प्रवीण निपुणम्, किरातस्त्रैण शबरस्त्रीसमूहम्, क्वचन क्वापि, गर्जनेन स्वशब्देन तर्जितो भर्त्सित स्तम्बेरमनिचयो हस्तिसमूहो येन तम्, मृगेन्द्रचय सिंहसमूहम्, कुत्रचित्क्वचित्, भूधराकार पर्वताकृतिम्, अजगरनिकर शयुसमूहम् 'अजगरे शयुर्वाहस इत्युभौ' इत्यमर , पश्यन् विलोकयन् , क्रमेण क्रमश , अतिलङ्घितविपिनपथो व्यतिक्रान्तारण्यमार्ग सन्, क्वचित्कुत्रचित्, अरण्ये वने, समुद्गतेन समुत्पतितेन धूमेन धूम्रेण परीता व्याप्ता अभ्रङ्कषभूमिरुहा उत्तुङ्गपादपा येन तस्य भावस्तत्ता तया, तरुनिकर वृक्षसमूहम्, सजलजलधरैर्जलभृतपयोधरै श्यामलमिव मलिनमिव, कुर्वन्त विदधानम्, प्लोषेण दाहेन यश्चटचटात्कारश्चटचटशब्दविशेषस्तेन, अट्टहास सशब्दहास्यम्, आतन्वानमिव विस्तारयन्तमिव, अतिवेगेन प्रबलरयेण समाक्रान्त कानन वन येन तम्, दवदहन वनानलम्, ददर्श विलोयामास ।

असूर्यम्पश्येष्विति—यत्, अन्धतमस गाढतिमिरम्, 'अवसमन्धेभ्यस्तमस ' इत्यच् , सूर्य न पश्यन्तीत्यसूर्यम्पश्यास्तेषु सूर्यप्रकाशरहितेषु, प्रचुरतरुषण्डस्य प्रभूतवृक्षसमूहस्यान्तरतलप्रदेशा मध्यतलस्थानानि तेषु, अत्यन्त प्रचुर यथा स्यात्तथा, उषित कृतनिवासम् , अभूद् बभूव, तदा तस्मिन्काले, अग्नित्रासेन वह्निभयेन, उद्यत समुत्पतितम्, तदिव अन्धतमसमिव, तमालस्तोमाभ कालस्कन्धसमूहसदृशम्, धूमपटल धूम्रसमूह , गगनतल नभ स्थलम्, आलिङ्ग्य समाश्लिष्य, ववृधे वृद्धिंगतो बभूव । उत्प्रेक्षा । शिखरिणीवृत्तम् ।

दवानलोद्गतेति—व्याप्तमाच्छादित दिगन्तर काष्ठान्तराल यया सा, दावानलाद्वनाग्नेरुद्गता समुत्पतिता, महती विशाला, असौ धूमाना समूहो धूम्या धूम्रश्रेणि , गगनश्रिया नभोलक्ष्म्या, धृतनीलपटीव धृतश्यामलसाटिकेव, बभौ शुशुभे । रूपकोत्प्रेक्षे ॥ १९ ॥

तदानीमिति—तदानीं तस्मिन् काले, दवहुताशनेन वनवह्निना परीत व्याप्तम्, विपिन गहनम्, अनलवृद्धेरग्निवृद्धेर्लिङ्गानि चिह्नानि तै , विस्फुलिङ्गैरग्निकणै , उदित समुद्गत उडुनिकरो नक्षत्रसमूहो

कीलाकलापै सन्ध्यारागरञ्जितमिव, धूमस्तोमेन ध्वान्तदन्तुरितमिव, ज्वलज्ज्वलनेन सन्ध्यारक्त-चन्द्रबिम्बचुम्बित नभस्तलमिव, व्यराजत ।

तदा हरिणमण्डल हुतवहाक्रमत्रासतो
विलोलनयनाञ्चलैर्विजितबालनीलोत्पलै ।
दवानलविनाशनप्रथितवेगकूलङ्कषा
कलिन्दगिरिनन्दिनी कलयति स्म कल्लोलिनीम् ॥ २० ॥

तदनु धूमस्तोमचुङ्कारेण ज्वालाकलापफटफटात्कारेण शबरजनहाहाकारेण तन्मध्यनिरुद्ध-सत्त्वयूथार्तविरावेण च बधिरीकृतदिशावशावल्लभे हुताशसन्त्रासधावमानवनदेवताशिथिलकबरी-निकरपरिशीलितसाम्यया धूम्ययान्धीकृतसकललोके वैश्वानरे विजृम्भिते, भाविमेघपटलशम्पागर्जि-तानि धूमस्तोमज्वालादहनचटचटात्कारै परिहसदिव काननमराजत ।

अनेकपकुल तत्र दह्यमान दवाग्निना ।
त्रातुमैच्छद्दयापूरजलधि कुरुकुञ्जर ॥ २१ ॥
तस्याकूतमवेत्य यक्षपतिना वेगेन सङ्कल्पिता
जीमूता वियदङ्गणे परिणता धूमप्रकारा इव ।

---

यस्मिस्तद्वत् देदीप्यमाना जाज्वल्यमानाश्च ते कीलाकलापाश्च ज्वालासमूहाश्चेति तै , सन्ध्यारागेण पितृप्रसू-कालिकारुणिम्ना रञ्जितमिव लोहितीकृतमिव, धूमस्तोमेन तम समूहेन, ध्वान्तदन्तुरितमिव तिमिरव्याप्तमिव, ज्वलज्ज्वलनेन ज्वलद्वह्निना,, सन्ध्यारक्त सन्ध्यालोहित यच्चन्द्रबिम्बमिन्दुमण्डल तेन चुम्बित सहितम्, नभस्तलमिव गगनतलमिव, व्यराजत व्यशोभत ।

तदा हरिणमण्डलमिति—तदा तस्मिन् काले, हरिणमण्डल कुरङ्गसमूह , हुतवहस्य दावानलस्या-क्रम आक्रमण तस्मात् त्रासो भय तस्मात्, विजितानि शोभया पराजितानि बालनीलोत्पलानि नवनीलनलि-नानि यैस्तै , दवानलेन वनवह्निना यद्विनाशन नाशस्तेन प्रथितो वृद्धिङ्गतो यो वेगो रयस्तेन कूलङ्कषा तटघर्षिणी ताम्, कलिन्दगिरिनन्दिनी यमुनाम्, कल्लोलिनी सरितम्, कलयति स्म समुत्पादयामास । दवानलदाहाद्भिभीतो हरिणसमूह स्वस्य नीलनीलैर्नयनाञ्चलै कानन श्यामलञ्चकारेति भाव , पृथ्वी-वृत्तम् ॥ २० ॥

तदन्विति—तदनु तदनन्तरम्, धूमस्तोमस्य धूम्रसमूहस्य चुङ्कारेणाव्यक्तशब्दविशेषेण, ज्वालाक-लापस्यार्चि समूस्य फटफटात्कारेणाव्यक्तशब्दविशेषेण, शबरजनस्य भिल्लजनस्य हाहाकारेण दु खसूचक-शब्दविशेषेण, तन्मध्ये दावानलमध्ये निरुद्ध सरुद्धगमन यत्सत्त्वयूथ प्राणिसमूहस्तस्यार्तविरावेण दु ख शब्देन च, बधिरीकृता श्रवणशक्तिशून्यीकृता दिशावशावल्लभा काष्ठाकरिणो येन तस्मिन्, हुताशसन्त्रासेन पावकभयेन धावमाना पलायमाना या वनदेवता काननाधिष्ठातृदेव्यस्तासा शिथिल स्रसमानो य कबरीनिकर केशपाशसमूहस्तेन परिशीलितमनुभूत साम्य सादृश्य यया तया, धूमाना समूहो धूम्या तया धूमसमूहेन, अन्धीकृता विलोकनसामर्थ्यशून्यीकृता सकललोका निखिलजना येन तस्मिन्, वैश्वानरे वह्नौ, विजृम्भिते वृद्धिङ्गते सति, धूमस्तोमश्च धूम्रसमूहस्य, ज्वालाश्चार्चीषि च दहनचटचटात्काराश्च पावकाव्यक्त शब्दविशेषाश्चेति धूमस्तोमज्वालादहनचटचटाकारास्तै , भाविमेघपटलञ्च शम्पा च गर्जितश्चेति भाविमेघ पटलशम्पागर्जितानि भविष्यद्वारिदसमूहसौदामिनीस्तनितानि, परिहसदिव विडम्बयदिव, कानन वनम्, अराजत शुशुभे ।

अनेकपकुलमिति—दयापूरस्य कारुण्यप्रवाहस्य जलधि सागर कुरुकुञ्जरो जीवन्धर , तत्र कानने, दवाग्निना वनानलेन, दह्यमान प्लुष्यमाणम्, अनेकपकुल हस्तिसमूहम् त्रातु रक्षितुम्, ऐच्छत् वाञ्छति स्म ॥२१॥

तस्याकूतमिति—तस्य जीवन्धरस्य आकूतमभिप्रायम्, अवेत्य ज्ञात्वा, यक्षपतिना सुदर्शनेन, वेगेन रयेण शीघ्रमिति यावत् । सङ्कल्पिता रचिता वियदङ्गणे नभश्चत्वरे, परिणता परिणाम प्राप्ता , धूम्रप्राकारा

उद्यद्गर्जितपातिताखिलमहादिग्भित्तयस्तत्क्षण
वर्षं हर्षितजीवका विदधिरे कल्पान्तमेघायिता ॥ २२ ॥
यक्षेन्द्रकल्पितघनाघनमण्डल त-
च्चक्रेऽभिषेचनमरण्यगजव्रजस्य ।
वारानिधेर्विमलशीतपय प्रवाहै-
र्यक्षाधिराज इव कौरवकुञ्जरस्य ॥२३॥

तथा हि—

सौदामिनीसुभगनर्तकरीवितान-
मभ्र शिखावलकुल पटुवन्दिवर्गं ।
मेघारव सकलवाद्यरवस्तरूणा
गुच्छा समीरचलिता किल चामराणि ॥२४॥

तदनु परिरक्षितानि शुण्डालमण्डलानि तरुषण्डानि च विटपससक्तबिन्दूत्करनिपतनव्याजेनानन्दबाष्पमुकुलान्युत्सृजन्ति विलोकमान, सन्तोषेण तस्माद्वनान्निर्गत्य, तत्र तत्र मानुषरूपिण्या धर्मरक्षिण्या यक्षिण्या परिचर्यमाण, तीर्थस्थानानि पूजयन्, क्रमेण कुरुमल्ल पल्लवदेशमानशे ।

सञ्चरस्तत्र सन्तोषात्पञ्चबाण कुरूत्तम ।
धावमानानभिमुख ददर्श पथि काश्चन ॥२५॥

---

इव धूम्रशाला इव स्थिता, उद्यद्गर्जितेन समुद्भवत्स्तनितेन पातिता खण्डिता अखिला समस्ता महादिग्भित्तयो महाकाष्ठाकुड्या यैस्ते, हर्षिता प्रसादिता जीवा दावानलपतिता प्राणिनो यैस्त इति हर्षितजीवका, हर्षितो जीवको जीवन्धरो यैस्त इति वा, कल्पान्तमेघा इव प्रलयवारिदा इवाचरिता इति कल्पान्तमेघायिता, जीमूता मेघा, तत्क्षण तत्कालम्, वर्षं वृष्टिम्, विदधिरे चक्रिरे। शार्दूलविक्रीडित वृत्तम् ॥२२॥

यक्षेन्द्रेति—तत् पूर्वोक्तम्, यक्षेन्द्रेण सुदर्शनेन कल्पित निर्मापित यद् घनाघनमण्डल मेघसमूहस्तत्, वारानिधे सागरस्य, विमलशीतपय प्रवाहैर्निर्मलशिशिरसलिलपूरै, कौरवकुञ्जरस्य जीवन्धरस्य, यक्षाधिराज इव सुदर्शन इव, अरण्यगजव्रजस्य काननकरिकलापस्य, अभिषेचन परित स्नपनम्, चक्रे विदधे। उपमा। वसन्ततिलकावृत्तम् ॥२३॥

तथाहि—तदेव स्पष्टीकुरुते ।

सौदामिनीति—सौदामिनी तडित्, सुभगनर्तकरी मनोज्ञलासिका, अभ्र गगन मेघो वा, वितानमुल्लोच, शिखावलकुल मयूरसमूह पटुवन्दिवर्गो विदग्धमागधगण, मेघारवो घनाघननाद, सकलवाद्यरवो निखिलवादित्रसमूह, तरूणा वृक्षाणाम्, समीरचलिता पवनप्रकम्पिता गुच्छा स्तवका, चामराणि बालव्यजनानि, बभूवुरिति शेष, किलेति वार्तायाम् ॥२४॥

तदन्विति—तदनु वर्षानन्तरम्, परिरक्षितानि परित्रातानि, शुण्डालमण्डलानि हस्तिसमूहान्, विटपससक्ता शाखालग्ना ये बिन्दूत्करा पृषतासमूहास्तेषा व्याजेन दम्भेन, आनन्दबाष्पमुकुलानि हर्षाश्रुकुड्मलानि, उत्सृजन्ति त्यजन्ति, तरुषण्डानि च वृक्षसमूहांश्च, विलोकमान पश्यन्, सन्तोषेण हर्षेण, तस्मात् दवानलाधिष्ठितपूर्वात्, वनात् काननात्, निर्गत्य बहिरागत्य, तत्र तत्र तेषु तेषु स्थानेषु, मानुषरूपिण्या मनुष्याकारधारिण्या, धर्मरक्षिण्या जिनशासनरक्षिकया, यक्षिण्या व्यन्तरदेव्या, परिचर्यमाण समुपास्यमान, तीर्थस्थानानि पुण्यक्षेत्राणि, पूजयन् वन्दमान, कुरुमल्लो जीवन्धर, क्रमेण क्रमश, पल्लवदेश पल्लवाभिधानजनपदम्, आनशे प्राप ।

सञ्चरन्निति—तत्र पल्लवजनपदे, सन्तोषान्मोदात्, सञ्चरन् विहरन्, पञ्चबाण कामदेव, कुरूत्तमो जीवन्धर, पथि मार्गे, अभिमुख सम्मुखम्, धावमानान् वेगेन गच्छत, काश्चन कानपि जनान्, ददर्श विलोकयामास ॥२५॥

तेऽपि त कुरुवर प्रभोज्ज्वल वीक्ष्य विस्मयनिमग्नमानसा ।
प्राप्य तस्य सविध प्रमोदत प्रश्रयेण मधुरा गिरमाहु ॥२६॥

कुवलयाह्लादसन्दायकोऽपि निखिलमहीभृन्महितपादोऽपि भवानदोषाकरतया न सुधाकर, पद्मोल्लासनपटुरपि सन्मार्गाश्रितोऽपि सद्विरोधाभावेन न प्रभाकर, सुमनोवृन्दवन्दितोऽपि क्षमाभृदनुकूलतया न पुरन्दर, कुशाग्रनिकाशमतिरपि मौढ्यविरहेण न सुरगुरु ।

इत्यादिस्तुतिविस्तारान्परिपप्रच्छ ताञ्जनान् ।
कत्या के यूयमित्येव कुरुवीर कुतूहलात् ॥२७॥

इति जीवन्धरेण पृष्टास्तेऽप्येवमवोचन्त—

अत्रास्ति चन्द्राभपुरी प्रसिद्धा यथार्थनाम्नी घनवज्रसौधै ।
अभ्रलिहैरम्बुजसम्भवस्य निर्माणनैपुण्यविलाससीमा ॥२८॥

यस्या निशाया मदिरेक्षणाना कपोलदेशे प्रतिबिम्बदम्भात् ।
मुखाब्जकान्तेरपहारसक्त समागतश्चन्द्र इवाबभासे ॥२९॥

यत्सालरत्नकान्तीना पटलेनेव तर्जित ।
भानुर्ध्वजपटच्छन्नो भाति प्रविरलातप ॥३०॥

---

तेऽपीति—तेऽपि धावमाना जना अपि, प्रभोज्ज्वल दीप्त्युत्कटम्, त कुरुवर जीवन्धरम्, वीक्ष्य दृष्ट्वा, विस्मयेऽद्भुते निमग्न ब्रुडित मानस चित्त येषा तथाभूता सन्त, प्रमोदतो हर्षात्, तस्य कुरुवरस्य, सविधमभ्यर्णम्, प्राप्य लब्ध्वा, प्रश्रयेण विनयेन, मधुरा मनोहारिणीम्, गिर वाणीम्, आहुरूचु । स्वागतारथोद्धतयोर्मेलनादुपजातिवृत्तम् ॥२६॥

कुवलयाह्लादेति—भवास्त्वम्, कुवलयाह्लादस्य नीलकमलानन्दस्य पक्षे महीमण्डलानन्दस्य सन्दायकोऽपि प्रदायकोऽपि, निखिलमहीभृद्भि समग्रपर्वतै पक्षे समग्रनृपतिभि महितपादोऽपि पूजितकिरणोऽपि पक्षे पूजितचरणोऽपि, अदोषाकरतया अरजनीकरतया पक्षेऽनवद्यगुणखनितया, न सुधाकरश्चन्द्र, पद्मानां कमलाना पक्षे पद्माया कमलाया उल्लासने विकासने विहर्षणे च पटुरपि दक्षोऽपि, सता नक्षत्राणा पक्षे साधूना मार्ग पन्था, गगन समीचीनमार्गश्च तेनाश्रितोऽपि सेवितोऽपि, सद्विरोधाभावेन नक्षत्रविरोधाभावेन पक्षे सज्जनविद्वेषाभावेन, न प्रभाकर सूर्य, सुमनोवृन्दवन्दितोऽपि देवसमूहवन्दितोऽपि पक्षे विद्वत्समूहवन्दितोऽपि, क्षमाभृदनुकूलतया पर्वतानुकूलत्वेन पक्षे नृपानुकूलत्वेन, न पुरन्दर पुरुहूत, कुशाग्रनिकाशमतिरपि दर्भाग्रसदृशबुद्धिरपि तीक्ष्णबुद्धियुक्तोऽपीति यावत्, मौढ्यानां शिष्याणां पक्षे मौढ्यस्य मूर्खत्वस्य विरहेणाभावेन, न सुरगुरुर्बृहस्पति, अस्तीति शेष, श्लेषमूलकविरोधाभासोऽलङ्कार ।

इत्यादीति—इत्यादिश्चासौ स्तुतिश्चेतीत्यादिस्तुतिस्ता विस्तारयन्तीतीत्यादिस्तुतिविस्तारास्तान् पूर्वोक्तप्रकारकस्तवनविस्तारकान्, तानभिमुख धावमानान् जनान् पुरुषान्, कुरुवीर सात्यन्धरि, यूय भवन्त के किन्नामान कत्या क्वभवाश्च, स्थेति शेष, इत्येवमित्थम्, कुतूहलात्कुतुकात्, परिपप्रच्छ पृच्छति स्म ॥२७॥

इति जीवन्धरेणेति—इत्थेव प्रकारेण जीवन्धरेण सत्यन्धरसूनुना, पृष्टा अनुयुक्ता, ते जना अपि, एव वक्ष्यमाणप्रकारेण, अवोचन्त कथयामासु ।

अत्रास्तीति—अत्र देशे, अम्बुजसम्भवस्य वेधस, निर्माणे रचनाया यो नैपुण्यविलासश्चातुर्यचमत्कारस्तस्य सीमावधि, अभ्र लिहैर्गगनचुम्बिभि, घनानि निबिडानि वज्राणि हीरकाणि येषु ते घनवज्रा, ते च ते सौधाश्च राजभवनानि चेति घनवज्रसौधास्तै, यथार्थं सार्थक नाम नामधेय यस्यास्तथाभूता प्रसिद्धा प्रख्याता, चन्द्राभपुरी तन्नाम्नी, नगरी, अस्ति विद्यते ॥२८॥

यस्यामिति—यस्या चन्द्राभपुर्याम्, निशाया रजन्याम्, मदिरेक्षणाना सुलोचनानाम्, कपोलदेशे गण्डप्रान्ते, प्रतिबिम्बस्य प्रतिकृतेर्दम्भो व्याजस्तस्मात्, समागत उपस्थित, चन्द्रो विधु, मुखाब्जकान्तेर्वदनारविन्ददीप्ते, अपहारे चौर्ये सक्तो लग्न इत्यपहारसक्त स इव, आबभासे शुशुभे । उत्प्रेक्षा ॥२९॥

यत्सालेति—ध्वजाना वैजयन्तीना पटेन वस्त्रेण, छन्नो व्याप्त, भानु सूर्य, यस्या सालो यत्साल

ता पालयत्यमरराजसमानकीर्ति
शौर्याकरो धनपतिप्रथितो महीश ।
श्रीमानहीनवपुरप्यभुजङ्गलीलो
मित्रानुरागसहितोऽपि कलाधरेच्छ ॥ ३१ ॥

श्रीराजकशिरोरत्नकान्तिबालातपाञ्चितम् ।
यस्य पादाम्बुज भाति नखचन्द्रिकयोज्ज्वलम् ॥ ३२ ॥

तिलोत्तमेति विख्याता तस्य कान्ता मनोरमा ।
विरामभूमि कान्तीनामनूनगुणभूषणा ॥ ३३ ॥
कान्त्या विजितपद्मास्ति तयो पद्मेति नन्दिनी ।
शिरीषसुकुमाराङ्गी कठिनस्तनकुड्मला ॥ ३४ ॥

कदाचिदेपा त्रिभुवनललामवल्ली विहाराय वनमागता तत्र-तत्र सखीभि सह विहरन्ती रोमराजिलतया वेण्या च मामिय निराकरोतीति कृतविद्वेषेणेवाशीविषेण दष्टा विदितवृत्तान्तेन

---

तस्य रत्नानि, तेषा कान्तयस्तासा यदीयप्राकारमणिदीप्तीनाम्, पटलेन समूहेन, तर्जित इव भर्त्सित इव, प्रविरलोऽल्प आतपो घर्मो यस्य तथाभूत , भाति शोभते । उत्प्रेक्षा ॥३०॥

ता पालयतीति—ता चन्द्राभपुरीम्, अमरराजेन देवेन्द्रेण समाना सदृशी कीर्तिर्यशो यस्य स , शौर्यस्य पराक्रमस्याकर खनि , श्रीमान् लक्ष्मीयुक्त , अहीना नागानामिन स्वामीत्यहीनो नागराजस्तस्य वपुरिव वपु शरीर यस्य तथाभूतोऽपि सन् , अविद्यमाना भुजङ्गस्य नागस्य लीला शोभा यस्येति विरोध , पक्षे न हीनमहीनम्, अहीन वपुर्यस्य तथाभूतोऽपि समुत्कृष्टशरीरोऽपि सन्, नास्ति भुजङ्गस्येव विटस्येव लीला क्रीडा यस्य स , मित्रे सूर्येऽनुरागो मित्रानुरागस्तेन सहितोऽपि युक्तोऽपि, कलाधरे चन्द्रमसीच्छा वाञ्छा यस्य तथाभूत इति विरोध , पक्षे मित्रेषु सुहृत्स्वनुराग प्रेम तेन सहितोऽपि युक्तोऽपि कलाधरेषु वैदग्धीधारकेषु इच्छानुरागातिशयो यस्य तथाभूत , धनपतिरिति प्रथित प्रख्यातो धनपतिप्रथित , महीशो नृप , पालयति रक्षति । श्लेषमूलकविरोधाभासोऽलङ्कार । वसन्ततिलकावृत्तम् ॥३१॥

श्रीराजकेति—श्रीराजकस्य लक्ष्मीललितनृपालसमूहस्य शिरोरत्नानि मौलिमणयस्तेषा कान्तिरेव दीप्तिरेव बालातप प्रात कालिकधर्मस्तेनाञ्चित शोभितम्, यस्य धनपते , पादाम्बुज चरणकमलम्, नख चन्द्रिकया नखरज्योत्स्नया, उज्ज्वल प्रदीप्त सत्, भाति शोभते ॥३२॥

तिलोत्तमेति—तस्य धनपतिमहीपते , मनोरमा मनोहारिणी, कान्तीना दीप्तीनाम्, विरामभूमि- विश्राममही, अनूना उत्कृष्टा गुणा दयादाक्षिण्यादय एव भूषणान्याभरणानि यस्या सा, 'तिलोत्तमा,' इति विख्याता प्रसिद्धा, कान्ता प्रेयसी, अस्तीति शेष ॥३३॥

कान्त्येति—तयोर्धनपतितिलोत्तमयो , कान्त्या शोभया, विजितानि पराभूतानि पद्मानि कमलानि यया सा, शिरीष इव कपीतन इव सुकुमार मृदुलमङ्ग शरीर यस्या सा 'शिरीषस्तु कपीतन ' इत्यमर , कठिनौ कठोरस्पर्शौ स्तनकुड्मलौ वक्षोजमुकुलकौ यस्या सा, पद्मेति 'पद्मा' इति नाम्नी, नन्दिनी पुत्री, अस्ति विद्यते ॥३४॥

कदाचिदिति—कदाचिज्जातुचित्, त्रिभुवनललामवल्ली त्रिलोक्याभरणलता, एषा पद्मा, विहाराय क्रीडायै, वनमुद्यानम्, आगता प्राप्ता, तत्र तत्र तेषु तेषु प्रदेशेषु, सखीभिर्वयस्याभि , सह साकम्, विहरन्ती विहार कुर्वन्ती क्रीडन्ती वा, इय पद्मा, रोमराजिलतया लोमलेखावल्लया, वेण्या च कबर्या च, मामाशीविषम्, निराकरोति तिरस्करोति, इति हेतुना, कृतो विहितो विद्वेषो वैर येन तथाभूतेनेव, आशीविषेण नागेन, दष्टा दशनविषयी कृता, विदितो वृत्तान्तो येन तेन विज्ञातसमाचारेण, महती चिन्ता यस्य तेन दीर्घचिन्तावता, भूकान्तेन महीपतिना, कारिता विधापिताम्, इमा कन्याम्, निर्विषीकुर्वते निर्गरलीकुर्वते, जनायेति शेष ,

महाचिन्तेन भूकान्तेन कारितामिमां निर्विषीकुर्वते दास्यते सार्धराज्या कन्यकेति घोषणां निशम्य समागतैर्विषवैद्यैश्चिकित्सितापि नोल्लाघतामाससाद ।

पद्मापि गौरी नरपालपुत्री मध्येन हीनापि सुमध्यमा सा ।
भुजङ्गदष्टा बत कन्यकापि विभाति सौख्यादिव मीलिताक्षी ॥ ३५ ॥

भवता विषविज्ञानमस्ति चेन्निस्तुलप्रभम् ।
निर्विषीक्रियतामद्य कन्यारत्नं धरापते ॥ ३६ ॥

इति तेषां वचनमाकर्ण्य किंचिदस्तीति प्रत्युत्तरेण तान्कलकलेन केकिन इव जलधरो जीवन्धरः सम्मोदयन्, तैरनुगम्यमानो राजभवनमासाद्य नगरमोहनाङ्गीं सगरमोहनाङ्गीं वयसा विषेण च श्यामाङ्गतया मालतीलतासर्वसाम्यमनुभवन्तीं म्लानाम्बुजसन्निभभालां निष्पिष्टबालमृणालसमितभुजयुगलां श्वसितकम्पितघनस्तनकुड्मलां नरपालबालामवलोक्य पञ्चशरप्रहारवञ्चितेन मनसा यक्षराजस्य स्मरन्नभिमन्त्रयामास ।

तावन्मोहेन मुक्ता नरपतिदुहिता चन्द्रिकेव ग्रहेण
धूमेनाग्नेः शिखेवाचलघनतमसा मुच्यमानेव राका ।

---

अर्धराज्येन सहिता सार्धराज्या, कन्यका पुत्री, दास्यते प्रदत्ता भविष्यति, इत्येवम्प्रकाराम्, घोषणामुच्चैर्घुष्टम् 'उच्चैर्घुष्टं तु घोषणा' इत्यमरः, निशम्य श्रुत्वा, समागतैः समायातैः, विषवैद्यैर्नरेन्द्रैः, चिकित्सितापि कृतभैषज्यापि, उल्लाघतां नीरोगताम्, नाससाद न प्राप ।

पद्मापीति—पद्मापि लक्ष्मीरपि गौरी कात्यायनीति विरोधः, पक्षे पद्मापि पद्मेत्यभिधानापि गौरी गौरवर्णा, मध्येनावलग्नेन हीनापि रहितापि सुमध्यमा सुन्दरावलग्नवतीति विरोधः, पक्षे मध्येन हीनापि कृशमध्यापि, अथवा मध्येन अधमेन हीनापि सुमध्यमा, 'मध्यं न्याय्येऽवकाशे च मध्यमं यस्थिते त्रिषु । लग्नकेऽप्यधमे मध्यमस्त्रियामवलग्नके' इति विश्वलोचनः, कन्यकाप्यजातपाणिग्रहापि भुजङ्गेन विटेन दष्टा कृतदन्तक्षतेति विरोधः, पक्षे भुजङ्गेन नागेन दष्टा दशनविषयीकृता, 'भुजङ्गो भुजगो षिङ्गे' इति विश्वलोचनः, सा पूर्वोक्ता, नरपालपुत्री राजपुत्री, सौख्यादिवानन्दातिरेकादिव, मीलिताक्षी निमीलितनयना, विभाति शोभते । विरोधाभासोऽलङ्कारः ॥३५॥

भवतामिति—चेद्यदि, भवता श्रीमताम्, निस्तुलप्रभमनुपमम्, विषविज्ञानं गरलापहारबोधः, अस्ति विद्यते, तर्हि, धरापते पृथ्वीपालस्य, कन्यारत्नं पुत्रीश्रेष्ठा, अद्यास्मिन् दिवसे, निर्विषीक्रियताम्, गरलशून्यीक्रियताम् ॥३६॥

इति तेषामिति—इति पूर्वोक्तप्रकारम्, तेषां जनानाम्, वचनं वाणीम्, आकर्ण्य श्रुत्वा, किञ्चित्किमपि, अस्ति विद्यते, इति प्रत्युत्तरेण इति प्रतिवचनेन, कलकलेन गर्जनेन, केकिनो मयूरान्, जलधर इव मेघ इव, तान् जनान्, सम्मोदयन् हर्षयन्, जीवन्धरो विजयासूनुः, तैः पुरुषैः, अनुगम्यमानोऽनुव्रज्यमानः, सन्, राजभवनं नरेन्द्रमन्दिरम्, आसाद्य प्राप्य, गरेण विषेण मोहनाङ्गी मूच्छितशरीरा न भवतीति नगरमोहनाङ्गी तां तथाभूतामपि गरेण सहिता सगरा सविषा, सगरा चासौ मोहनाङ्गी चेति सगरमोहनाङ्गी तामिति विरोधः । पक्षे नगरमोहनं पौरजनमोहोत्पादकमङ्गं शरीरं यस्यास्तामिति, वयसा दशया, विषेण च गरलेन च, श्यामाङ्गतया यौवनोपलक्षितशरीरतया पक्षे नीलशरीरतया च, मालतीलताया मल्लीवल्ल्या सर्वसाम्यं सर्वसादृश्यम्, अनुभवन्तीं प्राप्नुवानाम्, म्लानाम्बुजसन्निभो म्लानकमलकल्पो भालो निटिलो यस्यास्ताम्, निष्पिष्टं निर्मर्दितं यद्बालमृणालं मृदुबिसं तेन सम्मितं भुजयुगलं बाहुयुगं यस्यास्ताम्, श्वसितेन श्वासेन कम्पितौ वेपितौ घनस्तनकुड्मलौ पीनवक्षोजमुकुलकौ यस्यास्ताम्, नरपालबालां राजदुहितरम्, अवलोक्य दृष्ट्वा, पञ्चशरप्रहारेण कामाघातेन वञ्चितं प्रतारितं तेन, मनसा चेतसा यक्षराजस्य सुदर्शनस्य, स्मरन् स्मरणं कुर्वन् 'अधीगर्थदयेशां कर्मणि' इति षष्ठी, अभिमन्त्रयामास मन्त्रप्रयोगञ्चकार ।

तावन्मोहेनेति—तावत् तावता कालेन, ग्रहेण राहुणा, मुक्ता त्यक्ता, चन्द्रिकेव ज्योत्स्नेव, धूमेन

आकाशस्येव लक्ष्मीरसितजलमुचा शैवलेनेव गङ्गा
सेयं विद्युन्निकाशा सविधगतजनानन्दिनी द्रागुदस्थात् ॥ ३७ ॥

पित्रोरानन्दिनी सेऽय चन्द्रिकेव चकोरयो ।
जीवन्धरस्य नयने सुखयामास सादरम् ॥ ३८ ॥

तावदानन्दमकरन्दोद्गारिमन सरोजेन क्षोणीपालकेन सविधमानीय कृतनुतिवचनेन मणिमयामनमधिरोपित स्वामी जीवन्धर सप्रश्रय सम्भावितस्तत्क्षणमेव रूपलक्षणादिना राजवश्योऽयमिति सजज्ञे ।

आहूय कार्तान्तिकमुख्यवृन्द क्षोणीपति ससदि निश्चिकाय ।
शुभ मुहूर्त स समादिशच्च विवाहसन्नाहविजृम्भणाय ॥ ३९ ॥

तदनु मणितोरणपताकाकलशदर्पणादिभिरलङ्कृतासु नगररथ्यासु परिकल्पिते विविधरत्नस्तम्भचक्रचकितपरिणयमण्डपे तत्र विचित्रतया विरचिताया मङ्गलद्रव्यसङ्गताया मणिवेदिकाया क्षितिपतिरुपयममङ्गल विधातुमारेभे ।

---

धूम्रेण मुक्ता, अग्नेरनलस्य, शिखेव ज्वालेव, अचलघनतमसा सुस्थिरनिविडध्वान्तेन, मुच्यमाना त्यज्यमाना, राकेव पौर्णमासीव, असितजलमुचा कृष्णवारिदेन, मुच्यमाना, आकाशस्य गगनस्य, लक्ष्मीरिव श्रीरिव, शैवलेन जलनील्या, मुच्यमाना, गङ्गेव भागीरथीव, मोहेन मूर्च्छया, मुक्ता त्यक्ता, विद्युन्निकाशा तडित्सदृशी, इयं सा पूर्वोक्ता, नरपतिदुहिता राजपुत्री, सविधगतजनान् निकटस्थपुरुषान् आनन्दयतीत्येवं शीलेति सविधगतजनानन्दिनी सती, द्राग् झटिति, उदस्थादुत्तिष्ठति स्म, शयनादिति शेष । मालोपमा, शार्दूलविक्रीडित छन्द ॥ ३७ ॥

पित्रोरिति—चकोरयोर्जीवञ्जीवयो, चन्द्रिकेव कौमुदीव, पित्रोर्जननीजनकयो, आनन्दिनी समाह्लादिनी, इय सा प्रसिद्धा पद्मा, सादर ससन्मान यथा स्यात्तथा, जीवन्धरस्य सात्यन्धरे, नयने लोचने, सुखयामास समाह्लादयामास । उपमा ॥ ३८ ॥

तावदिति—तावत् तत्क्षणम्, आनन्दो हर्ष एव मकरन्द पुष्परसस्तस्योद्गारि प्रकटयितृ मन सरोज चेतोऽरविन्द यस्य तेन, कृत विहित नुतिवचन स्तुतिवचन येन तेन, क्षोणीपालकेन नृपेण, सविध समीपम्, आनीय प्रापय्य, मणिमयासन रत्नविष्टरम्, अधिरोपितोऽधिष्ठापित, सप्रश्रय सविनयम्, सम्भावित सन्मानित स्वामी जीवन्धर सात्यन्धरि, अयमेष, राजवश्य क्षत्रियकुलोत्पन्न, इत्येवम्, रूपलक्षणादिना सौन्दर्यलिङ्गाग्निना, तत्क्षणमेव तत्कालमेव, सजज्ञे ज्ञात । कर्मणि प्रयोग ।

आहूयेति—स पूर्वोक्त, क्षोणीपतिर्धनपतिमहीपाल कार्तान्तिकेषु ज्योतिर्विद्सु मुख्या प्रधानास्तेषा वृन्द समूहम्, आहूय समाकार्य, ससदि सभायाम्, शुभमुत्तमम्, मुहूर्त कालम्, निश्चिकाय निरचैषीत् 'विभाषा चे' इत्यभ्यासात्परस्य कुत्वम्, विवाहस्य पाणिग्रहणस्य सन्नाह सामग्र्यादिसज्जीकरण तस्य विजृम्भण वर्धन तस्मै, समादिशच्च समाज्ञातवाँश्च, भृत्यानिति शेष ॥ ३९ ॥

तदन्विति—तदनु तदनन्तरम्, मणितोरणानि च रत्नतोरणानि च पताकाश्च केतवश्च, कलशाश्च मङ्गलघटाश्च, दर्पणाश्च मुकुराश्चेति मणितोरणपताकाकलशदर्पणास्त आदौ येषा तै, अलङ्कृतासु शोभितासु, नगररथ्यासु पुरप्रधानवीथीषु सतीषु, परिकल्पिते निर्मिते, विविधरत्नस्तम्भाना नैकविधमणिमयस्तम्भाना चक्रेण समूहेन चकितश्शोभितो यो परिणयमण्डपो विवाहमण्डपस्तस्मिन्, विचित्रतया समद्भुतरीत्या, विरचिताया निर्मितायाम्, मङ्गलद्रव्यै काञ्चनकलशादर्शतालवृन्तादिमङ्गलपदार्थैं सङ्गता सहिता तस्याम्, तत्र प्रसिद्धायाम्, मणिवेदिकाया रत्नमयवितर्दिकायाम्, क्षितिपतिर्नृप, उपयममङ्गल विवाहमङ्गलम्, विधातु कर्तुम्, आरेभे समारब्धवान् ।

नरपालसुता स्नाता प्रसाधनगृहाङ्गणे ।
प्रसाधयितुमारेभे प्रहर्षेण सखीजन ॥ ४० ॥

कलशजलधिवेलालोलडिण्डीरखण्डा-
यितमृदुवसनेनावेष्टिता राजपुत्री ।
शरदमलघनालीशोभितेवेन्दुरेखा
सुरतरुनववल्ली पुष्पितेवाबभासे ॥ ४१ ॥

पादाम्बुजोल्लसितहीरकनूपुरश्री-
राविर्बभूव नखचन्द्रिरसेवनाय ।
तारावलि पदसमीपगतेव तस्या-
स्तारुण्यवीरुध इवापतिता सुमालि ॥ ४२ ॥

तस्या गुरुजघनशोभितरशना मदनराजधानी कनकप्राकारावलिरिव मारमहानिधिनिधानवेष्टितभुजगीव मीनकेतनोपवनवृतिसुरतरुवल्लीव व्यराजत ।

हार किं वा सकलनयनाहार एवाम्बुजाक्ष्या
यद्वा वक्षोरुहगिरिपतन्निर्झरस्यैष पूर ।
किं वा तस्या स्तनमुकुलयो कोमलश्रीमृणालो
भाति स्मैव विशयवशत स्त्रीजनै प्रेक्ष्यमाण ॥ ४३ ॥

नासामणिर्वक्त्रपयोजमध्यविभासुरोऽय जलबिन्दुरेव ।
आहोस्विदस्या नवमौक्तिकं किं नासाख्यवशाद्गलित गरिष्ठम् ॥ ४४ ॥

---

नरपालसुतामिति—सखीजनो वयस्यसमूह , स्नाता कृतमङ्गलस्नानाम्, नरपालसुता नृपतिपुत्रीम्, पद्मामिति यावत्, प्रसाधनगृहस्याभरणादिधारणनिकेतनस्याङ्गणे चत्वरे, प्रहर्षेण सम्मदातिशयेन, प्रसाधयितुमलङ्कर्तुम्, आरेभे प्रारब्ध ॥ ४० ॥

कलशेति—कलशजलधे क्षीरसागरस्य वेलाया तट्या लोलश्चपलो यो डिण्डीरखण्ड फेनशकलस्तद्वदाचरित यन्मृदुवसन कोमलवस्त्र तेन, आवेष्टिता परिवृता, राजपुत्री पद्मा, शरदो जलदान्तर्तोरमलघनाल्या सितवारिदपङ्क्त्या शोभिता समुद्भासितेति शरदमलघनालीशोभिता, इन्दुरेखेव, चन्द्ररेखेव, पुष्पिता कुसुमिता, सुरतरुनववल्लीव कल्पवृक्षनूतनलतेव, आबभासे शुशुभे, । मालोपमा, मालिनीवृत्तम् ॥ ४१ ॥

पादाम्बुजेति—तस्या पद्माया , पदाम्बुजयोश्चरणकमलयोरुल्लसिता शोभिता या हीरकनूपुराणा हीरकमञ्जीराणा श्री शोभा सा, नखचन्द्रिरसेवनाय नखरेन्दुसमाराधनाय, पदसमीपगता चरणाभ्यर्णप्राप्ता, तारावलिरिव नक्षत्रपङ्क्तिरिव, यद्वा, तारुण्यवीरुधो यौवनलताया , आपतिता समन्ता पतिता, सुमालिरिव पुष्पश्रेणिरिव, आविर्बभूव प्रकटिताभून् । रूपकोत्प्रेक्षे । वसन्ततिलकावृत्तम् ॥ ४२ ॥

तस्या इति—तस्या राजपुत्र्या , गुरुजघने स्थूलनितम्बे शोभिता समुद्भासिता या रशना मेखला सा मदनराजधान्या कामराजधान्या कनकप्राकारावलिरिव सुवर्णसालपङ्क्तिरिव मारस्य मन्मथस्य महानिधिनिधाने महानिधिकोशे वेष्टिता परित स्थिता या भुजगी नागी तद्वत् । मीनकेतनस्य प्रद्युम्नस्य यदुपवनमुद्यान तस्य या वृतिरावरण तस्या सुरतरुवल्लीव कल्पानोकहलतेव, व्यराजत व्यशोभत । उत्प्रेक्षा ।

हार इति—अम्बुजाक्ष्या कमललोचनाया , पद्माया इति यावत्, हारो मौक्तिकदाम, किं वा किमु, सकलनयनाना निखिलजनलोचनानामाहार पारणाद्रव्यम्, एव, यद्वा अथवा, वक्षोरुहगिरे कुचशैलात्पतनवत्समानो यो निर्झरो वारिप्रवाहस्तस्य, एषोऽयम्, पूर ओघ , किं वा यद्वा, तस्या पद्माया , स्तनमुकुलयो कुचकुड्मलयो , कोमलश्रीमृणाल सुकुमारश्रीविसम्, अस्तीति शेष , एवमनेन प्रकारेण, विशयवशत सन्देहवशात , स्त्रीजनैर्वनितावृन्दै , प्रेक्ष्यमाणो विलोक्यमान सन्, भाति स्म शोभते स्म । सशयोत्प्रेक्षे, मन्दाक्रान्ताच्छन्द ॥४३॥

नासामणिरिति—अस्या नृपालपुत्र्या , नासामणिर्घ्राणरत्नम्, अयमेष , वक्त्रपयोजमध्ये मुख-

किं काममन्त्रबीजालिः किं वा तद्विरुदावलिः ।
किञ्चित्कुचाब्जभृङ्गालिर्मकरी संशयं व्यधात् ॥४५॥

एवमलङ्कृतां मदनमोहनमन्त्रदेवतामिव साक्षादागतां विषमबाणकेलीमिव तरुणीं रमणीजनचूडामणिं सखीजनः कामदेवस्य वेदिकामध्यविलसितमणिपट्टिकामध्यासीनस्य परिसरं शनैः शनैः प्रापयामास । तदनु सकलतूर्यस्वनितेषु मुखरितदिगन्तरेषु, मन्त्रविदां वचनेषु व्याजृम्भमाणेषु, वेदिकामभितो मङ्गलमणिदीपेषु देदीप्यमानेषु, पूज्यमानेषु हव्यवाहेषु जाज्वल्यमानेषु, परिणयमङ्गलदर्शनकुतूहलविवृतनयनेषु पुरन्ध्रीजनेषु, जनितसम्मर्देषु परिषत्परिकरेषु, पार्थिवेषु निजभुजाङ्गदपरस्परसङ्घर्षविगलत्कनकशकलव्याजेन बाहुप्रतापकणानिव किरत्सु, प्राप्ते च शुभे मुहूर्ते, जीवंधरस्वामी धनपतिनरपतिना वारिधारापुरःसरं प्रतिपादितां तिलोत्तमासुतां पद्मां पाणौ परिजग्राह ।

प्राप्यार्धराज्यं कुरुवंशकेतुः कन्दर्पसाम्राज्यरमां च पद्माम् ।
प्रमोदकल्लोलपरम्पराणामाघाततहृष्यद्धृदयाम्बुजोऽभूत् ॥४६॥

*इति महाकविहरिचन्द्रविरचिते श्रीमति जीवन्धरचम्पूकाव्ये पद्मालम्भो नाम पञ्चमो लम्भः ।*

---

कमलाभ्यन्तरे विभासुरः शोभमानः, जलबिन्दुरेव सलिलसीकर एव, आहोस्विदथवा, नासाख्यप्रशाद् घ्राणाभिधानवेणोः, गलितं पतितम्, गरिष्ठं श्रेष्ठम्, किं नवमौक्तिकं नूतनमुक्ताफलम्, आसीदिति शेषः ॥४४॥

किं काममन्त्रेति—मकरी कुचकुड्मलेषु कस्तूर्यादिना लिखिता मकराकृतिः, किं कामस्य मदनस्य मन्त्रबीजानां मन्त्राक्षराणामालिः पङ्क्तिः, किं वा, तस्य कामस्य विरुदावलिर्यशःप्रशस्तिः, किं स्विदथवा, कुचाब्जयोः स्तनसरोजयोर्विद्यमाना भृङ्गालिर्भ्रमरपङ्क्तिः, आसीत्, इत्येवम्, संशयं सन्देहम्, व्यधाच्चकार ॥४५॥

एवमिति—एवमनेन प्रकारेण, अलङ्कृतां भूषिताम्, मदनस्य स्मरस्य मोहनमन्त्रदेवता वशीकरणमन्त्राधिष्ठातृदेवी तामिव, साक्षादागतां प्रत्यक्षमुपयाताम्, विषमबाणकेलीमिव कन्दर्पक्रीडामिव, तरुणीं नवयौवनोद्भासिनीम्, रमणीजनचूडामणिं वनितावृन्दशिरोरत्नम्, पद्मामिति यावत्, सखीजनः सहचरीसमूहः, वेदिकामध्ये वितर्दिकामध्ये विलसिता शोभिता या मणिपट्टिका रत्नपीठिका ताम्, अध्यासीनस्याधितिष्ठतः, कामदेवस्य मदनस्य कामदेवपदवीधरस्य जीवन्धरस्येति यावत्, परिसरं समीपम्, शनैः शनैर्मन्दं मन्दम्, प्रापयामास समानिनाय । तदनु तदनन्तरम्, सकलतूर्याणां निखिलवादित्राणां स्वनितानि शब्दास्तेषु, मुखरितं वाचालितं दिगन्तरं काष्ठान्तरालं यैस्तेषु, मन्त्रविदां मन्त्रज्ञानाम्, वचनेषु शब्देषु, व्याजृम्भमाणेषु वर्धमानेषु, वेदिकामभितो वितर्दिकां परितः, मङ्गलमणिदीपेषु मङ्गलोद्देशकरत्नप्रदीपेषु, देदीप्यमानेषु नितरां प्रकाशमानेषु, पूज्यमानेष्वर्च्यमानेषु हव्यवाहेषु पावकेषु, जाज्वल्यमानेषु सातिशयं ज्वलत्सु, पुरन्ध्रीजनेषु वनितासमूहेषु, परिणयमङ्गलस्य विवाहमङ्गलस्य दर्शनकुतूहलेन विलोकनकौतुकेन विवृतानि विस्फारितानि नयनानि लोचनानि येषां तथाभूतेषु, परिषत्परिकरेषु सभापरिजनेषु जनितः समुत्पादितः सम्मर्दः व्यामर्दो यैस्तेषु, पार्थिवेषु नृपेषु, निजभुजाङ्गदानां स्वकीयबाहुकेयूराणां परस्परसङ्घर्षेण मिथः सघट्टनेन विगलन्ति पतन्ति यानि कनकशकलानि सुवर्णखण्डानि तेषां व्याजेन दम्भेन, बाहुप्रतापकणान् भुजतेजोऽंशान्, किरत्स्विव प्रक्षिपत्स्विव सत्सु, शुभे कल्याणास्पदे, मुहूर्ते समये, प्राप्ते च समागते च सति, जीवन्धरस्वामी सत्यन्धराङ्गजः, धनपतिनरपतिना धनपत्यभिधानभूपालेन, वारिधारापुरस्सरं जलधारासहितं यथा स्यात्तथा, प्रतिपादितां दत्ताम्, तिलोत्तमायाः सुतां तां तिलोत्तमापुत्रीम्, पद्मामेतन्नाम्नीम्, पाणौ करे, जग्राह स्वीचकार, तस्याः पाणिग्रहणं चकारेति भावः ।

प्राप्येति—कुरुवंशकेतुर्जीवन्धरः, अर्धञ्च तद् राज्यञ्चेत्यर्धराज्यं राज्यार्धम्, कन्दर्पस्य कामस्य साम्राज्यरमां साम्राज्यलक्ष्मीस्ताम्, पद्माञ्च धनपतिसुताञ्च, प्राप्य, प्रमोदकल्लोलपरम्पराणामानन्दतरङ्गश्रेणीनाम्, आघातेन सघट्टनेन हृष्यद्विकसद् हृदयाम्बुजं चित्तारविन्दं यस्य तथाभूतः, अभूद् बभूव ॥ ४६ ॥

इति महाकविहरिचन्द्रविरचिते श्रीमति 'कौमुदी' व्याख्याधरे जीवन्धरचम्पूकाव्ये
पद्मालम्भो नाम पञ्चमो लम्भः ।

---

१ मदनता ब० । २ केलीकरिणीमिव तरुणीजनं ब० । ३ दिगन्तेषु ब० । ४ निस्सृत ब० ।

# षष्ठो लम्भः

पद्मा पयोधरभरानतगात्रवल्ली
पद्मानना कुरुवरो रमयश्चिराय ।
तद्भ्रातृभिर्गुणमणीकुलरोहणैस्तै-
र्द्वात्रिंशता प्रतिदिनं परिपूज्यते स्म ॥ १ ॥

कदाचित्कुरुवीरस्य सकलभूतसन्तापनाशनं निखिललोकदेदीप्यमानं भुजप्रतापमभिवीक्ष्य लज्जयेव संहृतनिजप्रतापे, स्वैराभिसारनिरोधजनितक्रोधानां बन्धकीनामारक्तकटाक्षच्छटाभिरिव संहृतनिजकरे समानीतपद्मिनीहृदयानुरागपरम्पराभिरिव कुङ्कुमसच्छायमण्डले दिनकरे चरमशिखरिशेखरकनककलशशङ्काकरे, सायन्तनसुगन्धिशीतलमन्दपवनलोलितललितलताङ्गुलितया- ह्वयद्भ्य इव वनविटपिभ्यो व्याकुलारावव्याजेन प्रत्युत्तरमभिधाय धावनव्यासङ्गेषु विहङ्गेषु, सहस्रपत्त्रेषु सहस्रकरकिरणान्क्रमेण निमीलदेकैकदलैर्गणयत्स्विव मुकुलीभवत्सु, सिन्दूरच्छविबन्धुरे सन्ध्यारागे वरुणदिशि विजृम्भिते, आविर्भवत्तिमिरनिकरबीजेष्विव बम्भरेषु पद्माकरं विहाय कुमुदाकरमाक्रमत्सु, ध्वान्तकदम्बमुदजृम्भत ।

---

पद्मामिति—पयोधरभरेण वक्षोजभरेणानता समानम्रा गात्रवल्ली शरीरलता यस्यास्ताम्, पद्माननां कमलमुखीम्, पद्मामेतन्नाम्नीं स्वभार्याम्, चिराय चिरकालेन, रमयन् क्रीडयन्, कुरुवरो जीवन्धरः, गुणा एव मण्यो रत्नानि तेषां कुलं समूहस्तस्य रोहणा विदूरगिरयस्तैः, रोहणगिरौ रत्नानि समुत्पद्यन्त इति प्रसिद्धिः, तैः प्रसिद्धैः द्वात्रिंशता द्वात्रिंशत्सङ्ख्याकैः, तस्या भ्रातरस्तैः तदीयसहोदरैः, प्रतिदिनं प्रत्यहम्, परिपूज्यते स्म । कर्मणि प्रयोगः । वसन्ततिलकावृत्तम् ॥ १ ॥

कदाचिदिति—कदाचिज्जातुचित्, कुरुवीरस्य जीवन्धरस्य, सकलभूतानां निखिलप्राणिनां संतापनाशनं सन्तापापहारकम्, निखिललोके समग्रसंसारे देदीप्यमानं पुनः पुनरतिशयेन वा प्रकाशमानम्, भुजप्रतापं बाहुतेजः, अभिवीक्ष्य विलोक्य, लज्जयेव त्रपयेव, संहृतः संकोचितो निजप्रतापः स्वतेजो येन तथाभूते, स्वैराभिसारस्य स्वच्छन्दाभिगमनस्य निरोधेन निवारणेन जनितः समुत्पन्नः क्रोधो कोपो यासां तासाम्, बन्धकीनां कुलटानाम्, आरक्ता लोहितवर्णा या कटाक्षच्छटा अपाङ्गपङ्क्तयस्ताभिरिव, संहृताः संकोचिताः निजकराः स्वकिरणा यस्य तस्मिन्, समानीतः समादाय सहानीतः पद्मिनीनां यो हृदयानुरागश्चित्तप्रीतिस्तस्य परम्परा सन्ततयस्ताभिरिव, कुङ्कुमसच्छायं काश्मीरकल्पं मण्डलं बिम्बं यस्य तस्मिन्, दिनकरे सूर्ये, चरमशिखरिणोऽस्ताचलस्य शेखरे शृङ्गे कनककलशस्य काञ्चनकुम्भस्य शङ्काकरः सन्देहोत्पादकस्तथाभूते सति, सायन्तनः सायकालिकः सुगन्धिः सुरभिः, शीतलः शिशिरो मन्दो मन्थरश्च यः पवनो वायुस्तेन लोलिताश्चालिता ललिता मनोहरा लता एव शाखा एवाङ्गुलयः करशाखा येषां तेषां भावस्तत्ता तया, आह्वयद्भ्य इवाकारयद्भ्य इव, वनविटपिभ्यः काननतरुभ्यः, व्याकुलश्चासावारावश्चेति व्याकुलारावो व्यग्रतापूर्णशब्दस्तेषां व्याजेन दम्भेन, प्रत्युत्तरं 'वयमागच्छाम' इति प्रतिजल्पम्, अभिधाय निगद्य, धावने वेगेनाभियाने व्यासङ्गः आसक्तिर्येषां तेषु, विहङ्गेषु पक्षिषु सत्सु, सहस्रपत्त्रेषु कमलेषु, क्रमेण क्रमशः, निमीलन्ति सङ्कोचन्ति यानि एकैकदलानि एकैकपत्राणि तैः, सहस्रकरस्य सूर्यस्य किरणा मयूखास्तान्, गणयत्स्विव सङ्ख्यानं कुर्वत्स्विव, मुकुलीभवत्सु निमीलत्सु, सत्सु, सिन्दूरच्छविरिव नागसम्भवकान्तिरिव बन्धुरो मनोहरस्तस्मिन्, सन्ध्यारागे पितृप्रसूलोहितिम्नि, वरुणदिशि पश्चिमकाष्ठायाम्, विजृम्भिते वृद्धिङ्गते सति, आविर्भवन्प्रकटीभवन्यस्तिमिरनिकरो ध्वान्तसमूहस्तस्य बीजेष्विव, बम्भरेषु भ्रमरेषु, पद्माकरं कमलाकरं,

लोकदीपे रवौ लोकगृहमाभास्य निर्वृते ।
तत्कज्जलमिवानील तमोवृन्दमजायत ॥ २ ॥
सदष्ट विसमुत्सृज्य चक्रद्वन्द्वेन मूर्च्छता ।
परिवृत्तमुखाब्जेन तूर्णं विजघटे तदा ॥ ३ ॥

दिनमणिविरहेण व्याकुलाङ्गी नभ श्री-
स्तिमिरनिकरदम्भात्तूर्णमाकीर्णकेशा ।
उडुमणिगणलक्ष्यादश्रुबिन्दून्दधाना
रमणविपदि रेजे रोदन तन्वतीव ॥४॥

तम शबरसरुद्धा यामिनीं निजवल्लभाम् ।
वीक्ष्य कोपादिवाताम्र शशी पूर्वाद्रिमानशे ॥५॥

तदनु निशाकर पुरन्दरदिशाविशालनयनामुखचुम्बनचतुरमालोक्येव पुरतरुणेषु कान्तामुखचुम्बनपरेषु, शशधरकरस्पर्शनविद्रुतशशिकान्ततलमालक्ष्येव युवतीषु दयितकरस्पर्शमात्रेण द्रवन्तीषु, तत्क्षणमुद्वेलजलनिधिमुद्वीक्ष्येव समुल्लसदुल्लोलकल्लोले कामार्णवे, सरसीसमुद्भूतसरोजेष्विव कुलटाजनलपनतटेषु मुकुलितेषु, क्रमेण नृपमन्दिरे निद्राणे निखिलजने, केनाप्यनुपलक्षित कुरुवीर पुरान्निश्चक्राम ।

---

विहाय त्यक्त्वा, कुमुदाकर कैरवकासारम्, आक्रामत्सु समागच्छत्सु सत्सु, ध्वान्तकदम्ब तिमिरसमूह उदजृम्भत ववृधे ।

लोकदीप इति—लोकस्य जगतो दीप प्रदीपस्तस्मिन्, रवौ सूर्ये, लोक एव गृह लोकगृह तत्, आभास्य प्रकाश्य, निर्वृते निर्गते सति, तत्कज्जलमिव तदीयाञ्जनमिव, आनीलमीषत्कृष्णम्, तमोवृन्द ध्वान्तसमूह, अजायत समुत्पादि । रूपकोत्प्रेक्षे ॥ २ ॥

सदष्टमिति—सदष्ट दन्तान्तर्धारितम्, विस मृणालम्, उत्सृज्य त्यक्त्वा, मूर्च्छता विचेतनीभवता, परिवृत्त विमुखीभूत मुखाब्ज वदनकमल यस्य तथाभूतेन, चक्रद्वन्द्वेन रथाङ्गयुगलेन, तदा सायम्, तूर्णं शीघ्रम्, विजघटे विघटितम् ॥ ३ ॥

दिनमणिविरहेणेति—दिनमणे सूर्यस्य विरहो विप्रलम्भस्तेन, व्याकुल व्यग्रम् अथ च विभि पक्षिभिराकुलमाकीर्णम्, अङ्ग शरीर यस्या सा, तिमिरनिकरस्य ध्वान्तसमूहस्य दम्भाद् व्याजात्, तूर्णं क्षिप्रम्, आकीर्णा समन्ताद्विक्षिप्ता केशा कचा यस्या सा, उडूनि मणिगणा इवेत्युडुमणिगणास्तेषा लक्ष्याद् व्याजात्, अश्रुबिन्दून् बाष्पसीकरान्, दधाना धरन्ती नभ श्रीर्गगनलक्ष्मी, रमणविपदि वल्लभविपत्तौ, रोदनमाक्रन्दनम्, तन्वतीव विस्तारयन्तीव, रेजे शुशुभे । उत्प्रेक्षालङ्कार । मालिनीच्छन्द ॥ ४॥

तम शबरसरुद्धामिति—शशी विधु, निजवल्लभा स्वप्रेयसीम्, यामिनी रजनीम्, तम एव ध्वान्तमेव शबरो निषादस्तेन सरुद्धा निरुद्धगमनाम्, वीक्ष्य दृष्ट्वा, कोपादिव क्रोधादिव, आताम्र आरक्तवर्ण सन्, पूर्वाद्रिं पूर्वशैलम्, आनशे व्याप, तत्राधिरूढो बभूवेति भाव । उत्प्रेक्षा ॥ ५ ॥

तदन्विति—तदनु तदनन्तरम्, निशाकर चन्द्रमसम्, पुरन्दरदिशैव प्राच्येव विशालनयना दीर्घाक्षी तस्या मुखस्य वदनस्य चुम्बने चतुर विदग्धम्, आलोक्येव दृष्ट्वेव, पुरतरुणेषु नगरयुवसु, कान्तामुखाना वनितावदनाना चुम्बनेषु परास्तत्परास्तेषु सत्सु, शशधरकरस्य चन्द्रकिरणस्य स्पर्शनेन ससर्गेण विद्रुत कृतजलविमोचन यच्छशिकान्ततल चन्द्रकान्तोपलतल तत्, आलक्ष्येव विलोक्येव, युवतीषु तरुणीषु, दयितस्य पत्यु करस्पर्शमात्रेण हस्तस्पर्शमात्रेण, द्रवन्तीषु द्रवीभूतासु सतीषु, तत्क्षण तत्कालम्, उद्वेलश्चासौ जलनिधिश्च त वेलोत्क्रान्तसागरम्, उद्वीक्ष्येव विलोक्येव, कामार्णवे मदनसिन्धौ, समुल्लसन्त समुच्छलन्त उल्लोलाश्चपलतरा कल्लोलास्तरङ्गा यस्य तथाभूते सति, कुलटाजनलपनतटेषु स्वैरिणीजनवक्त्रतटेषु सरसीसमुद्भूतसरोजेष्विव कासारोत्पन्नकमलेष्विव, मुकुलितेषु निमीलितेषु, सत्सु, क्रमेण क्रमश, नृपमन्दिरे

गव्यूतिका काश्चिदतीत्य दूरं गतस्य सत्यन्धरभूपसूनोः ।
शङ्कावधूट्या हृदयाद्गताया सहायता प्राप निशा किलैषा ॥६॥

पद्मापि कान्तविरहाम्बुधिमध्यभागे
सन्तापबाडवहुताशनकीललीढे ।
कन्दर्पनक्रकलिते कलकण्ठगान-
कोलाहले खलु ममज्ज चिराद्पारे ॥७॥

लोकपालजनाः केचिच्चतुर्दिक्षु गवेषिणः ।
प्राज्ञा अपि कुमारस्य नाज्ञासिषुरिहागतिम् ॥ ८ ॥

तत्र तत्र तीर्थस्थानानि याजयाज सत्वरं गत्वरः कुरुवीरः, क्वचन वासःसमासक्ततापसकुल-कृष्यमाणतरुत्वङ्मर्मरारावमुखरम्, क्वचित्पाषण्डिषण्डकरमण्डितकमण्डलुमुखनैर्झरजलपूरणजनित-कलकलशब्दशोभितम्, कुत्रचिद्बालकत्रुटितोज्झितमौञ्जीमेखलाविकीर्णम्, कुत्रचन कुमारिकापूर्य-माणबालवृक्षालवालम्, क्वचन काषायवसनसेचनलोहितायमानसरोजलम्, क्वचन ससिक्तवल्कल-शिखानिर्गलत्पयोधारारेखाङ्कितम्, क्वचन चमूरुचर्मनिर्मितासनासीनजपपरजनसङ्कुलम्, कुत्रचित्-

---

नरेन्द्रनिकेतने, निखिलजने समस्तलोके, निद्राणे गृहीतस्वापे सति, केनापि जनेन अनुपलक्षितोऽनवलोकितः, कुरुवीरो जीवन्धरः, पुरान्नगरात्, निश्चक्राम निर्जगाम ।

गव्यूतिका इति—काश्चिद् गव्यूतिकाः कतिचित् क्रोशान्, अतीत्य समुल्लङ्घ्य, दूरं विप्रकृष्टम्, गतस्य यातस्य, सत्यन्धरभूपसूनोः, सत्यन्धरधराधीशपुत्रस्य जीवन्धरस्येति यावत्, हृदयाच्चेतसः, गतायाः प्रयातायाः, शङ्कावधूट्या भीतितरुण्या, सहायता मित्रता सहगामितामिति यावत्, एषा निशा इयं रजनी, प्राप लब्धवती, किलेति वाक्यालङ्कारे । जीवन्धरस्य हृदयाद् राजपुरुषोपरोधभीतिर्गता रात्रिश्च समाप्तेति भावः ॥ ६ ॥

पद्मापीति—पद्मापि जीवन्धरजायापि, संतापः एव दुःखमेव वाडवहुताशनकीला वडवानलज्वाला-स्तैर्लीढो व्याप्तस्तस्मिन्, कन्दर्प एव काम एव नक्रो मकरस्तेन कलितः सहितस्तस्मिन्, कलकण्ठगानमेव कमनीयकण्ठध्वनिरेव कोलाहलो गर्जितं यस्मिंस्तस्मिन्, अपारेऽनवसाने, कान्तविरह एव वल्लभविप्रलम्भ एवाम्बुधिमध्यभागः सागरमध्यप्रदेशस्तस्मिन्, खलु निश्चयेन, चिरात् दीर्घकालाय, ममज्ज निमग्ना । रूपकालङ्कारः । वसन्ततिलकावृत्तम् ॥ ७ ॥

लोकपालजना इति—चतुर्दिक्षु चतुःकाष्ठासु, गवेषिणोऽन्वेषिणः, केचित्केऽपि, लोकपालजना राजपुरुषाः, प्राज्ञा अपि मेधाविनोऽपि सन्तः, कुमारस्य जीवन्धरस्य, इह वने, आगतिमागमनम्, न अज्ञासिषुर्न जानन्ति स्म ॥ ८ ॥

तत्र तत्रेति—तत्र तत्र तेषु तेषु स्थानेषु, तीर्थस्थानानि तीर्थक्षेत्राणि, याजं याजं यष्ट्वा यष्ट्वा, सत्वरं शीघ्रम्, गत्वरो गमनशीलः, कुरुवीरो जीवन्धरः, तपोवनं तापसारण्यम्, ददर्श विलोकयामास, अथवा तदेव तपोवनं विशेषयति—क्वचन कुत्रचित्, वासःसु वस्त्रेषु समासक्ता लीना ये तापसाः साधवस्तेषां कुलं समूहस्तेन कृष्यमाणा यास्तरुत्वचो वृक्षवल्कलास्तासां मर्मरारावेण मर्मरशब्देन मुखरं वाचालम्, क्वचि-त्कुत्रचित्, पाषण्डिषण्डस्य साधुसमूहस्य करमण्डिता हस्तशोभिता ये कमण्डलवः कुण्ड्यस्तेषां मुखेष्वग्र-भागेषु नैर्झरजलपूरणेन स्रोतःसम्बन्धिसलिलभरणेन जनितः समुत्पन्नो यः कलकलशब्दोऽव्यक्तध्वनि-विशेषस्तेन शोभितं समुद्भासितम्, कुत्रचित्क्वचन, बालककुलस्य शिशुसमूहस्य त्रुटितोज्झिता खण्डितत्यक्ता या मौञ्जीमेखला दर्भरशनास्ताभिर्विकीर्णं व्याप्तम्, कुत्रचन क्वचित्, कुमारिकाभिस्तापसबालिकाभिः पूर्यमाणा भ्रियमाणा बालवृक्षाणां लघुतरूणामालवाला आवापा यस्मिंस्तत्, क्वचन कुत्रचित्, कषायेण रक्तं काषायं तच्च तद्वसनं चेति काषायवसनं तस्य सेचनं समुक्षणं तेन लोहितायमानं रक्तीभवत् सरोजलं कासारतोयं यस्मिंस्तत्, क्वचन कुत्रापि, ससिक्ता समुक्षिता ये वल्कला वृक्षत्वचस्तेषां शिखाभ्योऽग्रभागेभ्यो निर्गलन्त्य

स्नानकालससक्तशैवालच्छटायमानजटापटलधारितया परितो देदीप्यमानपावकप्रसृतधूमरेखा-लिङ्गितैरिवोर्ध्वप्रसारितभुजदण्डै पञ्चाग्निमध्यतप प्रचण्डैस्तापसैर्मण्डितम्, क्वचन तत्पत्नीजनक्रियमाणनीवारपाकम्, कचित्तत्पुत्रच्छिद्यमानार्द्रसमित्समाकुलम्, तपोवन ददर्श।

असत्तपो वीक्ष्य कुरुप्रवीर कृपानटीताण्डवरङ्गचित्त ।
अबोधयत्ताञ्जिनधर्मसारमुपेक्षते क पततो निकूपे ॥ ९ ॥
तण्डुलस्य विरहे जलानलाद्यागमेऽपि सफलो न हि पाक ।
तत्त्वबोधविगमे तथा तनोर्दण्डनेन सफला न तपस्या ॥ १० ॥
मुधा जटाजूटयुता हि यूय निटालदेशे तपनेन तप्ता ।
बुधास्तपो हिंसनजुष्टमेतत्कर्तुं सदा नार्हथ निष्फलत्वात् ॥ ११ ॥
जटालाना जलान्ते वो जटालग्ना हि जन्तव ।
पश्यताग्नौ च्युता पश्चान्नश्यन्ति बहव क्षणात् ॥ १२ ॥
तस्मादिद क्लिष्टतपो विहाय नैर्ग्रन्थ्यरूप परम भजेत ।
यस्मिन्सदा सन्निहिता जिनाङ्घ्रिभक्त्यान्विते शाश्वतमुक्तिलक्ष्मी ॥१३॥

---

पतन्त्यो या पयोधारा जलधारास्तासा रेखाभिर्लेखाभिरङ्कित शोभितम्, क्वचन कुत्रचित्, चमूरुचर्मणा शार्दूलत्वचा निर्मितानि रचितानि यान्यासनानि तेष्वासीना समुपविष्टा ये जपपरजना ध्यानावसक्तपुरुषास्तै सकुल व्याप्तम्, कुत्रचित् क्वचित्, स्नानकालेऽभिषेकसमये ससक्ता सलग्ना ये शैवाला जलनीलीलतास्तेषा छटायमान समूह इवाचरद् यद् जटापटल जटासमूहस्तस्य धारितया धारकत्वेन, परित समन्तात्, देदीप्यमानाज्जाज्वल्यमानात्पावकादनलात्प्रसृता विसृता या धूमरेखा धूम्रलेखास्ताभिरालिङ्गितैरिव समाश्लिष्टैरिव ऊर्ध्वप्रसारिता उन्नमिता भुजदण्डा बाहुदण्डा यैस्तै, पञ्चाग्नीना मध्ये यत्तपस्तेन प्रचण्डास्तीक्ष्णास्तै, तापसै स्तपस्विभि, मण्डित शोभितम्, क्वचन कुत्रचित्, तेषा तापसाना पत्नीजनैर्वनितासमूहै क्रियमाणो विधीयमानो नीवारपाको वन्यव्रीहिपचन यस्मिस्तत्, क्वचित् क्वचन, तत्पुत्रैस्तापसतनयैश्छिद्यमानाभिर्भिद्यमानाभिरार्द्रसमिद्भिरार्द्रेन्धनै समाकुल व्याप्तम्, तपोवन ददर्शेति क्रियासम्बन्ध ।

असत्तप इति—कृपानट्या दयानर्तक्या यत्ताण्डव नटन तस्य रङ्गो नृत्यभूमिश्चित्त मानस यस्य तथाभूत, कुरुप्रवीरो जीवन्धर असन्मिथ्याभूतम्, तपस्तपश्चरणम्, वीक्ष्य दृष्ट्वा, तान् तापसान्, निज धर्मस्य सारस्त जिनेन्द्रधर्मसर्वस्वम्, अबोधयद् अवगमयामास, निकूपे प्रह्वो, पतत स्खलतो जनान्, क किन्नामा दयालु, उपेक्षते उपेक्षितान् कुरुते, अपि तु न कोऽपीत्यर्थ । अर्थान्तरन्यास ॥ ९ ॥

तण्डुलस्येति—तण्डुलस्याक्षतानाम्, विरहेऽभावे, जलानलादीना तोयाग्निप्रभृतीनामागम समुपलम्भस्तस्मिन्, सत्यपि, यथा येन प्रकारेण, पाक ओदनपचनक्रिया, सफल सार्थक, न हि भवति न खलु जायते तथा तेन प्रकारेण तत्त्वबोधविगमे तत्त्वज्ञानाभावे, तनो शरीरस्य, दण्डनेन नियन्त्रणेन, तपस्या तपश्चर्या, सफला सार्थका, न नो भवतीति शेष । स्वागतारथोद्धतयो सम्मिश्रणादुपजातिवृत्तम् ॥१०॥

मुधेति—जटाजूटयुता प्रवृद्धपरुषकेशसमूहयुक्ता, निटालदेशे भालप्रदेशे, तपनेन सूर्येण, तप्ता उष्णीकृता, यूय भवन्त, हि निश्चयेन, मुधा व्यर्था, स्थेति शेष । हे बुधा विद्वान्स, सदा सर्वदा इहलोके परलोके चेति यावत्, निष्फलत्वात् निरर्थकत्वात्, हिसनजुष्ट हिंसोपेतम्, एतत् साम्प्रत क्रियमाणम्, तपस्तपश्चरणम्, कर्तुं विधातुम्, नार्हथ न योग्या स्थ । उपजातिवृत्तम् ॥११॥

जटालानामिति—हि निश्चयेन, जलान्ते जलमध्ये, जटालाना जटायुक्तानाम्, वो युष्माकम्, जटालग्ना प्रवृद्धपरुषकेशसमूहनिबद्धा, बहवो भूयास जन्तवो जीवा, अग्नौ वह्नौ, च्युता पतिता, पश्चात् अनन्तरम्, क्षणादचिरम्, नश्यन्ति म्रियन्ते, इति पश्यत विलोकयत ॥१२॥

तस्मादिदमिति—तस्मात्कारणात्, इद क्रियमाणम्, क्लिष्टतप केवलदु खकरतपश्चरणम्, विहाय त्यक्त्वा, परम श्रेष्ठम्, नैग्रन्थ्यरूप दिगम्बरमुद्राम्, भजत सेवेत । जिनाङ्घ्रिभक्त्या जिनेन्द्रचरणानुरागाति

इत्यादिप्रकारेण मुक्त्यङ्गनासङ्गमचाटुवचनायमानेन संसारविशङ्कटकवाटविघटितपटुकुञ्चिकाभूतेन धर्मघण्टापथप्रतीहारप्रवेशप्रतीहारायितेन निजगम्भीरवचनगुणेन संभावितानसन्मार्गलङ्घनजङ्घालान्स मार्गाक्रमणप्रवणान्कतिपयतापसानवलोक्य स्तोकेतरसंतोषसंवलितमानसः कुरुकुलोत्तंसः, तद्वनान्निर्गत्य, निसर्गरुचिरं नगरप्रमुखैः रोचितमपि नरोचितं सर्वोत्तरमपि नाम्ना दक्षिणं देशमासाद्य, क्षेमपुरोपवनमध्यबाभास्यमानं घनमण्डलमध्यशोशुभ्यमानरविबिम्बसमानमत्युन्नतप्रमाणमपि भगवतो विमानमवालोकत ।

अभ्रंलिहाग्रैः रविदीप्रकूटैः सहस्रसंख्यैर्नवरत्ननद्धैः ।
संलक्ष्यते यः फणिराडिवोद्यन्पातालॡलोकात्फणरत्नजुष्टः ॥ १४ ॥
यत्कूटलग्ना स्फुटतारकालिः सुमावलिश्चामरलोकवृष्ट्या ।
विभिद्यते षट्चरणैर्विलोलैर्गन्धान्वितैर्झंकृतमञ्जुगानैः ॥ १५ ॥
मन्दमारुतविधूतकेतनो यः सुरासुरगणैः समन्ततः ।
आह्वयन्निव विभाति सन्ततं वन्दनाय विततेन बाहुना ॥ १६ ॥

---

शयेन, अन्विते सहिते, यस्मिन् नैर्ग्रन्थ्यरूपे, शाश्वतमुक्तिलक्ष्मीरविनश्वरमोक्षश्रीः, सदा सर्वदा, सन्निहिता निकटस्था, वर्तत इति शेषः । इन्द्रवज्रावृत्तम् ॥१३॥

इत्यादिप्रकारेणेति—इत्यादिप्रकारेण पूर्वोक्तप्रकारेण, मुक्त्यङ्गनाया निर्वृतिललनाया सङ्गमे समागमे चाटुवचनायते प्रियवचनमिवाचरतीति मुक्त्यङ्गनासङ्गमचाटुवचनायमानस्तेन, संसार आजवंजव एव विशङ्कटकवाटौ विशालकपाटौ तयोर्विघटिते समुद्घाटने पटुकुञ्चिकाभूतेन दक्षकुञ्चिकास्वरूपेण, 'कवाटश्च कपाटश्च त्रिषु स्याद्दरः नना' इति वाचस्पतिः, धर्मस्य घण्टापथो राजमार्ग इति धर्मघण्टापथस्तस्य प्रतीहारो द्वारं तस्मिन् प्रवेशोऽन्तर्यानं तस्मिन् प्रतीहारायितेन द्वारपालवदाचरता 'दर्शयन्वन्तरो राजमार्गो घण्टापथः स्मृतः' इति चाणक्यः, निजगम्भीरवचनगुणेन स्वकीयप्रगल्भवचनमाहात्म्येन, सम्भावितान् सम्मानितान्, असन्मार्गस्य मिथ्यामार्गस्य लङ्घनेऽतिक्रमणे जङ्घाला अतिजवास्तान् 'जङ्घालोऽतिजवस्तुल्यौ' इत्यमरः, सन्मार्गस्य सत्पथस्याक्रमणे प्रवेशे प्रवणा निपुणास्तान् कतिपयतापसान् कतिचित्तपस्विनः, अवलोक्य दृष्ट्वा, स्तोकेतरेण भूयसा सन्तोषेण सुखेन सम्वलितं सहितं मानसं चित्तं यस्य सः, कुरुकुलोत्तंसः कुरुवंशाभरणं जीवन्धर इति यावत्, तद्वनात्तत्काननात्, निर्गत्य बहिरागत्य, निसर्गरुचिरं स्वभावसुन्दरम्, नगरप्रमुखैः प्रधाननगरैः, रोचितमपि शोभितमपि, न रोचितं न शोभितमिति विरोधः पक्षे नराणां मनुष्याणामुचितो निवासयोग्यस्तमिति परिहारः, सर्वेभ्यो निखिलेभ्य उत्तरः उत्तरदिक्स्थ इति सर्वोत्तरस्तथाभूतमपि, नाम्ना नामधेयेन दक्षिणं दक्षिणदिक्स्थितमिति विरोधः पक्षे सर्वोत्तरमित्यस्य सर्वोत्कृष्टमित्यर्थः, देशं जनपदम्, आसाद्य प्राप्य, क्षेमपुरस्य तन्नाम नगरस्योपवनमध्येऽधिक्रीडोद्यानं बाभास्यमानमतिशयेन शोभमानम्, घनमण्डलमध्ये मेघसमूहमध्ये शोशुभ्यमानमतिशयेन भ्राजमानं यद् रविबिम्बं सूर्यमण्डलं तेन समानं सदृशम्, अत्युन्नतं प्रमाणं यस्य तथाभूतमपि श्रेष्ठतरप्रमाणसहितमपि, भगवतो जिनेन्द्रस्य, विमानं मानरहितमिति विरोधः, पक्षे विशिष्टगृहम् 'विमानो व्योमयाने च सार्वभौमगृहेऽपि च' इति मेदिनी, अवालोकत ददर्श ।

अभ्रंलिहाग्रैरिति—यो विमानः, अभ्रंलिहाग्रैर्घनस्पर्शिशिरोभिः, नवरत्ननद्धैर्नूतनमणिखचितैः सहस्रसंख्यैर्दशशतसंख्याकैः, रविदीप्रकूटैर्भास्करभास्वरशिखरैः पातालॡलोकाद् रसातलाद्, उद्यन् उद्गच्छन्, फणरत्नजुष्टो मूर्धमणिसेवितः फणिराडिव नागराज इव संलक्ष्यते दृश्यते ॥१४॥

यत्कूटलग्नेति—यस्य कूटेषु शिखरेषु लग्ना समासक्ता, स्फुटतारकाणां प्रकाशितनक्षत्राणामालिः पङ्क्तिः, अमरलोकवृष्ट्या देवलोकवर्षणेन, सुमावलिश्च पुष्पसमूहश्च, विलोलैश्चपलैः, गन्धान्वितैर्गन्धसहितैः, झङ्कृतमञ्जुगानैर्झङ्कृतमनोहरगीतैः, षट्चरणैर्भ्रमरैः, विभिद्यते पृथक्क्रियते । स्फुटतारकालिः षट्पदरहिता सुमावलिश्च तत्सहिता बभूवेति भावः ॥१५॥

मन्दमारुतेति—समन्ततो विष्वक्, मन्दमारुतेन मन्थरपवनेन विधूतानि केतनानि यस्य तथा-

तादृक्ष सकललोकलोचनासेचनक घटितकवाटक श्रीविमानमालोक्यातिसतोषविस्मयाभ्या परवशो दिनेश इव सुराचल प्रदक्षिणीकृत्य कृत्यविदामग्रणी कुरुवशमणिरेव स्तोतुमारेभे ।

भवभरभयदूर भावितानन्दसार
वृतविमलशरीर दिव्यवाणीविचारम् ।
मदनमदविकार मञ्जुकारुण्यपूर
श्रयत जिनपधीर शान्तिनाथ गभीरम् ॥ १७ ॥

यस्याशोकतरुर्विभाति शिशिरच्छाय श्रिताना शुच
धुन्व सार्थकनामधेयगरिमा माहात्म्यसवादक ।
य देवा परितो ववर्षुरमितै फुल्लै प्रसूनोच्चयै
कल्याणाचलमन्तत कुसुमिता मन्दारवृक्षा यथा ॥ १८ ॥

सकलवचनभेदाकारिणी दिव्यभाषा
शमयति भवताप प्राणिना मङ्क्षु यस्य ।
अमरकरविधूतश्चामराणा समूहो
विलसति खलु मुक्तिश्रीकटाक्षानुकारी ॥ १९ ॥

भूतो यो विमान, वन्दनाय वन्दनप्रयोजनाय, विततेन विस्तारितेन, बाहुना भुजेन, सन्तत सर्वदा सुरासुरगण देवदानववृन्दम्, आह्वयन्निवाकारयन्निव, विभाति शोभते ॥१६॥

तादृक्षमिति—तादृक्ष तथाविधम्, सकललोकलोचनाना निखिलनरनयनानामासेचनकमतृप्तिकरम्, 'तदासेचनक तृप्तेर्नास्त्यन्तो यस्य दर्शनात्' इत्यमर, घटितकवाटक मेलिताररकम्, श्रीविमान श्रीभगवद्गृहम्, आलोक्य दृष्ट्वा, अतिसन्तोषविस्मयाभ्या सन्तोषातिशयाश्चर्याभ्याम्, परवश परतन्त्र, दिनेश सूर्य सुरासुरचलमिव सुमेरुशैलमिव, प्रदक्षिणीकृत्य परिक्रम्य, कृत्यविदा कार्यज्ञानाम्, अग्रणी प्रधान, कुरुवशमणि कुरुवशरत्न जीवन्धर इति यावत् एव वक्ष्यमाणप्रकारेण, स्तोतु स्तुति कर्तुम्, आरेभे प्रारब्धवान् ।

भवभरेति—अये लोका ! भवभराणा पर्याप्तसमूहाना भयेन भीत्या दूर विप्रकृष्टम्, भावित आनन्दसारो यस्य तम् अनुभूतानन्दतत्त्वम्, धृत विमल समुज्ज्वल शरीर येन तम्, दिव्यवाण्या दिव्यध्वनेविचारो यस्य तम्, मदनमदविहार कन्दर्पदर्पापहारकम्, मञ्जुकारुण्यपूर मनोहरदयालुताप्रवाहम्, जिनपश्चासौ धीरश्चेति जिनपधीरस्त जिनेन्द्रवीरम्, गम्भीर धैर्योपेतम्, शान्तिनाथ षोडशतीर्थंकरम्, श्रयत सेवध्वम् । मालिनीच्छन्द ॥ १७ ॥

यस्याशोकतरुरिति—यस्य भगवत, शिशिरा शीतला छायानातपो यस्य स, श्रिताना तल प्राप्तानाम्, शुच शोकम्, धुन्वन् दूरीकुर्वन्, सार्थकोऽन्वर्थो नामधेयस्य नाम्नो गरिमा गौरव यस्य स, माहात्म्यस्य लोकोत्तरप्रभावस्य सवादक सूचक, अशोकतरुरेतन्नामा वृक्ष, विभाति शोभते । य भगवन्तम्, परित समन्तात् देवा अमरा, कल्याणाचलमन्तत सुमेरुगिरिम् परित, कुसुमिता पुष्पिता मन्दारवृक्षा यथा पारिजाततरवो यथा, अमितैरसख्यै, फुल्लैर्विकसितै, प्रसूनोच्चयै पुष्पसमूहै, ववर्षु वर्षन्ति स्म । उपमालङ्कार । शार्दूलविक्रीडित वृत्तम् ॥ १८ ॥

सकलवचनभेदेति—सकलवचनभेदाना निखिलभाषाणामाकार सस्थानमिति सकलवचनभेदाकार सोऽस्ति यस्या सा सकलवचनभेदाकारिणी सर्वभाषास्वभावेत्यर्थ, यस्य भगवत, दिव्यभाषा दिव्यध्वनि, प्राणिना लोकानाम्, भवताप ससारसन्तापम्, मङ्क्षु शीघ्रम्, शमयति दूरीकरोति । अमरकरैर्निलिम्पपाणिभिर्विधूत कम्पित इत्यमरकरविधूत, मुक्तिश्रिया मोक्षलक्ष्म्या कटाक्षान्केकरानुकरोतीति मुक्तिश्रीकटाक्षानुकारी, चामराणा बालव्यजनानाम्, समूह समुदाय, खलु निश्चयेन, विलसति शोभते मालिनीच्छन्द ॥ १९ ॥

कनकशिखरिशृङ्गं स्पर्धते यस्य सिंहा-
सनमिदमखिलेश द्वेष्टि धैर्यादितीव ।
वलयमपि च भासा पद्मबन्धु विरुन्द्धे
मम पतिरिति सोऽय ख्यातिमापेति रोपात् ॥ २० ॥
त्रिभुवनगतिभाव घोषयन्यस्य तारो
मुखरयति दशाशा दुन्दुभिध्वानपूर ।
शमयितुमिह रागद्वेपमोहान्धकार-
त्रितयमिव विधूना भाति च्छत्रत्रय तत् ॥ २१ ॥
अक्षयाय नमस्तस्मै यक्षाधीशननाङ्घ्रये ।
दक्षाय शान्तिनाथाय सहस्राक्षनुतश्रिये ॥ २२ ॥

इत्यादिस्तुतिरवमुखरे कुरुवीरे, श्रीविमानाभ्यग्रविलसिताभ्रङ्कषचम्पकद्रुमे प्रकटितनिजानुरागपल्लवेनेव तत्क्षणसञ्जातमञ्जुलमञ्जरीभरेणावनतमौलितया तदीयदेहकान्तिविलोकनकन्दलित मन्दाक्षमेदुरतयेवावनम्रे, पुरा मौनव्रतमाचरत्स्विव मूकीभूतेषु कलकण्ठेषु कुमारगम्भीरमधुरस्तुतिशैलीस्वरमभ्यस्यमानेष्विव मधुरस्वरमुद्गिरत्सु, तत्रत्यसरोवरे स्फटिकद्रवपूर्ण इव कौरववदनशशाङ्ककान्तिविद्रुततटघटितनिशाकान्तकान्तशिलाविगलितपयोधारापरिपूर्ण इव तदीयनुतिविततिनिशम-

---

कनकशिखरिशृङ्गमिति—इद कनकशिखरिशृङ्गम्, धैर्याद् धीरतागुणात्, अखिलेश सर्वस्वामिन भगवन्तमिति यावत्, द्वेष्टि तेन सह द्वेष करोति, इतीव हेतो यस्य भगवत, सिंहासन हरिविष्टरम्, कनकशिखरिणो हेमाद्रे शृङ्ग शिखरम्, स्पर्धते ईर्ष्यति, सोऽय रजन्या लुप्तसत्ताक, पद्मबन्धु सूर्य, मम रात्रिन्दिव प्रकाशीभवतो भासा वलयस्य, पति स्वामी, इत्येवम्, ख्याति प्रसिद्धिम्, आप लेभे, इति रोषात्क्रोधात्, भासा प्रभाणाम्, वलयमपि च मण्डलमपि च भामण्डलमिति यावत्, पद्मबन्धु सूर्यम्, विरुन्धे तेन सह विरोध कुरुते । उत्प्रेक्षोपमे । मालिनीच्छन्द ॥ २० ॥

त्रिभुवनगतिभावमिति—यस्य भगवत त्रिभुवनगतिभावम् अय त्रिभुवनस्य गति शरणमस्तीति, भावोऽभिप्रायस्तम्, घोषयन् सूचयन्, तारो गम्भीर, दुन्दुभिध्वानपूरो दुन्दुभिनादसमूह, दशाशा दशदिश, मुखरयति वाचालयति । इह लोके, रागश्च द्वेषश्च मोहश्चेति रागद्वेषमोहास्त एवान्धकारस्तम्, शमयितु निराकर्तुम्, समागतम्, विधूना चन्द्राणाम्, त्रितयमिव त्रयमिव, तत् प्रसिद्धम, छत्रत्रयमातपत्रत्रितयम्, भाति शोभते। छन्दोऽलङ्कारौ पूर्ववत् ॥ २१ ॥

अक्षयायेति—अक्षयाय अविनाशिने, यक्षाधीशेन कुबेरेण नतावङ्घ्री यस्य तस्मै, दक्षाय समर्थाय, सहस्राक्षेण पुरन्दरेण नुता स्तुता श्रीरार्हन्त्यलक्ष्मीर्यस्य तस्मै, शान्तिनाथाय षोडशतीर्थकराय, नम नमस्कारो भवतु । 'नम स्वस्तिस्वाहास्वधालवषड्योगाच्च' इति चतुर्थी ॥ २२ ॥

इत्यादिस्तुतीति—कुरुवीरे जीवन्धरे, इत्यादिस्तुतिरवेण पूर्वोक्तप्रकारादिस्तवनशब्देन मुखरे वाचाले सति, श्रीविमानाभ्यग्रे श्रीजिनालयस्य पुरस्तात् विलसित शोभमानो योऽभ्रकषश्चासौ चम्पकद्रुमश्चेत्यभ्रकषचम्पकद्रुमो गगनचुम्बिचाम्पेयवृक्षस्तस्मिन्, प्रकटित प्रदर्शितो निजानुराग एव स्वस्नेह एव पल्लवा किसलया येन तथाभूतेनेव, तत्क्षण तत्काल सञ्जात समुत्पन्नो यो मञ्जुलमञ्जरीभरो मनोहरपुष्पसमूहस्तेन, अवनतो नम्रो मौलिर्यस्य तस्य भावस्तत्ता तया, तदीयायास्तत्सम्बन्धिन्या देहकान्त्या शरीरदीप्त्या विलोकनेन दर्शनेन कन्दलित विवृद्ध यन्मन्दाक्ष त्रपा तेन मेदुरो मिलितस्तस्य भावस्तत्ता तयेव, अवनम्रे विनते सति, पुरा जीवन्धरदर्शनात् प्राक्, मौनव्रतवाचयमव्रतम्, आचरत्स्विव दधत्स्विव, मूकीभूतेषु तूष्णीम्भूतेषु, कलकण्ठेषु कोकिलेषु, कुमारेण जीवन्धरेण कृता या गम्भीरमधुरा सार्थमनोहरा स्तुतिशैली स्तवनपद्धतिस्तस्या स्वर समुच्चारणध्वनिम्, अभ्यस्यमानेष्विव शिक्षमाणेष्विव, मधुरस्वर मनोहरशब्दम्, उद्गिरत्सु प्रकटयत्सु सत्सु, तत्र भवस्तत्रत्य स चासौ सरोवर कासारश्चेति तत्रत्यसरोवरस्तस्मिन्, स्फटिकद्रवेण सितोपलनिष्यन्देन पूर्ण सम्भरितस्तस्मिन्निव, कौरवस्य जीवन्धरस्य वदनमेव शशाङ्कश्चन्द्रस्तस्य

नविजृम्भितानन्दनिष्यन्दपूरित इव क्षणादवदातवारिभरपूरिते, तत्र च विचित्रशतपत्रेषु सत्वरवि-सृत्वरगन्धावकर्षितलोलम्बकदम्बकरम्बितेषु, जीवन्धरसुकृतततिकुञ्चिकयेव तादृत्तमपि जिनभ-वनमचिरेणोद्घाटितवज्रकवाटमजायत ।

आरामोऽय वदति मधुरै स्वागत भृङ्गशब्दै
पुष्पानम्रैर्विटपिविटपैरानति द्राक्तनोति ।
पाद्यार्घ्यादीन्दिशति धवलैस्तत्सरस्या पयोभि-
रित्येव श्रीकुरुकुलपतेराऽधे भूरिशङ्काम् ॥ २३ ॥

विमानस्योत्सङ्गे विमलवपुष शान्तिजिनप विलोक्या तर्भक्त्या कुरुकुलमणेस्तुष्टमनस ।
दृशौ राकाचन्द्रद्रुतमणिदशा प्रागभजता युग पाण्यो प्रापन्मुकुलितपयोजाततुलनाम् ॥२४॥

तदनु, समीपमासाद्य सद्य एवोद्गतपुलकापदेशेन वाञ्छितवदान्यतरोर्बीजावापमारचय्य प्रमदजनितनयनप्रसृतबाष्पपयोभि सेकमिवादधान, कश्चन नागरिकपुरुष, प्रश्रयभरकलितार्घ-साहाय्यकेन प्रणामेन दुरित धुनान, करुणाकरेण कुरुवीरेण 'कस्त्वमार्य' इति पृष्ट, तुष्टहृदय शुभोत्तरमुत्तर वक्तुमुपादत्त ।

---

कान्त्या दीप्त्या विद्रुता प्राप्तद्रवणा यास्तटघटितनिशाकान्तकान्तशिलास्तीरखचितचन्द्रकान्तमणिमनोहर शिलास्ताभ्यो विगलिता च्युरिता या पयोधारा जलधारास्ताभि परिपूर्णे सम्भरितस्तस्मिन्निव, तदीया जीवन्धरसम्बन्धिनी या नुतिविततति स्तुतिपङ्क्तिस्तस्या निशमनेन श्रवणेन विजृम्भितो वृद्धिङ्गतो य आनन्द-निष्यन्द प्रमोदपरीवाहस्तेन पूरित सम्भरितस्तस्मिन् तथाभूते सति, तत्र च तत्रत्यसरोवरे च विचित्रशत पत्रेषु विविधारविन्देषु, सत्वर क्षिप्र विसृत्वरेण प्रसरणशीलेन गन्धेन सुरभिणावकर्षितानि समाकारितानि यानि लोलम्बकदम्बकानि भ्रमरसमूहास्तै करम्बितानि व्याप्तानि तेषु तथाभूतेषु सत्सु, जीवन्धरस्य सुकृत-ततिरेव पुण्यपङ्क्तिरेव कुञ्चिका तयेव, तादृत्तमपि तथाभूतमपि, जिनभवन जिनमन्दिरम्, अचिरेण तत्कालम्, उद्घाटितौ वज्रकवाटौ यस्य तथाभूतमपनीतवज्रारम्, अजायत बभूव ।

आरामोऽयमिति—अयमेष, आराम उद्यानम्, मधुरै कर्णप्रियै, भृङ्गशब्दैर्भ्रमरगुञ्जितै, स्वागत शुभागमनम्, वदति कथयति, पुष्पानम्रै कुसुमविनतै, विटपिविटपै शाखिशाखाभि, द्राक् झटिति, आनतिं नमस्कारम्, तनोति विस्तारयति, तत्सरस्यास्तत्रत्यकासारस्य, धवलै स्वच्छै, पयोभि सलिलै, पाद्यार्घ्यादीन् पादोदकार्घ्यप्रभृतिसत्कारान्, दिशति सम्पादयति, श्रीकुरुकुलपतेर्जीवन्धरस्य, इत्येव पूर्वोक्त-प्रकाराम्, भूरिशङ्का प्रचुरसदेहम्, आदधे चकार । मन्दाक्रान्तावृत्तम् ॥ २३ ॥

विमानस्येति—विमानस्य चैत्यालयस्य, उत्सङ्गे मध्ये, विमलवपुष निर्मलगात्रम्, शान्तिजिनप षोडशतीर्थंकरप्रतिबिम्बम्, विलोक्य दृष्ट्वा, अन्तर्भक्त्या हृन्यानुरागातिशयेन, तुष्टमनस प्रसन्नचेतस, कुरु कुलमणेर्जीवन्धरस्य, दृशौ नयने, द्राग्झटिति, राकाचन्द्रेण पूर्णिमानिशाकरेण द्रुतौ प्राप्तद्रवणौ यौ मणी चन्द्रकान्तमणी तयोर्दशामवस्थाम्, अभजतामसेवत म्, पाण्योर्हस्तयो, युग युगलञ्च, मुकुलिते निर्मीलिते ये पयोजाते कमले तयोस्तुलना सादृश्यम्, प्रापत् अलब्ध । शिखरिणीवृत्तम् ॥ २४ ॥

तदन्विति—तदनु तदनन्तरम्, समीप निकटम्, आसाद्य प्राप्य, सद्य एव झटित्येव, उद्गताना प्रकटिताना पुलकाना रोमाञ्चानामपदेशो व्याज तेन, वाञ्छितवदान्यतरो काङ्क्षितकल्पानोकहस्य, बीजावाप बीजाधानम्, आरचय्य कृत्वा, प्रमदजनितानि हर्षसमुद्भूतानि नयनप्रसृतानि नेत्रोद्वाहितानि यानि बाष्प-पयास्यश्रुजलानि तै, सेक सिञ्चनम्, आदधान इव कुर्वाण इव, कश्चन कोऽपि, नागरिकपुरुष पौरजन, प्रश्रयभरेण विनयसमूहेन कलित विहितमर्घसाहाय्यक यस्य तेन, प्रणामेन नमस्कारेण, दुरित पापम्, धुनानो दूरीकुर्वाण, करुणाकरेण दयाकरेण, कुरुवीरेण जीवन्धरेण, 'आर्य ! हे महोदय ! त्व भवान्, क किम्परिचय ' इत्येवम्, पृष्टोऽनुयुक्त, तुष्टहृदय सतृप्तमानस, सन्, शुभोत्तर शुभपरिणामम्, उत्तर प्रतिवचनम्, वक्तु निगदितुम्, उपादत्त जग्राह, प्रत्युत्तर दातु तत्परो बभूवेति यावत् ।

प्रथिता विभाति नगरी गरीयसी
धुरि यत्र रम्यसुदतीमुखाम्बुजम् ।
कुरुविन्दकुण्डलविभाविभावित
प्रविलोक्य कोपमिव मन्यते जन ॥ २५ ॥

या क्षेमनगरीत्येवमभिख्यामावहन्त्यपि ।
पाकवैरिपुराभिख्या दधाति मणिमन्दिरै ॥ २६ ॥

तत्रास्ति देवान्त इति प्रतीतो नृप कृपाचित्रितचित्तगेह ।
क्षोणीशकोटीरसुमावलीना धूलिव्रजै पिञ्जरिताङ्घ्रिपीठ ॥ २७ ॥

यस्मिञ्छासति मेदिनी नरपतौ सद्वृत्तमुक्तात्मता
हारेष्वेव गुणाकरेषु समभूच्छिद्राणि चैवान्तत ।
लौल्यादन्यकलत्रसगमरुचि काञ्चीकलापे पर
सम्प्राप्त श्रवणेषु खञ्जनदृशा नेत्रेषु पारिप्लव ॥ २८ ॥

तस्य श्रेष्ठिपदप्राप्त सुभद्रो वणिजा पति ।
स्वय निर्वृतिरस्यासीद्या कान्ता निर्वृते पदम् ॥ २९ ॥

---

प्रथितेति—प्रथिता प्रसिद्धा, गरीयसी विशाला, नगरी वक्ष्यमाणनामधेया पुरी, विभाति शोभते, यत्र नगर्याम्, जनो लोक, धुर्यग्रभागे, कुरुविन्दकुण्डलविभया पद्मरागमणिनिर्मितकर्णाभरणदीप्त्या विभावित रक्तवर्णीकृतम्, सुदत्या मुखाम्बुज सुदतीमुखाम्बुज रम्य च तत्सुदती मुखाम्बुजञ्चेति रम्यसुदतीमुखाम्बुज सुन्दरवनितावदनवारिजम्, प्रविलोक्य दृष्ट्वा, कोपमिव क्रोधमिव तस्या इति शेष, मन्यते जानाति । तद्गुणालङ्कार । मञ्जुभाषिणीच्छन्द 'सजसा जगौ भवति मञ्जुभाषिणी' इति लक्षणात् ॥ २५ ॥

या क्षेमनगरीति—या नगरी, 'क्षेम नगरी' इत्येवमितिप्रकाराम्, अभिख्या नामधेयम्, आवहन्त्यपि दधत्यपि, मणिमन्दिरै रत्ननिकेतनै, पाकवैरिपुरमित्यभिख्या नामधेय दधातीति विरोध । पक्षे पाकवैरिणि पुरन्दरस्य पुर नगरम्, अमरावतीति यावत्, तस्याभिख्या शोभाम्, दधाति, 'अभिख्या नामशोभयो' इत्यमर । विरोधाभासालकार ॥ २६ ॥

तत्रास्तीति—तत्र क्षेमनगर्याम्, कृपया करुणया चित्रित चित्रोपेत चित्तगेह मनोगृह यस्य स, क्षोणीशाना पृथिवीपालाना कोटीरेषु मुकुटेषु विद्यमाना या सुमावल्य पुष्पस्रजस्तासाम्, धूलिव्रजै रेणुनिकरै, पिञ्जरित पीतमङ्घ्रिपीठ चरणासन यस्य स, देवान्त इति प्रतीत प्रख्यात, नृपो राजा, अस्ति विद्यते ॥ २६ ॥

यस्मिन्निति—यस्मिन् नरपतौ राजनि, मेदिनीं वसुधाम्, शासति पालयति सति, सन्ति निर्दुष्टानि वृत्तानि वर्तुलानि मुक्तानि मुक्ताफलान्यात्मा देही येषा तेषा भावस्तत्ता, अन्ततो मध्ये छिद्राणि च रन्ध्राणि च, गुणाकरेषु तन्तुसहितेषु, हारेष्वेव मणिमाल्येष्वेव, समभूत् आसीत्, अन्यत्र गुणाकरेषु गुणखनिषु जनेषु सद्वृत्तेन सदाचारेण, मुक्तो रहित आत्मा येषा तेषा भावस्तत्ता, अन्ततो हृदये, छिद्राणि दोषाश्च, नैव समभूत् । लोलस्य भावो लौल्य तस्मात्, चपलत्वात्, अन्यकलत्रैरन्यश्रोणिभि सगमस्य सम्बन्धस्य रुचिरभिलाष पर केवलम्, काञ्चीकलापे मेखलामण्डले, समभूत्, अन्यत्र लौल्यात् सतृष्णत्वात्, अन्यकलत्रै परभार्याभि सङ्गमस्य सुरतस्य रुचिरभिलाषो नाभूत्, 'दुर्गस्थाने नृपादीना कलत्र श्रोणिभार्ययो' इति रभस, पारिप्लवश्चञ्चलत्वम्, सम्प्राप्तमायतत्वात्प्राप्त श्रवण कर्ण यैस्तेषु, खञ्जनदृशा खञ्जरीटलोचनानाम्, नेत्रेषु नयनेषु, केवल समभूत्, अन्यत्र, सम्प्राप्त लब्ध श्रवण शास्त्राकर्णन यैस्तेषु जनेषु पारिप्लव क्षुद्रता न समभूत् । परिसख्यालकार । शार्दूलविक्रीडितवृत्तम् ॥ २८ ॥

तस्येति—तस्य नरपते, श्रेष्ठिपदप्राप्तो राजश्रेष्ठिपदारूढ, सुभद्र एतन्नामधेय, वणिजा पति

तयोरभूत्सुतारत्न क्षेमश्रीरिति विश्रुतम् ।
प्रत्यादेश सरस्वत्या पर्याय कमलाकृते ॥ ३० ॥
या कान्तीना परा सपद्विनयाम्बुधिचन्द्रिका ।
लज्जाया जननस्थान जयकेतुर्मनोजने ॥ ३१ ॥
विधाय पूर्णशीताशु विधाता यन्मुखाह्वयम् ।
निजासनाब्जनिद्रातो नून दु स्थितिरञ्जसा ॥ ३२ ॥
एतस्या वदन दन्तकान्तिभि क्लृप्तकेसरम् ।
पद्म ध्रुव मधुलिहा भवितव्य भवादृशा ॥ ३३ ॥

अत्रत्यजिनालयवज्रकवाटविघटनकुञ्जिकायमानस्तुतिवचनरचन पुरुषपञ्चवदनस्तत्पतिर्भविष्यतीति जननलग्नफलनिश्चयचतुरकार्तान्तिकवार्ता निशम्य तदवसरप्रतिपालनविनिद्रेण सुभद्रेण, प्रेषितो गुणभद्रसमाह्वयोऽह, भवन्त समीक्ष्य कृतार्थतामनुभवामीति व्याहृत्य, सुभद्राय वृत्तान्तमिम कथयितु निर्जगाम ।

तदनु सरसीपुष्पाण्यादाय भक्तिभरानतो
जिनपभवन विन्दन्वन्दारुकल्पकशाखिन ।
जिनवरपते पूजा कर्तुं समारभत स्वय
कुरुकुलवर सोऽय पारीणपुण्यगुणाकर ॥ ३४ ॥

---

वैश्येश , अस्तीति शेष , अस्य श्रेष्ठिन , निर्वृति एतन्नामधेया सा कान्ता वल्लभा, आसीद्, या स्वय स्वेनैव, निर्वृते सतोषस्य सुखस्य, पद स्थानम्, वर्तत इति शेष ॥ २९ ॥

तयोरिति—सा च स चेति तौ तयोर्दम्पत्यो , सरस्वत्या शारदाया प्रत्यादेश प्रतिकृति , कमलाकृतेर्लक्ष्मीसस्थानस्य, पर्यायो रूपान्तरम्, क्षेमश्रीरिति विश्रुत प्रसिद्धम्, सुतारत्न पुत्रीरत्नम्, अभूदासीत् ॥ ३० ॥

येति—या क्षेमश्री , कान्तीना दीप्तीनाम्, परा श्रेष्ठा, सपद् गुणोत्कर्ष , विनयाम्बुधेर्नम्रतासागरस्य चन्द्रिका कौमुदी, लज्जायास्त्रपाया , जननस्थानमुत्पत्तिधाम, मनोजने कामस्य, जयकेतुर्विजयवैजयन्ती । अस्तीति शेष । रूपकालकार ॥३१॥

विधायेति—विधाता ब्रह्मा, यन्मुखाह्वय यद्वदननामधेयम्, पूर्णशीताशु, पूर्णचन्द्रमसम्, विधाय रचयित्वा, निजासन स्वकीयविष्टरभूत यदब्ज कमल तस्य निद्रातो निर्मीलनात्, नून निश्चयेन, अञ्जसा याथार्थ्यम्, दु स्थिति सकष्टापन्नस्थिति , वर्तत इति शेष ॥३२॥

एतस्या इति—एतस्या क्षेमश्रिया वदन वक्त्रम्, दन्तकान्तिभिर्दशनदीप्तिभि , क्लृप्तकेसर किञ्जल्ककलितम्, पद्म कमलम्, ध्रुव निश्चयेन, वर्तते, भवादृशा त्वादृशेन, तत्र, मधुलिहा भ्रमरेण, भवितव्यम्, भावे प्रयोग ॥३३॥

अत्रत्येति—अत्रत्यजिनालयस्य वज्रकवाटयो सुदृढारयोर्विघटनेऽपनयने कुञ्जिकायमाना स्तुतिवचनरचना स्तोत्रवचनसन्दर्भो यस्य तथाभूत , पुरुषपञ्चवदनो मनुजमृगेन्द्र , तत्पति क्षेमश्रीधव , भविष्यति, इत्येवम्, जननलग्नस्य जन्मलग्नस्य फलनिश्चये परिणामनिश्चये चतुरा निपुणा ये कार्तान्तिका दैवज्ञास्तेषा वार्ता निवेदनम्, निशम्य समाकर्ण्य, तदवसरस्य तत्कालस्य प्रतिपालने प्रतीक्षणे विनिद्र सावधानस्तेन, सुभद्रेण राजश्रेष्ठिना, प्रेषित प्रहित , गुणभद्रसमाह्वयो गुणभद्रनामधेय , अह भवत्पुरोवर्ती, भवन्त श्रीमन्तम्, समीक्ष्य विलोक्य, कृतार्थता कृतकृत्यताम्, अनुभवामि भुञ्जे, इत्येवम्, व्याहृत्य निगद्य, सुभद्राय श्रेष्ठिने, इममेतम्, वृत्तान्तमुदन्तम्, कथयितु निवेदयितुम्, स निर्जगाम निश्चक्राम ।

तदनु सरसीति—तदनु तदनन्तरम्, पारीणा पारगत पुण्य सुकृत यस्य स पारीणपुण्य , गुणाना दयादाक्षिण्यादीनामाकरो गुणाकर , पारीणपुण्यश्चासौ गुणाकरश्चेति पारीणपुण्यगुणाकर , सोऽय प्रसिद्ध , कुरुकुलवरो जीवन्धर , स्वय स्वत , सरसीपुष्पाणि कासारकुसुमानि, आदाय गृहीत्वा, भक्तिभरेणानुरागाति-

गुणभद्रोऽपि सम्प्राप्य सुभद्रं भद्रमन्दिरे ।
चिन्तानिद्रां बिभेदाशु वचःपीयूषसेचनैः ॥ ३५ ॥

कश्चित्पूरुषचन्द्रमाः कुवलयायाह्लादसंदायकः
सन्तोषाम्बुधिवर्धकः स्तुतिमयीं पीयूषधारां किरन् ।
बाह्योद्याननभःस्थलीमवतरन्बाभाति यद्दर्शना-
दारामः सरसीजलच्छलवशादानन्दबाष्पं दधे ॥ ३६ ॥

सोऽयं न चन्द्रो न च पञ्चबाणो न वासवः किंतु वसन्त एव ।
कुतोऽन्यथा चम्पकपादपस्य प्रसूनभारस्ततगन्धपूरः ॥ ३७ ॥

तस्मिन्स्तुतिरवमुखरे पुरुषकुञ्जरे वनस्थलीं भास्वतीव प्राचीदिशमधिगच्छति जिनभवनं कमलवनं च क्षणादुद्घाटितकवाटमजायतेति ।

श्रुत्वा तदीयाममृतोर्मिला गा तस्मै ददावुच्छ्रितपारितोषिकम् ।
मनोरथस्फूर्तिलताप्ररोहोपदानमौल्यं किल तद्वणिक्पतिः ॥ ३८ ॥

शयेन आनतो विनम्रः इति भक्तिभरानतः, सन् जिनपभवनं जिनेन्द्रमन्दिरम्, विन्दन् प्राप्नुवन्, तत्र प्रविशन्निति यावत्, वन्दारूणां वन्दनशीलानां कल्पकशाखी कल्पवृक्षस्तस्य तथाभूतस्य, जिनवरपतेर्जिनेन्द्र-देवस्य, पूजां सपर्याम्, कर्तुं विधातुम्, समारभत समारब्धवान् । हरिणीच्छन्दः ॥३४॥

गुणभद्रोऽपीति—गुणभद्रोऽपि श्रेष्ठिसेवकोऽपि, भद्रमन्दिरे भव्यभवने, सुभद्रमेतन्नामानं राज-श्रेष्ठिनम्, सम्प्राप्य लब्ध्वा, वचःपीयूषस्य वचनसुधायाः सेचनानि समुक्षणानि तैः, आशु झटिति, चिन्तानिद्रां चिन्तास्वापम्, बिभेद खण्डयामास, तस्येति शेषः । वरागमनसमाचारेण तस्य चिन्तां दूरीचकारेति भावः ॥३५॥

कश्चिदिति—कोर्वलयं कुवलयं तस्मै महामण्डलाय, पक्षे नीलकमलाय, आह्लादसंदायको हर्ष-प्रदायकः, सन्तोष एवाम्बुधिः सन्तोषाम्बुधिः सतृप्तिसागरस्तस्य वर्धको वृद्धिकरः, स्तुतिमयीं स्तवनरूपाम्, पीयूषधारां सुधाधाराम्, किरन् प्रक्षिपन्, बहिर्भवं बाह्यं तच्च तदुद्यानञ्चेति बाह्योद्यानं बाहीकोपवनं तदेव नभःस्थली गगनभूमिस्ताम्, अवतरन् अवतीर्णो भवन्, कश्चित् कोऽपि, पूरुष एव चन्द्रमाः पूरुष-चन्द्रमाः मनुजमृगाङ्कः, बाभाति पुनः पुनरतिशयेन वा शोभते । यस्य दर्शनं यद्दर्शनं तस्मात् यदवलोकनात्, आरामः उद्यानम्, सरस्याः कासारस्य जलं सलिलं तस्य छलं व्याजं तस्मात्, आनन्दबाष्पं हर्षाश्रु, दधे धृतवान् । रूपकालंकारः । शार्दूलविक्रीडितवृत्तम् ॥३६॥

सोऽयमिति—सोऽयं प्रसिद्धः पूरुषः, न चन्द्रो न निशाकरः, न च पञ्चवाणो न च मदनः, न वासवो न पुरन्दरः, वर्तत इति शेषः, किन्तु वसन्त एव पुष्पाकर एव, वर्तत इति शेषः । अन्यथा इतरथा, चम्पकपादपस्य चाम्पेयतरोः, प्रसूनभारः कुसुमकलापः, ततो विस्तृतो गन्धपूरः सुरभिप्रवाहो यस्य तथाभूतः, कुतः कथम्, स्यादिति शेषः । अपह्नुतिरलंकारः । उपजातिवृत्तम् ॥ ३७ ॥

तस्मिन्निति—स्तुतिरवेण स्तवनशब्देन मुखरो वाचालस्तस्मिन्, पुरुषकुञ्जरे पुरुषश्रेष्ठे, तस्मिन् सात्यन्धरौ, प्राचीदिशं पूर्वाशाम्, भास्वतीव भानाविव, वनस्थलीं काननभूमिम्, अधिगच्छति समधितिष्ठति सति, जिनभवनं जिनेन्द्रमन्दिरम्, कमलवनं च पद्मारण्यञ्च, क्षणादचिरेण, उद्घाटितकवाटमपनीताररं प्रस्फु-टितदलञ्च, अजायत बभूव, इतीत्थं गुणभद्रः सुभद्रं प्रति जगाद ।

श्रुत्वेति—स चासौ वणिक्पतिश्चेति तद्वणिक्पतिः, सुभद्रश्रेष्ठी, अमृतेनोर्मिला ताम् पीयूषतरङ्ग-वतीम् तदीयां तत्सम्बन्धिनीम्, गां वाणीम्, श्रुत्वा निशम्य, तस्मै गुणभद्राय, मनोरथस्य काङ्क्षितस्य स्फूर्तिरेव विकास एव लता वल्ली तस्याः प्ररोहोऽङ्कुरस्तस्योपदानं समर्पणं तस्य मूल्यं वस्नम् 'मूल्यं वस्नोऽप्यवक्रयः' इत्यमरः, उच्छ्रितपारितोषिकं प्रचुरपुरस्कारम्, ददौ दत्तवान्, किलेति वार्तायां वाक्यालङ्कारे वा । अत्र प्रथमं चरणमिन्द्रवज्रायास्तृतीयमुपेन्द्रवज्रायाः, द्वितीयचतुर्थाविन्द्रवंशायाः, सर्वेषां मेलनादुप-जातिवृत्तम् ॥ ३८ ॥

तदनु निजसहायतासहितो वणिजा पतिस्तुङ्गतमशताङ्गमारूढ, पुरतोरणमतीत्य, पुरतो विराजमान श्रीविमानमासाद्य, तत्र वन्दारुजनसन्दोहमन्दारस्य शान्तिनाथस्य पादारविन्दसेवा-हेवाकभावकलितान्तरङ्गम्, अगण्यपुण्यपुञ्ज इव विस्तीर्णस्फटिकोपलविष्टरे तस्थिवास जीवन्धरमद्राक्षीत् ।

पश्यता वैश्यनाथेन परमोत्कृष्टलक्षणम् ।
निर्निमीलननेत्रेण निरणाय्यस्य वैभवम् ॥ ३९ ॥

कान्त्या परीत कुरुवशकेतुमुवाच मोदेन विशामधीश ।
सप्रश्रय सत्कृतशान्तिनाथमुपागत स्वागतमारचय्य ॥ ४० ॥

फल दृष्ट्योः प्राप्त परिणतमय मे सुदिवस-
स्तदस्मद्वश्याना कृतसुकृतवल्ली च फलिता ।
मदीयेष्टार्थोऽपि स्फुटतरमदूरे विजयते
यत श्रीमान्प्राप्तो नयनपथपान्थत्वमधुना ॥ ४१ ॥

पद्माप्तता कुवलयोल्लसन च तन्व
त्यद्य प्रकाशति पुरस्त्वयि राजहसे ।
सूर्यो भयाकलितवृत्तिरभूच्छशाङ्को
दोषाकरो धृतकलङ्कभर क्षयिष्णु ॥ ४२ ॥

---

तदनु निजसहायतेति—तदनु तदनन्तरम्, निजसहायतासहित स्वकीयमित्रसमूहसहित, वणिजा सार्थवाहानाम्, पति स्वामी, सुभद्र इति यावत्, अतिशयेन तुङ्ग तुङ्गतम तच्च तच्छताङ्गश्चेति तुङ्गतमशताङ्ग तत् समुच्चस्यन्दनम्, आरूढोऽधिष्ठित, सन्, पुरतोरण नगरद्वारम्, अतीत्य समुल्लङ्घ्य, पुरतोऽग्रे, विराजमान शोभमानम्, श्रीविमान श्रीजिननिकेतनम्, आसाद्य प्राप्य, तत्र श्रीविमाने, वन्दारुजनाना वन्दनशीलपुरुषाणा सन्दोह समूहस्तस्य मन्दार पारिजातकस्तस्य, शान्तिनाथस्य षोडशतीर्थंकरस्य, पादारविन्दसेवाया चरणकमलाराधनाया यो हेवाकभावो नम्रत्वभावस्तेन कलित सहितमन्तरङ्ग स्वान्त यस्य तम्, अगण्यपुण्यपुञ्ज इवापरिमितसुकृतराशाविव, विस्तीर्णे विस्तृत य स्फटिकोपलविष्टर सितोपलासन तस्मिन्, तस्थिवास स्थितम्, जीवन्धर सात्यन्धरिम्, अद्राक्षीद् विलोकयामास ।

पश्यतेति—परमोत्कृष्टानि श्रेष्ठतमानि लक्षणानि सामुद्रिकशास्त्रप्रणीतचिह्नानि यस्य त जीवन्धरम्, पश्यता विलोकयता, निर्निमीलने निमेषरहिते नेत्रे यस्य तेन, वैश्यनाथेन सुभद्रश्रेष्ठिना, अस्य सात्यन्धरे, वैभव माहात्म्यम्, निरणायि निर्णीतम् । कर्मणि प्रयोग ॥ ३९ ॥

कान्त्येति—सप्रश्रय सविनयम्, सत्कृत शान्तिनाथो येन त सत्कृतशान्तिनाथ सुपूजितषोडश तीर्थंकरम्, कान्त्या दीप्त्या, परीत सहितम्, कुरुवशस्य केतुर्ध्वजस्त जीवन्धरम् उपागत प्राप्त, विशामधीश श्रेष्ठी सुभद्र इति यावत्, स्वागत शुभागमनम्, आरचय्य कृत्वा, मोदेन हर्षेण, उवाच जगाद ॥ ४० ॥

फलमिति—यत कारणात्, श्रीमान् भवान्, नयनपथस्य नेत्रमार्गस्य पान्थ पथिकस्तस्य भावस्तत्त्वम्, प्राप्त समायात, ममेति शेष, तत् तस्मात्कारणात्, अधुना साम्प्रतम्, दृष्ट्योर्नयनयो, परिणत पक्वम्, फल प्रयोजनम्, प्राप्त लब्धम्, मयेति शेष, अयमेष, मे मम, सुदिवस शोभनवासर अस्तीति शेष, वशे भवा वश्या, मम वश्या अस्मद्वश्यास्तेषा मत्पूर्वपुरुषाणाम्, कृतसुकृतवल्ली कृतपुण्यलता, फलिता च सञ्जातफला च जातेति शेष, मदीयेष्टार्थोऽपि मदीप्सितार्थोऽपि, स्फुटतर प्रकटतर यथा स्यात्तथा, अदूरे निकटे, विजयते सर्वोत्कर्षेण वर्तते । शिखरिणीच्छन्द ॥ ४१ ॥

पद्माप्ततामिति—पद्मया लक्ष्म्या—आप्त प्राप्तस्तस्य भावस्तत्ता ताम्, पक्षे पद्मै कमलैराप्तस्तस्य भावस्ताम्, कुवलयस्य महामण्डलस्य पक्षे नीलकमलस्योल्लसन विकासनञ्च, तन्वति विस्तारयति, त्वयि भवति, राजहसे श्रेष्ठनृपतौ अथवा राजा च चन्द्रश्च हसश्च सूर्यश्च, अनयो समाहारस्तस्मिन्, पुरोऽग्रे

युष्मत्पादपयोजधूलिनिचयैरत्रालयो मामक
शुद्ध कार्य इति प्रमोदकलिका चित्ते जरीजृम्भते ।
सेय सप्रति धीमता विकसिता कार्या न चेदेष वै
द्रागाकारखिलीभवत्तदभिधावाच्यार्थमाटीकते ॥ ४३ ॥

सकलभवनवृन्द सत्पदाम्भोजधूली-
परिचयपरिहीन नैजनाम्नोऽन्यथार्थम् ।
भजत इति ह लोके सुप्रतीत सुधीना
निखिलगुणपयोधे मद्वचोऽङ्गीकुरुष्व ॥ ४४ ॥

तदनन्तरमनुकम्पितचेत कुरुकुलशशाङ्कस्तद्वचन बहुमन्यमान, तपनरथजवनिन्दनेन स्यन्दनेन गोपुरद्वारं प्रविश्य, प्रासादपालिकावातायनप्रसृतपुरन्ध्रिकापाङ्गतरङ्गितनीलोत्पलश्यामलतोरणदामावलीषु प्रतोलीषु रक्तनयननालीको नालीकसायकस्तालीफलस्तनीना व्यालीनिभवेणीना रमणीमणीनामक्षिभ्य पुष्कलसमदाश्रुलहरीम्, कटितटेभ्यो नीवीबन्धपदवीम्, हृदयेभ्यो धैर्यपरिपाटीम्, युगपद्गलितामादधानो, मन्दमन्द तन्मन्दिरमविन्दत ।

---

प्रकाशति दीप्यमाने सति, प्रकाशतीत्यत्रात्मनेपदाच्छतृप्रयोगश्चिन्त्य, सूर्यो दिवाकर, भया दीप्त्या आकलिना युक्ता वृत्तिर्यस्य तथाभूत, शशाङ्को मृगाङ्क, दोषाकरो रात्रिकर पक्षे दोषाणामवगुणानामाकर खनि, धृत कलङ्कभरो लक्ष्मभर पक्षे कल्मषसमूहो येन तथाभूत, क्षयिष्णु क्षयशीलश्च, अभूद् बभूव । अन्यस्मिन्प्रतापाधिके विद्यमाने निष्प्रतापा अन्ये निष्प्रभा भीताश्च भवन्त्येवेति भाव । श्लेष । वसन्ततिलका वृत्तम् ॥ ४२ ॥

युष्मत्पादेति—अत्र नगरे, मामको मदीय, आलय आगत्य लीयते यस्मिन्नित्यालयो भवनम्, तव पादपयोजयोश्चरणकमलयोर्धूलिनिचया परागसमूहास्तै शुद्ध पवित्र, कार्यो विधातव्य, इत्येवम्, प्रमोदकलिका हर्षकोरक 'कलिका कोरक पुमान्' इत्यमर, चित्ते हृदये, जरीजृम्भते अतिशयेन वर्धते, सा पूर्वोक्ता, इयमेषा प्रमोदकलिका, सम्प्रतीदानीम्, धीमता सुधिया भवता, विकसिता प्रस्फुटा, कार्या कर्तव्या, न चेद् यद्येव न स्यात्, तर्हि, वै निश्चयेन, एष आलयशब्द, द्राक् सत्वरम्, आकारेण सस्थानेन दीर्घाकारवर्णेन च खिलीभवन् विरुद्धीभवन् यस्तदभिधायास्तच्छब्दस्य वाच्यार्थं प्रतिपाद्यार्थस्तम्, आटीकते प्राप्नोति आकारेण रहित आलयो लयो भवति तस्य च प्रतिपाद्योऽर्थो विनाशस्त प्राप्नोति यावत् ॥४३॥

सकलभवनवृन्दमिति—सता साधूना यानि पदाम्भोजानि चरणकमलानि तेषा धूली परागस्तस्या परिचय सम्पर्कस्तेन परिहीन रहितम्, सकलभवनवृन्द निखिलनिकेतननिकुरम्बम्, नैजनाम्न स्वकीयाभिधानस्य, अन्यथार्थं विपरीताभिधेयम्, भजते प्राप्नोति, इत्येवम्, लोके भुवने, सुधीना विदुषाम्, अत्र सुधीशब्दस्य षष्ठीबहुवचने 'सुधीनाम्' इति प्रयोगश्चिन्त्य, सुप्रतीत सुप्रसिद्धम्, अस्तीति शेष । हे निखिलगुणपयोधे ! सकलगुणसागर ! मद्वचोऽस्मद्वचनम्, अङ्गीकुरुष्व स्वीकुरु । 'ह' इत्यव्यय पादपूर्तौ । मालिनीच्छन्द ॥४४॥

तदनन्तरमिति—तदनन्तर तत्पश्चात्, अनुकम्पित दयायुक्त चेतो हृदय यस्य तथाभूत, कुरुकुलशशाङ्क कुरुवशचन्द्र, जीवन्धर इति यावत्, तद्वचन श्रेष्ठिवाचम्, बहुमन्यमान—आदरेण स्वीकुर्वाण, तपनरथजवनिन्दनेन सूर्यस्यन्दनरयविनिन्दकेन, स्यन्दनेन शताङ्गेन, गोपुरद्वार प्रधानप्रवेशमार्गम्, प्रविश्य प्रवेश कृत्वा, प्रासादपालिकाया हर्म्यसन्ततेर्वातायनेभ्यो गवाक्षेभ्य प्रसृतानि निर्गत्य विस्तृतानि यानि पुरन्ध्रिकाणा सौभाग्यवतीनामपाङ्गानि कटाक्षास्तैस्तरङ्गितानि कल्लोलितानि यानि नीलोत्पलानि नीलकमलानि तै श्यामला नीलप्रभास्तोरणदामावल्यो वन्दनस्रक्सन्ततयो यासु तासु, प्रतोलीषु रथ्यासु, रक्ते लोहितवर्णे नयननालीके नेत्रारविन्दे यस्य तथाभूत, नालीकसायक कमलपुष्पायुध कामदेवपदधारक जीवन्धर इति यावत्, तालीफले इव स्तनौ यासा तासाम्, व्यालीनिभा नागीतुल्या वेण्य कबर्यो यासा तासाम्, रमणीमणीना नारीश्रेष्ठानाम्, अक्षिभ्यो नयनेभ्य, पुष्कलसमदाश्रुलहरी पूर्णप्रहर्षबाष्पपरम्पराम्, कटितटेभ्योऽ-

तत्रालये कनकपीठमलंकरिष्णु-
जिष्णुप्रतीपविभव कुरुवशकेतु ।
सप्रार्थितो बहुतर वणिजा वरेण
कन्याकराम्बुरुहपीडनमन्वमस्त ॥ ४५ ॥

हुताशने साक्षिणि भद्रलग्ने सुभद्रदत्ता कुरुसिंह एष ।
क्षेमश्रिय कोमलगात्रवल्लीं जग्राह पाणौ जगदेकवीर ॥ ४६ ॥

पाणिपद्म गृहीत्वास्या स्विन्नाङ्गुलिदलोज्ज्वलम् ।
मृदुल सुकुमाराङ्गया सदिग्धे कुरुकुञ्जर ॥ ४७ ॥

तथाहि—

अवश्यायाकीर्ण किमु कमलकोशो न हि न हि
प्रभेदृक्तस्यास्ते किमु नखसुधासूतिमिहिका ।
न चास्या सौगन्ध्य सपदि करनीरेजविगल-
न्मधुस्यन्द कि वा न हि न हि सुधैव प्रसरति ॥४८॥

तौ दम्पती महाकान्ती मणिभूषणमण्डितौ ।
चकासामासतुर्वेद्या रतिपञ्चशराविव ॥४९॥

---

वलग्नप्रदेशेभ्य , नीवीबन्धपदवीं अधोवस्त्रग्रन्थिसन्ततिम्, हृदयेभ्यश्चित्तेभ्य , धैर्यपरिपाटीं धीरतापरम्पराम्, युगपदेककालम्, गलिता पतिताम्, आदधान कुर्वाण , मन्दमन्द शनै शनै , तन्मन्दिर सुभद्रश्रेष्ठिसदनम्, अविन्दत लेभे ।

तत्रालय इति—तत्रालये तस्मिन् भवने, कनकपीठ सुवर्णसिंहासनम्, अलकरिष्णु शोभयन् , जिष्णुप्रतीपो पुरन्दरप्रतिपक्षो विभव ऐश्वर्यं यस्य स , कुरुवशकेतुर्जीवन्धर , वणिजा वरेण सुभद्रेण, बहुतर प्रचुरतरम्, सप्रार्थित प्रार्थनाविषयीकृत सन् , कन्याकराम्बुरुहपीडन पतिवरापाणिपद्मपीडनम्, अन्वमस्त स्वीचकार । वसन्ततिलकावृत्तम् ॥४५॥

हुताशन इति—एकश्चासौ वीरश्चेत्येकवीर , जगत्येकवीर इति जगदेकवीरो लोकैकशूर , एष स , कुरुसिंहो जीवन्धर , भद्रलग्ने समुत्तमावसरे, हुताशने वह्नौ, साक्षिणि साक्षात्कर्तरि सति, सुभद्रेण श्रेष्ठिना दत्ता समर्पिता ताम्, कोमला मृदुला गात्रवल्ली तनुलता यस्यास्ताम्, क्षेमश्रियम्-एतन्नाम्नी कन्याम्, पाणौ करे, जग्राह गृहीतवान्, तामुदवोढेति भाव ॥४६॥

पाणिपद्ममिति—कुरुकुञ्जरो जीवन्धर , सुकुमाराङ्गया मृदुलकलेवराया , अस्या क्षेमश्रिय , मृदुल कोमलम्, स्विन्नाङ्गुलय एव स्वेदाक्तहस्तशाखा एव दलानि पत्राणि तैरुज्ज्वल मनोहरम्, पाणिपद्म करकमलम्, गृहीत्वा स्वहस्तेनादाय, सदिग्धे सदेहञ्चकार ॥४७॥

तथाहि—सदेहप्रकार प्रदर्शयति ।

अवश्यायाकीर्ण इति—अस्या हस्त , अवश्यायैस्तुषारैराकीर्णो व्याप्त , कमलकोश कमलकुड्मलम्, किम् कथम्, उ इति वितर्के पूर्णसदेह परिहरति–नहि स न भवेत्, हि यत , तस्य कमलकोशस्य, ईदृक् हस्तसदृशी, प्रभा कान्ति , न नो वर्तते इति शेष । अथवा नखमेव नखरमेव सुधासूतिश्चन्द्रस्तस्य मिहिका हिम 'अवश्यायस्तु नीहारस्तुषारस्तुहिन हिमम् । प्रालेय मिहिका चाथ हिमानी हिमसहति ' इत्यमर , किम् कथम्, उ इति वितर्के, अथ सदेह परिहरति, अस्या नखसुधासूतिमिहिकाया सौगन्ध्य सुरभित्व न च वर्तते, अत्र तु सौगन्ध्य वर्तते तदय सा न भवतीति यावत् , किं वा यद्वा, सपदि झटिति करनीरेजात्पाणिपद्माद् विगलश्चासौ मधुस्यन्दश्च मकरन्दनिस्यन्दश्चेति तथा, अस्तीति शेष, एतत्सदेहमपि परिहरति—नहि नहि स न वर्तते किन्तु सुधैव पीयूषमेव, प्रसरति प्रसार प्राप्नोति । ससशयालकार । शिखरिणीच्छन्द ॥४८॥

तौ दम्पतीति—महती कान्तिर्ययोस्तौ, तौ दम्पती जायापती, वेद्या परिष्कृताया भूमौ, 'वेदी

क्षेमश्री कुरुकुञ्जरस्य सविधे पाथोजधिक्कारिणी
पद्भ्यामूरुयुगेन सारकदलीकाण्डश्रियं बिभ्रती ।
पाणिभ्यां नवपल्लवप्रतिमतां संसूचयन्ती स्वयं
वक्षोजद्वितयेन कोकयुगलन्यक्कारधीरा बभौ ॥४६॥

*इति महाकविहरिचन्द्रविरचिते श्रीमति जीवन्धरचम्पूकाव्ये*
*क्षेमश्रीलम्भो नाम षष्ठो लम्भः ।*

---

परिष्कृता भूमि:' इत्यमरः, रतिश्च पञ्चशरश्चेति रतिपञ्चशरौ ताविव रतिपञ्चशराविव रतिप्रद्युम्नाविव, 'इवेन नित्यसमासो विभक्त्यलोपश्च' इति समासः, चकासामासतु शुशुभाते । उपमा ॥४८॥

**क्षेमश्रीरिति**—पद्भ्यां चरणाभ्याम्, पाथोजधिक्कारिणी कमलविनिन्दिनी, ऊरुयुगेन सक्थियुग्मेन, सारकदलीकाण्डश्रियं श्रेष्ठतमरम्भाप्रकाण्डलक्ष्मीम्, बिभ्रती दधती पाणिभ्यां हस्ताभ्याम्, स्वयं स्वतः, नवपल्लवप्रतिमतां प्रत्यग्रकिसलयतुलनाम्, संसूचयन्ती प्रकटयन्ती, वक्षोजद्वितयेन कुचयुगलेन, कोकयुगलस्याश्चक्रवाकद्वन्द्वस्य धिक्कारे पराभवे धीरा निपुणा, क्षेमश्री सुभद्रश्रेष्ठिसुता, कुरुकुञ्जरस्य जीवन्धरस्य, सविधे समीपे । बभौ शुशुभे । उपमा । शार्दूलविक्रीडितच्छन्दः ॥४६॥

इति महाकविहरिचन्द्रविरचिते श्रीमति 'कौमुदी' व्याख्याधरे जीवन्धरचम्पूकाव्ये
क्षेमश्रीलम्भो नाम षष्ठो लम्भः ॥



# सप्तमो लम्भः

तदनु कुरुवरिष्ठ क्षेमलक्ष्म्या कृशाङ्ग्या
निरवधिसुखताति नित्यसयोगहेतुम् ।
अविरतमनुभूय प्रागिवासो कदाचि-
न्निशि निरगमदेक काननान्त क्रमेण ॥ १ ॥

तदनु, प्राणकान्तावियोगेन तान्ता दग्धरज्जुसमकान्तिमङ्क्रान्ताम्, नयनयुगल निश्वास च दीर्घमादधानाम्, पयोधरभर सन्ताप च गुरु बिभ्राणाम्, कचनिचय चित्त च तम समूहसहायमातन्वतीम्, तनुवल्लीं मध्यस्थल चातितनुमाकलयन्तीम्, दु खसागरनिमग्ना पुत्रीं विलोक्य, सुभद्रोऽपि सतप्तस्वान्त कान्तारमागत्य, तत्र तत्र विचित्य, तदीयमार्गमलभमानो न्यवर्तिष्ट ।

स्वामी च काननतले गगने शशीव
सञ्चारकेलिचतुरो मणिभूषणानि ।
कस्मैचिदर्पयितुमैहत दानशोण्डो
धर्माध्वनीनमनसे वनसेवकाय ॥ २ ॥
करधृतऋजुतोत्र कम्बलच्छन्नदेह
कटितटगतदात्र स्कन्धसम्बद्धसीर ।
वनभुवि पथि कश्चिन्नागमत्तस्य पार्श्वं
नियतिनियतरूपा प्राणिना हि प्रवृत्ति ॥ ३ ॥

---

तदन्विति—तदनु पाणिग्रहणानन्तरम्, असो प्रसिद्ध, कुरुवरिष्ठ कुरुवशश्रेष्ठो जीवन्धर, कृशाङ्ग्या तन्वङ्ग्या, क्षेमलक्ष्म्या क्षेमश्रिया, साकम्, नित्यसयोगोऽनवरतसमागमो हेतु कारण यस्यास्ताम्, निरवधिसुखताति नि सीमसौख्यसमूहम्, अविरतमभीक्ष्णम्, अनुभूय समुपभुज्य, प्रागिव पूर्ववत्, कदाचिज्जातुचित, निशि रजन्याम्, एकोऽद्वितीय सन्, क्रमेण क्रमश काननान्त वनान्तम्, निरगमत् निश्चक्राम । मालिनीच्छन्द ॥ १ ॥

तदनु प्राणकान्तवियोगेनेति—तदनु तदनन्तरम्, प्राणकान्तस्य जीवन्धरस्य वियोगो विरहस्तेन, तान्ता दु खिताम्, दग्धरज्जुसमा प्लुष्टप्रग्रहसदृशी या कान्तिस्तया सङ्क्रान्ता मिलिता ताम्, नयनयुगल नेत्रयुगम्, नि श्वास श्वासोच्छ्वासञ्च, दीर्घमायतम्, आदधाना बिभ्रतीम्, पयोधरभर स्तनभारम्, सताप दु खञ्च, गुरु दुर्भरमधिकञ्च, बिभ्राणा दधतीम्, कचनिचय केशसमूह चित्तञ्च मानसञ्च, तम समूहसहाय ध्वान्तनिचयसदृश मोहसमूहसहितम् च, आतन्वती कुर्वन्तीम्, तनुवल्ली शरीरलता मध्यस्थल च, कटिप्रदेश च, अतितनु कृशतरम्, आकलयन्तीमादधतीम्, दु खसागरेऽशर्मसमुद्रे निमग्ना ब्रुडिता ताम्, पुत्री सुता क्षेमश्रियमिति यावत्, विलोक्य दृष्ट्वा, सुभद्रोऽपि वणिग्वरोऽपि, सतप्त खिन्न चित्त हृदय यस्य तथाभूत सन्, कान्तार वनम्, आगत्य समेत्य, तत्र तत्र तेषु तेषु प्रदेशेषु, विचित्य समन्विष्य, तदीयमार्गं तदयनम्, अलभमानोऽप्राप्नुवन्, न्यवर्तिष्ट प्रत्यावृत्तो बभूव ।

स्वामी चेति—गगने वियति, शशीव चन्द्र इव, सञ्चारकेल्या विहारक्रीडाया चतुरो दक्ष इति सञ्चारकेलिचतुर, दाने विश्राणने शोण्डो निपुण इति दानशोण्ड, स्वामी च जीवन्धरश्च, धर्मस्य रत्नत्रयरूपस्याध्वनीन पथिक मनो हृदय यस्य तस्मै, कस्मैचित्, वनसेवकाय वनचराय, मणिभूषणानि रत्नाभरणानि, अर्पयितुम् प्रदातुम्, ऐहत ऐच्छत् । वसन्ततिलकावृत्तम् ॥ २ ॥

करधृतेति—करे हस्ते धृत गृहीतम् ऋजु सरल तोत्र वैणुक ('परेना' इति प्रसिद्ध) येन स

तत कृपासक्रान्तस्वान्त कुरुनिशाकान्त, पार्श्वगत नीलकम्बलावगुण्ठितकलेवरतयान्तरमेयत्वेन बहिरपि प्रसरताज्ञानपटलेनेवावृतम्, मलीमसोष्णीषपरिष्कृतोत्तमाङ्गतया कुरुवीरदर्शननिर्गमिष्यत्पापमिव प्रतीयमानम्, कान्त्या जात्या च जघन्यवर्णम्, तमेनमालोक्य, 'अपि कुशलम्' इति पप्रच्छ ।

सौलभ्य हि महत्ताया भूपणाय प्रकल्पते ।
प्रभुत्वस्येव गाम्भीर्यमौदार्यस्येव सौम्यता ॥ ४ ॥

महत्त्वमात्र कनकाचलेऽपि लोष्टेऽपि सौलभ्यमिह प्रतीतम् ।
एतद्द्वय कुत्रचिदप्रतीत कुरुप्रवीरे न्यवसत्प्रकाशम् ॥५॥

वृपलोऽपि विनीत सन्नुवाच कुरुकुञ्जरम् ।
कुशल साम्प्रत युष्मद्दर्शनेन विशेपत ॥ ६ ॥

तदिदमाकर्ण्याव्याजबन्धुर्जीवन्धर, जीवादितत्त्वयाथात्म्यविवेचनचतुर तत्तादृशागण्यपुण्यैकलभ्या मोक्षपदवी विवरीतुमारभत ।

---

'तोत्र वैणुकम्' इत्यमर, कम्बलेन रल्लकेन छन्न पिहितो देहो विग्रहो यस्य स, 'समो रल्लककम्बलौ' इत्यमर, कटितट मध्यप्रदेश गत प्राप्तमिति कटितटगतम्, तथाभूत दात्र लवित्र यस्य स, स्कन्धे बाहुशिरसि सम्बद्ध स्थापित सीरो हलो यस्य स, कश्चित् कोऽपि, ना पुमान्, वनभुवि काननवसुधायाम्, पथि मार्गे, तस्य जीवन्धरस्य, पार्श्वं समीपम्, आगमत् आजगाम, हि यत प्राणिना जन्मिनाम्, प्रवृत्तिश्चेष्टा, नियत्या देवेन नितत नियन्त्रित रूप परिणामो यस्यास्तथाभूता । भवतीति शेष । अर्थान्तरन्यास । मालिनीवृत्तम् ॥ ३ ॥

तत इति—ततस्तदनन्तरम्, कृपया करुणया सक्रान्त मिलित स्वान्त चित्त यस्य स, कुरुनिशाकान्त कुरुवशचन्द्र, जीवन्धर इति यावत्, पार्श्वगत निकटप्राप्तम् । नीलकम्बलेन कृष्णरल्लकेनावगुण्ठित समावृत कलेवर शरीर यस्य तस्य भावस्तत्ता तया, अन्तर्मध्ये, अमेयत्वेन मातुमशक्यत्वेन, बहिरपि प्रसरता प्रसरणशीलेन, अज्ञानपटलेनाज्ञानसमूहेन, आवृतमिव तिरोहितमिव, मलीमसेन मलिनेनोष्णीषेण शिरोवेष्टनेन परिष्कृत सहितमुत्तमाङ्ग शिरो यस्य तस्य भावस्तत्ता तया, कुरुवीरदर्शनेन जीवन्धरविलोकनेन निर्गमिष्यन्निष्क्रामिष्यत्पाप दुरित यस्य तथाभूतमिव प्रतीयमान दृश्यमानम्, कान्त्या दीप्त्या, जात्या च ज्ञात्या च, जघन्यो हीनो वर्णो रूप शूद्रसज्ञकश्च यस्य तम्, त पूर्वोक्तम्, एन नरम्, आलोक्य दृष्ट्वा, 'अपि कुशलम्' 'कच्चित् क्षेमम्' इति प्रपच्छ पृच्छति स्म ।

सौलभ्यमिति—हि निश्चयेन, सौलभ्य सुप्राप्यत्वम्, सर्वेषामिति शेष, महत्ताया महत्त्वस्य, भूषणायाभरणाय, प्रकल्पते जायते । यो हि महान् सर्वेषा सुलभो भवेत् स साधुरिति यावत् । किं वत् ? प्रभुत्वस्य समृद्धिमत्त्वस्य भूषणाय गाम्भीर्यमिव स्थैर्यमिव, औदार्यस्य दातृत्वस्य, सौम्यतेव सज्जनतेव । उपमा ॥ ४ ॥

महत्त्वमात्रमिति—इह लोके, महत्त्वमेव महत्त्वमात्रम्, केवलमहत्त्वमिति यावत्, कनकाचलेऽपि सुमेरावपि, सौलभ्य सुप्राप्यत्वम्, लोष्टेऽपि पाषाणखण्डेऽपि, प्रतीत प्रसिद्धम्, एतयोर्महत्त्वसौलभ्ययोर्द्वयं युगलम्, कुत्रचित्क्वापि, अप्रतीतमप्रसिद्धम्, कुरुप्रवीरे जीवन्धरे तु, प्रकाश स्पष्ट यथा स्यात्तथा, न्यवसत् निवास चकार ॥ ५ ॥

वृषलोऽपीति—वृषलोऽपि शूद्रोऽपि, विनीतो विनम्र सन्, कुरुकुञ्जर जीवन्धरम्, उवाच जगाद, साम्प्रतमधुना, युष्मद्दर्शनेन भवदवलोकनेन, विशेषत सातिशयम्, कुशल मङ्गलम्, अस्तीति शेष ॥ ६ ॥

तदिदमिति—अव्याजबन्धुर्निश्छलबन्धु, जीवादितत्त्वाना जीवप्रभृतिपदार्थाना याथात्म्यस्य वास्तविकस्वरूपस्य विवेचने निरूपणे चतुरो विदग्ध, जीवन्धर सात्यन्धरि, तदिद वृषलोक्तम्, आकर्ण्य श्रुत्वा, तत्तादृशेन अगण्येन प्रचुरेण पुण्येन सुकृतेन-एकेन-अद्वितीयेन लभ्या प्राप्या ताम्, मोक्ष पदवीं मुक्तिपद्धतिम्, विवरीतु वर्णयितुम् । आरभत तत्परो बभूव ।

कुशल न हि कर्मषट्कजात विविधाशाव्रततिप्ररोहकन्दम् ।
अपवर्गजमात्मसाध्यमाहु कुशल सौख्यमनन्तमात्मरूपम् ॥ ७ ॥
तच्च रत्नत्रये पूर्णे परम प्राप्यमात्मन ।
तच्च सद्दृष्टिसज्ज्ञानचारित्राणि प्रकीर्तितम् ॥ ८ ॥
आप्तागमपदार्थाना श्रद्धान दर्शन विदु ।
तन्मूले ज्ञानचारित्रे भव्यलोकैकभूषणे ॥ ९ ॥
उत्तमाङ्गमिवाङ्गेषु नयन करणेष्विव ।
मुक्त्यङ्गेषु प्रधानाङ्ग सम्यग्दर्शनमिष्यते ॥ १० ॥
आत्मा हि ज्ञानदृक्सौख्यलक्षणो विमल पर ।
सर्वाशुचिनिदानेभ्यो देहादिभ्य इतीरित ॥ ११ ॥
इत्यादि स्वार्थविज्ञान सम्यक्ज्ञानमसशयम् ।
सम्यक्ज्ञानवता कार्य परित्याग परस्य वै ॥ १२ ॥
परित्यागवतो जीवा द्विविधा परिकीर्तिता ।
अनगाराश्च सागारा पूर्वे सावद्यवर्जिता ॥ १३ ॥
यतीना सुधर्म न शक्तोषि वोढु महोक्षेण वाह्य यथा तत्किशोर ।
अतस्त्व गृहाण गृहस्थस्य धर्म यतो मुक्तिलक्ष्मीरदूरे भवित्री । १४॥

कुशलमिति—विविधा बहुप्रकारा या आशाव्रततयस्तृष्णावल्लर्यस्तासा प्ररोहस्याङ्कुरस्य कन्द मूलम्, कर्मषट्केन कृष्यादिषट्कर्मसमूहेन जात समुत्पन्नम्, सौख्य शर्म, कुशल क्षेमम्, न हि निश्चयेन न वर्तते, अपवर्गज मोक्षोत्पन्नम्, आत्मसाध्य स्वसाध्यम्, अनन्तमन्तातीतम्, आत्मरूपमात्मस्वभावात्मकम्, सौख्य शर्म, कुशल क्षेमम्, आहु कथयन्ति, सन्त इति शेष ॥ ७ ॥

तच्च रत्नत्रय इति—आत्मनश्चित, परममुत्कृष्टम्, तच्च सौख्यञ्च ,रत्नत्रये सम्यग्दर्शनादित्रितये सति, प्राप्य लभ्यम्, भवेदिति शेष । तच्च रत्नत्रयञ्च, सद्दृष्टिश्च सज्ज्ञानञ्च चारित्रञ्चेति सद्दृष्टिसज्ज्ञानचारित्राणि सम्यग्दर्शनसम्यग्ज्ञानसम्यक्चारित्राणि, प्रकीर्तित कथितम्, विशेष्यापेक्षयैकत्वम् ॥ ८ ॥

आप्तागमेति—आप्तश्च जिनेन्द्रश्चागमश्च शास्त्रञ्च पदार्थश्च जीवादितत्त्वञ्चेत्याप्तागमपदार्थास्तेषाम्, श्रद्धान प्रत्यय, दर्शन सम्यग्दर्शनम्, तत्सम्यग्दर्शन मूल कारण ययोस्ते, भव्यलोकाना भव्यप्राणिनामेकभूषणे, मुख्याभरणे, ज्ञानचारित्रे बोधवृत्ते, विदुर्जानन्ति, सन्त इति शेष ॥ ९ ॥

उत्तमाङ्गमिति—अङ्गेषु हस्तपादाद्यवयवेषु, उत्तमाङ्गमिव शिर इव, करणेषु हृषीकेषु, नयन लोचनमिव मुक्त्यङ्गेषु मोक्षसाधनेषु, सम्यग्दर्शनमाद्यरत्नम्, प्रधानाङ्ग प्रमुखसाधनम्, इष्यतेऽभिलष्यते ॥ १० ॥

आत्मा हीति—हि निश्चयेन, ज्ञानदृक्सौख्यानि बोधप्रत्ययाह्लादा लक्षण चिह्न यस्य तथाभूत विमलो निर्मल आत्मा जीव ,सर्वाशुचिनिदानेभ्यो निखिलामेध्यकारणेभ्य देहादिभ्य शरीरादिभ्य परो भिन्न ,अस्तीति, ईरित कथित ॥ ११ ॥

इत्यादीति—इत्यादि पूर्वोक्तप्रकारेण, स्वार्थविज्ञानम् आत्मपदार्थबोध , असशय सन्देहरहितम्, उपलक्षणाद्विपर्ययाध्यवसायरहितमपि, सम्यग्ज्ञान साधुबोध , अस्तीति शेष , सम्यग्ज्ञानवता सम्यग्बोधयुक्तेन जनेन, वै निश्चयेन, परस्य भिन्नस्य शरीरादे परित्याग परिहार , कार्यो विधातव्य ॥ १२ ॥

परित्यागेति—परित्यागेन युता परित्यागयुता परपरिहारसहिता , अत्र लक्षणभ्रष्टतया 'परित्यागवत' इति पाठो हेय , जीवा प्राणिन , द्विविधा द्विप्रकारा , परिकीतिता कथिता , अनगारा मुनय सागाराश्च गृहस्थाश्च, तयो पूर्वेऽनगारा , सावद्यवजिता सपापकार्य रहिता , सन्तीति शेष ॥ १३ ॥

यतीनामिति—त्वम्, महोक्षेण महावृषभेण, वाह्य वोढु योग्य भारम्, तत्किशोरो यथा तद्बालक इव,

१ सज्ज्ञान ब० ।

पञ्चाणुव्रतसम्पन्ना गुणशिक्षाव्रतोद्यता ।
सम्यग्दर्शनविज्ञाना सावद्या गृहमेधिनः ॥ १५ ॥

हिंसानृतस्तेयवधूव्यवायपरिग्रहेभ्यो विरतिः कथञ्चित् ।
मद्यस्य मांसस्य च माक्षिकस्य त्यागस्तथा मूलगुणा इमेऽष्टौ ॥१६॥

दिग्देशानर्थदण्डेभ्यो विरतिस्तु गुणव्रतम् ।
भोगोपभोगसंख्यानं केचिदाहुर्गुणव्रतम् ॥१७॥

सामायिकं प्रोषधकोपवासस्तथातिथीनामपि संग्रहश्च ।
सल्लेखना चेति चतुःप्रकारं शिक्षाव्रतं शिक्षितमागमज्ञैः ॥१८॥

इत्युक्तव्रतसम्पन्नः क्वचिद्देशे क्वचित्क्षणे ।
महाव्रती भवेत्तस्माद्ग्राह्यं धर्ममगारिणाम् ॥१९॥

इति प्रतिपादितं धर्मं शिरसा मनसा च प्रतिगृह्णानमन्तर्गतप्रतापकोरकपुञ्जमिव मणिभूषणगणमात्मना वितीर्णमत्यादरमेदुरेण करेण पचेलिमाभाग्यवृन्दमिवादाय सम्मदपयःपूरै

यतीनां मुनीनाम् सुधर्मं सम्यग्धर्मम्, बोढुं धर्तुम्, न शक्नोषि न समर्थोऽसि, अतोऽस्मात्कारणात्, गृहस्थस्य गृहमेधिनः, धर्मंपञ्चाणुव्रतात्मकम्, गृहाण स्वीकुरु, यतो यस्माद्धर्मात्, मुक्तिलक्ष्मीर्मोक्षश्रीः, अदूरे निकटे भवित्री भविष्यति ॥ १४ ॥

पञ्चाणुव्रतसम्पन्नेति—पञ्चभिरणुव्रतैः सम्पन्ना इति पञ्चाणुव्रतसम्पन्ना अणुव्रतपञ्चकयुक्ताः, गुणशिक्षाव्रतेषूद्यता पालनतत्परा इति गुणशिक्षाव्रतोद्यताः, समीची दर्शनविज्ञाने येषां ते सम्यग्दर्शनविज्ञानाः सम्यग्दर्शनसम्यग्ज्ञानसहिताः, अवद्यैः सहिता इति सावद्याः सारम्भाः, जनाः, गृहमेधिनः सागाराः, सन्तीति शेषः ॥१५॥

हिंसानृतस्तेयेति—हिंसा चानृतं च स्तेयं च वधूव्यवायश्च परिग्रहश्चेति हिंसानृतस्तेयवधूव्यवायपरिग्रहास्तेभ्यो हिंसादिपञ्चपापेभ्यः, कथञ्चित् स्थूलप्रकारेण, विरतिर्विरमणम्, तथा, मद्यस्य मदिरायाः, मांसस्य पिशितस्य, माक्षिकस्य च क्षौद्रस्य च त्यागः परिहारः, इमे एते, अष्टौ अष्टसंख्याकाः, मूलगुणाः मुख्यगुणाः, सन्तीति शेषः ॥१६॥

दिग्देशानर्थेति—दिक् च देशश्च, अनर्थदण्डश्चेति दिग्देशानर्थदण्डास्तेभ्यः, विरतिस्तु विरमणं तु गुणव्रतं प्रसिद्धम्, अस्तीति शेषः, केचिदाचार्याः, भोगोपभोगसंख्यानं भोगोपभोगयोः संख्यानं नियमनमिति भोगोपभोगसंख्यानम्, भुक्त्वा परिहातव्यो भोगो भुक्त्वा पुनश्च भोक्तव्यः' इति भोगोपभोगयोर्लक्षणम्, गुणव्रतम्, आहुः कथयन्ति, दिग्व्रतं देशव्रतमनर्थदण्डव्रतमिति गुणव्रतानि सन्ति, मतान्तरापेक्षया देशव्रतस्थाने भोगोपभोगपरिमाणव्रतं गण्यते, तच्च शिक्षाव्रतचतुष्टये ॥१७॥

सामायिक इति—सामायिकं सर्वावद्यपरिहारः, प्रोषधकोपवासः पर्वचतुष्टयेऽनशनधारणम्, तथा अतिथीनां मुन्यार्यिकादीनामपि, संग्रहश्च दानार्थं प्रतिग्रहणम्, सल्लेखना च सन्न्यासश्च, इतीत्थम्, आगमज्ञैः शास्त्रज्ञैः, चतुःप्रकारं चतुर्विधम्, शिक्षाव्रतं प्रसिद्धम्, शिक्षितं निदिष्टम् । मतान्तरापेक्षया, सल्लेखनायाः स्थाने देशव्रतं भोगोपसंख्यानं वा व्रतं गण्यते ॥१८॥

इत्युक्तव्रतसम्पन्न इति—इत्युक्तव्रतैः पूर्वोक्तव्रतैः सम्पन्नः सहितः, गृही, क्वचित् कस्मिंश्चिद्, देशे मर्यादाया बहिरिति यावत्, क्वचित् क्षणे सामायिकादिप्रतिज्ञाकाले, महाव्रती महाव्रतयुक्त इव, भवेत् स्यात्, तस्मात् कारणात्, अगारिणां गृहस्थानाम्, धर्ममाचारं, ग्राह्यं गृहीतुं योग्यम्, अस्तीति शेषः, धर्मशब्दस्य क्लीबे प्रयोगोऽप्रसिद्धः, अथवागारिणां धर्मं ग्राह्यं कथयन्तीति शेषः ॥१९॥

इति प्रतिपादितमिति—इति पूर्वोक्तप्रकारेण, प्रतिपादितं निरूपितम्, धर्मं गृहस्थाचारम्, शिरसा मूर्ध्ना, मनसा हृदयेन च, प्रतिगृह्णानं स्वीकुर्वाणम्, अन्तर्गतप्रतापस्यान्तःस्थिततेजसः कोरकपुञ्जमिव कुड्मलकलापमिव, आत्मना स्वेन, वितीर्णं प्रदत्तम्, मणिभूषणगणं रत्नाभरणसमूहम्, पचेलिमभाग्यवृन्दमिव

क्षालयन्तमिवातिसन्तोषकोरकितान्तरङ्गं तं धार्मिकमुत्सृज्य तस्य स्मरन्नेव कुरुकुञ्जरस्तस्माद्वना न्निर्जगाम ।

गभस्तिमाली गगनस्य मध्यं द्रुमालवालं कलमध्यमेण ।
जिह्वा च शोषं सममाप नृणां शरीरमुद्यद्घनधर्मतोयम् ॥२०॥

तदानीं, पचेलिमहेलिसन्तापार्ततया घृष्टचन्दनरसपाण्डुगण्डमण्डलेषु वनशुण्डालेषु चलाचलनिजकर्णतालपवनसवीज्यमानाननेषु हस्तोज्झितशीकरनिकरससिक्तहृदयेषु मन्दमन्दमागत्य सरोवरप्रवेशनपरेषु, कर्णिकारमुकुलानि निर्भिद्यान्तर्लीयमानेषु षट्चरणेषु, सतप्तजलं विहाय शीतलनलिनीदलं सेवमानेषु कारण्डवेषु, पञ्जरबद्धक्रीडाशुकेषु जलं याचमानेषु, त्रिजगदेकातपत्रायितकीर्तिमण्डलेन सकलजनतासन्तापनाशनोऽपि कुरुवंशपावनः श्रान्तो विश्रान्तिकृते नमेरुतरुमूलमाससाद ।

निषण्णस्तत्र मधुरं रवं शृण्वन्कुरूत्तमः ।
सन्दिग्धे सिन्धुगम्भीरः कल्याणाद्रिरिव स्थिरः ॥२१॥
टङ्कारः किं मारबाणासनस्य भङ्कारोऽयं मत्तमाध्वीलिहां किम् ।
हंसानां किं मञ्जुलः कण्ठनादः किंवा लीलाकोकिलालाप एषः ॥२२॥

---

प्राक्तोन्मुखदेवसमूहमिव, अत्यादरमेदुरेण आदरातिशयमिलितेन, करेण हस्तेन, आदाय गृहीत्वा, समर्पय पूरैर्हर्षाश्रुजलप्रवाहैः, क्षालयन्तमिव प्रक्षालनं कुर्वन्तमिव, अतिसन्तोषेण प्रहर्षातिशयेन कोरकितं व्याप्तमन्तरङ्गं चेतो यस्य तम्, तं पूर्वोक्तम् धर्मेण चरति धार्मिकस्तम् धर्मात्मानम् उत्सृज्य विसृज्य, तस्य धार्मिकनृपस्य स्मरन्नेव स्मरणं कुर्वन्नेव 'अधीगर्थदयेशां कर्मणि' इति कर्मणि षष्ठी, कुरुकुञ्जरो जीवन्धरः, तस्मात्पूर्वोक्तात्, वनात्काननात्, निर्जगाम निरक्रमीत् ।

गभस्तिमालीति—गभस्तिमाली सूर्यः, गगनस्य वियतः, मध्यं मध्यभागम्, गेणो मृगः, जलमध्यं जलं मध्ये यस्य तं तोयमध्यं, द्रुमालवालं वृक्षावापं, नृणां मनुष्याणाम्, जिह्वा रसना, शोषं शोषणम्, तृष्णातिरेकादिति यावत्, शरीरञ्च गात्रञ्च, उद्यत् प्रकटीभवत्, घनघर्मतोयं प्रचुरप्रस्वेदम्, समं सार्धम्, आप प्रापत् । सहोक्तिरलङ्कारः ॥२०॥

तदानीमिति—तदानीं तस्मिन् काले, पचेलिमस्तरुणो यो हेलिः सूर्यस्तस्य सन्तापेन निदाघातिशयेनार्ततया पीडिततया, घृष्टचन्दनरसेन घृष्टमलयजरसेन पाण्डूनि धवलानि गण्डमण्डलानि कटतटानि येषां तेषु, हस्तेभ्यः शुण्डाभ्यः उज्झिता उत्सृष्टा ये शीकरनिकरा जलकणसमूहास्तैः ससिक्तं हृदयं येषां तेषु, वनशुण्डालेषु काननकरिषु, मन्दमन्दं शनैः शनैः, आगत्य समेत्य, सरोवरेषु कासारेषु प्रवेशनं प्रवेशस्तस्मिन्परा उद्युक्तास्तथाभूतेषु सत्सु, षट्चरणेषु भ्रमरेषु, कर्णिकारमुकुलानि द्रुमोत्पलकुड्मलेषु 'अथ द्रुमोत्पलः । कर्णिकारः परिव्याधः' इत्यमरः, निर्भिद्य विदार्य, अन्तर्मध्ये, लीयमानेषु स्थितेषु सत्सु, कारण्डवेषु काकतुण्डेषु दीर्घपादेषु कृष्णवर्णेषु जलपक्षिविशेषेषु सतप्तजलं सतप्तनीरम्, विहाय त्यक्त्वा, शीतलं च तन्नलिनीदलञ्चेति शीतलनलिनीदलं तत्, शिशिरकमलिनीपत्रम्, सेवमानेषु समाश्रयत्सु सत्सु, पञ्जरेषु बद्धाः पञ्जरबद्धाः ते च ते क्रीडाशुकाश्चेति पञ्जरबद्धक्रीडाशुकास्तेषु शलाकागृहरुद्धक्रीडाकीरेषु, जलं सलिलम्, याचमानेषु प्रार्थयत्सु सत्सु, त्रिजगतस्त्रिलोकस्यैकातपत्रायितमेकच्छत्रायितं यत्कीर्तिमण्डलं यशश्चक्रवालं तेन, सकलजनतायाः निखिलजनसमूहस्य सन्तापनाशनोऽपि सन्तापापहारकोऽपि, कुरुवंशपावनो जीवन्धरः, श्रान्तः सन्, विश्रान्तिकृते विश्रामाय, नमेरुतरुमूलं छायावृक्षमूलम्, आससाद प्राप ।

निषण्ण इति—तत्र छायावृक्षतले, निषण्णः समुपविष्टः, सिन्धुरिव सागर इव गम्भीरोऽगाधधैर्यः, कल्याणाद्रिरिव सुमेरुरिव, स्थिरः सुनिश्चलमानसः, कुरूत्तमो जीवन्धरः, मधुरं मनोहरम्, रवं शब्दम्, शृण्वन् समाकर्णयन्, सन्दिग्धे सन्देहं चकार ॥२१॥

अथ तमेव सन्देहं दर्शयति—टङ्कार इति—अयमेषः, किं मारबाणासनस्य कन्दर्पकोदण्डस्य, टङ्कारः

इति सदेह पराङ्गनानूपुररवविनिश्चयेन निवर्तयन्परपरिग्रहविरक्तमानस कुरुकुलोत्तस पराङ्मुखो बभूव ।

सचरन्ती वने तत्र भर्त्रा काचन खेचरी ।
प्रतार्य त मिषेणाशु पुरस्तादस्य सन्यधात् ॥२३॥

यस्या मुख पर्वविधु विजित्य भ्रूचापदम्भाज्जयकेतुनद्धम् ।
कर्णद्वये तज्जयकीर्तिपत्र बभार ताटङ्कमणिच्छलेन ॥ २४ ॥

वृषस्यन्ती वरारोहा वृषस्कन्ध कुरूद्वहम् ।
वीक्ष्य तस्याङ्गसौन्दर्य नातृपत्सा त्रपाकुला ॥ २५ ॥

यस्यासाविह रेजतुर्जयरमाक्रीडामहीध्राविव
श्रीदेवीस्थितिवज्रपट्टमिव यद्वक्ष स्थल व्याबभौ ।
नाभिर्यौवतदृग्विशालगजतारोधार्थवारीनिभा
जङ्घे पूगगुलुच्छनिन्दनकरे पादौ जिताम्भोरुहौ ॥ २६ ॥

यद्वक्त्र विततान वाग्वरसतीक्रीडास्थलीविभ्रम
यन्नासा च कलावतारविलसन्नि श्रेणिकासशयम् ।

---

प्रत्यञ्चारव , किम्, मत्ताश्च ते माध्वीलिहश्चेति मत्तमाध्वीलिहस्तेषा क्षीबषट्पदानाम्, झङ्कारो गुञ्जन-शब्द , किम्, हसाना मरालानाम्, मञ्जुलो मनोहर , कण्ठनादो गलध्वनि , कि वा, एषोऽयम्, लीला कोकिलाना केलिपरपुष्टानामालाप शब्द , अस्तीति शेष । सदेहालङ्कार , शालिनीच्छन्द 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकै ' इति लक्षणात् ॥२२॥

इतीति—इति इत्याकारम्, सदेह सशयम्, पराङ्गनाया परनार्या नूपुररवस्य मञ्जीरशिञ्जानस्य विनिश्चयो निर्णयस्तेन, विवर्तयन् दूरीकुर्वन्, परपरिग्रहादन्यस्त्रिया विरक्त विरत मानस चित्त यस्य तथाभूत कुरुकुलोत्तस कुरुवशाभरणोपमो जीवन्धर , पराङ्मुखो विमुख , बभूव अजायत ।

सञ्चरन्तीति—तत्र तस्मिन्, वने गहने, भर्त्रा पत्या, सह, सञ्चरन्ती भ्रमन्ती, काचन कापि, खेचरी विद्याधरी, त भर्तारम्, मिषेण केनापि व्याजेन, प्रतार्य वञ्चयित्वा, जलानयनार्थं त दूरे प्रहि येति यावत्, आशु झटिति, अस्य जीवन्धरस्य, पुरस्तात् अभिमुखम्, सन्यधात् सनिहिता बभूव ॥२३॥

यस्या मुखमिति—यस्या वनिताया , मुख वदनम्, पर्वविधु राकानिशाकरम्, विजित्य पराजित कृत्वा, भ्रूचापदम्भात् भ्रुकुटिकार्मुकपटात्, जयकेतुना विजयवैजयन्त्या नद्ध बद्धमिति जयकेतुनद्ध सत्, ताटङ्कमणिच्छलेन कर्णाभरणमणिव्याजेन, कर्णद्वये श्रवणयुगले, तस्य पर्वविधोर्जय पराभवस्तस्य कीर्तिपत्र यश पत्रम्, बभार दधार, अपह्नुतिरलङ्कार ॥२४॥

वृषस्यन्तीति—वृषस्य स्कन्ध इव स्कन्धो यस्य त पीवरासमिति यावत्, कुरूद्वह जीवन्धरम् । वृषस्यन्ती मैथुनेच्छयाभिलषन्ती, 'अश्ववृषयोर्मैथुनेच्छायायाम्' इति क्यच्यासुगागम , वरारोहा सुन्दराङ्गी, त्रपाकुला लज्जावती, सा वनिता, तस्य जीवन्धरस्य, अङ्गसौन्दर्य कामकमनीयकम्, वीक्ष्य दृष्ट्वा, नातृपत् नो तृप्ता बभूव ॥२५॥

यस्यासाविहेति—इह लोके, यस्य सात्यन्धरे , असौ स्कन्धौ, जयरमाया विजयलक्ष्म्या क्रीडा महीध्राविव केलिपर्वताविव, रेजतु शुशुभाते, यस्य वक्ष स्थल यद्वक्ष स्थल यदुर प्रदेश , श्रीदेव्या लक्ष्मी-देव्या स्थितेरवस्थानस्य वज्रपट्टमिव हीरकफलकमिव, व्याबभौ विशेषेण शुशुभे, नाभिस्तुन्दि , युवतीना समूहो यौवत तस्य दृशो लोचनान्येव विशालगजता बृहद्गजसमूहस्तस्य रोधार्थमवरोधनार्थ या वारी गजबन्धन तस्या निभा सदृशी, आसीदिति शेष , जङ्घे प्रसृते, पूगगुलुच्छस्य क्रमुकानोकहप्रकाण्डस्य निन्दनकरे निन्दाविधायके, पादौ चरणौ च, जिताम्भोरुहौ पराभूतपद्मौ, आस्तामिति शेष । उपमा । शार्दूलविक्रीडित छन्द ॥२६॥

यद्वक्त्रमिति—यस्य वक्त्र यद्वक्त्र यद्वदनम्, वागेव वरसतीति वाग्वरसती सरस्वती सती-

यन्नेत्रे ददतुर्विशालकमलाक्रीडातटाकभ्रम
यद्भ्रूयुग्ममपाचकार नियत बिम्बच्छदाडम्बरम् ॥ २७ ॥
अश्वस्यन्ती विशालाक्षी विश्वाधिकविभोज्ज्वलम् ।
कुरुवीरमुवाचेद कुसुमायुधवञ्चिता ॥ २८ ॥
श्रीमन्न तवाङ्गकान्त्या मे नयने सफलेऽधुना ।
कर्णौ वचनमाधुर्याद्धृदय गुणमालया ॥ २९ ॥
ममार्य विरहानल शमय शीतलापाङ्गतो
मुखेन्दुरुचिसपदा सपदि छिन्धि कामान्धताम् ।
सुधासमगिराधरामृतरसप्रदानेन च
प्रणाशय घृणानिधे बहलकामतृष्णामिमाम् ॥ ३० ॥

इत्यादितद्वचनपरिपाटीमाकर्ण्य शम्बरारिविकारसतमसवासरायमाणमानस कृत्यविदामग्रगण्य कुरुवरेण्य परीतवैराग्यप्रावण्यस्तदरण्यान्निर्गन्तुमारभत । तदनु पञ्चशरनाराचवञ्चितविवेका सा विद्याधरचञ्चलाक्षी किञ्चिदन्तरमुपसृत्य मदनहुतभुगरणिनिकाशतनुलता तदिङ्गित विज्ञाय तन्मनोवशीकारकोरकितकुतूहला निजोदन्तमित्थ प्रकटयामास ।

---

शिरोमणिस्तस्या या क्रीडास्थली केलिभूमिस्तस्या विभ्रम सन्देहस्तम्, विततान विस्तारयामास, यन्नासा च यदीयनासिका च, कलाना वैदग्ध्यानामवताराय समवतरणाय विलसन्ती शोभमाना या नि श्रेणिका सोपान तस्या सशयस्तम्, विततान, यन्नेत्रे यदीयलोचने, कमलाया श्रिया क्रीडातटाक इति कमलाक्रीडातटाक, विशालो विपुलो य कमलाक्रीडातटाको लक्ष्मीकेलिकासारस्तस्य भ्रम सन्देहस्त ददतु अदाताम्, यद्भ्रूयुग्म यदीयभ्रुकुटियुगलम्, नियत ध्रुवम्, बिम्बच्छदाडम्बरम्, पिचुमन्दपत्राडम्बर अपाचकार तिरश्चकार । उपमा ॥ २७ ॥

अश्वस्यन्तीति—अश्वस्यन्ती मैथुनेच्छावती, कुसुमायुधेन कामेन वञ्चिता प्रतारिता, विशालाक्षी दीर्घलोचना, सा ललना, विश्वेभ्योऽधिका विश्वाधिका सर्वाधिका सा चासा विभा च दीप्तिश्च तयोज्ज्वलो दीप्तस्तम्, कुरुवीर जीवन्धरम्, इद वक्ष्यमाणम् । उवाच जगाद ॥२८॥

श्रीमन्निति—हे श्रीमन् हे शोभासम्पन्न, तव भवत अङ्गकान्त्या शरीरदीप्त्या, मे मम, नयने नेत्रे, सफले सार्थकनिर्माणे, जाते इति शेष, अधुना साम्प्रतम्, वचनमाधुर्याच्छब्दमाधुर्यात्, कर्णौ श्रुती, गुणमालया गुणपङ्क्त्या, हृदय चित्तञ्च सफलमिति शेष ॥२९॥

ममार्येति—हे आर्य ! हे श्रेष्ठ ! शीतलापाङ्गत शिशिरकटाक्षत, मम त्वदेकानुरागिण्या, विरहानल विप्रयोगपावकम्, शमय प्रशान्त कुरु, मुखेन्दुरुचिसम्पदा वदनचन्द्रदीप्तिसम्पत्त्या, सपदि झटिति, कामान्धता मदनान्धताम्, छिन्धि नाशय, हे घृणानिधे हे दयानिधे, सुधासमगिरा पीयूषतुल्यवाण्या, अधरामृतरसेन दशनच्छदसुधारसेन च, इमा प्राणापहारिणीम् । बहलकामतृष्णा सातिशयमदनपिपासाम्, प्रणाशय नष्टा कुरु । पृथिवीच्छन्द ॥३०॥

इत्यादितद्वचनपरिपाटीमिति—तस्या वचनपरिपाटीति तद्वचनपरिपाटी, इत्यादिश्चासौ तद्वचनपरिपाटी चेति तथा ताम्, पूर्वोक्ततद्वचनपरम्पराम्, आकर्ण्य श्रुत्वा, शम्बरारिर्मनसिजस्तस्य विकार समुद्रेक एव संतमस गाढध्वान्त तस्य वासरायमाण दिवसायमान मानस चित्त यस्य स, कृत्यविदा कार्यज्ञानाम्, अग्रगण्य प्रधान, कुरुवरेण्य कुरुश्रेष्ठो जीवन्धर परीत प्राप्त वैराग्ये प्रशमित्वे प्रावण्य नैपुण्य येन तथाभूत सन्, तदरण्यात्तत्काननात्, निर्गन्तु बहिर्यातुम् आरभत तत्परोऽभूत् । तदनु तदनन्तरम्, पञ्चशरस्य कामस्य नाराचैर्बाणैर्वञ्चित प्रतारितो विवेको सदसज्ज्ञान यस्यास्तथाभूता, सा पूर्वोक्ता, विद्याधरचञ्चलाक्षी खेचरचपललोचना, किञ्चित्किमपि, अन्तर समीपस्थलम्, उपसृत्य समुपेत्य मदनहुतभुज कामानलस्यारणिनिकाशारणिसदृशी तनुलता शरीरव्रततिर्यस्यास्तथाभूता, सती तदिङ्गित जीवन्धरचेष्टितम्, विज्ञाय ज्ञात्वा, तस्य जीवन्धरस्य मनोवशीकारेण चित्तवशीकरणेन कोरकित

अनङ्गतिलकाह्वया खचरकन्यकाहं विभो
वनान्तमिदमापिता गगनचारिणा केनचित् ।
अनेन निजनायिकाभयवशेन निःसारिता
दयाविसरवारिधे महित रक्षणीया त्वया ॥ ३१ ॥

अशरण्यशरण्यत्वं परोपकृतिशीलता ।
दयापरत्वं दाक्षिण्यं श्रीमतः सहजा गुणाः ॥ ३२ ॥

"तावता, हा प्रिये हा प्राणकान्ते क्वासि क्वासि, वियोगवेदना विषमिव विसर्पति, पावक इवाङ्गानि निर्दहति, मृत्युरिव प्राणान्निःसारयति, मोह इव विद्या विलुम्पति, क्रकच इव मर्माणि कृन्तति" इत्यादि कस्यचिदार्तस्वरं निशम्य विद्याधरविशालनयनाया मिषेणान्तर्हितायां, विस्मयविस्तृताक्षं कुरुहर्यक्षं सोऽपि विद्याधरः समीपमागत्य सगद्गदमेवमुवाच ।

सतीमुदन्याकुलितान्तरङ्गामत्रैव संस्थाप्य जलाशयाय ।
गतोऽहमागत्य सरोरुहाक्षीं नाद्राक्षमद्य प्रतिकूलदिष्टात् ॥ ३३ ॥

नरोत्तम तया सार्धं विद्यापि मम निर्गता ।
मनोवृत्तिश्च तत्कर्तुं चिन्तापि न हि शक्यते ॥ ३४ ॥

---

समुत्पन्नं कुतूहलं कौतुकं यस्यास्तथाभूता सती, निजोदन्तं स्ववृत्तान्तम्, इत्थमनेन प्रकारेण, प्रकटयामास प्रकथयामास ।

अनङ्गतिलकाह्वयेति—हे विभो हे स्वामिन्, हे दयाविसरवारिधे हे कृपाविस्तारसागर, हे महित हे पूजित, केनचित्केनापि, गगनचरिणा खेचरेण, इदमेतत्, वनान्तं काननान्तम्, आपिता आगमिता, निजनायिकाभयवशेन स्ववल्लभाभीतिवशेन, निःसारिता स्वसमीपाद्दूरीकृता, अनङ्गतिलकाह्वया अनङ्गतिलका नाम्नी, खचरकन्यका विद्याधरपुत्री, अहं भवत्पुरो वर्तमाना, त्वया भवता, रक्षणीया रक्षितुं योग्या, अस्मीति शेषः । पृथिवीच्छन्दः ॥ ३१ ॥

अशरण्येति—अशरण्यानां शरणरहितानां शरण्यत्वं रक्षकत्वम् इत्यशरण्यशरण्यत्वम्, परोपकृतिः परोपकारः शीलं स्वभावो येषां तेषां भावः परोपकृतिशीलता, दयापरत्वं करुणापरता, दाक्षिण्यमौदार्यम् । एते श्रीमतो महानुभावस्य, सहजाः स्वाभाविकाः, गुणाः वैशिष्ट्योत्पादकाः, सन्तीति शेषः ॥ ३२ ॥

तावतेति—तावता तावत्कालेन, हा प्रिये वल्लभे, हा प्राणकान्ते हा जीवितेश्वरि, क्वासि क्वासि कुत्र वर्तसे, कुत्र वर्तसे, वियोगवेदना विरहव्याधिः, विषमिव गरलमिव, विसर्पति प्रसरति, पावक इव वह्निरिव अङ्गानि प्रतीकान्, निर्दहति भस्मसात्करोति, मृत्युरिव यम इव, प्राणान् आयुःप्रभृतीन्, निःसारयति निष्कासयति, मोह इव भ्रम इव, विद्यां मन्त्रसिद्धिम्, विलुम्पति लुप्तां करोति, क्रकच इव करपत्रमिव, मर्माणि ईर्माणि कृन्तति छिनत्ति, इत्यादि इतिप्रभृतिकम्, कस्यचित्कस्यापि, आर्तस्वरं पीडितशब्दम्, निशम्य श्रुत्वा, विद्याधरविशालनयनायाः खेचरायताक्ष्याम्, मिषेण व्याजेन, अन्तर्हितायां तिरोहितायाम्, सत्याम्, सोऽपि पूर्वोक्तशब्दकर्ता, विद्याधरः खेचरः, विस्मयेन विस्तृते अक्षिणी यस्य तम् आश्चर्यायतलोचनम्, कुरुहर्यक्षं कुरुसिंहम्, 'सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः' इत्यमरः समीपं निकटम्, आगत्य समेत्य, सगद्गदं समवरुद्धकण्ठस्वरसहितं यथा स्यात्तथा, एवं वक्ष्यमाणप्रकारेण, उवाच जगाद ।

सतीमुदन्येति—सतीमपासुलाम्, उदन्यया पिपासयाकुलितं दुःखीभूतमन्तरङ्गं हृदयं यस्यास्ताम्, सरोरुहाक्षीं कमललोचनाम्, अत्रैव इहैव, संस्थाप्य स्थितां कृत्वा, जलाशयाय सरोवराय, गतो यातः, अहं तत्प्राणेश्वरः आगत्य जलाशयात्प्रत्यावृत्य, अद्य साम्प्रतम्, प्रतिकूलदिष्टात् विरुद्धभाग्यात्, नाद्राक्षम् नावलोकयामास ॥ ३३ ॥

नरोत्तमेति—हे नरोत्तम हे पुरुषोत्तम, यद्यस्मात्, तया प्राणवल्लभया, सार्धं सह, मम खेचरस्य, विद्यापि विचाराविचारशक्तिरपि, मनोवृत्तिश्च मानसिकशक्तिरपि निर्गता निष्क्रान्ता, तत् तस्मात् कारणात् चिन्तापि, सा कुत्र गता भवेदित्यादिविचारोऽपि, कर्तुं विधातुम्, न हि शक्यते न वै पार्यते ॥३४॥

इति कर्तव्यतामूढ मामुद्दिश्य नरोत्तम ।
प्रज्ञानामग्रगण्यस्त्व ब्रूहि कर्तव्यमत्र वै ॥ ३५ ॥

इत्यादिविद्याधरदैन्यदन्तुरितवचनरचनामाकर्ण्य पारावारगभीरकुरुवीरो मन्दस्मित-रुचिलहरीकपटेन सुधाधारा किरन्निव गम्भीरवचनगुम्भ विजृम्भयामास ।

धैर्यौदार्यविवर्जित क्षितिपति प्रज्ञाविहीनो गुरु
कृत्याकृत्यविचारशून्यसचिव सग्रामभीरुर्भट ।
सर्वज्ञस्तवहीनकल्पनकविर्वाग्मित्वहीनो बुध
स्त्रीवैराग्यकथानभिज्ञपुरुप सर्वे हि साधारणा ॥ ३६ ॥

वज्रात्कठोरतरमेणदृशा हि चित्त
पुष्पादतीव मृदुलो वचनप्रचार ।
कृत्य निजालककुलादपि वक्ररूप
तस्माद्बुधा सुनयना न हि विश्वसन्ति ॥ ३७ ॥

वक्र श्लेष्मनिकेतन मलमय नेत्रद्वय तत्कुचौ
मासाकारघनौ नितम्बफलक रक्तास्थिपुञ्जाततम् ।
शीताशुर्विकचोत्पल करिपते कुम्भौ महासैकत
भातीत्येवमुशन्ति मुग्धकवयस्तद्रागविस्फूर्जितम् ॥ ३८ ॥

---

इतीति—नरेषूत्तमो नरोत्तमस्तत्सम्बुद्धौ हे नरोत्तम हे पुरुषश्रेष्ठ, इति पूर्वोक्तप्रकारेण, कर्तव्यताया मूढस्त कार्यानभिज्ञम्, मा शरणापन्नम्, उद्दिश्य समभिलक्ष्य, प्रज्ञाना विदुपाम्, अग्रगण्य प्रधान, त्व भवान्, अत्र विपये, वै निश्चयेन, कर्तव्य करणीयोपायम्, ब्रूहि निवेदय ॥३५॥

इत्यादीति—इत्यादि पूर्वोक्तप्रकारा विद्याधरस्य खेचरस्य दैन्यदन्तुरिता दैन्यव्याप्ता या वचन रचना वाक्सन्दर्भस्ताम्, आकर्ण्य श्रुत्वा, पारावार इव सागर इव गभीरोऽगाधधैर्य, कुरुवीरो जीवन्धर, मन्दस्मितस्य मन्दहास्यस्य या रुचिलहरी कान्तिपरम्परा तस्या कपटेन व्याजेन, सुधाधारा पीयूषधाराम्, किरन्निव प्रक्षिपन्निव, गम्भीरवचनगुम्भ विशिष्टार्थोपेतवचनसमूहम, विजृम्भयामास वर्धयामास, उवाचेति यावत् ।

धैर्यौदार्यविवर्जित इति—धैर्यञ्चोदार्यञ्चेति धैर्यौदार्ये स्थैर्यदातृत्वे ताभ्या विवर्जितो रहित, क्षितिपती राजा, प्रज्ञया बुद्ध्या विहीनो रहित प्रज्ञाविहीन गुरुरुपाध्याय कृत्याकृत्ययो करणीयाकरणीययो विचारेण विमर्शेन शून्य इति कृत्याकृत्यविचारशून्य स चासो सचिवश्च मन्त्री चेति तथा, सग्रामा-त्समरात् भीरुर्भीरुक सग्रामभीरु, भटो योद्धा, सर्वज्ञस्तवेन जिनेन्द्रस्तुत्या हीना रहिता, सन्ति प्र स समु प्रेक्षा यस्येति सर्वज्ञस्तवहीनकल्पन स चासौ कविश्च काव्यकर्ता चेति तथा, प्रशस्तानव स्य स वाग्मी तस्य भावो वाग्मित्व तेन हीनो रहित, श्चेति तथा, विकसितवैराग्ययेन, एते सर्वे समस्ता कथाया वार्तायामनभिज्ञ इति स्त्रीवैराग्यकथानभिज्ञ स चा ार्दूलविक्रीडित यथा न् ॥३६॥ साधारणा समाना, सन्तीति शेष, समुच्चयालङ्का

वज्रादिति—हि यत, एणदृशा मृगलोच , चित्त मन स्तत्स्माद्विदुरात्, कठोरतर तीक्ष्णतरम्, वचनप्रचारो वाक्यसमूह पुष्पात्कुसुमात्, अती तराम्, मृदुलो धनुकोमल, कृत्य कार्यम्, निजालकक लादपि स्वकीयकेशसमूहादपि, वक्ररूप कुटिला , अस्तीति शेष, तस्मात्कारणात् बुधा विपश्चित, सुनयना सुलोचना नारीमिति यावत्, न हि न्ति न वै प्रतियन्ति, तस्या विश्वास नो कुर्वन्तीति भाव ॥ ३७ ॥

वक्त्रमिति—श्लेष्मण कफस्य नि न स्थानमिति श्लेष्मनिकेतनम्, वक्त्र वदनम्, मलमय मलप्रचुरम्, नेत्रद्वय नयनयुगलम्, मासा ण पिशिताकारेण घनौ निविडौ, तस्या कामिन्या कुचौ स्तनौ, रक्तञ्च रुधिरञ्चास्थीनि च कीकसा चेति रक्तास्थीनि तेषा पुञ्जेन समूहेनातत विस्तृत स्थूलमिति

इत्यादिनिजवचोविलासं विद्याधरजडहृदये सारमेयोदरे सर्पिरिवासलग्नमालोक्य विस्तारितकरुणः कुरुवारणः, तस्माद्विपिनान्निर्गत्य, निसर्गरुचिरां नितम्बिनीमिव मुखभागकलिततिलकशोभमानां पृथुलकुचविराजितामक्षतरूपशोभितां मदनाधिष्ठितां चारामस्थलीमाससाद ।

यत्र हि—

> श्रोत्रं भृङ्गकुलारवः सुखयति प्रत्यग्रपुष्पस्तरु-
>
> र्नेत्रं फुल्लसरोजगन्धलहरी घ्राणं मनो दीर्घिका ।
>
> वायुः स्पर्शनमन्ततो रसभरीपूर्णं फलानां चयः
>
> पक्वोऽयं रसनां तदिन्द्रियगणः सर्वं सुखं गाहते ॥ ३९ ॥
>
> निर्मला सरसी यत्र निर्मिमीते मुदं पराम् ।
>
> विशाला पद्मरुचिरा वीक्षिकेव वनश्रियः ॥ ४० ॥

तत्र चाभ्रंलिहस्य शकुन्तसन्तानदन्तुरितनीलच्छदस्य मधुलुब्धमधुकरकुलान्वीकृतस्य कस्यचरसालरसारुहस्य शाखाग्रभागविराजितं वनदेवतारसपूर्णहेमकरण्डकायमानं परिपाकपाटलफल

---

यावत्, नितम्बफलकं कटिपश्चात्प्रदेशः क्रमेण, शीतांशुश्चन्द्रः, विकचोत्पलं प्रफुल्लनीलारविन्दम्, करिपतेर्गजेन्द्रस्य, कुम्भो गण्डो, महासैकतं दीर्घपुलिनम्, इवेति शेषः, भाति शोभते, एवमनेन प्रकारेण, मुग्धकवयो मूढकवयः, तस्या रागस्तद्रागस्तस्य विस्फूर्जितं वृद्धिर्यथा स्यात्तथा, उशन्ति इच्छन्ति, 'वश कान्तौ' इत्यस्य लटि रूपम् । यथासंख्यमलङ्कारः ॥३८॥

इत्यादिनिजवचोविलासमिति—इत्यादिश्चासौ निजवचोविलासश्च तम्, पूर्वोक्तस्ववचनचेष्टितम्, विद्याधरस्य खगस्य जडहृदये मुग्धमनसि, सारमेयोदरे कुक्कुरजठरे, सर्पिरिव घृतमिव, असलग्नमनासक्तम्, आलोक्य दृष्ट्वा, विस्तारिता प्रसारिता करुणा कृपा येन सः, कुरुवारणो जीवन्धरः, तस्मात्पूर्वोक्तात्, विपिनात् काननात्, निर्गत्य निष्क्रम्य, निसर्गरुचिरां स्वभावसुभगाम्, नितम्बिनीमिव नारीमिव, आरामस्थलीमुद्यानभूमिम्, आससाद समुपजगाम, अथोभयोः सादृश्यमाह—मुखभागेऽग्रभागे पक्षे वदनैकदेशे ललाट इति यावत्, कलितेन स्थितेन तिलकेन क्षुरकवृक्षेण पक्षे स्थासकेन शोभमानां विराजमानां ताम्, पृथुभिर्बृहदाकारैर्लकुचैर्डहुवृक्षैः पक्षे पृथुलाभ्यां पीनाभ्यां कुचाभ्यां स्तनाभ्यां विराजितां शोभिताम्, अक्षतरुभिर्विभीतकवृक्षैरुपशोभितां विराजितां पक्षेऽक्षतरूपेणाखण्डसौन्दर्येण शोभितां समलङ्कृताम्, मदनेन मदनवृक्षेण पक्षे कामेनाधिष्ठितां सहिताम् ।

यत्र हि—यस्यामारामस्थल्यां हि ।

श्रोत्रमिति—भृङ्गकुलस्य षट्पदसमूहस्यारवो गुञ्जनध्वनिः, श्रोत्रं कर्णम्, प्रत्यग्राणि नूतनानि पुष्पा[illegible] यस्मिन्निति प्रत्यग्रपुष्पः, तरुर्वृक्षः, नेत्रं नयनम्, फुल्लसरोजानां विकसितसरसीरुहाणां गन्धलहरी[illegible] घ्राणं नासाम्, दीर्घिका वापिका, मनो हृदयम्, वायुः पवनः, स्पर्शनमाद्येन्द्रियम्, [illegible] समूहः, रसनाम्, अ[illegible]त, प[illegible]यमेषः, फलानां मोचामातुलिङ्गमाकन्दादीनाम्, चयः निखिलः, इन्द्रियगणो [illegible] विस[illegible]करोति, तत् तस्मात्कारणात्, यत्रारामस्थल्याम्, सर्वो [illegible] प्राप्नोति ॥३९॥

निर्मलेति—यत्रारामस्थ[illegible] निर्म[illegible]दिमलरहिता पक्षे तिमिरादिदोषशून्या विशाला सुदीर्घा, पद्मैः कमलैः रुचिरा मनोहरा [illegible]मिव रुचिरा मनोहरा, वनश्रियः काननलक्ष्म्याः, वीक्षिकेव दृष्टिरिव, सरसी कासारः पराम् [illegible]म्, निर्मिमीते जनयति । उपमा ॥४०॥

तत्र चेति—तत्र चारामस्थल्याञ्च, शकुन्त[illegible]नेन पक्षिसमूहेन दन्तुरितानि नतोन्नतानि नीलच्छदानि हरितपत्राणि यस्य तस्य, मधुनि मक[illegible] लुब्धानि सतृष्णानि यानि मधुकरकुलानि भ्रमरसमूहास्तैरलङ्कृतस्य शोभितस्य, कस्यचन कस्यापि रसा[illegible]सो रसारुहश्चेति रसालरसारुहस्तस्य माकन्दमहीरुहस्य शाखाग्रभागे लताग्रप्रदेशे विराजितं शोभितम्, [illegible]देवताया काननाधिष्ठातृदेव्याः रसपूर्णहेमकरण्डकमिव रसभृतसुवर्णपात्रमिवाचरतीति तथाभूतम्, परिपा[illegible] परिणामेन पाटलं श्वेतरक्तं यत्फलं तत्,

पातयितुं प्रयतमानानपराद्धानेकशरनिकरान्नरपतिकुमारानवलोक्य, लोकोत्तरकोदण्डविद्यापाण्डित्यमण्डितो जीवन्धर करकलितकार्मुकलताविस्फारपूरितदिगन्तर, सरभसप्रक्षिप्तप्रक्ष्वेडनलक्षीकृतं तत्फल सशिलीमुख करेणोपादत्त ।

उदार सहकारोऽय मार्गणाय फल दिशन् ।
भेजे कल्पकता नो चेत्सुमनस्सेव्यता कथम् ॥ ४१ ॥

दृष्ट्वा फल सशरमापतित कराब्जे
जीवन्धरस्य शरकौशलपारगस्य ।
व्यस्मेष्ट मङ्क्षु नरपालतनूजवर्ग
श्लाघावशेन विगलन्निजकर्णपूरम् ॥ ४२ ॥

ततस्तत्समीपमभ्येत्य कलितविनयो राजतनय,ससाध्वस, भो भो महाभाग कार्मुकविद्याकोविद, मामज्ञातभवादृशसज्जनसमुचितसल्लापप्रकारमपि मुखरयति श्रीमदीयचापविद्यावैदग्ध्यनिरीक्षणक्षणजनितविस्मय काञ्चनगौरतावकशरीरसौन्दर्यावलोकनजातानन्दकन्दलश्च ।

अतस्त्वा प्रार्थये श्रीमन्युक्त वायुक्तमेव वा ।
मामकीन वचो नून कर्णदेशे विधीयताम् ॥ ४३ ॥

---

पातयितु अशयितुम्, प्रयतन्त इति प्रयतमानास्तान् प्रयास कुर्वाणान्, अपराद्धो लक्ष्यच्युतोऽनेकशरनिकरो विविधबाणसमूहो येषा तान्, नरपतिकुमारान् राजपुत्रान्, अवलोक्य दृष्ट्वा, लोकोत्तर सर्वश्रेष्ठ यत्कोदण्ड विद्याया धनुर्विद्याया पाण्डित्य वैशारद्य तेन मण्डित शोभित, जीवन्धरो विजयासूनु, करे हस्ते कलिता धृता या कार्मुकलता धनुर्वल्लरी तस्या विस्फारेण समास्फालनरवेण पूरित व्याप्त दिगन्तर काष्ठान्तराल येन तथाभूत सन्, सरभस सवेग यथा स्यात्तथा प्रक्षिप्त चालित यत्प्रक्ष्वेडन बाणस्तेन लक्षीकृत शरव्यीकृतम्, तत्फल तन्माकन्दप्रसवम्, सशिलीमुख बाणसहितम्, करेण हस्तेन, उपादत्त जग्राह ।

उदार इति—उदारो महान् पक्षे दानशील, मार्गणाय बाणाय पक्षे याचकाय, फल प्रसव पक्षे समीप्सितार्थम्, दिशन् ददन्, अयमेष सहकार आम्र, चेद्यदि, कल्पकता कल्पवृक्षताम्, नो भेजे न प्राप्तवान्, तर्हि सुमनोभि पुष्पै पक्षे देवै सेव्यता सहितता समुपास्यता च, कथ केन कारणेन स्यादिति शेष, 'सुमना पुष्पमालत्यो स्त्रिया धीरे सुरे पुमान्' इति विश्वलोचन । श्लेष ॥४१॥

दृष्ट्वेति—शरकौशलस्य बाणवैदग्ध्यस्य पारमन्त गच्छतीति शरकौशलपारगस्तस्य, जीवन्धरस्य जीवकस्य, कराब्जे पाणिपद्मे, सशर सबाणम्, आपतित सम्प्राप्तम्, फलमाम्रप्रसवम्, दृष्ट्वा विलोक्य, नरपाल तनूजवर्गो राजकुमारकलाप, श्लाघावशेन प्रशसापरतया, विगलन्निजकर्णपूर स्खलमानस्वकीयावतस यथा स्यात्तथा, मङ्क्षु शीघ्रम्, व्यस्मेष्ट विस्मितो बभूव । वसन्ततिलकावृत्तम् ॥४२॥

ततस्तत्समीपमिति—ततस्तदनन्तरम्, तत्समीप जीवकाभ्यर्णम्, अभ्येत्य समागत्य, कलितविनयो धृतनम्रत्व, राजतनयो नृपतिनन्दन, ससाध्वस सभय, यथा स्यात्तथा, इत्थमनेन प्रकारेण, अवाचत जगाद, भो भो हे हे कार्मुकविद्याया धनुर्विद्याया कोविदो निपुणस्तत्सम्बुद्धौ, हे कार्मुकविद्याकोविद, महाभाग महानुभाव, श्रीमदीयस्य भवदीयस्य चापविद्यावैदग्ध्यस्य धनुर्विद्यापाण्डित्यस्य निरीक्षणक्षणेऽवलोकनकाले जनित समुत्पन्नो यो विस्मय आश्चर्यं स, काञ्चनगौरस्य सुवर्णपीतस्य तावकशरीरस्य त्वदीयदेहस्य यत्सौन्दर्यं लावण्य तस्यावलोकन दर्शन तेन जात समुद्भूतो य आनन्दकन्दलो हर्षसमूह स च, अज्ञातोऽविदितो भवादृशसज्जनसमुचितस्त्वादृशसाधुजनयोग्य सल्लापप्रकार सम्भाषणशैली येन तथाभूतमपि, मा भवत्पुरोवर्तमानम्, मुखरयति वाचालयति ।

अतस्त्वामिति—अतोऽस्मात्कारणात्, हे श्रीमन् हे महानुभाव, त्वा भवन्तम्, प्रार्थये विनयेन निवेदयामि, युक्त वा समुचित वा, अयुक्तमसमुचितमेव वा मामकीन मदीयम्, वचो वचनम्, नून निश्चयेन, कर्णदेशे श्रवणप्रान्ते, विधीयताम् क्रियताम् । उचितमनुचित वा मद्वच श्रूयतामिति भाव ॥ ४३ ॥

अत्रास्ति हेमाभपुरी गरीयसी यद्वज्रसौधेष्वधिरात्रि सपतन् ।
सुधामयूख कलशार्णवान्तरे पुनर्निवास कलयन्निवेक्ष्यते ॥ ४४ ॥

कुरुविन्दमन्दिरकुलानि सगता-
न्यरुणस्य बालकिरणै सहैकताम् ।
तमसीव हस्तपरिमर्शत प्रगे
परिनिश्चिनोति पुरि यत्र सज्जन ॥ ४५ ॥

दृढमित्र इति प्रतीतभूप पुरमेना परिपालयत्यजस्रम् ।
नलिना नलिनामलायताक्षी महिषी तस्य महीललामवल्ली ॥४६॥

तयो सुता सुमित्राद्यास्तेष्वप्यन्यतमोऽस्म्यहम् ।
विद्याहीना वय सर्वे नद्या हीना इवाद्रय ॥४७॥

अत कोदण्डविद्याकुशल नरशार्दूलमन्वेषमाणोऽस्मत्तातपाद , पराक्रमापहृतसामन्तसीमन्तिनीनयनकज्जलकालिकाशङ्कावदान्यमौर्वीकिणश्यामिकालङ्कृतभुजदण्डस्य श्रीमत सन्दर्शनेन, कलापीव बलाहकदर्शनेन, नदीपतिरिव निशाकरदर्शनेन, वनोत्कर इव वसन्तदर्शनेन, कमलाकर इव कमलबन्धुदर्शनेन, प्रमोदसर्वस्वमनुभविष्यति ।

तस्मादस्मत्पितुर्वाञ्छावल्ली सम्प्रति पुष्पिताम् ।
सभास्तारदृशश्चापि सफलीकुरु कोविद ॥४८॥

---

अत्रास्तीति—अत्र इह प्रदेशे, गरीयसी श्रेष्ठतरा, हेमाभपुरी एतन्नामनगरी, अस्ति विद्यते, अधिरात्रि रजन्याम् यद्वज्रसौधेषु यदीयहीरकहर्म्येषु सपतन् प्रतिबिम्बित , सुधारूपा मयूखा यस्य स सुधामयूखश्चन्द्र , कलशार्णवान्तर क्षीरसागरमध्ये, पुनर्भूय , निवासमावासम्, कलयन्निव प्राप्नुवन्निव, ईक्ष्यते दृश्यते । उत्प्रेक्षालङ्कार । इन्द्रवंशावंशस्थयो समिश्रणादुपजातिर्वृत्तम् ॥ ४४ ॥

कुरुविन्देति—यत्र यस्याम्, पुरि नगर्याम्, सज्जन सत्पुरुष प्रगे प्रात काले, अरुणस्य सूर्यस्य, बालकिरणैर्बालरश्मिभि , सह सार्धम्, एकतामभिन्नताम्, सगतानि प्राप्तानि, कुरुविन्दमन्दिरकुलानि पद्मरागमणिमयभवनानि, तमसीव ध्वान्त इव, हस्तपरिमर्शत करस्पर्शत परिनिश्चिनोति परितो निर्णीते । तद्गुणालङ्कार । मञ्जुभाषिणीच्छन्द ॥ ४५ ॥

दृढमित्र इति—दृढमित्र इति प्रतीतभूप दृढमित्रनाम्ना प्रसिद्धो राजा, एनामेताम्, पुर नगरीम्, अजस्र निरन्तरम्, परिपालयति रक्षति, तस्य दृढमित्रस्य, नलिने इव कमले इवामले निर्मले आयते सुदीर्घे अक्षिणी नयने यस्यास्तथाभूता, महीललामवल्ली पृथिव्याभरणलता, नलिना एतन्नामवती, महिषी पट्टराज्ञी, अस्तीति शेष ॥ ४६ ॥

तयोरिति—सा च स चेति तौ तयोर्नलिनादृढमित्रयो , सुमित्राद्या सुमित्रप्रभृतय , सुता पुत्रा , सन्तीति शेष , अहमपि, तेषु सुमित्राद्येषु, अन्यतम एक , अस्मि भवामि, वय सर्वे निखिला , नद्या स्रवन्त्या, हीना रहिता , अद्रय इव पर्वता इव, विद्याहीना विद्यारहिता , स्म इति शेष ॥ ४७ ॥

अत कोदण्डेति—अतोऽस्मात्कारणात्, कोदण्डविद्याकुशल धनुर्विद्यानदीष्णम्, नरशार्दूल पुरुषसिहम्, अन्वेषमाणो गवेषमाण , अस्मत्तातपादो मदीयपितृचरण , पराक्रमेण बलातिशयेनापहृत दूरीकृत यत् सामन्तसीमन्तिनीना मण्डलेश्वरमानिनीना नयनकज्जल नेत्राञ्जन तस्य कालिका कार्ष्ण्य तस्या शङ्काया सर्शातौ वदान्यो दातृनिपुणो या मौर्वीकिणश्यामिका प्रत्यञ्चाकिणकालिमा तयालङ्कृत समुद्भासितो भुजदण्डो यस्य तथाभूतस्य, श्रीमतो भवत , सदर्शनेन विलोकनेन बलाहकदर्शनेन मेघावलोकनेन, कलापीव मयूर इव, निशाकरदर्शनेन चन्द्रावलोकनेन, नदीपतिरिव सागर इव, वसन्तदर्शनेन कुसुमाकरविलोकनेन, वनोत्कर इव काननसमूह इव, कमलबन्धुदर्शनेन सूर्यसाक्षात्कारेण, कमलाकर इव पद्माकर इव, प्रमोदसर्वस्वमानन्दतत्त्वम्, अनुभविष्यति समुपभोक्ष्यते । मालोपमा ॥

तस्मादिति—तस्मात्कारणात्, हे कोविद हे विद्वन्, अस्मत्पितुर्मदीयजनकस्य, पुष्पिता कुसुमिताम्

स तस्य विनयोज्ज्वला वचनबन्धशैली श्रुतौ
मनस्यनुमतिं धरापतिनिरीक्षणाय क्षणात्।
रथे च चरणाम्बुज नृपसुतै पुर स्थापिते
चकार युगपद्दयाजलनिधि कुरूणा पति ॥४९॥

तदनु प्रत्येकमधिष्ठितस्यन्दनैर्नृपनन्दनै परिवृतशताङ्ग कुरुकुलशशाङ्क पुरद्वार प्रविश्य प्रासादवातायनदत्तनयनैर्विलासिनीजनै सस्पृहमालोक्यमान क्रमेण नरपतिभवनद्वारि रथादवतीर्य तै पुरस्कृतो दौवारिकजनदीयमानमार्ग क्षितिपतिसदसमाससाद।

भूपोऽपि नन्दनगिरा वपुषा च तस्य
माहात्म्यसपदमवेत्य चकार वीरम्।
त रत्नपीठशिखरे तदुपान्तभूमौ
पुत्रास्तदाननविधौ निजदृक्चकोरम् ॥५०॥

अनामयोक्तेरनुजाथ वाणी नृपाननाब्जाद्द्रुतमाविरास।
फुल्लात्सरोजान्मकरन्दझर्या पश्चात्प्रभूतेव सुगन्धिलक्ष्मी ॥५१॥
कत्यास्त्वदीयविरहकातरीकृतमानसा।
कत्याना नयनानन्द सम्भविष्यति दर्शनात् ॥५२॥

---

वाञ्छावल्लीमाशालताम्, तारदृशा विशाललोचना, सभा समितीश्चापि, सम्प्रति साम्प्रतम् सफलाकुरु सफलय, स्वकीयदर्शनेनेति यावत् ॥४८॥

स तस्येति—दयाजलनिधि करुणाकूपार, स पूर्वोक्त, कुरूणा पतिर्जीवन्धर, तस्य महीपाल सुतस्य विनयेन प्रह्वतयोज्ज्वला मनोहरा ताम् वचनबन्धशैला वाणासन्दर्भम्। श्रुता कर्णे, क्षणादचिरम्, धरापतिनिरीक्षणाय राजावलोकनाय, अनुमति सम्मतिम्, मनसि चेतसि, चरणाम्बुज पादारविन्दम्, नृपसुतै राजकुमारै, पुरोऽग्रे, स्थापिते निवेशिते, रथे च स्यन्दने च, युगपदेककालावच्छेदेन, चकार विदधौ। पृथिवीच्छन्द।

तदन्विति—तदनु तदनन्तरम् प्रत्येकम् एकैकश, अधिष्ठितान्यध्यारूढानि स्यन्दनानि रथा यैस्तै, नृपनन्दने राजपुत्रै, परिवृत परिवेष्टित शताङ्ग स्यन्दन यस्य स, कुरुकुलस्य कुरुवंशस्य शशाङ्कश्चन्द्र, जावन्धर इति यावत्, पुरद्वार गोपुरम्, प्रविश्य प्रवेश कृत्वा, प्रासादाना हर्म्याणा वातायनेषु गवाक्षेषु दत्तानि समर्पितानि नयनानि लोचनानि यैस्तै, विलासिनाजनैर्वनितावृन्दै सस्पृह सोत्कण्ठ यथा स्यात्तथा, आलोक्यमानो दृश्यमान, सन्, क्रमेण क्रमश, नरपतिभवनस्य राजमन्दिरस्य द्वारि प्रवेशमार्गे, रथाच्छताङ्गात्, अवतीर्यावरुह्य, ते राजसुतै, पुरस्कृतोऽग्रेकृत, दावारिकजनै प्रतीहारजनैर्दीयमानोऽर्प्यमाणो मार्ग पन्था यस्य तथा भूत सन्, क्षितिपतिसदसं राजसभाम्, आससाद प्राप।

भूपोऽपीति—भूपोऽपि दृढमित्रनरेन्द्रोऽपि, नन्दनगिरा पुत्रवाण्या, तस्य जीवन्धरस्य, वपुषा देहेन च, तस्य, माहात्म्यमेव सम्पद् ता प्रभुत्वसम्पत्तिम्, अवेत्य ज्ञात्वा, वीर सुभटम्, त कुमारम्, रत्नपाठशिखरे मणिमयासनाग्रभागे, पुत्रान् सुतान्, तदुपान्तभूमा तदभ्यर्णमह्याम्, निजदृक्चकोर स्वकीयलोचनजीवजीवम्, तदाननविधौ जावन्धरवदनचन्द्रमसि, चकार विदधे। वसन्ततिलकावृत्तम् ॥५०॥

अनामयोक्तेरिति—अथावस्थानानन्तरम्, फुल्लात् विकसितात्, सरोजात् कमलात्, मकरन्दझर्या कौसुमसन्तते, पश्चादनन्तरम्, प्रभूता समुत्पन्ना, सुगन्धलक्ष्मारिव सुरभिश्रीरिव, नृपाननाब्जाद् राजवदनवारिजात्, अनामयोक्ते अनामयमारोग्यमस्तीत्युक्तिरनामयोक्तिस्तस्या कुशलप्रश्नस्य, अनुजा पश्चाज्जाता, वाणी भारती, द्रुत सत्वरम्, आविरास प्रकटीबभूव। "ब्राह्मण कुशल पृच्छेत्क्षत्रबन्धुमनामयम्। वैश्य क्षेम समागम्य शूद्रमारोग्यमेव च" इति मनु ॥५१॥

कत्या इति—क भवा कत्या कुत्रत्या जना, त्वदीयेन विरहेण कातरीकृत भीरुकृत मानस चित्त

को वा देश पचेलिमभाग्य श्रीमदीयप्रवालकोपमपदयुगलस्पर्शसुखमनुभविष्यति। कीदृशपुरप्रासादाङ्गणालङ्करणरमणीना नयनकुवलयेषु श्रीमदीयसन्दर्शनकन्दलितानन्दबाष्पनिष्यन्दो मकरन्दशङ्कामङ्कुरयिष्यति। कस्या वा वशवल्ल्या विमुक्तोपमानोऽपि भवान्मुक्ताफलायते। क पुन श्रीमता पुत्रवता मौलिमाणिक्यतामारोपितो भाग्यवता माहात्म्यवता कीर्तिमता च।

इत्यादिप्रश्नपदवीं यथायोग्योत्तराक्षरै ।
लङ्घयामास जङ्घाल स्वामी वचनवर्त्मनि ॥५३॥
विनयकन्दलितैर्विमलोत्तरैर्नरपतिर्द्विगुणीकृतकौतुक ।
चिरमयाचत नन्दनसंसदा वरशरासकलाप्रतिपादनम् ॥५४॥
विज्ञाय तदभिप्राय प्रज्ञाशाली नराधिप ।
कौरवस्य वशे चक्रे कुमारानखिलानपि ॥५५॥

तदनु कोदण्डभिण्डिपालपरिघमुद्गरपरश्वधादिपरिष्कृताम्, क्षोणीमिव शरधिभिरलङ्कृताम्, त्रिदशनगरीमिव सर्वतोऽमरसेविताम्, जलधिवेलामिव प्रचुरतरवारिविराजिताम्, वनसीमामिव

येषा तथाभूता सन्नीति शेष, कुत आगतो भवानिति भाव, कन्याना कुत्रभवानाम्, नयनानन्दो लोचनहर्ष, दर्शनाद् भवद्विलोकनात्, सम्भविष्यति समुत्पत्स्यते, कुत्र गमिष्यति भवानिति भाव ॥५२॥

को वा देश इति—पचेलिम पाकार्ह भाग्य सुदैव यस्य तथाभूत, को वा देशो जनपद, श्रीमदीय भवदीय प्रवालकोपम किसलयतुल्य यत्पदयुगल चरणयुग तस्य यत् स्पर्शसुख ससर्गशातम् तत्, अनुभविष्यति प्राप्स्यति। कीदृशस्य किम्प्रकारस्य पुरस्य नगरस्य प्रासादाङ्गणाना भवनाजिराणामलङ्करणानि भूषणानि या रमण्यो ललनास्तासा नयनकुवलयेषु नेत्रनीलारविन्देषु, श्रीमदीयसन्दर्शनेन भवदीयावलोकनेन कन्दलित समुत्पन्नो यो बाष्पनिष्यन्दो हर्षाश्रुभर स, मकरन्दशङ्का कौसुमसन्देहम्, 'मकरन्दश्च कौसुमम्' इति धनञ्जय, अङ्कुरयिष्यति जनयिष्यति। कस्या वा किन्नामधेयाया वा वशवल्ल्या गोत्रसन्ततौ पक्षे वेणुलतायाम्, मुक्तारूपमुपमान मुक्तोपमान विगत मुक्तोपमान यस्य तथाभूत सन्नपि मुक्ताफलोपमा रहितोऽपि, पक्षे विमुक्त दूरीभतमुपमान यस्य तथाभूतोऽपि सन्, मुक्ताफलायते मुक्ताफलमिवाचरति, पुन किञ्च क किन्नामधेयो जन श्रीमता भवता, पुत्रवता सुतयुक्तानाम्, भाग्यवता भाग्यशालिनाम्, माहात्म्यवता महत्त्वोपेतानाम्, कीर्तिमताञ्च यशस्विनाञ्च, मौलिमाणिक्यता मुकुटरत्नता श्रेष्ठतामिति यावत्, आरोपित प्रापित, कस्य पुत्रो भवानिति यावत्।

इत्यादीति—वचनवर्त्मनि वाक्पथे, जङ्घाल प्रकृष्टगामी, स्वामी जीवक, इत्यादिप्रश्नपदवी पूर्वोक्तप्रश्नमार्गम्, यथायोग्योत्तराक्षरै समुचितोत्तरवर्णै, लङ्घयामास समतिचक्राम ॥५३॥

विनयकन्दलितैरिति—विनयेन कन्दलितानि विनयकन्दलितानि तैर्नम्रतासमुद्भूतै विमलोत्तरैरुज्ज्वलसमाधानै, द्विगुणीकृत कौतुक कौतूहल यस्य तथाभूत, नरपतिर्दृढमित्र, नन्दनसंसदा पुत्रसमूहस्य, वरशरासकलाया उत्तमकोदण्डवैदग्ध्या, प्रतिपादन प्रदानम्, चिर दीर्घकालपर्यन्तम्, अयाचत प्रार्थितवान्। अस्मत्पुत्रान् धनुर्विद्याया निपुणान्विधेहीति त दृढमित्रश्चिर प्रार्थयामासेति भाव ॥५४॥

विज्ञायेति—प्रज्ञाशाली बुद्धिशोभी, नराधिप, तदभिप्राय जीवकाशयम्, विज्ञाय विदित्वा, अखिलानपि सर्वानपि, कुमारान् पुत्रान्, कौरवस्य जीवन्धरस्य, वशे निघ्नतायाम्, चक्रे विदधे ॥५५॥

तदन्विति—तदनु तदनन्तरम्, कोदण्ड कार्मुक, भिण्डिपाल (भिन्दिपाल), सृग अश्मप्रक्षेपसाधन रज्जुमयो यन्त्रविशेष इति यावत्, परिघ परिघातिन—लोहबद्धहस्तप्रमाणलगुड इति यावत्, मुद्गरो घन, परश्वध कुठार, एषा द्वन्द्व तदादिभिस्तत्प्रभृतिभि परिष्कृता सहिता ताम्, 'धनुश्चापौ धन्वशरासनकोदण्डकार्मुकम्' 'भिन्दिपाल सृगस्तुल्यौ परिघ परिघातिन' 'द्रुघणो मुद्गरघनौ' 'द्वयो कुठार स्वधिति परशुश्च परश्वध' इति सर्वत्रामर, क्षोणीमिव पृथिवीमिव शरधिभिस्तूणीरै पक्षे जलधिभि, अलङ्कृता शोभिताम्, त्रिदशनगरीमिव देवपुरीमिव, सर्वतोमरसेविता सर्वाणि च तानि तोमराणि चेति सर्वतोमराणि

पत्रिकुलपरिवृताम्, आयुधकान्तिसन्तानद्विगुणीकृतारुण्यरक्तमृत्तिकापरीतभूमिभागतया मूर्तमिव चापविद्याविशारदप्रतापमादधानाम्, मध्ये निखातवज्रमयस्तम्भशोभिततया प्रहरणगणविजित्य वन्दीकृतमिव कुलिशायुधकुलिश बिभ्राणामायुधशाला शुभे मुहूर्ते प्रविश्य जीवन्धर क्षितिपतितनयानुद्दिश्य कार्मुककौशल विवरीतुमारेभे ।

नृपात्मजाना निचयस्ततो नु कोदण्डविद्याकुशलत्वमाप ।
तत्कीर्तिकल्लोलपरम्परा च जगत्त्रय मोदरस महीश ॥५६॥

विद्यावैदग्ध्यपीठीमधिवसति निजे नन्दनाना समाजे
दृष्टि हेमासनस्थे कुरुकुलतपने प्रीतिमन्तश्च चिन्ताम् ।
कि कुर्यामस्य वीरव्रजमहितकलादानमान्योपकार-
श्लाघ्यस्येति क्षितीशश्चिरतरमतनोद्धीमतामग्रगण्य ॥५७॥

तदनु कन्याविश्राणन करणीय गणयता नरपालमणिना प्रार्थित परिणय वरुणालयगभीर करुणाकरा जीवन्धर क्रमेणाङ्गीचकार ।

---

निखिलम्मर्वला तै सेविता ताम्, पक्षे सर्वत समन्तात् अमरैर्देवै सेविता ताम् 'तार्गन्ता म्रियतेऽनेन तोमर' इति तोमरशब्दव्युत्पत्ति 'सर्वला ( शवला ) तोमराऽस्त्रियाम्' इत्यमर, जलधिवेलामिव सागरतटामिव, प्रचुरा प्रभूता ये तरवारय कृपाणास्तैर्विराजिता शोभिता ताम् पक्षे प्रचुरतराणि प्रभूततमानि यानि वारीणि जलानि तैर्विराजिता शोभिताम्, वनसीमामिव काननमर्यादामिव, पत्रिकुलै बाणसमूहै परिवृता ताम्, पक्षे पत्रिकुलै पक्षिसमूहै परिवृता ताम्, आयुधाना शस्त्राणा कान्तेर्दीप्त्या द्विगुणीकृत यदारुण्य लाहित्य तेन रक्ता लोहिता या मृत्तिका मृत् तया परीतो व्याप्तो भूमिभागो महीप्रदेशो यस्यास्तस्या भावस्तया, मूर्त सशरीरम्, चापविद्याविशारदस्य धनुर्विद्याकोविदस्य प्रतापस्तेजस्तम्, आदधानामिव बिभ्राणामिव, मध्येऽन्त, निखात समारोपितो यो वज्रमयस्तम्भ सुदृढस्तम्भस्तेन शोभिततया समुद्भासितत्वेन, प्रहरणगण शस्त्रसमूहै, विजित्य पराभूय, वन्दीकृत कारावस्थापितम्, कुलिशायुधस्य वज्रायुधस्य पुरन्दरस्येति यावत्, कुलिश वज्रम्, बिभ्राणामिव दधानामिव, आयुधशाला शस्त्रागारम्, शुभे मङ्गले, मुहूर्ते समये, प्रविश्य प्रवेश कृत्वा, जीवन्धरो विजयात्मज, क्षितिपतितनयान् राजकुमारान्, उद्दिश्य समभिलक्ष्य, कार्मुककौशल शरासननैपुण्यम्, विवरीतु व्याख्यातु प्रकटयितुमिति यावत्, आरेभे समारब्धवान् । श्लिष्टोपमालङ्कार ।

नृपात्मजानामिति—ततस्तदनन्तरम्, नृपात्मजाना नरेन्द्रनन्दनानाम्, निचय समूह कोदण्डविद्याया धनुर्विद्याया कुशलत्व नदीष्णत्वम्, आप लेभे, तस्य जीवन्धरस्य कीर्तिकल्लोलपरम्परा यशस्तरङ्गसन्तति, जगत्त्रय लोकत्रितयम्, महीशो नृप, मोदरस च प्रहर्षातिशयञ्च, आप लेभे, नु वितर्के ॥ ५६ ॥

विद्यावैदग्ध्येति—धीमता बुद्धिमताम्, अग्रगण्य प्रधान, क्षितीशो नृप, विद्यावैदग्ध्य धनुर्विद्याकौशलमेव पीठी आसन ताम्, अधिवसति आश्रयति, निजे स्वकीये, नन्दनाना पुत्राणाम्, समाजे समूहे, दृष्टि स्निग्धा दृशम्, हेमासनस्थे सुवर्णपीठस्थिते कुरुकुलतपने कुरुवशसूर्ये, जीवन्धर इति यावत्, प्रीति प्रसन्नताम्, अन्तश्च स्वकीयहृदये च, वीरव्रजै सुभटसमूहैर्महिता पूजिता या कला कोदण्डवैदग्धी तस्या दानमेव प्रदानमेव मान्यश्चासौ समादरणीयश्चासावुपकार उपग्रहश्चेति तेन श्लाघ्य प्रशसनीयस्तस्य, अस्य जीवन्धरस्य, कि किन्नामधेयम्, कुर्याम् विदध्याम्, उपकारमिति शेष, इतीत्थम्, चिन्ता विचारसन्ततिम्, चिरतर दीर्घकालपर्यन्तम्, अतनोत् विस्तारयामास ॥ ५७ ॥

तदन्विति—तदनु चिन्तानन्तरम्, कन्याविश्राणन पतिवराप्रदानम्, करणीय कर्तु योग्यम्, गणयता निश्चिन्वता, नरपालमणिना राजश्रेष्ठेन, प्रार्थित याचितम्, परिणय विवाहम्, वरुणालय इव सागर इव गम्भीरो धीर इति वरुणालयगम्भीर, करुणाकरो दयाकर, जीवन्धर कुरुवशाग्रणी, क्रमेण क्रमश अङ्गीचकार स्वीचकार ।

को वा देश पचेलिमभाग्य श्रीमदीयप्रवालकोपमपदयुगलस्पर्शसुखमनुभविष्यति। कीदृश-पुरप्रासादाङ्गणालङ्करणरमणीना नयनकुवलयेपु श्रीमदीयसन्दर्शनकन्दलितानन्दबाष्पनिष्यन्दो मक-रन्दशङ्कामङ्कुरयिष्यति। कस्या वा वशवल्ल्या विमुक्तोपमानोऽपि भवान्मुक्ताफलायते। क पुन श्रीमता पुत्रवता मौलिमाणिक्यतामारोपितो भाग्यवता माहात्म्यवता कीर्तिमता च।

इत्यादिप्रश्नपदवी यथायोग्योत्तराक्षरै।
लङ्घयामास जङ्घाल स्वामी वचनवर्त्मनि ॥५३॥
विनयकन्दलितैर्विमलोत्तरैर्नरपतिर्द्विगुणीकृतकौतुक।
चिरमयाचत नन्दनससदा वरशरासकलाप्रतिपादनम् ॥५४॥
विज्ञाय तदभिप्राय प्रज्ञाशाली नराधिप।
कौरवस्य वशे चक्रे कुमारानखिलानपि ॥५५॥

तदनु कोदण्डभिण्डिपालपरिघमुद्गरपरश्वधादिपरिष्कृताम्, क्षोणीमिव शरधिभिरलङ्कृताम्, त्रिदशनगरीमिव सर्वतोऽमरसेविताम्, जलधिवेलामिव प्रचुरतरवारिविराजिताम्, वनसीमामिव

---

येषा तथाभूता सन्नाति शेप, कुत आगतो भवानिति भाव, कस्याना कुत्रभवानाम्, नयनानन्दो लोचनहर्प, दर्शनाद् भवद्विलोकनात्, सम्भविष्यति समुत्पत्स्यते, कुत्र गमिष्यति भवानिति भाव ॥५२॥

को वा देश इति—पचेलिम पाकार्ह भाग्य सुदैव यस्य तथाभूत, को वा देशो जनपद, श्रीमदीय भवदीय प्रवालकोपम किसलयतुल्य यत्पदयुगल चरणयुग तस्य यत् स्पर्शसुख ससर्गशातम् तत्, अनुभवि-ष्यति प्राप्स्यति। कीदृशस्य किम्प्रकारस्य पुरस्य नगरस्य प्रासादाङ्गणाना भवनाजिराणामलङ्करणानि भूपणानि या रमण्यो ललनास्तासा नयनकुवलयेपु नेत्रनीलारविन्देपु, श्रीमदीयसन्दर्शनेन भवदीयावलोकनेन कन्दलित समुत्पन्नो यो बाष्पनिष्यन्दो हर्षाश्रुस्रुत स, मकरन्दशङ्का कौसुमसन्देहम्, 'मकरन्दश्च कौसुमम्' इति धनञ्जय, अङ्कुरयिष्यति जनयिष्यति। कस्या वा किन्नामधेयाया वा वशवल्ल्या गोत्रसन्ततौ पक्षे वेणुलतायाम्, मुक्तारूपमुपमान मुक्तोपमान विगत मुक्तोपमान यस्य तथाभूत सन्नपि मुक्ताफलोपमा रहितोऽपि, पक्षे विमुक्त दूरीभूतमुपमान यस्य तथाभूतोऽपि सन्, मुक्ताफलायते मुक्ताफलमिवाचरति, पुन किञ्च क किन्नामधेयो जन श्रीमता भवता, पुत्रवता सुतयुक्तानाम्, भाग्यवता भाग्यशालिनाम्, माहात्म्यवता महत्त्वोपेतानाम्, कीर्तिमताञ्च यशस्विनाञ्च, मौलिमाणिक्यता मुकुटरत्नता श्रेष्ठतामिति यावत्, आरोपित प्रापित, कस्य पुत्रो भवानिति यावत्।

इत्यादीति—वचनवर्त्मनि वाक्पथे, जङ्घाल प्रकृष्टगामी, स्वामी जीवक, इत्यादिप्रश्नपदवी पूर्वोक्तप्रश्नमार्गम्, यथायोग्योत्तराक्षरै समुचितोत्तरवर्णै, लङ्घयामास समतिचक्राम ॥५३॥

विनयकन्दलितैरिति—विनयेन कन्दलितानि विनयकन्दलितानि तैर्नम्रतासमुद्भूतै विमलोत्तरै-रुज्ज्वलसमाधानै, द्विगुणीकृत कौतुक कौतूहल यस्य तथाभूत, नरपतिर्दृढमित्र, नन्दनससद पुत्रसमूहस्य, वरशरासकलाया उत्तमकोदण्डवैदग्ध्या, प्रतिपादन प्रदानम्, चिर दीर्घकालपर्यन्तम्, अयाचत प्रार्थितवान्। अस्मत्पुत्रान् धनुर्विद्याया निपुणान्विधेहीति त दृढमित्रश्चिर प्रार्थयामासेति भाव ॥५४॥

विज्ञायेति—प्रज्ञाशाली बुद्धिशोभी, नराधिप, तदभिप्राय जीवकाशयम्, विज्ञाय विदित्वा, अखिलानपि सर्वानपि, कुमारान् पुत्रान्, कौरवस्य जीवन्धरस्य, वशे निघ्नतायाम्, चक्रे विदधे ॥५५॥

तदन्विति—तदनु तदनन्तरम्, कोदण्ड कार्मुक, भिण्डिपाल (भिन्दिपाल), सृग अश्मप्रक्षेपसाधन रज्जुमयो यन्त्रविशेप इति यावत्, परिघ परिघातिन—लोहबद्धहस्तप्रमाणलगुड इति यावत्, मुद्गरो घन, परश्वध कुठार, एपा द्वन्द्व तदादिभिस्तत्प्रभृतिभि परिष्कृता सहिता ताम्, 'धनुश्चापौ धन्वशरासन-कोदण्डकार्मुकम्' 'भिन्दिपाल सृगस्तुल्यौ परिघ परिघातिन' 'द्रुघणो मुद्गरघनौ' 'द्वयो कुठार स्वधिति परशुश्च परश्वध' इति सर्वत्रामर, क्षोणीमिव पृथिवीमिव शरधिभिस्तूणीरै पक्षे जलधिभि, अलङ्कृता शोभिताम्, त्रिदशनगरीमिव देवपुरीमिव, सर्वतोमरसेविता सर्वाणि च तानि तोमराणि चेति सर्वतोमराणि

पत्रिकुलपरिवृताम्, आयुधकान्तिसन्तानद्विगुणीकृतारुण्यरक्तमृत्तिकापरीतभूमिभागतया मूर्तमिव चापविद्याविशारदप्रतापमादधानाम्, मध्ये निखातवज्रमयस्तम्भशोभिततया प्रहरणगणैर्विजित्य वन्दीकृतमिव कुलिशायुधकुलिश बिभ्राणामायुधशाला शुभे मुहूर्ते प्रविश्य जीवन्धर क्षितिपतितनयानुद्दिश्य कार्मुककौशल विवरीतुमारेभे ।

नृपात्मजाना निचयस्ततो नु कोदण्डविद्याकुशलत्वमाप ।
तत्कीर्तिकल्लोलपरम्परा च जगत्त्रय मोदरस महीश ॥५६॥

विद्यावैदग्ध्यपीठीमधिवसति निजे नन्दनाना समाजे
दृष्टि हेमासनस्थे कुरुकुलतपने प्रीतिमन्तश्च चिन्ताम् ।
कि कुर्यामस्य वीरव्रजमहितकलादानमान्योपकार-
श्लाघ्यस्येति क्षितीशश्चिरतरमतनोद्धीमतामग्रगण्य ॥५७॥

तदनु कन्याविश्राणन करणीय गणयता नरपालमणिना प्रार्थित परिणय वरुणालयगभीर करुणाकरो जीवन्धर क्रमेणाङ्गीचकार ।

---

निखिलसर्वला तै सेविता ताम्, पक्षे सर्वत समन्तात् अमरैर्देवै सेविता ताम् 'तौर्गन्ता म्रियतेऽनेन तोमर' इति तोमरशब्दव्युत्पत्ति 'सर्वला ( शर्वला ) तोमरोऽस्त्रियाम्' इत्यमर, जलधिवेलामिव सागरतटीमिव, प्रचुरा प्रभूता ये तरवारय कृपाणास्तैर्विराजिता शोभिता ताम् पक्षे प्रचुरतराणि प्रभूततमानि यानि वारीणि जलानि तैर्विराजिता शोभिताम्, वनसीमामिव काननमर्यादामिव, पत्रिकुलै बाणसमूहै परिवृता ताम्, पक्षे पत्रिकुलै पक्षिसमूहै परिवृता ताम्, आयुधाना शस्त्राणा कान्तेर्दीप्त्या द्विगुणीकृत यदारुण्य लौहित्य तेन रक्ता लोहिता या मृत्तिका मृत् तया परीतो व्याप्तो भूमिभागो महीप्रदेशो यस्यास्तस्या भावस्तया, मूर्त सशरीरम्, चापविद्याविशारदस्य धनुर्विद्याकोविदस्य प्रतापस्तेजस्तम्, आदधानामिव बिभ्राणामिव, मध्येऽन्त, निखात समारोपितो यो वज्रमयस्तम्भ सुदृढस्तम्भस्तेन शोभिततया समुद्भासितत्वेन, प्रहरणगणै शस्त्रसमूहे, विजित्य पराभूय, वन्दीकृत कारावस्थापितम्, कुलिशायुधस्य वज्रायुधस्य पुन्दरस्येति यावत्, कुलिश वज्रम्, बिभ्राणामिव दधानामिव, आयुधशाला शस्त्रागारम्, शुभे मङ्गले, मुहूर्ते समये, प्रविश्य प्रवेश कृत्वा, जीवन्धरो विजयात्मज, क्षितिपतितनयान् राजकुमारान्, उद्दिश्य समभिलक्ष्य, कार्मुककौशल शरासननैपुण्यम्, विवरीतु व्याख्यातु प्रकटयितुमिति यावत्, आरेभे समारब्धवान् । श्लिष्टोपमालङ्कार ।

नृपात्मजानामिति—ततस्तदनन्तरम्, नृपात्मजाना नरेन्द्रनन्दनानाम्, निचय समूह कोदण्डविद्याया धनुर्विद्याया कुशलत्व नदीष्णत्वम्, आप लेभे, तस्य जीवन्धरस्य कीर्तिकल्लोलपरम्परा यशस्तरङ्गसन्तति, जगत्त्रय लोकत्रितयम्, महीशो नृप, मोदरस च प्रहर्षातिशयञ्च, आप लेभे, तु वितर्के ॥ ५६ ॥

विद्यावैदग्ध्येति—धीमता बुद्धिमताम्, अग्रगण्य प्रधान, क्षितीशो नृप, विद्यावैदग्ध्य धनुर्विद्याकौशलमेव पीठी आसन ताम्, अधिवसति आश्रयति, निजे स्वकीये, नन्दनाना पुत्राणाम्, समाजे समूहे, दृष्टि स्निग्धा दृशम्, हेमासनस्थे सुवर्णपीठस्थिते कुरुकुलतपने कुरुवशसूर्ये, जीवन्धर इति यावत्, प्रीति प्रसन्नताम्, अन्तश्च स्वकीयहृदये च, वीरव्रजै सुभटसमूहैर्महिता पूजिता या कला कोदण्डवैदग्धी तस्या दानमेव प्रदानमेव मान्यश्चासौ समादरणीयश्चासावुपकार उपग्रहश्चेति तेन श्लाघ्य प्रशसनीयस्तस्य, अस्य जीवन्धरस्य, किं किन्नामधेयम्, कुर्याम् विदध्याम्, उपकारमिति शेप, इतीत्थम्, चिन्ता विचारसन्ततिम्, चिरतर दीर्घकालपर्यन्तम्, अतनोत् विस्तारयामास ॥ ५७ ॥

तदन्विति—तदनु चिन्तानन्तरम्, कन्याविश्राणन पतिवराप्रदानम्, करणीय कर्तुं योग्यम्, गणयता निश्चिन्वता, नरपालमणिना राजश्रेष्ठेन, प्रार्थित याचितम्, परिणय विवाहम्, वरुणालय इव सागर इव गम्भीरो धीर इति वरुणालयगम्भीर, करुणाकरो दयाकर, जीवन्धर कुरुवशाग्रणी, क्रमेण क्रमश अङ्गीचकार स्वीचकार ।

नरपतिपरिदत्ता योवनारम्भमत्ता
सपदि कनकमाला वक्षसि श्लिष्टमालाम् ।
सकलगुणवरिष्ठा सन्मुहूर्ते वरिष्ठे
कुरुपतिरुपयेमे मण्डपे तत्र हैमे ॥५८॥

*इति महाकविहरिचन्द्रविरचिते श्रीमति जीवन्धरचम्पूकाव्ये*
*कनकमालालम्भो नाम सप्तमो लम्भः ।*

---

नरपतिपरिदत्तामिति—कुरुपतिर्जीवन्धर, तत्र तस्मिन्, हैमे सौवर्णे, मण्डपे जनाश्रये 'मण्ड पोऽस्त्री जनाश्रय' इत्यमर, नरपतिना राज्ञा परिदत्ता समर्पिताम् । यौवनस्य तारुण्यस्यारम्भे प्रक्रमेण मत्ताम्, वक्षसि भुजमध्ये, श्लिष्टा ससक्ता माला स्रग्यस्यास्ताम्, सकलगुणैर्निखिलगुणैर्वरिष्ठा श्रेष्ठा ताम्, कनकमालामेतन्नामकन्याम्, वरिष्ठे श्रेष्ठे, सन्मुहूर्ते शुभलग्ने, उपयेमे परिणीतवान् ॥५८॥

इति श्रीमहाकविहरिचन्द्रविरचिते श्रीमति 'कौमुदी' व्याख्याधरे जीवन्धरचम्पूकाव्ये
कनकमालालम्भो नाम सप्तमो लम्भः ।



# अष्टमो लम्भः

नीलालका तामुपयम्य रामा कुरूद्वह सौख्यपयोधिमग्न ।
स्यालेषु वात्सल्यवशेन तत्र चिरं न्यवात्सीद्रमयन्मृगाक्षीम् ॥१॥

अथ कदाचि मन्दस्मितमकरन्दोद्गारिवदनारविन्दा विस्मयवशप्रमुषितनिमेषनयननीलोत्पलतया सालकाननाच्छोणाधरपल्लवसौरभ्यसमाकृष्टौ नासाचम्पकदर्शनेन तत्रैव निश्चलतामुपगतौ भृङ्गाविति सम्भावनां सम्पादयन्तीम्, मरकतवलयप्रभाबहलीकृतरोमराजिलताकान्तिम्, वल्गत्कुचजितमरालगमनकेलीपरवशतया मन्दानिलान्दोलितगुलुच्छयुगली जङ्गमकनकलतां तुलयन्तीम्, सम्मुखासीनमप्यात्मानं सकलमनुजनयनसरोजकुड्मलीकरणचणेन तेजःप्रसरणेन परीतं द्रष्टुमक्षमतया नलिनान्तिकोल्लासितपल्लवतल्लजभ्रमकारिणा नयनोपरिभागचारुणा पाणिना मुखं व्यवधाय पश्यन्तीम्, प्रान्तमावसन्तीं जीवन्धरः काञ्चिदायताक्षीमप्राक्षीत् ।

किं वक्तुकामासि कुरङ्गनेत्रि किमागता कोमलबन्धगात्रि ।
स्मितावदाता तव वक्त्रलक्ष्मीः ससूचयत्यादरतो विवक्षाम् ॥२॥

---

नीलालकामिति—नीला अलका यस्यास्तां श्यामलचूर्णकुन्तलाम्, तां पूर्वोक्ताम्, रामां कनकमालाभिधानां प्रियाम्, उपयम्य परिणीय, सौख्यपयोधौ शातसागरे मग्नो ब्रुडित इति सौख्यपयोधिमग्नः, कुरूद्वहो जीवन्धरः, स्यालेषु भार्याभ्रातृषु, वात्सल्यवशेन स्नेहनिघ्नतया, मृगाक्षीं कुरङ्गलोचनाम्, रमयन् क्रीडयन्, सन्, तत्र हेमाभपुर्याम्, चिरं बहुकालं यावत्, न्यवात्सीत् निवसति स्म ॥१॥

अथ कदाचिदिति—अथानन्तरम्, कदाचिज्जातुचित्, मन्दस्मितमेव मन्दहास्यमेव मकरन्दः कौसुमः तदुद्गारि तत्प्रकटयितृ वदनारविन्दं मुखसरसीरुहं यस्यास्ताम्, विस्मयवशेनाश्चर्यवशेन प्रमुषितौ दूरीभूतौ निमेषः पक्ष्मपातो याभ्यां तथाभूते नयननीलोत्पले नेत्रकुवलये यस्यास्तस्या भावस्तत्ता तया, सालकं सचूर्णकुन्तलं यदाननं वदनं तस्मात्, अथ च सालकाननमेव सालानां सर्जतरूणां काननं वनं तस्मात्, शोणश्चासावधरपल्लवश्चेति शोणाधरपल्लवो लोहितदशनच्छदकिसलयस्तस्य सौरभ्येण सौगन्ध्येन समाकृष्टौ बलादाहूतौ, नासाचम्पकस्य घ्राणचाम्पेयस्य दर्शनं समवलोकनं तेन, तत्रैव नासोपरिभाग एव, निश्चलतां स्थिरताम्, उपगतौ प्राप्तौ, भृङ्गौ भ्रमरौ, इतीत्थम्, सम्भावनामुत्प्रेक्षाम्, सम्पादयन्तीमुत्पादयन्तीम्, मरकतवलयस्य हरिन्मणिनिर्मितकटकस्य प्रभया दीप्त्या बहलीकृता प्रचुरीकृता रोमराजिलताया लोमपङ्क्तिवल्लर्या कान्तिर्दीप्तिर्यस्यास्ताम्, वल्गद्भ्यां सचलद्भ्यां कुचाभ्यां स्तनाभ्यां जितमराला पराभूतसितच्छदा या गमनकेली गमनक्रीडा तस्याः परवशतया निघ्नतया, मन्दानिलेन मन्दपवनेनान्दोलिता कम्पिता गुलुच्छयुगली स्तवकयुगी यस्यास्ताम्, जङ्गमकनकलतां गतिशीलसुवर्णवल्लरीम्, तुलयन्तीमुपमिमानाम्, सम्मुखासीनमपि पुरस्तादुपविष्टमपि, सकलमनुजानां निखिलनराणां यानि नयनसरोजानि लोचनारविन्दानि तेषां कुड्मलीकरणेन निमीलनेन वित्तं तेन 'तेन वित्तश्चुञ्चुप्चणपौ' इति चणप्प्रत्ययः, तेजःप्रसरेण प्रतापसमूहेन परीतं व्याप्तम्, आत्मानं स्वम्, जीवन्धरमिति यावत्, द्रष्टुमवलोकयितुम्, अक्षमतयाऽसमर्थतया, नलिनस्य कमलस्यान्तिके समीपे उल्लासितः उत्क्षेपितो यः पल्लवतल्लजः श्रेष्ठकिसलयस्तस्य भ्रमकारिणा सन्देहोत्पादकेन, नयनोपरिभागेन नेत्रोपरितनांशेन चारुर्मनोहरस्तेन, पाणिना हस्तेन, मुखं वक्त्रम्, व्यवधाय समाच्छाद्य, पश्यन्तीमवलोकयन्तीम्, प्रान्तं निकटम्, आवसन्तीं स्थिताम्, काञ्चित् कामपि, आयताक्षीं विशालनयनाम्, जीवन्धरो विजयात्मजः, अप्राक्षीत् पृच्छति स्म । द्वितीयश्लोकप्रतिपाद्याभिधेयं वस्त्विह पृच्छतेर्द्वितीयं कर्म ।

किं वक्तुकामासीति—कुरङ्गस्येव नेत्रे यस्यास्तत्सम्बुद्धौ हे कुरङ्गनेत्रि हे मृगाक्षि, किं किन्नामधेयं

इति पृष्टा चकोराक्षी मधुरा गिरमाददे ।
अब्जिनी भृङ्गमुखरा मकरन्दझरीमिव ॥३॥

अत्र चायुधगृहेऽपि चैकदा त्वा निरीक्ष्य परिमण्डित श्रिया ।
चित्रिते 'रमति चित्तमन्दिरे समदो मम विवक्षया सह ॥४॥

इत्यादिवचनरचना चन्द्रकलामिव कान्ताजनकटाक्षलीलामिवेक्षुचापकोदण्डयष्टिमिव च वक्रमधुरामाकर्ण्य विस्मितान्तरङ्ग कुरुशशाङ्क, किमिदमश्रुतपूर्वमिति चिन्तयन् क्रमेण नन्दाढ्य समागत किमित्यूहाञ्चक्रे ।

वपुषा प्रथम विवेश शाला मनसा चैव तत कुरूद्वह ।
कुतुकप्रसरे हि निर्निरोधे क्रमभावो न च तत्र लक्ष्यते ॥५॥

अवलोक्याग्रजन्मान नन्दाढ्यो मन्दविस्मय ।
प्रमोदभारगुरुणा वपुषा प्रणनाम स ॥६॥

विकसत्कुसुमाञ्चितेन मूर्ध्ना क्षितिभाग स न यावदस्पृशत् ।
रभसेन कुरूद्वहेन तावज्जगृहे कोमलबाहुयष्टिना ॥७॥

---

वस्तु, वक्तुकामासि कथयितुमना असि, कोमलबन्ध मृदुलाश्लेषण गात्र शरीर यस्यास्तत्सम्बुद्धौ हे कोमलबन्धगात्रि, कि किंप्रयोजनेन, आगता सम्प्राप्ता, स्मितेन मन्दहसितेनावादता समुज्ज्वला, तव भवत्या, वक्त्रलक्ष्मीर्मुखश्री, आदरतो विनयत, वक्तुमिच्छा विवक्षाम्, ससूचयति प्रकटयति ॥२॥

इति पृष्टेति—इत्येव प्रकारेण, पृष्टानुयुक्ता, चकोराक्षी जीवर्जावलोचना सा ललना, भृङ्गमुखरा भ्रमरशब्दायमाना, अब्जिनी कमलिनी, मकरन्दझरीमिव कौसुमसन्ततिमिव, मधुरा मनोहराम्, गिर भारतीम्, आददे जग्राह, उवाचेति यावत् ॥३॥

अत्र चेति—अत्रास्मिन् प्रदेशे, आयुधगृहेऽपि च शस्त्रशालायामपि च, एकदा युगपत्, श्रिया लक्ष्म्या, परिमण्डित शोभितम्, त्वा भवन्तम्, निरीक्ष्य दृष्ट्वा, चित्रमाश्चर्यं सजात यस्मिस्तस्मिन्, मम भवत्पुरो वर्तमानाया, चित्तमन्दिरे मानसहर्म्ये, विवक्षया सह वक्तुमिच्छया सार्धम्, समदो हर्ष, 'मुत्प्रीति प्रमदो हर्ष प्रमोदामोदसमदा' इत्यमर, रमति क्रीडते, अत्र परस्मैपदप्रयोगश्चिन्त्य । रथोद्धतावृत्तम् । 'रान्नराविह रथोद्धता लगौ' इति लक्षणात् ॥४॥

इत्यादिवचनरचनामिति—चन्द्रकलामिव शशिषोडशभागमिव, कान्ताजनस्य वनितावृन्दस्य कटाक्षलीलामिवापाङ्गशोभामिव, इक्षुचापस्य कामस्य कोदण्डयष्टिमिव धनुर्यष्टिमिव, च, वक्रमधुरा कुटिलमनोहारिणीम्, इत्यादिवचनरचना पूर्वोक्तवाणीपरिपाटीम्, आकर्ण्य श्रुत्वा, विस्मितमाश्चर्यचकितमन्तरङ्ग चेतो यस्य तथाभूत, कुरुशशाङ्क कुरुशचन्द्रो जीवन्धर, पूर्वं प्राग् न श्रुत दृष्टञ्चेत्यश्रुतदृष्टपूर्वम्, इदमेतद्, किं स्यात् इत्येवम्, चिन्तयन् विचारयन्, विजयानन्दन, क्रमेण क्रमश नन्दाढ्यो गन्धोत्कटपुत्र, समागत' समायात, किमिति तर्के, इतीत्थम्, ऊहाञ्चक्रे तर्कयामास, 'इजादेश्चगुरुमतोऽनृच्छ' इत्याम् ।

वपुषा प्रथममिति—कुरुद्वहो जीवन्धर, प्रथम प्राक्, वपुषा शरीरेण, शाला भवन शस्त्रागारमिति यावद्, विवेश प्रविशति स्म, तत पश्चात्, मनसा चैव चेतसा चापि, हि यत, निर्विरोधेऽप्रतिबन्धे, कुतुकप्रसरे कौतुकविस्तारे, सति, तत्र कार्येषु, क्रमभाव पौर्वापर्यम्, न लक्ष्यते न दृश्यते । अर्थान्तरन्यास ॥५॥

अवलोक्येति—अमन्दो भूयान् विस्मय आश्चर्यं यस्य तथाभूत, स वितर्कित, नन्दाढ्यो जीवकानुज, अग्रजन्मान ज्येष्ठसहोदरम्, अवलोक्य दृष्ट्वा, प्रमोदभारेण हर्षातिरेकेण गुरु दुर्भर तेन, वपुषा शरीरेण, प्रणनाम नमश्चकार ॥ ६ ॥

विकसत्कुसुमेति—स नन्दाढ्य, विकसन्ति च तानि कुसुमानि च विकसत्कुसुमानि तैरञ्चितस्तेन विकसत्-

---

१ अत्र परस्मैपदप्रयोगश्चिन्त्य ।

कुरुवीरवक्षसि कवाटविस्तृते न ममौ वपु प्रमदभारमासलम् ।
अनुजस्य तत्तदपि बाहुवल्लरीयुगलेन दैर्घ्यगुरुणाभिषस्वजे ॥८॥
विनयेन वामनमय सहोदर शिरसि स्म जिघ्रति कुरूत्तमो मुहु ।
अनुजाङ्गसङ्गमसुखस्य सूचकैर्घनरोमकूपनिचयैर्निरन्तर ॥ ९ ॥
आनन्दबाष्पैरभिषिक्तगात्र सहोदर हर्षविकासिनेत्रम् ।
आपृच्छ्य सौख्य कुरुवशकेतु कथ समागा इति सोऽन्वयुङ्क्त ॥१०॥

इति भ्रातुरनुयोगशैली श्रवसा परिगृह्य मनसा ध्यातप्राक्तनवृत्तान्त , पुन प्रत्यावृत्ताग्रजविप्रयोगदु खतान्त इव सरभससमुद्भूतनि श्वसितसन्दीपितस्मृतिपथसगतवियोगवह्निसगादिव कोष्णान् तत्पूर्वतनानानन्दाश्रुबिन्दूनेव दु खबाष्पासारतया परिणतान् स्फुटितमुक्तासरमणीनिव परित किरन् , अमन्दतराक्रन्दनवेग कथ कथमपि नियम्य नन्दाढ्य स्वहृदयलगद्गद्गद सगद्गदमुत्तरमादातुमुपचक्रमे ।

भवति राजपुरात्सति निर्गते सपदि पापविपाकवशेन न ।
सकलबन्धुगणस्य तदोत्थितो मनसि दु सहशोकहुताशन ॥११॥

---

कुसुमाञ्चितेन विकसत्पुष्पपूजितेन, मूर्ध्ना शिरसा, यावत् क्षितिभाग भूप्रदेश, नास्पृशत् न स्पर्श चकार तावत् रभसेन वेगेन, कुरुद्वहेन जीवन्धरेण, कोमलबाहुयष्टिना मृदुलभुजदण्डेन जगृहे गृह्यते स्म ॥७॥

कुरुवीरेति—प्रमदभारेण प्रमोदातिशयेन मासल पुष्टम्, अनुजस्य लघुसहोदरस्य, वपु शरीरम्, कवाटवद् विस्तृत तस्मिन् अररविस्तीर्णे, कुरुवीरस्य जीवन्धरस्य वक्षसि भुजमध्ये, न ममो न माति स्म, यद्यपि, तदपि तथापि, दैर्घ्येणायतत्वेन गुरु विशाल तेन, बाहुवल्लरीयुगलेन भुजलतायुगेन, तदनुजवपु , अभिषस्वजे समाश्लिष्टम् । मञ्जुभाषिणीच्छन्द ॥ ८ ॥

विनयेनेति—अनुजस्य लघुसहोदरस्य यदङ्ग शरीर तस्य सङ्गमेन ससर्गेण यत्सुख शात तस्य, सूचकैर्निवेदकै , घना सान्द्रा ये रोमकूपा लोमकूपास्तेषा निचयै समूहै , निरन्तरो व्याप्त , अयमेष , कुरूद्वहो जीवन्धर , विनयेन प्रह्वत्वेन, वामन खर्व नम्रमिति यावत् 'खवा ह्रस्वश्च वामन ' इत्यमर , सहोदर सनाभिम्, शिरसि मूर्ध्नि, मुहुरनेकवारम्, जिघ्रति स्म जघ्रौ, गुरुजना लघुजन शिरसि जिघ्रन्तीति लोकव्यवहार ॥ ९ ॥

आनन्दबाष्पैरिति—स प्रसिद्ध कुरुवशकेतु सात्यन्धरि , आनन्दबाष्पैर्हर्षाश्रुभि , अभिषिक्त स्नपित गात्र शरीर यस्य तम्, हर्षविकासिनी नेत्रे यस्य त समदोल्लसितनयनम्, सहोदर सगर्भम्, सौख्य कुशलम्, आपृच्छ्य पृष्ट्वा, कथ केन प्रकारेण, समागा समागम , इत्येवम्, अन्वयुङ्क्त पप्रच्छ ॥ १० ॥

इति भ्रातुरिति—इति पूर्वोक्ताम्, भ्रातुरग्रजस्य, अनुयोगशैली प्रश्नपरम्पराम्, श्रवसा कर्णेन, परिगृह्य समादाय श्रुत्वेति यावत्, मनसा चेतसा, ध्यातश्चिन्तित प्राक्तनवृत्तान्त पूर्वोदन्तो येन तथाभूत , पुनर्भूय , प्रत्यावृत्तेन प्रत्यागतेन अग्रजविप्रयोगदु खेन ज्येष्ठभ्रातृविरहाशर्मणा तान्त इव दु खीकृत इव, सरभस सवेगम्, उद्भूतानि समुत्पन्नानि यानि नि श्वसितानि दु खोच्छ्वासास्तैर्दीपित सन्धुक्षितो य स्मृतिपथसगतो ध्यानमार्गागतो वियोगवह्निर्विरहानलस्तस्य सगादिव ससर्गादिव कोष्णान् ईषदुष्णान्, दु खबाष्पासारतया विषादाश्रुधारासपाततया परिणतान् परिवर्तितान्, तत्पूर्वतनान् तत्प्राग्भवान्, आनन्दाश्रुबिन्दूनेव हर्षाश्रुशीकरानेव, स्फुटिता खण्डिता ये मुक्तासरमणयो मौक्तिकस्रग्रत्नानि तानिव, परित समन्तात्, किरन् प्रक्षिपन्, अमन्दतर प्रचुरतरो य आक्रन्दनवेगो रोदनवेगस्तम्, कथ कथमपि केन केनापि प्रकारेण, नियम्य समवरुध्य, स्वहृदये स्वकीयचेतसि लगन् समासन् गद्गदो बाष्पावरुद्धकण्ठत्व यस्य तथाभूत सन्, सगद्गद गद्गदसहित यथा स्यात्तथा, उत्तर प्रतिवचनम्, आदातु गृहीतुम्, उपचक्रमे तत्परो बभूव ।

भवतीति—तदा तस्मिन् काले, नोऽस्माकम्, पापस्य दुरितस्य विपाक परिणामस्तस्य वशो निघ्न त्व तेन, भवति त्वयि, सपदि शीघ्रम्, राजपुरात् स्वाधिष्ठानभूतान्नगरात्, निर्गते निष्क्रान्ते सति, सकल

वाचामगोचरे शोकपारावारे निपातिताम् ।
निरीक्ष्य बन्धुता दीना मर्तुं व्यवसिता वयम् ॥१२॥

तदानी दुरन्तदु खनितान्ततान्तस्वान्तौ सन्ततमुद्भ्रान्तबाष्पधारया प्रथमामीतिबाधामिवाव हन्तौ मातापितरावेव प्रलापमातेनतु ।

अहह बत तनूज क्वासि दैव दुरन्त
तनयविपदि सत्यामप्यहो दु सहायाम् ।
परुषविजितवज्र जीवित निश्चल नौ
कथमियमतिदीर्घा दुर्दशा हा विलङ्घ्या ॥१३॥

इत्यादिनिरङ्कुशपरिदेवनरवविजृम्भिते पित्रोर्मुनिवाक्यस्मरणेन कथ कथमपि शान्तता नीते, देदीप्यमानशोकज्वालाविह्वलेषु बन्धुकुलेषु, काष्ठाङ्गारनिन्दापरेषु पौरेषु, दुष्पूरदु खपूरेषु युष्मत्सहचरेषु, मरणोद्योगविस्मारितेतरवृत्तान्तानामस्माक दैववशेन विद्याविदितवृत्तान्ता प्रजावती कथवृत्तेति स्थाने बोध समजायत ।

एव भवद्दर्शनभाविसौख्यसप्रापकादृष्टवशेन सद्य ।
प्रजावतीमन्दिरमेत्य सोऽह विषाददीनाक्षरमेवमूचे ॥१४॥

---

बन्धूना निखिलभ्रातॄणा गण समूहस्तस्य, मनसि चेतसि, दु सहशोको हुताशन इव दु सहशोकहुताशनो दुर्भरविषादवैश्वानर, उत्थित समुत्पन्न । द्रुतविलम्बितवृत्तम् ॥ ११ ॥

तदानीमिति—तदानी भवन्निष्क्रमणकाले, दुरन्तेन दुष्टावसानेन दु खेन नितान्तमत्यन्त तान्त खिन्न स्वान्त चित्त ययोस्तौ, सन्तत निरन्तरम्, उद्भ्रान्तबाष्पधारया प्रकटिताश्रुसन्तत्या, प्रथमामाद्याम्, ईते-र्बाधा तामिव अतिवृष्टिपीडामिव, आवहन्तौ आदधतौ, माता च पिता चेति मातापितरौ जननीजनकौ 'आनङृतो द्वन्द्वे' इत्यानङ्, एव वक्ष्यमाणप्रकारेण, प्रलाप विलापम्, आतेनतुर्विस्तारयामासतु ।

अहह बतेति—'अहह' 'बत' इत्यव्ययद्वय दुःखातिशये वर्तते, हे तनूज हे पुत्र, क्वासि कुत्र वर्तसे, दैव भाग्यम्, अस्माकमिति शेष, दुरन्त दुष्टावसान वर्तते, मत्पुत्रा म्रियन्ते स्म दैवाल्लब्धस्त्वमपि कुत्रचि-न्निर्गत इत्यहो मम दौर्भाग्यमिति भाव । दु सहाया कठिनायाम्, तनयविपदि सुतविपत्तौ, सत्यामपि विद्य-मानायामपि, निश्चल स्थिरम्, नौ आवयो, जीवित जीवनम्, परुषेण काठिन्येन विजित पराभूत वज्र दम्भो-लिर्येन तथाभूतम्, अस्तीत्यहो आश्चर्यम्, अतिदीर्घा विशालतरा, इयमेषा, दुर्दशा दुरवस्था, कथ केन प्रकारेण, विलङ्घ्या समतिक्राम्या, हा खेदे । मालिनीच्छन्द ॥ १३ ॥

इत्यादीति—पित्रोर्मातापित्रो, इत्यादि पूर्वोक्तप्रकारो यो निरङ्कुशपरिवेदनरवो निर्बाधविलापशब्द-स्तस्य विजृम्भित विजृम्भण वृद्धिरिति यावत् तस्मिन्, भावे क्त, मुनिवाक्यस्य 'चरमशरीरी ते पुत्रो भविष्य-ति' इति यतीन्द्रवचनस्य स्मरणेन ध्यानेन, कथ कथमपि केन केनापि प्रकारेण, शान्तता समाप्तिम्, नीते प्राप्ते सति, बन्धुकुलेषु सहोदरसमूहेषु, देदीप्यमानया जाज्वल्यमानया शोकज्वालया विषादार्चिषा विह्वला विकला स्तेषु सत्सु, पौरेषु नागरिकेषु, काष्ठाङ्गारस्य कृतघ्नस्य निन्दाया गर्हाया परा सक्तास्तेषु सत्सु, युष्मत्सहचरेषु त्वत्सुहृत्सु, दुष्पूरो दु खपूरो येषा तेषु दुर्भरदु खसमूहेषु सत्सु, मरणोद्योगेन मृत्युव्यवसायेन विस्मारिता इतरवृत्तान्ता अन्योदन्ता यैस्तेषाम्, अस्माक मम, विद्यया विदितोऽवगतो वृत्तान्त उदन्तो यया सा, प्रजावती भ्रातृजाया गन्धर्वदत्तेति यावत्, कथवृत्ता कीदृगुदन्ता, अस्तीति शेष, इति इत्याकारक, स्थाने युक्त, बोधो ज्ञानम्, समजायत समुत्पन्नो बभूव ।

एवमिति—एवमनेन प्रकारेण, सोऽह कृतमरणनिश्चयो नन्दाढ्य, भवतो दर्शन भवद्दर्शन त्वदव लोकन तेन भावि भविष्यद्यत्सौख्य तस्य सप्रापक लम्भक यददृष्ट दैव तस्य वशो निघ्नत्व तेन, सद्यो झटिति, प्रजावत्या गन्धर्वदत्ताया मन्दिर भवनम्, एत्य प्राप्य, विषादेन त्वद्विरहजन्यखेदेन दीनाक्षर मन्दाक्षर यथा स्यात्तथा, एवमनेन प्रकारेण, ऊचे जगाद ॥१४॥

प्रजावति विजानती सकलपद्धति त्व कथ
बिभर्षि नवमालिका कचकुले हरिद्रा तनौ ।
न युक्तमिदमास्थित विगतभर्तृवामभ्रुवा
वृथा खलु सुखासिका सकललोकगर्हास्पदम् ॥ १५ ॥

इत्युक्ता सा विशालाक्षी मन्दहासाननाम्बुजा ।
पिकीव मधुरालापा मधुरा वाचमाददे ॥१६॥

अङ्ग तावकसहोदरवर्यस्तुङ्गपुण्यविभवेन मण्डित ।
क्षेमवाञ्जयति सौख्यपरीत पापतो वयमिहाततदु खा ॥१७॥
देशे देशे सुन्दरीश्चन्द्रवक्त्र पाणौकृत्य प्राप्तहर्षप्रकर्ष ।
हेमाभाख्ये पत्तने सोऽयमद्य प्रीता राज्ञो नन्दिनी सन्दधाति ॥१८॥

एवमगण्यपुण्यवशेन विपदमपि सपदात्मना परिणतामनुभवन्त सुखमावसन्त निरन्तरनिपतद्राजतनूजमकुटराजिनीराजितचरणनीरेज भवदीयाग्रज द्रष्टुमिच्छसि चेद्गम्यतेति प्रतिपाद्य, विद्यावैशद्येन स्मरतरङ्गिणीनाम्नि शयनतले शाययित्वा, सपत्र मामत्रभवति प्राहिणोत '

---

प्रजावतीति—हे प्रजावति हे भ्रातृजाये, सकलपद्धति निखिलरीतिम्, विजानती बुध्यमाना, त्व भवती, कचकुले केशसमूहे, नवमालिका नूतनस्रजम्, तनो शरीरे, हरिद्रा रजनीम् पीताङ्गरागमिति यावत्, कथ केन कारणेन, बिभर्षि दधासि, इदमेतत्, आस्थित पद्धति , युक्त न साम्प्रत न, खलु निश्चयेन, विगत प्रोषितो भर्ता वल्लभो यासा तथाभूता या वामभ्रुवो वनितास्तासाम्, वृथा निष्प्रयोजना, सुखासिका सुखास्थिति , सकललोकाना निखिलनराणा गर्हास्पद निन्दास्थानम्, अस्तीति शष । पृथ्वीच्छन्द ॥१५॥

इत्युक्तेति—इति पूर्वोक्तप्रकारेण, मया, उक्ता कथिता, सा विशालाक्षी दीर्घलोचना, मन्दो हासो यस्मिस्तन्मन्दहास तथाभूतमाननाम्बुज यस्या सा मन्दस्मितोपलक्षितवदनारविन्दा, पिकीव कोकिलेव, मधुरालापा मिष्टभाषणा, सती, मधुरा मिष्टाम्, वाच वाणीम्, आददे जग्राह ॥१६॥

अङ्ग तावकेति—अङ्गेति सम्बुद्धौ, तुङ्गश्चासौ पुण्यविभवश्चेति तुङ्गपुण्यविभवस्तेन सून्नतसुकृतैश्वर्येण, मण्डित शोभित, क्षेमवान् कल्याणयुक्त, सौख्येन सुखेन परीतो व्याप्त, तावकस्त्वदीयश्चासौ सहोदरवर्यो भ्रातृज्येष्ठश्चेति तावकसहोदरवर्य , जयति सर्वोत्कर्षेण वर्तते, पापतो दुरितोदयात्, इह नगरे, वयम्, आतत व्याप्त दु ख येषा तथाभूता, स्म इति शेष । रथोद्धतास्वागतासमिश्रणादुपजाति वृत्तम् ॥१७॥

देशे देश इति—देशे देशे प्रतिजनपदम्, सुन्दरी सुललना , पाणौकृत्य परिणीय, प्राप्तो लब्धो हर्षप्रकर्ष प्रमोदातिशयो येन तथाभूत , चन्द्र इव वक्त्र मुख यस्य स , सोऽय त्वदीयो भ्राता, अद्य साम्प्रतम्, हेमाभाख्ये हेमाभनाम्नि, पत्तने पुटभेदने, राज्ञो नृपस्य, प्रीता प्रसन्नाम्, नन्दिनी पुत्रीम्, सन्दधाति सन्धारयति, ता सम्प्राप्तोऽस्तीति यावत् । शालिनीच्छन्द ॥१८॥

एवमगण्येति—एवमनेन प्रकारेण, अगण्यञ्च तत्पुण्यञ्चेत्यगण्यपुण्यम् अपरिमितसुकृत तस्य वशस्तेन विपदमपि विपत्तिमपि, सपदात्मना सम्पत्तिस्वरूपेण, परिणता परिवर्तिताम्, अनुभवन्तमुपभुञ्जानम्, सुखमावसन्त हर्षेण निवसन्तम्, निरन्तर शश्वन्निपतिनानि नम्रीभूतानि यानि राजतनूजमकुटानि नरेन्द्रनन्दनमौलयस्तेषा राजिभि पङ्क्तिभिर्नीराजित कृतारातिक चरणनीरेज पादारविन्द यस्य तथाभूतम्, भवदीयाग्रज स्वकीयज्येष्ठसहोदरम्, द्रष्टुमवलोकयितुम्, इच्छसि वाञ्छसि, चेद्यदि, गम्येत व्रज्येत, तर्हि, इतीत्थम्, प्रतिपाद्य निवेद्य, विद्याया मन्त्रस्य वैशद्य नैर्मल्य तेन, स्मरतरङ्गिणीनाम्नि स्मरतरङ्गिणीनामधेये, शयनतले शय्यापृष्ठे, शाययित्वा स्वापयित्वा, सपत्र पत्रसहितम्, मा नन्दाढ्यम्, अत्रभवति पूजनीये त्वयि, प्राहिणोत् प्रजिघाय ।

इति करुणमयैर्गिरा प्रवाहैरनुजमुखादुदितै कुरूद्वहोऽसौ ।
भृशमतनुत तापभारमन्तर्वदनतले न विकारलेशलेशम् ॥१६॥
अवाचयदसौ पत्र सगर्भेण समर्पितम् ।
गन्धर्वदत्तालिखित विचित्राक्षरलक्षितम् ॥२०॥

आर्यपुत्र ! गुणमाला विज्ञापयत्येवम्—
कन्दर्पो विषमस्तनोति तनुता तन्वा ज्वरे गौरव
मृत्युश्चापि दयाकथाविरहितो मा नैव सम्भाषते ।
आर्य त्व च नवाङ्गनासुखवशाद्विस्मृत्य मा मोदसे
जातीपल्लवकोमला कथमिय जीवेत्तव प्रेयसी ॥२१॥

स्वामिन्नङ्कुरितौ ममोरसि कुचौ वृद्धि गतौ तावके
वाचस्तावकवाग्रसै परिचिता मौग्ध्येन सन्त्याजिता ।
बाहू मातृगलस्थलादपसृतौ त्वत्कण्ठदेशेऽर्पिता-
वार्य प्रेमपयोनिधे स्थितमिद विज्ञापित किं पुन ॥२२॥

इति प्रियाया अन्यापदेशलिखनपरिपाटी मनसा चिन्तयन्प्रियाशोकविदीर्णशरीर कुरु-

---

इति करुणमयैरिति—इति पूर्वोक्तप्रकारेण, अनुजमुखाल्लघुसहोदरवदनात्, उदितैर्निर्गतै, करुणमयै करुणरसात्मकै, गिरा वाचाम्, प्रवाहै सन्तानै, असौ कुरूद्वहो जीवन्धर, अन्तर्मनसि, भृशमत्यन्तम्, तापभार खेदसमूहम्, अतनुत विस्तारयामास, वदनतले मुखतले, विकारस्य शोकजन्यविकृतेर्लेशस्यापि लेशो भागस्यापि भागस्तम्, नातनुत नो विस्तारयामास । महापुरुषत्वाद्बाह्ये शोकचिह्न न प्रकटयामासेति भाव । पुष्पिताग्राच्छन्द ॥१६॥

अवाचयदसाविति—असो स्वामी, समानो गर्भो यस्य तेन सहोदरेण, समर्पित प्रदत्तम् । गन्धर्वदत्तया प्रथमपत्न्या लिखितमङ्कितम् । विचित्राक्षरैरद्भुतवर्णैर्लक्षित सहितम् । पत्र सदेशकर्गलम्, अवाचयद् वाचयामास ॥२०॥

आर्यपुत्रेति—आर्यपुत्र ! हे हृदयवल्लभ ! गुणमाला भवद्भार्या, एवमनेन प्रकारेण, विज्ञापयति निवेदयति—

कन्दर्प इति—विषमस्तीक्ष्ण, कन्दर्पो मदन, तन्वा शरीरे, तनुता कृशताम्, ज्वरे कामतापे, गौरव गुरुत्वम्, तनोति विस्तारयति, दयाकथाविरहित करुणावार्ताशून्य, मृत्युश्चापि यमश्चापि, मा विरहिणीम्, नैव सम्भाषते नैव ब्रवीति, हे आर्य हे पूज्य, त्व च भवाँश्च, नवाङ्गनासुखवशात् अभिनवरामासुखाधीनत्वात्, मा विस्मृत्य विस्मृता कृत्वा, मोदसे हृष्यसि, जातीपल्लवा इव मालतीकिसलया इव कोमला मृदुला, तव भवत, इयमेषा, प्रेयसी प्रियवल्लभा, कथम् केन प्रकारेण, जीवेत् जीविता भवेत् ॥२१॥

स्वामिन्निति—हे स्वामिन् हे जीवितेश्वर, कुचौ वक्षोजौ, मम गुणमालाया, उरसि वक्षसि, अङ्कुरितौ प्ररूढौ समुत्पन्नाविति यावत्, तावके त्वदीये च, उरसि वक्षसि, वृद्धि विस्तारम्, गतौ प्राप्तौ, वाचो गिर, तावकवाग्रसैस्त्वदीयवचनस्नेहै, परिचिता प्राप्तैकत्वा, सत्य, मौग्ध्येन मूढत्वेन, सन्त्याजिता मोचिता, मातुर्जनन्या गलस्थलात्कण्ठप्रदेशात्, अपसृतौ दूरीकृतौ, बाहू भुजौ, तव कण्ठदेशस्तस्मिन् त्वदीयगलप्रदेशे, अर्पितौ स्थापितो, हे आर्य हे पूज्य, हे प्रेमपयोनिधे हे प्रीतिपारावार ! स्थित वर्तमानम्, इदमेतत्, विज्ञापित निवेदितम्, पुनरनन्तरम्, कि भविष्यतीति को जानीते ॥२२॥

इति प्रियाया इति—इत्येव प्रकारेण, प्रियाया गन्धर्वदत्ताया, अन्यस्या गुणमालाया अपदेशेन व्याजेन या लिखनपरिपाटी लेखनपरम्परा ताम्, मनसा चेतसा, चिन्तयन् विचारयन्, प्रियाशोकेन भार्याविषादेन विदीर्णं भिन्न शरीर यस्य तथाभूत, कुरुकुमारो जीवन्धर, मुहुर्मुहुर्भूयोभूय, जननीजनश्च

कुमारो, मुहुर्मुहुर्जननीजनवयस्यसतीजनकुशलानुयोगमत्यादरेण विस्तार्य, सगर्भसङ्गमतुङ्गतमतोषेण सुखमासामास ।

समया कुरुकुञ्जर निविष्ट कनकाद्रि निकषेव शीतरश्मिम् ।
अनुज मनुजाधिपात्मजास्ते कुशलप्रश्नपुर सर परीयु ॥२३॥

एव सोदरसमागमस तुष्टस्वान्त कुरुकुमुदिनीका तमुपतिष्ठमानेषु राजतनूजेषु, कदाचित्-समरभसधावनजनितोर्ध्वनिश्वासनिर तरनि सरणदत्तार्धसाहाय्यकभरकम्पिततनुदण्डा प्रचण्डवात-चलितबालपादपसरूपा, अ तरमेयतया बहि प्रसृतैरिव भयानकरसपूरै स्वेदसलिलैर्दैन्यसाम्राज्ये-ऽभिषिक्ता इव गोपा, राजमन्दिराजिरे आर्ततरमेव चुक्रुशु ।

हेलानाटकघोटकव्रजखुरप्राघुट्टनोद्यद्रजो-
राज्या रासभधूम्रया कबलिताकाशावकाशै परै ।
राजस्तावकगोधन निखिलमप्याहृत्य नीत स्वता
किञ्चोदञ्चितशिञ्जिनीपटुरवैर्घोषोऽपि सक्षोभित ॥२४॥

उद्यत्प्रतापपटलेन सहस्ररश्मे-
र्गोमण्डल तव च भूमिपतेर्निरुद्धय ।
प्रत्यर्थिसैनिककुल प्रचुराट्टहासै-
र्लोकस्थिति शिथिलयत्यरिधीरता च ॥२५॥

---

मातृजनश्च वयस्याश्च सखायश्च सतीजनश्च ललनाजनश्चेति जननीजनवयस्यसतीजनास्तेषा कुशलानुयोग मङ्गलप्रश्नम्, अत्यादरेण प्रेमातिशयेन, विस्तार्य प्रपञ्च्य, सगर्भस्य सहोदरस्य सङ्गमेन ससर्गेण तुङ्गतम सून्नतो यस्तोष प्रमोदस्तेन, सुख यथा स्यात्तथा, आसामास आसाञ्चक्रे 'दयायासश्च' इत्याम् ।

समयेति—ते पूर्वोक्ता, मनुजाधिपात्मजा लोकपालतनया, कनकाद्रि सुवर्णशैलम्, निकषा समीपे, निविष्ट स्थितम्, शीतरश्मिमिव चन्द्रमसमिव, कुरुकुञ्जर जीवन्धरम्, समया निकटे, 'अभित परित समया निकषाहाप्रतियोगेऽपि' इति द्वितीया, निविष्टम्, अनुज लघुभ्रातरम्, कुशलप्रश्नपुरस्सर मङ्गलानुयोग-सहितम्, यथा स्यात्तथा, परीयु परीत्य तस्थु ॥२३॥

एवमिति—एवमनेन प्रकारेण, राजतनूजेषु नरेन्द्रनन्दनेषु, सोदरस्य सगर्भस्य समागमेन सयोगेन सतुष्ट प्रसन्न स्वान्त चित्त यस्य तम्, कुरुकुमुदिनीकान्त कुरुवशचन्द्रम्, उपतिष्ठमानेषु मित्रीकुर्वत्सु मैत्री-भावेन समीपे तिष्ठत्स्विति यावत्, कदाचिज्जातुचित्, सरभस सवेग यथा स्यात्तथा धावमानेन पलायनेन जनित समुत्पन्नो य ऊर्ध्वनि श्वास उच्चै श्वासस्तस्य निरन्तरमजस्र नि सरणेन निर्गमनेन दत्तोऽर्पितो योऽर्धसाहाय्यकभर किञ्चित्सहायतासमूहस्तेन कम्पितो वेपितस्तनुदण्ड शरीरयष्टिर्येषा ते, प्रचण्डवातेन तीक्ष्णपवनेन चलिता कम्पिता ये बालपादपा बालतरवस्तेषा सरूपा सदृशा, अन्तर्मध्ये, अमेयतया मातुमशक्यत्वेन, बहिरभ्यन्तरम्, प्रसृतैर्विस्तृतै, भयानकरसपूरैरिव भयरससमूहैरिव, स्वेदसलिलै प्रस्वेद-जलै, दैन्यसाम्राज्ये कातरत्वराज्ये, अभिषिक्ता इव कृताभिषेका इव, गोपा आभीरा, राजमन्दिराजिरे नरेन्द्रमन्दिरचत्वरे, आर्ततर सदु खप्रकर्ष यथा स्यात्तथा, एव वक्ष्यमाणरीत्या, चुक्रुशु आक्रोशन्ति स्म ।

हेलानाटकेति—हे राजन् हे भूपाल ! रासभधूम्रया खररोमधूम्रवर्णया, हेलया क्रीडया नाटका नटन्तो गच्छन्तो ये घोटका अश्वास्तेषा व्रज समूहस्तस्य खुरा शफास्तेषा प्राघुट्टनेन सघर्षणेनोद्यन्ती समुत्पतन्ती या रजोराजिर्धूलिपङ्क्तिस्तया, कवलितो ग्रासीकृत आकाशावकाशो नभोऽवगाहो यैस्तै, परै शत्रुभि, निखिलमपि समस्तमपि, तावकगोधन त्वदीयगोसमूह, स्वता स्वकीयताम्, नीत प्रापितम्, किञ्च अन्यच्च, उदञ्चिता उत्पन्ना ये शिञ्जिनीना प्रत्यञ्चाना पटुरवास्तीक्ष्णशब्दास्तै, घोषोऽपि आभीरवसति-रपि, सक्षोभित क्षोभ प्रापित । शार्दूलविक्रीडित वृत्तम् ॥२४॥

उद्यत्प्रतापपटलेनेति—प्रत्यर्थिसैनिककुल शत्रुसैन्यसमूह, उद्यत्प्रतापपटलेन समुद्भवत्प्रताप

इत्याक्रोश समाकर्ण्य भूपतिर्बलमादिशत् ।
स्वामी श्वशुररुद्धोऽपि प्रस्थित परवीरहा ॥ २६ ॥

तदनु रयविजितविहगपतितुरगगणविविधगतिविदलितवसुधातलनिर्गलद्धूलिकापालिकाविशेषशोषितनाकमहीसिन्धून्सुदूरमूर्ध्वप्रसारितशुण्डादण्डसत्वरफूत्कारशीकरपरम्पराभिर्गण्डतलयुगलविगलद्दानधाराभिश्च सपूर्य सार्थकनामधेयधरै सिन्धुरैर्मन्थरगमन, पयोनिधिफेनकूटायमानपटपरिष्कृतपताकादण्डमण्डितरथकड्यासङ्घटित धृतमेचककञ्चुकसम्पत्तिभि पत्तिभि सङ्कुल बल पुरोधाय प्रतिष्ठमाना , कुरुविन्दकुण्डलरुचिवीचीकवचितभुजविराजिततया बहिरपि साक्षात्प्रसृतमिव प्रताप बिभ्राणा , एते ह्यनतान्मण्डलीकान्निराकरिष्यन्तीति भयेन सेवार्थमागताभ्यामिव शीतोष्णरश्मिभ्यामङ्गदाभ्या सङ्गता , तुङ्गतममुक्ताहारमनोरमविशालवक्ष स्थलतया नक्षत्रमालालङ्कृतशारदाम्बर तुलयन्त , ते जीवन्धरनन्दाढ्यपुर सरसुमित्रप्रमुखराजपुत्रा क्रमेण रणाङ्गणमवतेरु ।

---

समूहेन, सहस्र रश्मयो यस्य तस्य सूर्यस्य, गोमण्डल किरणसमूहम्, तव च भवतश्च, गोमण्डल धेनुसमूहम्, 'गो स्वर्गे वृषभे रश्मौ वज्रे शीतकरे पुमान् । अर्जुनीनेत्रदिग्बाणभूवागादिषु योषिति' इति विश्व , निरुध्य वशीकृत्य प्रचुराट्टहासै प्रभूतसशब्दहसितै , लोकस्थितिं जनमर्यादा जनवसति वा, अरिवीरता च शत्रुधैर्यञ्च, शिथिलयति श्लथा करोति । वसन्ततिलकावृत्तम् ॥२५॥

इत्याक्रोशमिति—इति पूर्वोक्तम्, आक्रोश रोदनध्वनिम्, समाकर्ण्य श्रुत्वा, भूपतिर्नृप , बल सैन्यम्, आदिशदाज्ञापयामास । पर वीरान् शत्रुयोद्धृन् हन्तीति परवीरहा, स्वामी जीवन्धर , श्वसुररुद्धोऽपि जायाजनकनिषिद्धोऽपि, प्रस्थित प्रयात ॥२६॥

तदन्विति—तदनु तदनन्तरम्, रयेण वेगेन विजित पराभूतो विहगपतिर्गरुडो येन तथाभूतो यस्तुरगगणो घोटकसमूहस्तस्य विविधगतिभिरनेकप्रकारगमनैर्विदलित खण्डित यद् वसुधातल पृथिवीतल तस्मान्निर्गलन्ती निष्पतन्ती या धूलिकापालिका रजश्रेणिस्तस्या विशेषेण शोषिता निर्जलीकृता नाक महीसिन्धव स्वर्गवसुधास्रवन्त्यो यैस्तान्, सुदूर विप्रकृष्टतर यथा स्यात्तथा ऊर्ध्वप्रसारित उपरिविस्तारितो य शुण्डादण्डस्तस्य सत्वरा सरया या फूत्कारशीकरपरम्परा फूत्काराम्बुकणपङ्क्तयस्ताभि , गण्डतलयुगलात्कपोलतलद्वन्द्वाद् विगलन्त्यो या दानधारा मदस्रोतासि ताभि , सम्पूर्य सम्पूर्णा कृत्वा सार्थकमन्वितार्थं यन्नामधेय नाम तस्य धरास्तै सिन्धूर्नदी रान्ति ददति स्वजलपूरेणेति सिन्धुरा हस्तिन इति सिन्धुरशब्दार्थ , सिन्धुरैर्हस्तिभि , मन्थर मन्द गमन यस्या सा मन्थरगमना, पयोनिधे सागरस्य फेनकूटायमानेन डिण्डीरपिण्डवदाचरता पटेन वस्त्रेण परिष्कृता सहिता ये पताकादण्डा ध्वजदण्डास्तैर्मण्डिता शोभिता, मन्थरगमना पयोनिधिफेनकूटायमानपटपरिष्कृतपताकादण्डमण्डिता च या रथकड्या स्यन्दनसमूहस्तया सघटित सहितम्, धृता गृहीता मेचका श्यामा कञ्चुकसपत्तयो वर्मसपदो यैस्तै पत्तिभि पदातिभि सकुल व्याप्तम्, बल सैन्यम्, पुरोधाय पुरस्तात्कृत्वा, प्रतिष्ठमाना प्रयान्त , कुरुविन्दकुण्डलाना पद्मरागमणिनिर्मितकर्णाभरणाना रुचिवीचीभि कान्तिपरम्पराभि कवचितभुजैर्व्याप्तबाहुभिर्विराजिततया शोभिततया, बहिरपि बाह्यमपि, प्रसृतमिव विस्तृतमिव, प्रताप तेज , बिभ्राणा दधाना , एते जीवन्धरादय , हि निश्चयेन, अनतान् अनम्रान्, मण्डलीकान् मण्डलाकारान्, पक्षे मण्डलेश्वरान्, निराकरिष्यन्ति पराभविष्यन्ति, इति भयेन भीत्या, सेवार्थं शुश्रूषार्थं, आगताभ्या प्राप्ताभ्याम्, शीतोष्णरश्मिभ्यामिव सूर्याचन्द्रमोभ्यामिव, अङ्गदाभ्या केयूराभ्याम्, सगता सहिता , तुङ्गतमेन समुन्नततमेन मुक्ताहारेण मनोरम मनोहर विशालवक्ष स्थल विस्तृतोर स्थल येषा तेषा भावस्तत्ता तया, नक्षत्रमालया तारापङ्क्त्यालङ्कृत शोभित यच्छारदाम्बर शरद्गगन तत्, तुलयन्त उपमिमाना , ते पूर्वोक्ता , जीवन्धरनन्दाढ्यो वैजयेयनन्दाढ्यौ पुरस्सरौ पुरोगामिनौ येषा तथाभूता ये सुमित्रप्रमुखराजपुत्रा सुमित्रादिनरेन्द्रनन्दनास्ते, क्रमेण क्रमश , रणाङ्गण नभोऽजिरम्, अवतेरुरवतरन्ति स्म ।

भेरीरव सकलदिक्पतिसौधशृङ्ग-
वातायनाररकुलानि विभिद्य तूर्णम् ।
अन्त प्रविश्य बहुदूरकदध्वखेद-
विश्रान्तिमाप रणकेलिमुखप्रभूत ॥२७॥

तदानीमुभयेषा सैनिकाना परस्परमेव वीरवादा बभूवु ।

अस्माक त्रिजगत्प्रसिद्धयशसामेषा कृपाणीलता
शत्रुस्त्रीनयनान्तकज्जलजलै श्यामा निपीतै पुरा ।
सम्प्रत्याहवसीम्नि युष्मदसृजा पानेन शोणीकृता
वीरश्रीस्मितपाण्डुराचरिततश्चित्रा भविष्यत्यहो ॥२८॥

गोवृन्दसक्तान् भवतोऽस्मदीयभुजा वयस्या इव सयुगेन ।
नेष्यन्ति गामद्य निमेषमात्रान्न तिष्ठतास्मत्पुरतो हठेन ॥२९॥

पशून् वा प्राणान् वा जहत झटिति क्षीबपुरुपा
स्वमूर्ध्नश्चापान् वा नमयत नरेन्द्रस्य पुरत ।
मुखे वा हस्ते वा कुरुत शरवृन्द नरपतिं
कृतान्तागार वा शरणयत तूर्णं प्रतिभटा ॥३०॥

अन्येऽप्येवमाहु —

भेरीरव इति—रणकेलिमुखे समरक्रीडाप्रारम्भे प्रभूत समुत्पन्न, भेरीरवो दुन्दुभिनाद, तूर्णं शीघ्रम्, सकलदिक्पतीना निखिलदिक्पालाना सौधशृङ्गवातायनाना भवनाग्रगवाक्षाणामररकुलानि कपाटसमूहान्, विभिद्य विदीर्य, अन्तर्मध्ये, प्रविश्य प्रवेश कृत्वा, कुत्सितोऽध्वा कदध्वा बहुदूरोऽतिविप्रकृष्टो य कदध्वा कुमार्गस्तस्मिन् खेद क्लेशस्तस्य विश्रान्ति प्रशमम्, आप लेभे । वसन्ततिलकावृत्तम् ॥२७॥

तदानीमिति—तदानी तस्मिन् काले, उभयेषा पक्षद्वयस्थानाम्, सैनिकाना सैन्यानाम्, परस्पर मिथ एव वक्ष्यमाणप्रकारा, वीरवादा शूरभाषितानि, बभूवुरजायन्त ।

अस्माकमिति—त्रिजगत्सु त्रिभुवनेषु प्रसिद्ध प्रख्यात यश कीर्तिर्येषा तेषाम्, अस्माक न, एषा हस्ते धृता, कृपाणीलता खड्गवल्लरी, पुरा प्राक्, निपीतैर्गृहीतै, शत्रुस्त्रीनयनान्ताना वैरिवनितानेत्रप्रान्ताना यानि कज्जलजलानि अञ्जनसलिलानि तै, श्यामा कृष्णवर्णा, सम्प्रतीदानीम्, आहवसीम्नि रणाग्रे, युष्मदसृजा त्वदीयरुधिराणाम्, पानेन धयनेन, शोणीकृता रक्तीकृता, चरमतोऽन्ते, वीरश्रिया वीरलक्ष्म्या स्मितेन मन्दहसितेन पाण्डरा धवलवर्णा, च सती, चित्रा विविधवर्णा, भविष्यतीत्यहो आश्चर्यम् । शार्दूलविक्रीडितवृत्तम् ॥२८॥

गोवृन्दसक्तानिति—गोवृन्दे धेनुसमूहे सक्तान् कृतममत्वान्, भवतो युष्मान्, अस्मदीयभुजा मद्बाहव, वयस्या इव सखाय इव, सयुगेन युद्धेन, निमेषमात्रादचिरेण, अद्य साम्प्रतम्, गा धेनुम् पक्षे पृथिवी स्वर्ग वा, नेष्यन्ति प्रापयिष्यन्ति, अस्मत्पुरतो मदग्रे, हठेन बलात्, न तिष्ठत न स्थिता भवत । श्लेष ॥ २९ ॥

पशून् वा प्राणान् वेति—हे प्रतिभटा प्रतियोद्धार, क्षीबपुरुषा प्रमत्तमानवा, यूयम्, झटिति शीघ्रम्, पशून् वा गा वा, प्राणान् वा जीवितानि वा, जहत त्यजत, नरेन्द्रस्य राज्ञ, पुरतोऽग्रे, स्वमूर्ध्न स्वशिरासि, चापान् वा धनूषि वा, नमयत प्रह्वयत, मुखे वा वदने वा, हस्ते वा करे वा, शरवृन्द तृणसमूह पक्षे बाणसमूहम्, कुरुत विधत्त, तूर्णं क्षिप्रम्, नरपतिं राजानम्, कृतान्तागार वा यमभवन वा, शरणयत शरण्यबुद्ध्या स्वीकुरुत, पक्षे गृह कुरुत 'शरण गृहरक्षित्रो' इत्यमर । विकल्पालङ्कार 'विकल्पस्तुल्यबलयोर्विरोधश्चातुरीयुत.' इति लक्षणात् । शिखरिणीच्छन्द ॥३०॥

अन्येऽप्येवमाहु —इतरेऽपि जना अनेन प्रकारेण कथयामासु —

किं वाचाविसरेण मुग्धपुरुषाः किं वा वृथाडम्बरै-
रात्मश्लाघनयानया किमु भटाः सैषा हि नीचोचिता ।
सक्रीडद्रथचक्रकृष्टधरणौ भिन्नेभमुक्ताफलै-
श्चापाभ्रान्छरवर्षतो विजयिनः शुभ्रं यशोऽङ्कुरति ॥३१॥
इत्यादि वदतामेषामधरोष्ठपुटाविव ।
सैनिकानां समूहौ द्वौ सङ्गतौ समरोद्धतौ ॥३२॥

तदनु कुरुकुञ्जरपञ्चास्याभ्यां तुङ्गतमशताङ्गसङ्गताभ्यां तिलकितमुखभागाः, प्रत्यर्थिसार्थग्रसनाय प्रसृताभिरिव मृत्युरसनाभिः पट्टिसवल्लरीभिः परिवृताः, शात्रवजनप्राणानिलसजिघृक्षया समागताभिरिव भुजगीभिरसिलताभिर्विलसिताः, समीकविलोकनार्थं सन्निहितसूर्यचन्द्रशङ्कावहसौवर्णवज्रखेटकमण्डलमण्डिताः, विरोधिराजमण्डलकवलनायागताभिरिव विधुन्तुदपरम्पराभिः शक्तिभिर्भयानकाः, उभयेऽपि सैनिकाः सङ्ग्रामशिल्पमनल्पं कल्पयितुमारभन्त ।

शरासनगुणारवैः कुरुपतेः शराणां चयैः
परस्परविमर्दिभिर्गगनमण्डले पूरिते ।
गभीरहयहेषितैर्मदगजावलीबृंहितै-
र्जगत्त्रितयमन्वभूत्परमतोक्तशब्दात्मताम् ॥३३॥

---

किं वाचाविसरेणेति—हे मुग्धपुरुषाः हे मूढमानवाः, वाचां वचनानां विसरेण समूहेन, किं किं प्रयोजनम् ? वृथाडम्बरैर्निष्प्रयोजनकार्याटोपैः, वा किं किं प्रयोजनम् ? अनया क्रियमाणया, आत्मश्लाघनया स्वप्रशंसया, किमु किं प्रयोजनम्, उ वितर्के, हि यतः, एषा सा इयं सा, नीचोचिता नीचजनार्हा, अस्तीति शेषः, सक्रीडन्तः सचलन्तो ये रथाः स्यन्दनास्तेषां चक्रैः रथाङ्गैः कृष्टा प्राप्तकर्षणा या धरणिः पृथिवी तस्याम्, भिन्ना विदीर्णा ये इभा गजास्तेषां मुक्ताफलैर्मुक्तानिकरैः, चापाभ्रात् कोदण्डवलाहकात्, शरवर्षतः बाणान् वर्षतः, अत्र षष्ठीसमासश्चिन्त्यः, विजयिनो विजययुक्तस्य जनस्य, शुभ्रं धवलम्, यशः कीर्तिः अङ्कुरति प्ररोहति । शार्दूलविक्रीडितच्छन्दः ॥३१॥

इत्यादीति—इत्यादि पूर्वोक्तप्रकारम्, वदतां कथयताम्, एषां सैनिकानां सुभटानाम्, समरोद्धतौ युद्धोद्धतौ, द्वौ समूहौ समुदायौ, अधरोष्ठपुटाविव दशनच्छदयुगलपुटाविव, सङ्गतौ मिलितौ ॥३२॥

तदनु कुरुकुञ्जरेति—तदनु तदनन्तरम्, तुङ्गतमशताङ्गाभ्यां समुन्नतरथाभ्यां सङ्गतौ सहितौ ताभ्याम्, कुरुकुञ्जरश्च पञ्चास्यश्चेति कुरुकुञ्जरपञ्चास्यौ ताभ्याम्, तिलकितो विशेषितो मुखभागोऽग्रभागो येषां ते, प्रत्यर्थिनां शत्रूणां सार्थः समूहस्तस्य ग्रसनं निगरणं तस्मै,प्रसृताभिर्विस्तृताभिः, मृत्युरसनाभिरिव यमजिह्वाभिरिव, पट्टिसवल्लरीभिरस्त्रविशेषलताभिः 'पट्टिशोऽस्त्रभेदः, पट्टिस इति दन्त्यसान्त इति मुकुटः' परिवृताः परिवेष्टिताः, शात्रवजनस्य शत्रुसमूहस्य प्राणा एवानिलः पवनस्तस्य सजिघृक्षा गृहीतुमिच्छा तया, समागताभिः सम्प्राप्ताभिः, भुजगीभिरिव पन्नगीभिरिव, असिलताभिः खड्गवल्लरीभिः, विलसिताः शोभिताः, समीकविलोकनार्थं युद्धदर्शनार्थम्, सन्निहितसूर्यचन्द्रयोर्निकटस्थादित्यशशिनोः शङ्कावहानि संशयोत्पादकानि यानि सौवर्णवज्रखेटकमण्डलानि सुवर्णनिर्मितसुदृढखेटकसमूहास्तैर्मण्डिताः शोभिताः, 'खेटक' इति 'ढाल' इति प्रसिद्धस्य नाम । विरोधिराजमण्डलस्य प्रत्यर्थिनृपतिसमूहस्य पक्षे प्रत्यर्थिचन्द्रबिम्बस्य कवलनाय ग्रसनाय, आगताभिः प्राप्ताभिः, विधुन्तुदपरम्पराभिः सैंहिकेयपङ्क्तिभिः 'सैंहिकेयो विधुन्तुदः' इत्यमरः, शक्तिभिः शस्त्रविशेषैः, भयानकाः भयङ्कराः, उभयेऽपि द्विप्रकारा अपि, सैनिकाः सुभटाः, अनल्पं भूयासम्, सङ्ग्रामशिल्पं समरचातुर्यम्, कल्पयितुं रचयितुम्, आरभन्त प्रक्रमन्ते स्म ।

शरासनगुणारवैरिति—शरासनगुणानां धनुःप्रत्यञ्चानामारवाः शब्दास्तैः, परस्परविमर्दिभिर्मिथो विमर्दकारिभिः, कुरुपतेर्जीवन्धरस्य, शराणां बाणानाम्, चयैः समूहैः, गभीराणि च तानि हयहेषितानि चेति गभीरहयहेषितानि तैः समुच्चहयहेषानादैः, मदगजावलीनां प्रमत्तगजगणानां बृंहितानि गर्जितानि तैः, गगनमण्डले नभोमण्डले, पूरिते सम्भृते, सति, जगत्त्रितयं लोकत्रितयम्, परमतोक्ता जैनेतरदर्शनोक्ता या

शब्दैकार्णवमग्नमेतमखिल लोक समीक्ष्य क्षणाद्
देवा व्योम्नि समिद्विलोकनकलाबद्धादरा मेदुरा ।
युद्धारम्भनिरस्ततन्द्रकुरुराड्बाणासनादुद्गता-
न्नाराचान्निविडप्रभान्नभसि ते सान्ध्याम्बुदान्मेनिरे ॥३४॥

पद्मास्यमुख्यकरकोमलरक्तकान्ति-
कल्लोलपल्लवितकार्मुकवल्लरीभ्य ।
नामाङ्कित प्रचलिता च शिलीमुखालि-
र्जीवन्धरस्य पदपद्मसमीपमाप ॥३५॥

द्विरेफ शरवारोऽय तस्य पादाम्बुजान्तिके ।
भ्रमश्चकार तद्युक्त मित्रसान्निध्यसूचनम् ॥३६॥

तदनु नामाङ्किततदीयबाणगणवीक्षणेन समुन्नतध्वजचिह्नसन्दर्शनेन च, एते वयस्या इति निश्चित्य, नरपतिना साक तदभ्याशमागत समदविकसितरोमकूपकोरकिततनुलत कुरुपति, सबहुमान तानेकैकश सम्भाव्य, निजानुज्ञया रथारूढै सहचरनिकरै पुरस्कृत, पार्श्वगतस्यन्दन-कन्दलितस्थितिना महीपतिना सम्भाषमाण, सिन्धुरगन्धर्वशताङ्गपदगशबल बल पुरतो विधाय

---

शब्दात्मता शब्दैकरूपता ताम्, अन्वभूत् अनुभवति स्म, भुवनत्रय शब्दैकमयमभूदिति भाव । पृथिवी च्छन्द ॥३३॥

शब्दैकार्णवमग्नमिति—क्षणादल्पेनैव कालेन, एतम्, अखिल सम्पूर्णम्, लोक भुवनम्, शब्दैकार्णव मग्न शब्दैकसागरनिमग्नम्, समीक्ष्य दृष्ट्वा, समिद्विलोकनकलाया युद्धदर्शनकलाया बद्धो धृत आदर सम्मान यैस्तथाभूता, अतएव, व्योम्नि गगने, मेदुरा मिलिता, ते प्रसिद्धा, देवा अमरा, युद्धारम्भे समरप्रारम्भे निस्तन्द्रो निरालस्यो य कुरुराड् जीवन्धरस्तस्य बाणासनाद्धनुष, उद्गतान् निष्क्रान्तान्, निविडा सान्द्रा प्रभा दीप्तिर्येषा तान्, नाराचान् बाणान्, नभसि वियति, सन्ध्याया भवा सान्ध्यास्ते च तेऽम्बुदाश्चेति सान्ध्याम्बुदास्तान् सन्ध्यामेघान्, मेनिरे मन्यन्ते स्म । भ्रान्तिमान् । शार्दूलविक्रीडित-च्छन्द ॥३४॥

पद्मास्येति—पद्मास्यो जीवन्धरसखा मुख्य प्रधानो येषा तेषा कराणा हस्ताना कोमलरक्त-कान्तिकल्लोलैर्मृदुलारुणदीप्तितरङ्गै पल्लविता किसलयिता या कार्मुकवल्लर्यो धनुर्लतास्ताभ्य, नामाङ्किता नामधेयचिह्निता, प्रचलिता च प्रयाता च, शिलीमुखालिर्बाणपङ्क्ति पक्षे भ्रमरश्रेणिश्च, जीव न्धरस्य सात्यन्धरे, पदपद्मसमीप चरणकमलपार्श्वम्, आप प्राप्नोत् । रूपकालङ्कार । वसन्ततिलका वृत्तम् ॥३५॥

द्विरेफ इति—तस्य जीवकस्य, पादाम्बुजान्तिके चरणकमलसमीपे, भ्रमन् सचरन्, अय शरवारो बाणसमूह, यत्, मित्रसान्निध्यसूचन सूर्यसामीप्यनिवेदन पक्षे वयस्यसामीप्यनिवेदनम्, चकार विदधे, तद् युक्तमुचितम् । श्लेषानुप्राणितो रूपकालङ्कार ॥३६॥

तदनु नामाङ्कितेति—तदनु तदनन्तरम्, नामाङ्किता नामचिह्निता ये तदीयबाणगणास्तत्सम्बन्धि शरसमूहास्तेषा वीक्षणेन दर्शनेन, समुन्नताना ध्वजाना चिह्नस्य लिङ्गस्य सदर्शनेन च समवलोकनेन च, एते वयस्या इमे सखाय, इतीत्थम्, निश्चित्य निश्चय कृत्वा, नरपतिना नरेन्द्रेण, साक सार्धम्, तदभ्याश तन्निकटम्, आगत समायात, समदेन हर्षेण विकसिता प्रकटिता ये रोमकूपा लोमसमूहास्तै कोरकिता कुड्मलिता तनुलता शरीरवल्ली यस्य तथाभूत, कुरुपतिर्जीवन्धर, सबहुमान सन्मानसहित यथा स्यात्तथा, तान् पद्मास्यादीन्, एकैकश प्रत्येक सम्भाव्य समादृत्य, निजानुज्ञया स्वकीयादेशेन, रथारूढै स्यन्दनाधिष्ठितै, सहचरनिकरैर्मित्रसमूहै, पुरस्कृतोऽग्रेकृत, पार्श्वगते समीपस्थिते स्यन्दने रथे कन्दलिता सम्भूता स्थिति सद्भूतिर्यस्य तेन, महीपतिना राज्ञा, सह, सम्भाषमाणो वार्तालाप कुर्वाण, सिन्धुराश्च गजाश्च, गन्धर्वाश्च हयाश्च, शताङ्गाश्च रथाश्च, पदगाश्च पत्तयश्चेति सिन्धुरगन्धर्वशताङ्गपदग तेन शबल चित्रितम्,

पुरतोरणमतीत्य चलित, चिरतरविलोकने कुतूहलसमिलितपौरजननिरन्तरे रथ्या तरे स्तम्बेरम-कदम्बक कादम्बिनीति मत्वा समागताभिरिव सौदामिनीभि कनकवेत्रलताभिर्वितीर्णावकाशे विगाहमान, पटुपटहकाहलीडिण्डिमझर्झरझल्लरीमुरजशङ्खप्रमुखवाद्यरवविहितोपहूतिभि काभि-श्चित्सामिकृतमण्डनकलाभि करकमलसरुद्धनीविबन्धनकनकचेलाभिरबलाभि काभिश्चित्सरभसका श्चीपददत्तमुक्ताहारवल्लरीभि कङ्कणपदसमर्पिततुलाकोटिर्वधूटीभिरत्युन्नतहर्म्याङ्गणवातायनदत्त-दृष्टिभिर्निर्निमेष विलोक्यमान क्रमेण राजभवनमाससाद ।

कुशलानुयोगमथ कौरव सखीन्
बहुधा विधाय मुदितान्तर परम् ।
समशेत सोऽयमयथापुरोदिता-
दुपचारकौशलवशाद्विशेपत ॥३७॥

कदाचिदेकान्ते भृशमपूर्वसम्मानसमाहितसशयडोलायमानमनस्सरोजेन कुरुराजेन चोदित-तन्निदानाना सहचराणा तिलकायमान पद्मवदन प्रत्युत्तरशैलीमेवमुपादत्त ।

स्वामिस्त्वदीयविरहानलदग्धदेहा
श्रीमद्भविष्यदवलोकनपुण्यपाके ।
आश्वासिताश्च दयया द्रुतदत्तहस्ता
देव्या बभूविम वय हयपाणिवेपा ॥ ३८ ॥

---

बल सैन्यम्, पुरतोऽग्रे, विधाय कृत्वा, पुरतोरण नगरबाह्यद्वारम्, अतीत्य समुलङ्घ्य, चलितो गत, चिरतर सुदीर्घकालेन भाव्य विलोकन दर्शन यस्य तस्मिन्, कुतूहलेन कौतुकेन सम्मिलिता सगता ये पौरजना नागरिकनरास्तैर्निरन्तरे व्याप्ते, रथ्यान्तरे मार्गमध्ये, स्तम्बेरमकदम्बक गजसमूहम्, कादम्बिनीति मेघमालेति मत्वा, बुद्ध्वा, समागताभि प्राप्ताभि, सौदामिनीभिरिव शम्पाभिरिव, कनकवेत्रलताभि सौवर्णवेत्रवल्लरीभि, विस्तीर्णो विस्तारितोऽवकाशो यस्य तस्मिन् तथाभूते सति, विगाहमान प्रविशन्, पटुपटहश्च काहली च डिण्डिमश्च झर्झरश्च झल्लरी च मुरजश्च शङ्खश्चेति पटुपटहादय ते प्रमुखा येषु तथा भूतानि यानि वाद्यानि तेषा रवेण शब्देन विहिता कृतोपहूतिरामन्त्रण यासा ताभि, काभिश्चित्काभि-श्चन, सामिकृतार्धकृता मण्डनकला भूषणधारणकला यासा ताभि, करकमलैर्हस्तारविन्दै सरुद्धानि गृहीतानि नीविबन्धनकनकचेलानि ग्रन्थिबन्धनसुवर्णवस्त्राणि याभिस्ताभि, काभिश्चित्कतिपयाभि सरभस सवेग यथा स्यात्तथा काञ्चीपदे मेखलास्थाने दत्ता अर्पिता मुक्ताहारवल्लर्यो मौक्तिकहारलता याभिस्ताभि, कङ्कणपदे हस्ताभरणस्थाने समर्पिता प्रदत्तास्तुलाकोटयो नूपुरा यासा ताभि, अत्युन्नताना तुङ्गतमाना हर्म्याङ्गणाना भवनाजिराणा वातायनेषु गवाक्षेषु दत्ता समर्पिता दृष्टिर्नयन याभिस्ताभि, वधूटीभिश्चिरण्टीभि, युवतिभिरिति यावत्, निर्निमेष पक्ष्मस्पन्दरहित यथा स्यात्तथा, विलोक्यमानो दृश्यमान, सन्, क्रमेण क्रमश, राजभवन नरेन्द्रनिकेतनम्, आससाद प्राप ।

कुशलानुयोगमिति—अथानन्तरम्, बहुधा नानाप्रकारेण, सखीन् मित्राणि, कुशलानुयोग क्षेमप्रश्नम्, विधाय कृत्वा, परमत्यन्तम्, मुदितान्तर प्रहृष्टमानस, सोऽय प्रसिद्ध, कौरवो जीवन्धर, अयथापुरोदितादभूतपूर्वात्, उपचारकौशलवशात् शिष्टाचारचातुर्यवशात्, विशेपत सातिशयम्, समशेत सशयञ्चकार । मञ्जुभाषिणीच्छन्द ॥३७॥

कदाचिदेकान्त इति—कदाचिज्जातुचित्, एकान्ते रहसि, भृशमत्यन्तम्, अपूर्वसम्मानेन विशिष्टा-दरेण समाहित समुत्पादितो य सशय सदेहस्तेन डोलायमान चञ्चल मनस्सरोज चित्तारविन्द यस्य तेन, कुरुराजेन जीवन्धरेण, चोदित पृष्ट तन्निदान तत्कारण येषा तेषाम्, सहचराणा सखीनाम्, तिलका-यमानो विशेषकायमान प्रधान इति यावत्, पद्मवदन पद्मास्य, एवमनेन प्रकारेण, प्रत्युत्तरशैली प्रतिवचनपरम्पराम्, उपादत्त जग्राह ।

स्वामिन्निति—हे स्वामिन् हे नाथ ! त्वदीयविरहानलेन तावकवियोगपावकेन दग्धो देहो विग्रहो

तदनु निखिलमाश्वीय पुरोधाय पुरान्निर्याय पर्यायेणातिलङ्घितबहुदूराध्वान पत्त्रिकुलनिध्वाननिरुद्धदिशावकाशामरण्यानीं प्रविश्याभ्रलिहतरुषण्डमण्डितदण्डकारण्यभागपरिकल्पितपटसदननिकटतटेषु घोटपटल विधाय विश्रान्तिसुखमनुभवाम स्म । तत्र च ।

सौधावलीमतिशयालुभिरुन्नतैस्तै
शुभ्रै पटायतगृहै कलित निवासम् ।
नून भवद्विरहकातरतत्पुरश्री-
रस्माभिरागतवतीति वय स्म विद्म ॥ ३६ ॥

तदन्वत्यद्भुतसनिवेश दण्डकारण्यप्रदेशमवलोकितुकामा वयम्, तत्र तत्र विहृत्य, क्वचन विजृम्भितकुम्भीन्द्रकुम्भस्थलमुक्तमुक्ताकुलसिकतिल वनविहरणश्रान्तनिमज्जत्पुलिन्दसुन्दरीवदनाम्भोजपरिष्कृत गभीरमहाह्रदम् , कुत्रचिद्वलीमुखकरकम्पितमहीरुहशाखानिपतितपर्णौघसमाघात-कुपितसुप्तसमुत्थितशार्दूलधाव्यमानशबरजनसरभसारूढाभ्रलिहानोकहचयम् , क्वचित्तरुमूलसुख-सुप्तानि तमालस्तोमनिभानि भल्लूककुलानि, क्वचित्तपनकिरणसन्तप्तवशा पद्माकरसमीपमानीय निजकरनिर्मूलितबालमृणालवलय तदङ्गे निक्षिप्य पयोजरज सुगन्धिशीतलजलशीकरनीकरास्त मुखे

येषा ते, श्रीमतो भवतो भविष्यद्वक्ष्यमाणमवलोकन यस्मात्तथाभूत यत्पुण्य तस्य पाक उदयास्तै , आश्वासिता सन्तोषिता , देव्या गन्धर्वदत्तया, दयया कृपया, द्रुत शीघ्र दत्तो हस्तो येभ्यस्ते तथाभूता , वय पद्मास्यादय , हयपाणिवेषा अश्वविक्रेतृनेपथ्या , बभूविम आस्म । वसन्ततिलकावृत्तम् ॥ ३८ ॥

तदन्विति—तदनु तदनन्तरम्, निखिल समग्रम्, अश्वाना समूहोऽश्वीय तत् 'केशाश्वाभ्या यञ्छावन्यतरस्याम्' इति समूहार्थे छप्रत्यय । पुरोधाय पुरस्तात्कृत्वा, पुरान्नगरात् , निर्याय निर्गत्य, पर्यायेण क्रमश , अतिलङ्घित समतिक्रान्तो बहुदूरोऽध्वा यैस्ते, तथाभूता वयम्, पत्त्रिकुलस्य पक्षिसमूहस्य, निध्वानेन शब्देन निरुद्धो सरुद्धो दिशावकाशो काष्ठान्तराल यस्या ताम्, अरण्यानी महावनाम्, प्रविश्य प्रवेश कृत्वा, अभ्रलिहैर्गगनचुम्बिभिस्तरुषण्डैर्वृक्षसमूहैर्मण्डित शोभितो यो दण्डकारण्यभागो दण्डकवनप्रदेशस्तस्मिन्परिकल्पितानि यानि पटसदनानि तेषा निकटतटेषु समीपप्रान्तेषु, घोटकपटल हयसमूहम्, विधाय कृत्वा, विश्रान्तिसुख विश्रामसातम्, अनुभवाम स्म—अन्वभूवम् । तत्र च दण्डक वने ।

सौधावलीमिति—सौधाना भवनानामावली पङ्क्तिस्ताम्, अतिशयालुभिरतिक्रामद्भि , उन्नतैस्तुङ्गै , शुभ्रै शुक्लै , तै प्रसिद्धै , पटायतगृहैर्वस्त्रविस्तृतनिकेतनै , कलित निर्मितम्, निवासमावसथम्, नून निश्चयेन, भवद्विरहेण त्वदीयविप्रयोगेण कातरा भीता या तत्पुरश्रीस्तन्नगरलक्ष्मी सा, अस्माभि सह, आगतवती समागता, इतीत्थम्, वय विद्मो जानीम । वसन्ततिलकावृत्तम् । उत्प्रेक्षा ॥३९॥

तदन्विति—तदनु तदनन्तरम्, अत्यद्भुतोऽत्याश्चर्यकर सन्निवेशो रचना यस्य तम्, दण्डकारण्यप्रदेश दण्डकवनाभोगम्, अवलोकितुकामा द्रष्टुमनस , वयम्, तत्र तत्र स्थानेषु, विहृत्य विहार कृत्वा, क्वचन कुत्रचित् , विजृम्भितानि विदीर्णानि यानि कुम्भीन्द्रकुम्भस्थलानि गजेन्द्रगण्डस्थलानि तेभ्यो मुक्तानि पतितानि यानि मुक्ताकुलानि मौक्तिकसमूहास्तै सिकतिल सिकतायुक्तम्, वनविहरणेन काननविहारेण विश्रान्ता प्राप्तखेदा अतएव निमज्जन्त्योऽवगाहमाना या पुलिन्दसुन्दर्य शबर्यस्तासा वदनाम्भोजैर्मुखकमलै परिष्कृत सहितम्, गभीरश्चासौ महाह्रदश्चेति तम् अगाधजलाशयम्, कुत्रचित्क्वचित्, वलीमुखाना वानराणा करैर्हस्तै कम्पिता वेपिता या महीरुहशाखा वृक्षलतास्ताभ्यो निपतिता स्खलिता ये पर्णौघा पत्रनिचया-स्तेषा समाघातेन प्रहारेण कुपिता क्रुद्धा ये सुप्तसमुत्थिता शयनानन्तर कृतोत्थाना शार्दूला सिहास्तै-र्धाव्यमाना अनुगम्यमाना ये शबरजना वनचरजनास्ते सरभस सवेग यथा स्यात्तथारूढ समधिष्ठितो योऽभ्र-लिहानोकहचयस्तुङ्गपादपसमूहस्तम्, क्वचित्कुत्रचित् , तरुमूलेषु वनस्पतितलेषु सुखसुप्तानि सुखेन कृत-शयनानि, तमालस्तोमनिभानि तापिच्छसमूहसदृशानि, भल्लूककुलानि ऋक्षनिकुरुम्बानि, क्वचित् कुत्रचित् , तपनस्य सूर्यस्य किरणैर्मयूखै सन्तप्ता सम्प्राप्ततापा या वशा हस्तिनी ताम्, पद्माकरसमीप कासारनिकटम्, आनीय प्रापय्य, निजकरेण स्वकीयशुण्डादण्डेन निर्मूलित समुत्पाटित यद् बालमृणालवलय कोमलबिस-

ससिच्य शुण्डादण्डविधृतविशालपद्मपत्रमातपत्रीकुर्वन्त वशावल्लभम्, कुत्रचित्सावज्ञ लोचनयुगल क्षणमुन्मील्य पुन सुषुप्सु पञ्चवदनसञ्चयम्, सविस्मयमवलोकमाना, क्वचन तापसजनसङ्कुल-प्रदेशे प्रविशमाना, क्रमेण किञ्चित्तरुमूलमावसन्ती पुण्यमातर पश्याम स्म ।

यस्या मूर्तिर्मलिनवसनावेष्टिता क्षामभूता
चन्द्रस्यैका कृशतमकला ध्वान्तरुद्धेव भाति ।
वक्त्र शुष्यत्सरसिजनिभ शोकदीना च वाणी
चिन्तादीर्घश्वसितमनिश मूर्ध्नि बद्धा जटा च ॥ ४० ॥

तया मात्रा दृष्टमात्रेण कुत्रत्या इति पृष्टा एवमुत्तर वक्तुमुपक्रम्य,

"कश्चिज्जीवकविख्यातो विपश्चिद्वृन्दशेखर ।
अभाद्राजपुरे सोऽयमस्माक जीवनौषधम् ॥ ४१ ॥

अह खलु राजश्रेष्ठिन सुभद्राया जात पद्मास्य, अय सत्यन्धरमहाराजसचिवात्सागरदत्ताया जात श्रीदत्त, अय पुनरचलात्तिलोत्तमाया जातो बुद्धिषेण, एष किल विजयदत्तात्पृथ्वीमत्या जातो देवदत्त, इमौ पुनर्जीवन्धरानुजस्य नन्दाढ्यस्यानुजौ नपुलविपुलौ, इत्यादिक्रमेण सर्वेषा नामधेयान्यभिधाय,

---

मण्डलम्, तदङ्गे तच्छरीरे, निक्षिप्य निधाय, पयोजरजोभि कमलपरागे सुगन्धिन सुरभियुक्ता ये शीतल जलशीकरनिकरा शिशिरसलिलकणकलापास्तान्, तन्मुखे तद्वक्त्रे, ससिच्य समुक्ष्य, शुण्डादण्डेन करेण विधृत गृहीत यद् विशालपद्मपत्र दीर्घकमलपर्णम् तत्, आतपत्रीकुर्वन्त छत्रीकुर्वन्तम्, वशावल्लभ हस्तिनीपतिम्, कुत्रचित्क्वचित्, सावज्ञ सानादरम्, यथा स्यात्तथा, लोचनयुगल नयनयुगम्, क्षणमल्पकाल यावत्, उन्मील्य समुद्घाट्य, पुनर्भूय, सुषुप्सु स्वपितुमिच्छुम्, पञ्चवदनसञ्चय, पञ्चाननसमूहम्, सविस्मय साश्चर्य यथा स्यात्तथा, अवलोकमाना पश्यन्त, क्वचन कुत्रचित्, तापसजनसकुले तपस्विजनव्याप्ते, प्रदेशे स्थाने, प्रविशमाना प्रविशन्त, वयम्, क्रमेण क्रमश, किञ्चित्तरुमूल किञ्चिद्वृक्षस्याधस्तात्, आवसन्ती कृतनिवासाम्, पुण्यमातर पुण्यजननीम्, पश्याम स्म समवालोकयाम ।

यस्या इति—यस्या पुण्यजनन्या, मलिनवसनेन मलीमसवस्त्रेणावेष्टिता परिवृता, क्षामभूता कृशीभूता, मूर्ति शरीरम्, ध्वान्तरुद्धा तिमिरावृता, चन्द्रस्य शशिन, एकाऽद्वितीया, कृशतमकलेव क्षीणतम-षोडशभाग इव, भाति शोभते । वक्त्र वदन शुष्यच्छुष्कीभवद् यत्सरसिज कमल तेन निभ सदृशम्, वाणी च भारती च, शोकदीना खेदप्राप्तदैन्या, श्वसित श्वासोच्छ्वास, चिन्तादीर्घमाधिविस्तृतम्, जटा च केशसमूहश्च, मूर्ध्नि शिरसि, अनिश निरन्तरम्, बद्धा संयता, अस्तीति शेष । मन्दाक्रान्ताच्छन्द ॥४०॥

तयेति—तया पूर्वोक्तया, मात्रा जनन्या, दृष्टमात्रेण, कुत्रभवा कुत्रत्या कत्या, यूयमिति, पृष्टा अनुयुक्ता, वयम्, एवमनेन प्रकारेण, उत्तर प्रतिवचनम्, वक्तु निगदितुम्, उपक्रम्य प्रारभ्य ।

कश्चिदिति—राजपुरे एतन्नामनगरे, जीवकविख्यातो जीवन्धरनामप्रसिद्ध विपश्चिद्वृन्दशेखरो विद्वद्वृन्दशिरोमणि, कश्चित् कोऽपि जन, अभात् शुशुभे, सोऽय जन, अस्माक सर्वेषाम्, जीवनौषध सञ्जीवनौषधम्, आसीदिति शेष ॥४१॥

अह खल्विति—अह खलु निश्चयेन, राजश्रेष्ठिनो राजवणिक्पते, सुभद्राया तन्नामपत्न्याम्, जात समुत्पन्न, पद्मास्य एतन्नामा, अयमेष, सत्यन्धरमहाराजस्य सचिवो मन्त्री तस्मात्, सागरदत्ताया-मेतन्नामपत्न्याम्, जात समुद्भूत श्रीदत्त एतन्नामा, अय पुन, अचलात् एतन्नाम्न, तिलोत्तमायामेत-न्नामपत्न्याम्, जात समुत्पन्न, बुद्धिषेण एतन्नामा, एष किल, विजयदत्तात् एतन्नामधेयात्, पृथ्वीमत्यामेत न्नाम्न्याम्, जात समुत्पन्न, देवदत्त एतन्नामा, इमौ पुन, जीवन्धरानुजस्य जीवकलघुभ्रातु, अनुजौ कनिष्ठौ, नपुलविपुलावेतन्नामधेयौ, इत्यादिक्रमेण इतिप्रभृतिक्रमेण, सर्वेषा निखिलानाम्, नामधेयानि नामानि अभिधाय निगद्य ।

तदुत्पत्तिदिने जाता वय सर्वे महात्मना।
तेन सार्धं विशाम्पत्या पोषिताश्च निजालये ॥ ४२ ॥

तदनु सकलविद्या शीलयन्व्याधयूथ
पशुगणविनिवृत्त्यै चापपाणिर्व्यजेष्ट।
तदनु खचरकन्या प्राप्य गन्धर्वदत्ता
परिषदवरवीणाविद्यया कीर्तिमाप ॥४३॥

ततश्च वासन्तिकेषु वासरेषु वनविहारान्निवर्तमानेषु पौरेषु, दुरन्तमददुरासदस्य काष्ठाङ्गारपट्टदन्तावलस्य मदभङ्ग विधाय गुणमाला परिपालयन्नचिरेणैव ता परिणिन्ये।

तमेन कोपवशात काष्ठाङ्गार खलाग्रणी।

हन्तु,

इत्यर्धोक्ते, 'तत्क्षण हा दावपावकदग्धाया वनवल्लर्या कुठारमर्पयन्ति भवन्त' इति दम्भोलिनिहता भुजगीव मूर्च्छामीलितचेतना भुवि पेतुषी सा माता क्रमेण कथञ्चिल्लब्धसज्ञा,

व्यवसित सोऽय निजभूम्नैव रक्षित ॥ ४४ ॥

इति निरवशेषमुक्तापि, शोकरणरणिकाक्रान्तचित्ता प्रलापमेवमातेने।

---

तदुत्पत्तिदिन इति—वय सर्वे, तस्योपत्तेर्दिन तदुत्पत्तिदिन तस्मिन्, जाता समुत्पन्ना, तेन महात्मना महापुरुषेण, सार्धं समम्, विशापत्या गन्धोत्कटेन, निजालये निजभवने, पोषिताश्च पालिताश्च ॥४२॥

तदन्विति—तदनु तदनन्तरम्, सकलविद्या निखिलविद्या शीलयन् समभ्यस्यन्, चापपाणिर्धनुर्हस्त पशुगणस्य गवादिसमूहस्य विनिवृत्त्यै प्रत्यावर्तनाय, व्याधयूथ वनचरसमूहम्, व्यजेष्ट विजितवान्, 'विपराभ्या जे' इत्यात्मनेपदम्, तदनु तदनन्तरम्, गन्धर्वदत्तामेतन्नामधेयाम्, खचरकन्या विद्याधरपुत्रीम्, प्राप्य लब्ध्वा, परिषदि सभायाम्, वरवीणाविद्यया श्रेष्ठतमपरिवादिनीवादनकौशलेन, कीर्तिं यश, आप लेभे। मालिनीच्छन्द ॥४३॥

ततश्चेति—ततश्च तदनन्तरञ्च, वासन्तिकेषु वसन्तसम्बन्धिषु, वासरेषु दिवसेषु, पौरेषु नागरिकेषु, वनविहारात् काननपर्यटनात्, निवर्तमानेषु प्रत्यागच्छत्सु सत्सु, दुरन्तेन मदेन दुरासदस्तस्य दुष्टदानदुष्प्राप्यस्य, काष्ठाङ्गारपट्टदन्तावलस्य राजप्रमुखवारणस्य, मदभङ्ग गर्वनाशम्, विधाय कृत्वा, गुणमालामेतन्नाम्नी श्रेष्ठिपुत्रीम्, परिपालयन् रक्षन्, अचिरेणैवाल्पेनैव कालेन, ता गुणमालाम्, परिणिन्ये परिणीतवान्।

तमेनमिति—खलाग्रणी दुर्जनाग्रेसर, काष्ठाङ्गारस्तन्नामनृप, कोपवशात क्रोधावेशेन, एन तम् जीवन्धरम्, हन्तु मारयितुम्—

इत्यर्धोक्त इति—इति पूर्वोक्तप्रकारेण, अर्धोक्ते सामिभाषिते, तत्क्षण तत्कालम्, 'हा' इति खेदे, दावपावकेन वनाग्निना दग्धाया प्लुष्टायाम्, वनवल्लर्यां गहनलतायाम्, भवन्तो यूयम्, कुठार परशुम्, अर्पयन्ति ददति, इतीत्थ निवेदयन्तीति शेष, दम्भोलिनिहता वज्रताडिता, भुजगीव पन्नगीव, मूर्च्छया मोहातिरेकेणोन्मीलिता निरस्ता चेतना सज्ञा यस्यास्तथाभूता, भुवि पृथिव्याम्, पेतुषी पतिता, सा पूर्वदर्शिता, माता पुण्यजननी, क्रमेण क्रमश कथञ्चित्केनापि प्रकारेण, लब्धसज्ञा प्राप्तचैतन्या, सती।

व्यवसित इति—व्यवसित कृतोद्योग, आसीदिति शेष, किन्तु सोऽय जीवन्धर, निजभूम्नैव स्वकीयमाहात्म्येनैव, रक्षितस्त्रात ॥४४॥

इतीति—इत्येवम्, निरवशेष समग्र यथा स्यात्तथा, उक्तापि कथितापि, शोकरणरणिका शोकोत्कण्ठा तयाऽऽक्रान्त व्याप्त चित्त मनो यस्या सा, एव वक्ष्यमाणप्रकारेण, प्रलाप परिदेवनम्, आतेने विस्तारयामास।

हा हा हा बत हा हतास्मि किमिदं दु श्राव्यमत्याहित
हा पुत्र क्व गतोऽसि हा हतविधे क्रूरोऽसि मत्पुत्रके ।
हा नाथ त्वमुदारपुण्यचरितो यस्मादिमा दुर्दशा-
मज्ञात्वा सुरलोकसौख्यलहरी विन्दश्चिर मोदसे ॥४५॥

हा पुत्र, हा कुरुवशमित्र, सुलक्षणगात्र, हा पयोजविशालनेत्र, एतावन्त काल तव मुखचन्द्रदर्शनमपि दुर्लभमभून्मम मन्दभाग्याया । अपि च ।

पत्युर्वियोगमधिक दववह्निकल्प
वास च काननतले स्वपुर विसृज्य ।
यस्योदयादनुभवाम्यथ जीवित च
सोऽय यदीदृशकथ कथमद्य वर्ते ॥४६॥

सत्यन्धरस्तव पिता खलशेखरेण
व्यापादितो युधि कृतघ्नवरेण येन ।
तेनैव पुत्र गमितस्त्रिदिव यदि त्व
हा हन्त सैष कुरुवशलताकुठार ॥४७॥

पत्युर्वियोगो विपिने निवासो राज्य च नष्ट तनयस्य शोक ।
तदद्य दौर्भाग्यहुताशनो मे विनिर्दहेदेव करालवह्निम् ॥४८॥

---

हा हेति—हा हा हा बत हा इति दु खसूचकान्यव्ययानि, हतास्मि नष्टास्मि, इदमेतत्, कि किन्नाम, दुश्राव्यमश्रवणीयम्, अत्याहितमापतितम्, हा पुत्र हा सुत, क्व कुत्र, गतोऽसि यातोऽसि, हा हतविधे दुर्दैव, मत्पुत्रके मत्सुते, क्रूरो नृशसोऽसि, हा नाथ हा स्वामिन्, त्व भवान्, उदारमुत्कृष्ट पुण्यचरित सुकृतप्रभावो यस्य तथाभूतोऽसि, यस्मात् कारणात्, इमा मदनुभूयमानाम्, दुर्दशा दुष्टावस्थाम्, अज्ञात्वा अविदित्वा, सुरलोकस्य स्वर्गस्य सौख्यलहरी सातपरम्पराम्, विन्दन् लभमान, चिर दीर्घकालेन, मोदसे हृष्यसि । शार्दूलविक्रीडितच्छन्द ॥४५॥

हा पुत्रेति—हा पुत्र हा सुत, हा कुरुवशमित्र हा कुरुकुलसूर्य, सुलक्षण गात्र यस्य तत्सम्बुद्धौ हे सुलक्षणगात्र हे सुचिह्नशरीर, हा पयोजे इव कमले इव विशाले दीर्घे नेत्रे यस्य तत्सम्बुद्धौ हे पयोजविशालनेत्र, एतावन्तमियत्परिमाणम्, काल समय यावत्, मन्दमल्प भाग्य सुकृत यस्यास्तस्या क्षीणपुण्याया इति यावत्, तव भवत, मुखचन्द्रदर्शन वदनविधुविलोकनमपि दुर्लभ दुष्प्राप्यम्, अभूत् जातम् । अपि च किञ्च ।

पत्युरिति—यस्य पुत्रस्य तव उदयाज्जन्मन, दववह्निकल्प दावानलतुल्यम्, अधिक प्रभूतम्, पत्युर्वल्लभस्य, वियोग विरहम्, स्वपुर स्वनगरम्, विसृज्य त्यक्त्वा, काननतलेऽरण्यभूमौ, वासञ्च निवासञ्च, अथ, जीवित च जीवनञ्च, अनुभवामि दधामि, सोऽय सुत, यदि चेत्, ईदृशी कथा यस्य स ईदृग्वृत्तान्त, अस्ति, तर्हि, अद्येदानीम् कथ केन प्रकारेण, वर्ते जीवामि ॥४६॥

सत्यन्धर इति—कृतघ्नवरेण कृतघ्नशिरोमणिना, खलशेखरेण दुर्जनश्रेष्ठेन येन काष्ठाङ्गारेण, युधि समरे, तव भवत, पिता सत्यन्धर एतन्नामधेय, व्यापादितो मारित, तेनैव काष्ठाङ्गारेणैव, हे पुत्र हे वत्स, यदि चेत्त्वम्, त्रिदिव स्वर्गम्, गमित प्रापित, तर्हि, हा हन्त, सैष काष्ठाङ्गार 'सोऽचि लोपे चेत्पादपूरणम्' इति सोर्लोपे सन्धि, कुरुवशलताया कुरुगोत्रवल्लर्या कुठार परशुरिति कुरुवशलताकुठार, जात इति शेष । वसन्ततिलकावृत्तम् ॥४७॥

पत्युरिति—यद्यस्मात्कारणात्, पत्युर्वल्लभस्य, वियोगो विरह, विपिने वने, निवासोऽधिष्ठानम्, राज्य साम्राज्यम्, नष्ट हृतम्, तनयस्य पुत्रस्य, शोकश्च मृत्युश्च, प्राप्त इति शेष, तत्तस्मात्कारणात्, अद्येदानीम्, मे मम, दौर्भाग्यमेव दुर्दैवमेव हुताशनो वह्निरिति दौर्भाग्यहुताशन, करालवह्निं भयङ्करानलम्, विनिर्दहेदेव भस्मसात्कुर्यादेव । करालवह्नेरपि भयङ्करो मम दौर्भाग्यानल इति भाव ॥४८॥

स्वप्नो निष्फलता गतस्त्वयि सुत व्यर्थं वपुर्लक्षण
सत्यार्थं न बभूव पुण्यवपुषस्तद्देवताया वच ।
हा भर्तृव्यसनाम्बुधिर्हि सुतरो नैव त्वया पुत्रक
त्व यद्येवमवेहि मामपि भवल्लोक प्रति प्रस्थिताम् ॥४९॥

इत्यादिप्रलापवशेन शोकलहरी देवोदन्त चाम्भोदावलिमिव दम्भोलिममृत च मुञ्चन्ती पुण्यमातर बहुधा समाश्वास्य, तन्मुखादुत्पन्ना देवोन्नति नभसो निपतिता रत्नवृष्टिमिव बहुमन्यमाना वय, पुन पुनस्तामाश्वास्यापृच्छ्य च श्रीमत्सन्निधिमुपागता, इति ।"

जीवन्मृता ता जननी विदित्वा जीवन्धरोऽखिद्यत रक्तचित्त ।
मातुर्गुरुस्नेहवशेन सोऽय द्रष्टु क्षणात्तामिह तत्वरे च ॥५०॥

तदनु कुरुकुमुदिनीकान्तस्तत्क्षणमेव सकलबन्धून्विशेषतो भार्यामापृच्छ्यानुनीय च, अनुगमनकलितकुतुकनृपतनयनिचय क्रमेण विसृज्य, सहचरमण्डलमण्डिता दण्डकारण्यमाजगाम ।

क्षामक्षामतनु विवर्णवदना नि श्वासधूमोत्करै-
श्चिन्तादन्तुरितान्तरामविरलैर्बाष्पैर्मिलल्लोचनाम् ।
ताम्बूलादिविहीनविस्तृतमलप्रोतद्विजालि जटा
वल्लीवेल्लितमस्तका कुरुपतिर्देवी लुलोके धुरि ॥ ५१ ॥

---

स्वप्न इति—हे सुत हे पुत्र, त्वयि भवति, स्वप्नो मुकुटबद्धकङ्केलिदर्शनरूप , निष्फलता व्यर्थताम्, गत प्राप्त , वपुषो देहस्य, लक्षण मकरिकादिचिह्नम्, व्यर्थं निष्प्रयोजनम्, पुण्यवपुष पुण्याकाराया , देवताया देव्या , तच्छ्मशानोक्तम्, वचोऽपि वचनमपि, सत्यार्थं तथ्यार्थम्, न बभूव नाजायत, हे सुत, त्वया भवता, विनेति शेष , भर्तृव्यसन पतिमरणमेवाम्बुधि सागर इति भर्तृव्यसनाम्बुधि , हि निश्चयेन, सुतर सुखेन तरितु शक्य , नैव, हा खेदे, यद्येवम्, तर्हि, त्वम्, मामपि विजयामपि, भवल्लोक प्रति त्वज्जन्मक्षेत्र प्रति, प्रस्थिता प्रयाताम्, अवेहि जानीहि । अहमपि त्वामनुम्रिये इति भाव । शार्दूलविक्रीडितच्छन्द ॥४९॥

इत्यादिप्रलापवशेनेति—इति प्रभृति विलापपरवशतया, शोकलहरी दु खपरम्पराम्, देवोदन्त च भवद्वृत्तान्तञ्च, दम्भोलि वज्रम्, अमृत पीयूष च, अम्भोदावलिमिव मेघमालामिव, मुञ्चन्ती त्यजन्ती प्रकटयन्तीमिति यावत्, पुण्यमातर पुण्यजननीम्, बहुधा नानाप्रकारेण, समाश्वास्य सन्तोष्य, तस्या मुख तस्मात्तन्मुखात्तद्वक्त्रात्, उत्पन्ना प्रकटाम्, देवोन्नति भवद्राजवशताम्, नभसो गगनात्, निपतिता भ्रष्टाम्, रत्नवृष्टिमिव मणिवर्षामिव, बहुमन्यमाना श्रेष्ठा जानाना , वयम्, पुन पुनर्भूयोभूय , ता मातरम्, आश्वास्य सन्तोष्य, आपृच्छ्य च पृष्ट्वा च, श्रीमत्सन्निधि भवन्निकटम्, उपागता प्राप्ता , इति ।

जीवन्मृतामिति—रक्तमनुरागपूर्णं चित्त मनो यस्य तथाभूत , जीवन्धरो जीवक , ता जननी मातरम्, जीवन्नपि मृतेति जीवन्मृता ताम्, विदित्वा ज्ञात्वा, अखिद्यत खेदयुक्तो बभूव, सोऽय जीवन्धर , मातुर्जनन्या , गुरुस्नेहवशेन प्रचुरप्रीतिवशेन, ता मातरम्, द्रष्टुमवलोकयितुम्, क्षणादल्पेनैव कालेन, इह लोके, तत्वरे च त्वरायुक्तो जातश्च ॥ ५० ॥

तदन्विति—तदनु तदनन्तरम्, कुरुकुमुदिनीकान्त कुरुवशचन्द्र , जीवन्धर , तत्क्षणमेव तत्कालमेव, सकलबन्धून् निखिलेष्टजनान् , विशेषत प्रमुखतया, भार्यां वल्लभाञ्च, आपृच्छ्य आमन्त्र्य, अनुनीय च समाश्वास्य च, अनुगमने सहगमने कलित धृत कुतुक येन तथाभूतो यो नृपतनयनिचयो राजपुत्रसमूहस्तम्, क्रमेण क्रमश , विसृज्य प्रत्यावर्त्य, सहचरमण्डलमण्डितो मित्रसमूहसुशोभित सन्, दण्डकारण्य दण्डकवनम्, आजगाम आययौ ।

क्षामक्षामतनुमिति— कुरुपतिर्जीवन्धर , धुरि पुरस्तात्, क्षामक्षामातिकृशा तनु शरीर यस्यास्ताम्, नि श्वासा दीर्घोष्णश्वासा एव धूमोत्करा धूमसमूहास्तै , विवर्ण म्लान वदन वक्त्र यस्यास्ताम्, चिन्तया शोकेन दन्तुरित व्याप्तमन्तर हृदय यस्यास्ताम्, अविरलैर्निरन्तरायै , बाष्पैरश्रुभि , मिलती युक्ते लोचने नयने यस्यास्ताम्, ताम्बूलादिविहीना नागवल्लीदलादिभक्षणशून्या विस्तृतमलप्रोता विततमलयुक्ता च

सा पुत्रमालोक्य पय प्रवाहिघनस्तनी बाष्पनिरुद्धनेत्रा ।
शुशोच त चेतसि रुक्मिणीव प्रसूनबाण चिरकालदृष्टम् ॥ ५२ ॥
पदाम्बुजाते प्रणत कुमारमाशीर्भिराकीर्य तदा भुजाभ्याम् ।
आश्लिष्टवत्या प्रबभूव तस्या आदेशवच्छोकपदे प्रमोद ॥ ५३ ॥

तावद्यक्षाध्यक्षोऽपि, तयो समक्षमागत्य, स्नानसुगन्धिलेपनप्रसूनमालिकामणिभूषणदुकूलवसनादिभि सम्पूज्य, प्राज्यतमस्नेहेन कुमारप्रमुखान्देवी च तैस्तैर्मधुरालापै समाश्वास्य, बाभास्यमानेन विमानेन क्रमेण निजास्पदमाससाद ।

अगण्यपुण्य तनय वरेण्यमुवाच मातानघशीलपूता ।
पितु पद ते किमु वत्सरा ते भवेन्निपातेन रिपो कृतेन ॥ ५४ ॥
प्रसूगिरमिमा श्रुत्वा प्रसूतपृथुकौतुक ।
एवमुत्तरमादत्त भाव तस्या विदन्नसौ ॥ ५५ ॥

कुम्भीन्द्रशैलविगलद्घनदानधारा-
सन्निर्झराणि चलखड्गसमावृतानि ।

---

द्विजालिर्दन्तपङ्क्तिर्यस्यास्ताम्, जटावल्लीभिरसस्कृतकेशलताभिर्वेल्लित वेष्टित मस्तक शिरो यस्यास्ताम्, देवी विजयाम्, लुलोके ददर्श । शार्दूलविक्रीडितच्छन्द ॥ ५१ ॥

सा पुत्रमिति—सा विजया, पुत्र सुतम्, जीवन्धरमिति यावत्, आलोक्य दृष्ट्वा, पय प्रवाहिनौ क्षीरप्रवाहिणौ घनस्तनौ पीनवक्षोजौ यस्या सा, बाष्पैरश्रुभिनिरुद्धे व्याप्ते नेत्रे नयने यस्यास्तथाभूता, सती, चिरकालदृष्ट दीर्घकालावलोकित तम् जीवन्धरम्, प्रसूनबाण काम प्रद्युम्नमिति यावत्, रुक्मिणीव श्रीकृष्णपट्टराज्ञीव, चेतसि मनसि, शुशोच शोचति स्म ॥ ५२ ॥

पदाम्बुजात इति—तदा तस्मिन् काले, पदाम्बुजाते चरणकमले, प्रणत विनतम्, कुमार जीवन्धरम्, आशीभिराशसावचनै, आकीर्य व्याप्त कृत्वा, भुजाभ्या बाहुभ्याम्, आश्लिष्टवत्या आलिङ्गितवत्या, तस्या विजयाया, शोकपदे शोकस्थाने, आदेशवत् व्याकरणशास्त्रप्रसिद्धादेश इव, प्रमोदो हर्ष, प्रबभूव समजायत । यथा व्याकरणे 'अस्तेर्भू' इत्यादिभि सूत्रैरस्तिप्रभृतिषु स्थानेषु भूप्रभृतय आदेशा भवन्ति तद्वद्देव्या शोकस्थाने हर्षादेशो बभूवेति भाव ॥ ५३ ॥

तावदिति—तावत् तावता कालेन, यक्षाध्यक्षोऽपि कुक्कुरचर सुदर्शनयक्षोऽपि, तयोर्मातापुत्रयो, समक्ष पुरस्तात्, आगत्य समेत्य, स्नानञ्च सुगन्धिलेपनञ्च प्रसूनमालिका च मणिभूषणानि च दुकूलवसनानि चेति स्नानसुगन्धिलेपनप्रसूनमालिकामणिभूषणदुकूलवसनानि तान्यादौ येषा तै अभिषेकसुगन्धितद्रव्यलेपनपुष्पमालारत्नालङ्कारक्षौमवस्त्रप्रभृतिभि, सम्पूज्य समर्च्य, प्राज्यतमस्नेहेन प्रकृष्टतमप्रेम्णा, कुमारप्रमुखान् जीवन्धरप्रधानान्, देवीञ्च विजयामातरञ्च, तै प्रसिद्धै, मधुरालापैर्मधुराभाषणै, समाश्वास्य सम्बोध्य, बाभास्यमानेनातिशयेन शोभमानेन, विमानेन व्योमयानेन, क्रमेण क्रमश, निजास्पद स्वस्थानम्, आससाद प्राप ।

अगण्यपुण्यमिति—अनघेन निर्दोषेण शीलेन सदाचारेण पूता पवित्रा, माता विजया, अगण्य पुण्य यस्य तमपरिमितसुकृतम्, वरेण्य श्रेष्ठतमम्, तनय पुत्रम्, उवाच जगाद, कृतेन विहितेन, रिपो शत्रो, निपातेन मृत्युना, वत्सरान्ते वर्षान्ते, किमु, ते तव, पितुर्जनकस्य, पद स्थान राज्यमिति यावत्, भवेत् स्यात् ॥ ५४ ॥

प्रसूगिरमिति—इमा पूर्वोक्ताम्, प्रसूगिर जननीवाणीम् 'मातापितरौ पितरौ मातरपितरौ प्रसूजनयितारौ' इत्यमर, श्रुत्वा समाकर्ण्य, प्रसूत समुत्पन्न पृथुकौतुक विशालकौतूहल यस्य स, असौ जीवन्धर, तस्या मातु, भावमाशयम्, विदन् जानन्, एवमित्थम्, उत्तर प्रतिवचनम्, आदत्त जग्राह ॥५५॥

कुम्भीन्द्रेति—कुम्भीन्द्रा गजेन्द्रा एव शैला पर्वतास्तेभ्यो विगलन्त्य पतन्त्यो या दानधारा मदसन्ततयस्ताभि. सन्निर्झराणि निर्झरयुक्तानि, चलखड्गैश्चञ्चलकृपाणैरेव चञ्चलमृगविशेषै समावृतानि

कूजद्रथाङ्गकलितानि शराञ्चितानि
सेनावनानि मम बाणदवा दहन्ति ॥ ५६ ॥

मदीयकरकुण्डली कृतशरासनादुद्गता
पृषत्कभुजगावली रिपुमहीशवामभ्रुवाम् ।
दरस्मितपयोझरीं सुरभिला निपीय क्षणाद्
ददाति हृदयान्तरे पृथुलशोकहालाहलम् ॥ ५७ ॥

अथवा ।

रजोऽन्धकारप्रथिते रिपूणा वक्त्राब्जकोशीकरणप्रवीणे ।
समयन्निशीथे सति मे कृपाणी शत्रुश्रिय नेतुमुदारदूती ॥ ५८ ॥

गुणाकरे रणाजिरे मयि स्वनच्छरासने
पलायितो बलाधिपो निराकृतो धरापति ।
स गूर्जरोऽपि जर्जरो भयाकरश्च खेचरो
धृतव्रणश्च कोङ्कण क्षणे क्षणे भविष्यति ॥ ५९ ॥

इत्यादितनयवचनेन हस्तस्थमिव राज्य मन्यमानाया जनन्या रक्षणाय कञ्चन परिवारं तद्योग्यवस्तुसञ्चय च तत्सन्निधाववस्थाप्य, कञ्चन काल वीतशोकया भवत्यात्र स्थीयताम्,

---

परिवृतानि, कूजद्रथाङ्गै शब्दायमानचक्रैरेव शब्दायमानचक्रवाकपक्षिभि कलितानि सहितानि, शरैर्बाणैरेव तृणैरञ्चितानि सहितानि, सेना एव वनानि सेनावनानि पृतनाकाननानि, मम जीवकस्य, बाणदवा शरदावानला, 'वने वनवह्नौ च दवौ दाव इहेष्यते' इत्यमर । दहन्ति भस्मसात्कुर्वन्ति । श्लिष्टविशेषणोत्थापितरूपकालङ्कार । वसन्ततिलकावृत्तम् ॥५६॥

मदीयेति—मदीयकरेण मामकीनहस्तेन कुण्डलीकृत वक्रीकृत यच्छरासन धनुस्तस्मादुद्गता नि सृता, पृषत्कभुजगावली बाणसर्पसन्तति, रिपुमहीशाना शत्रुपार्थिवाना वामभ्रुवो वनितास्तासाम्, सुरभिला सुगन्धिम्, दरस्मितपयोझरी मन्दहास्यदुग्धनिर्झरम्, क्षणादल्पेनैव कालेन, निपीय पीत्वा, हृदयान्तरे चित्तमध्ये, पृथुलशोक प्रचुरखेद एव हालाहलविषम्, ददाति समर्पयति । रूपकालङ्कार । पृथ्वीछन्द ॥५७॥

अथवेति—अथवा पक्षान्तरे ।

रजोऽन्धरकारप्रथित इति—रज एव सैन्यसमुत्थितधूलिरेवान्धकारस्तेन प्रथित प्रसिद्ध तस्मिन् , रिपूणा शत्रूणाम्, वक्त्राब्जाना मुखकमलाना कोशीकरणे कुड्मलीकरणे प्रवीण दक्ष तस्मिन्, समयदेवनिशीथ तस्मिन्युद्धरात्रौ, सति भवति, मे मम, कृपाणी खड्गवल्लरी, शत्रुश्रिय रिपुलक्ष्मीम्, नेतु समाक्रष्टुम्, उदारदूती श्रेष्ठसन्देशहरा, अस्तीति शेष ॥५८॥

गुणाकर इति—गुणाना शौर्यादीनामाकरस्तस्मिन् गुणखनौ, रणाजिरे युद्धाङ्गणे, मयि त्वत्पुत्रे, स्वनन् शरासनो यस्य तथाभूते शब्दायमानकोदण्डे सति, बलाधिप सेनापति, पलायित प्रधावित, धरापती राजा, निराकृतस्तिरस्कृत, स प्रसिद्ध, गूर्जरोऽपि गूर्जरजनाधिपोऽपि जर्जरो जीर्ण, खेचरो विद्याधर, भयाकरश्च भीतिखनिश्च, कोङ्कणश्च कोङ्कणजनपतिश्च, धृतव्रणो धृतेर्म, क्षणे क्षणे प्रतिक्षणम्, भविष्यति । मम पुरस्तात् क स्थातु शक्नुयादिति भाव । पञ्चचामर छन्द 'जरौ जरौ ततो जगौ च पञ्चचामर वदेत्' इति लक्षणात् ॥५९॥

इत्यादीति—इत्यादितनयवचनेन पूर्वोक्तप्रभृतिपुत्रगिरा, राज्य साम्राज्यम्, हस्तस्थमिव स्वपाणिस्थितमिव, मन्यमानाया जानानाया, जनन्या सविञ्या', रक्षणाय त्राणाय, कञ्चन कमपि, परिवार परिजनम्, तद्योग्यवस्तुसञ्चयञ्च तदर्हवस्तुसमूहञ्च, तत्सन्निधौ तत्समीपे, अवस्थाप्य स्थित कृत्वा, कञ्चन काल कमपि समय यावद्, भवत्या, वीतशोकया निर्गतविषादया सत्या, अत्र दण्डकारण्यस्थतपोवने, स्थीयताम्

कतिपयैरेव दिवसैस्त्वामानेतुं नन्दाढ्यं प्रहेष्यामि, इति प्रसवित्रीमाश्वास्यापृच्छ्य च, वयस्यमण्डलैः सह प्रस्थाय राजपुरोपवनमाजगाम ।

मित्राणि तत्र विनिवेश्य स वैश्यवेष-
मादाय राजनगरीं प्रविवेश धीरः ।
रथ्यासु तत्र विचरन्नवरत्नराशि-
सम्पूरितां प्रविततां विपणिं जगाहे ॥ ६० ॥

तत्र हर्म्याङ्गणे सखीभिः सह [1]कन्दुकविहारमनुभवन्त्याः कस्याश्चिल्लोलाक्ष्या हेलावशेन भुवि पातितं [2]कन्दुकमालक्ष्याश्चर्यविलक्षः कुरुहर्यक्षः प्रासादाग्रावलम्बिनीं नितम्बिनीमुन्नमितवदनो विलोकयामास ।

तां कोमलाङ्गीं कुतुकेन पश्यन्कुरङ्गनेत्रीं कुरुवंशकेतुः ।
उन्मीलदाभां नवयौवनेन पुन्नागसङ्काशकुचाममुह्यत् ॥ ६१ ॥

एवं तस्याः सौन्दर्यलहरीनिमग्नमानसः कन्दुकमालोक्यैवमुवाच ।

भाले क्रीडति नीलकुन्तलचये गण्डस्थले कुण्डले
वेण्याः पृष्ठतले स्तनद्वयमुखे हारे चकोरीदृशः ।
हस्ताब्जे मृदुले च कन्दुक भवांश्चिक्रीड वल्गन्मणी-
चञ्चत्कङ्कणशब्दशोभिनि निजस्पर्शारुणश्रीपुषि ॥६२॥

---

कुलनिवासया भूयताम्, कतिपयैरेव दिवसैः अल्पैरेव वासरैः, त्वां भवतीम्, आनेतुं स्वस्थानं प्रापयितुम्, नन्दाढ्यं निजानुजम्, प्रहेष्यामि प्रेषयिष्यामि, इत्येवम्, प्रसवित्रीं मातरम्, आश्वास्य सम्बोध्य, आपृच्छ्य च आमन्त्र्य च, वयस्यमण्डलैर्मित्रसमूहैः, सह सार्धम्, प्रस्थाय प्रस्थानं कृत्वा, राजपुरोपवनं राजपुरनगरोद्यानम्, आजगाम सम्प्राप ।

मित्राणीति—तत्रोपवने, मित्राणि सखीन्, विनिवेश्य स्थापयित्वा धीरो गभीरः, स जीवन्धरः, वैश्यवेषं वणिग्वेषम्, आदाय गृहीत्वा, राजनगरीं स्वपुरीम्, प्रविवेश प्रविष्टो बभूव, तत्र राजपुर्याम्, रथ्यासु प्रधानमार्गेषु, विचरन् विहरन्, नवरत्नराशिभिर्नवरत्नसमूहैः सम्पूरितां सम्भृतां ताम्, प्रविततां विस्तृताम्, विपणिमापणम्, जगाहे प्रविवेश । वसन्ततिलकावृत्तम् ॥६०॥

तत्रेति—तत्र विपणौ, हर्म्याङ्गणे भवनाङ्गणे, सखीभिर्वयस्याभिः, सह सार्धम्, कन्दुकविहारं गेन्दुकक्रीडाम्, अनुभवन्त्याः कुर्वन्त्याः, कस्याश्चित्, लोलाक्ष्याश्चपललोचनायाः, हेलावशेन क्रीडावशेन, भुवि पृथिव्याम्, पातितं मोचितम्, कन्दुकं गेन्दुकम्, आलक्ष्य दृष्ट्वा, आश्चर्येण विस्मयेन, विलक्षो विभ्रान्तचित्तः, कुरुहर्यक्षः कुरुसिंहः, जीवन्धर इति यावत्, प्रासादाग्रावलम्बिनीं भवनाग्रभागस्थायिनीम्, नितम्बिनीं नारीम्, उन्नमितं वदनं यस्य तथाभूतः उन्मुखः सन्, विलोकयामास ददर्श ।

तां कोमलाङ्गीमिति—कुरुवंशकेतुः कौरववंशध्वजः जीवन्धरः, कोमलाङ्गीं मृदुलशरीराम्, कुरङ्गनेत्रीं हरिणाक्षीम्, नवयौवनेन नूतनतारुण्येन, उन्मीलन्ती प्रकटीभवन्ती आभा दीप्तिर्यस्यास्ताम्, पुन्नागसङ्काशौ पुन्नागसदृशौ कुचौ स्तनौ यस्यास्ताम्, तां नारीम्, कुतुकेन कौतूहलेन, पश्यन् विलोकयन् सन्, अमुह्यत् मुग्धो बभूव ॥ ६१ ॥

एवमिति—एवमनेन प्रकारेण, तस्या नितम्बिन्याः सौन्दर्यलहर्यां लावण्यसन्ततौ निमग्नं निर्लीनं मानसं चित्तं यस्य तथाभूतः, कुरुवतंसः कुरुवंशालङ्कारः, कन्दुकं गेन्दुकम्, आलोक्य दृष्ट्वा, एवं वक्ष्यमाणप्रकारेण, उवाच जगाद ।

भाले क्रीडतीति—चकोरीदृशो जीवञ्जीवलोचनायाः, भाले ललाटे, नीलकुन्तलचये श्यामलालककलापे, गण्डस्थले कपोलतले, कुण्डले कर्णाभरणे, पृष्ठतले पृष्ठभागे, वेण्याः कबर्याम्, स्तनद्वयमुखे वक्षोजयुगल-

---

१-२ कन्तुकं—ब० ।

एषा विम्बाधरी कन्तो सन्तत शरवर्षिण ।
नामभाक्त्वमितीवाङ्ग कन्तुक त्वामताडयत् ॥६३॥

वदनकमलोन्मीलत्स्वेदाम्बुशीकरकोरका
सुरभिलगलच्छ्वासा नासाग्रचञ्चलमौक्तिका ।
स्फुरदुरुकुचा रामा वामालकाकुलितानना
सरसमतनोत्पाण्याघात यतस्त्वयि तत्कृती ॥६४॥

एव वदन्मुदा स्वामी तत्सौधाग्रवितर्दिकाम् ।
अलञ्चकार पुण्यश्रीकूलङ्कषगुणाकर ॥६५॥

तदानी कोऽपि वैश्येश सम्मुखमागत्य सम्मदपूरविस्तारितनयन प्रसन्नवदन कुशलप्रश्नकोरकितवचन क्रमेण निजप्रस्ताव वितस्तार ।

श्रीमन्सागरदत्त इत्यभिहित सोऽह ममेद गृह
पत्नी मे कमला सुता च विमला सूत्या किलेपाभवत् ।
विक्रीयेत यदागमे मणिगण पूर्वस्थितोऽभ्यन्तर
त तस्या पतिमभ्यधुर्जननसल्लग्ने हि कार्तान्तिका ॥६६॥

---

वदने, हारे मौक्तिकलतायाम्, क्रीडति सति, हे कन्दुक हे गेन्दुक, भवान्, मृदुले कामले, वल्गन्मणीभि शुम्भद्रत्नैश्चञ्चन् देदीप्यमानो य कङ्कण करवलयस्तस्य शब्देन ध्वनिना शोभिनि शोभमाने, निजस्पर्शेन स्वामर्शेनारुणश्रिय रक्तलक्ष्मी पुष्णातीति निजस्पर्शारुणश्रीपुट् तस्मिन्, मृदुले कोमले, हस्ताब्जे च पाणिपद्मे च, चिक्रीड क्रीडाञ्चकार । शार्दूलविक्रीडितच्छन्द ॥ ६२ ॥

एषेति—हे कन्दुक हे गेन्दुक, त्वम्, सन्तत निरन्तरम्, शरवर्षिणो बाणवर्षिण, कन्तो कामस्य, नामभाक् नामधेययुक्त, असीति शेष, इतीव हेतो, एषा विम्बाधरी विम्बोष्ठी, त्वा भवन्तम्, अताडयत् हस्तेनापीडयत् । उत्प्रेक्षा ॥ ६३ ॥

वदनकमलोन्मीलदिति—वदनकमले मुखारविन्दे उन्मीलन्त प्रकटीभवन्त स्वेदाम्बुशीकरा एव स्वेदसलिलपृषता एव कोरका कुड्मला यस्या सा, सुरभिल सुगन्धिर्गलन् नि सरन् श्वासो यस्या सा, नासाग्रे घ्राणाग्रभागे चञ्चल चपल मौक्तिक मुक्ताफल यस्या सा, स्फुरन्तौ शोभमानावुरुकुचौ पीनपयोजौ यस्या सा, वामालकै कुटिलकेशैराकुलित समाकीर्णमानन मुख यस्या सा, एवम्भूता रामा ललना, हे कन्तुक, यत कारणात्, त्वयि भवति, सरस स्नेहपुरस्सरम्, पाण्याघात हस्तप्रहारम्, अतनोत् चकार, तत् तस्मात्कारणात्, त्वम् कृती सुकृतवान्, असीति शेष । हरिणीच्छन्द ॥ ६४ ॥

एवमिति—एवमनेन प्रकारेण, वदन् कथयन्, पुण्यश्रिया सुकृतलक्ष्म्या कूलङ्कषास्तटोद्घर्षिणो ये गुणा सौन्दर्यादयस्तेषामाकर खनि, स्वामी जीवन्धर, स चासौ सौधश्चेति तत्सौधस्तद्भवन तस्याग्रवितर्दिका पुर स्थितवेदिकाम्, अलञ्चकार भूषयामास । तत्रोपविष्ट इति यावत् ॥६५॥

तदानीमिति—तदानी तस्मिन् काले, कोऽपि कश्चन, वैश्येशो वणिग्वर, सम्मुख पुरस्तात्, आगत्य समेत्य, सम्मदपूरेण हर्षसमूहेन विस्तारिते नयने यस्य स, प्रसन्न प्रफुल्ल वदन वक्त्र यस्य स, कुशलप्रश्नेन क्षेमानुयोगेन कोरकित व्याप्त वचन यस्य तथाभूत सन्, क्रमण क्रमश, निजप्रस्ताव स्वकीयनिवेदनम्, वितस्तार विततान ।

श्रीमन्निति—हे श्रीमन् हे लक्ष्मीमन्, सोऽह भवत्पुरो वर्तमान, सागरदत्त इत्यभिहित सागरदत्तनाम्ना प्रसिद्ध, इदमेतत्, मम गृह निकेतनम्, कमला एतन्नामवती, मे मम, पत्नी वल्लभा, विमला एतन्नामधेया च, सुता पुत्री, वर्तते इति शेष, एषा किल विमला, सूत्या युवति, अभवत् अजायत । हि निश्चयेन, जननसल्लग्ने जन्मशुभवेलायाम्, कार्तान्तिका दैवज्ञा, यदागमे यदागमने अभ्यन्तर मध्ये, पूर्वस्थित पूर्वविद्यमान, मणिगणो रत्नसमूह, विक्रीयेत विक्रीतो भवेत्, त तस्या विमलाया, पति वल्लभम्, अभ्यधु कथयामासु । शार्दूलविक्रीडितच्छन्द ॥६६॥

इह खलु भवति प्रविष्टमात्रे पूर्वं कदाप्यविक्रीत बहलरत्नजाल विक्रीतम् । अतो भवतैव प्रपञ्चातिशायिगुणगु[1]म्भितेन पञ्चशरवञ्चनचञ्चुरूपेण काञ्चनसच्छायकान्तिकोमलेन मदीयनन्दिनीकन्दलितभाग्यकृतावतारेण तस्या परिणययोग्येन भवितव्यम । इति तन्निर्बन्धेन, कौरव कथ कथचिदनुमेने ।

शुभे मुहूर्ते विमला कुमारी जीवन्धर सागरदत्तदत्ताम् ।
सौदामिनीसन्निभगात्रवल्लीं जग्राह पाणौ[2] सति हव्यवाहे ॥६७॥

मूर्तां चमत्कृतिमिव स्फुटदिव्यरूपा
जायामिवाम्बुजशरस्य चकोरनेत्रीम् ।
उन्मीलदुज्ज्वलघनस्तनशोभिताङ्गी
रागादिमामनुबभूव कुरुप्रवीर ॥६८॥

*इति महाकविहरिचन्द्रविरचिते श्रीमति जीवन्धरचम्पूकाव्ये*
*विमलालम्भो नाम सप्तमो लम्भ ।*

---

इह खल्विति—खलु निश्चयेन, इह भवने, भवति त्वयि, प्रविष्टमात्रे समागत एव, पूर्वं प्राक्, कदापि जात्वपि, अविक्रीत न विक्रीतम्, बहलरत्नजाल प्रभूतमणिमण्डलम्, विक्रीत क्रेतृभिर्गृहीतम्, अतोऽस्मात्कारणात्, प्रपञ्चातिशायिभिर्विस्तारातिशायिभिर्गुणैर्गुम्भितो युक्तस्तेन, पञ्चशरस्य कामस्य वञ्चनचुञ्चु प्रतारणपटु रूप सौन्दर्यं यस्य तेन, काञ्चनसच्छाया सुवर्णसदृशी या कान्तिर्दीप्तिस्तया कोमलेन मृदुलेन, मदीयनन्दिन्या मत्पुत्र्या कन्दलितभाग्येन वृद्धिगतपुण्यातिशयेन कृतो विहितोऽवतार समागमो यस्य तेन, भवतैव त्वयैव, तस्या विमलाया, परिणययोग्येन विवाहार्हेण, भवितव्यम्, इतीत्थम्, तन्निर्बन्धेन सागरदत्ताग्रहेण, कौरवो जीवन्धर , कथञ्चित् केन केनापि प्रकारेण, अनुमेने स्वीकृतिं ददौ ।

शुभे मुहूर्त इति—जीवन्धर स्वामी, शुभे मुहूर्ते मङ्गलमयवेलायाम्, हव्यवाहे वह्नौ, सति विद्यमाने, सौदामिनीसन्निभा विद्युत्सदृशी गात्रवल्ली शरीरलता यस्यास्ताम्, सागरदत्तेन तत्पित्रा दत्ता समर्पिता ताम्, विमलामेतदभिधानाम् , कुमारी कन्याम्, पाणौ हस्ते, जग्राह गृह्णाति स्म । उदवोढेति यावत् ॥६७॥

मूर्तामिति—मूर्तां सशरीराम्, चमत्कृतिमिव चमत्कारमिव, स्फुट प्रकट दिव्यरूपमलौकिकसौन्दर्यं यस्यास्ताम्, अम्बुजशरस्य कन्दर्पस्य, जायामिव प्रियामिव, चकोरनेत्री जीवञ्जीवलोचनाम्, उन्मीलद्भ्यामुत्तिष्ठद्भ्यामुज्ज्वलाभ्या निर्मलाभ्या घनस्तनाभ्या कठोरकुचाभ्याम् शोभित समलङ्कृतमङ्ग शरीर यस्यास्ताम्, इमा विमलाम्, कुरुप्रवीरो जीवन्धर , रागान्मदनोद्रेकात्, अनुबभूव समन्वभूत् । वसन्ततिलकावृत्तम् ॥६८॥

इति महाकविहरिचन्द्रविरचिते श्रीमति 'कौमुदी' जीवन्धरचम्पूव्याख्याधरे
विमलालम्भो नामाष्टमो लम्भ

---

१ गुम्फितेन ब० । २ पाणावुपहव्यवाहम् ब० ।

# नवमो लम्भः

ततो लताङ्गीमनुनीय रामा हित्वा स मित्रैः समगच्छतायम् ।
शशीव पाकारिदिशावधूटीं नक्षत्रवृन्दैः कमनीयरूपः ॥१॥
वरचिह्नमेनमवलोक्य बान्धवा मणिभूषणाञ्चिततनुं कुरूद्वहम् ।
बहुमेनिरे मधुमिवाङ्कुरस्फुरत्स्फुटचूतपल्लवकुलं वनप्रिया ॥२॥
तत्र कोऽपि सहसाब्रवीदिदं बुद्धिषेणविदितो विदूषकः ।
सप्रहासमतिविस्तृतेक्षणं फुल्लगण्डयुगलं कुरूद्वहम् ॥३॥
अन्यैरुपेक्षिता कन्या पाणौकृत्य प्रमोदतः ।
सखे निर्लज्जयात्मानं कृतार्थमिव मन्यसे ॥४॥
भवाञ्छ्लाघ्यस्तदामित्र व्यूढा चेत्सुरमञ्जरी ।
नरविद्वेषगम्भीरी नवतारुण्यमञ्जरी ॥५॥

इति तद्वचनभङ्गीं निशम्य मन्दस्मितकोरकितवदनः कुरुपञ्चवदनः, [1]श्व एव तामत्रत्यकाम-

ततो लताङ्गीमिति—ततस्तदनन्तरम्, कमनीयं मनोहरं रूपं सौन्दर्यं यस्य तथाभूतः, सोऽयं जीवन्धरः, पाकारिदिशावधूटीं प्राचीप्रियाम्, हित्वा त्यक्त्वा, नक्षत्रवृन्दैरुडुसमूहैः, शशीव चन्द्र इव, लताङ्गीं कृशाङ्गीम्, रामां विमलाभिधानां प्रियाम्, अनुनीय प्रेम्णा सन्तोष्य, हित्वा त्यक्त्वा, मित्रैर्वयस्यैः, समगच्छत सगतो बभूव ॥ १ ॥

वरचिह्नमिति—बान्धवाः सखायः, वरचिह्नं वरचिह्नोपेतम्, मणिभूषणैः रत्नालङ्कारैरञ्चिता शोभिता तनुः शरीरं यस्य तम्, कुरूद्वहं जीवन्धरम्, अवलोक्य दृष्ट्वा, अङ्कुरेषु नवप्ररोहेषु स्फुरं यथा स्यात्तथा स्फुटाः प्रकटा ये चूतपल्लवा आम्रकिसलयास्तैः कुलं व्याप्तम्, मधुं वसन्तम्, वनप्रिया इव कोकिला इव, बहुमेनिरे श्रेष्ठं मन्यन्ते स्म । मञ्जुभाषिणीवृत्तम् ॥ २ ॥

तत्रेति—तत्र मित्रेषु, बुद्धिषेण इति विदितो बुद्धिषेणविदितो बुद्धिषेणनामा, कोऽपि कश्चिदपि, विदूषकः प्रहसनशीलः, सप्रहासं सव्यङ्ग्यम्, अतिविस्तृते दीर्घतरे ईक्षणे यस्मिन् कर्मणि यथा स्यात्तथा, फुल्लं हर्षेण विकसितं गण्डयुगलं कपोलयुग्मं यस्य तम्, कुरूद्वहं जीवकम्, इदं वक्ष्यमाणम्, सहसा झटिति, अब्रवीज्जगाद । छन्दः पूर्ववत् ॥ ३ ॥

अन्यैरिति—हे सखे हे मित्र, अन्यैरितरैः, उपेक्षितामनङ्गीकृताम्, कन्यां पतिंवराम्, प्रमोदतो हर्षेण, पाणौकृत्य स्वीकृत्य निर्लज्ज निस्त्रपम्, आत्मानं स्वम्, कृतार्थमिव कृतकृत्यमिव, मन्यसे वेत्सि ॥४॥

भवानिति—नरविद्वेषेण मनुष्यमात्रद्वेषेण गम्भीरी प्रगल्भा, नवतारुण्यमञ्जरी प्रत्यग्रयौवनमञ्जरी, सुरमञ्जरी एतदभिधाना वणिक्पुत्री, व्यूढा परिणीता, चेद्यदि, तदा तर्हि, भवान् त्वम्, श्लाघ्यः प्रशंसार्हः, भवेदिति शेषः ॥ ५ ॥

इति तद्वचनभङ्गीमिति—इति पूर्वोक्ताम्, तस्य बुद्धिषेणस्य वचनभङ्गीं वाणीपरम्पराम्, निशम्य श्रुत्वा, मन्दस्मितेन मन्दहास्येन कोरकितं कुड्मलितं वदनं वक्त्रं यस्य सः, कुरुपञ्चवदनः कुरुवंशसिंहः, जीवन्धर इति यावत्, श्व एव भविष्यति दिवस एव, तां सुरमञ्जरीम्, अत्र भवोऽत्रत्यः स चासौ कामकोष्ठ-

---

[1] त्वया या प्रतिपादिता ब० ।

कोष्ठमानेष्यामीति प्रतिज्ञाय, प्रज्ञाग्रेसरस्तत्परिणयोपायं मनसा चिन्तयन्, क्रमेण यक्षमन्त्रमेव तत्समर्थापनतन्त्रं निश्चिकाय ।

निर्याय तस्मादारामान्मर्यादातीतकौशलः ।
वार्द्धकं रूपमास्थाय विवेश पुरि कौरवः ॥६॥

विरलदशनपङ्क्तिः कम्पमानाङ्गयष्टिः
प्रतिकलनिमिषेणास्पष्टदृष्टिः स वृद्धः ।
गलविकसितकासः श्लेष्मखण्डं वमन्सन्
पलितविरलकेशो दण्डचारी चचार ॥७॥

तत्र रथ्यासु प्रविशन्तम्, भुजगनिर्मुक्तनिर्मोकनिकाशचर्मविचित्रम्, पुरो हस्तावलम्बितदण्डेन पश्चादतिकुब्जतनुदण्डेन समौर्वीकं कार्मुकं तुलयन्तम्, शुक्तिकाभस्मधवलपलितकेशपाशेन तिरोवेपथुकलितेन मस्तकेन पूर्वतनरूपस्मरणाधुनातनरूपनिरीक्षणजनिताद्भुतवशेन मनुमाहात्म्यं शिरसा श्लाघमानमिव विराजमानम्, गलरन्ध्रनिरुद्धश्लेष्मखण्डान्यतिप्रयत्नेन कुहकुहारावेण सहानवरतमुद्वमन्तम्, स्थाविरं रूपमादधानमपि शनैः शनैर्गच्छन्तम्, सुरमञ्जरीप्राप्तिदूतीभूतायां जरायामभीकमपि जराभीरुम्, इमं स्थविरमवलोक्य, पौरेषु केचिद्वैराग्यपरायणाः, इतरे विलसत्करुणाः, सम्बभूवुः ।

---

श्चेति तम्, आनेष्यामि प्रापयिष्यामि, इतीत्थम्, प्रतिज्ञाय प्रतिज्ञां कृत्वा, प्रज्ञाग्रेसरो विद्वच्छ्रेष्ठः, तस्याः सुरमञ्जर्याः, परिणयस्य विवाहस्योपायं साधनं तम्, मनसा चेतसा, चिन्तयन् विचारयन्, क्रमेण क्रमशः, यक्षमन्त्रमेव सुदर्शनप्रदत्तमन्त्रमेव, तत्समर्थापने तत्प्रापणे तन्त्रं साधनभूतम्, निश्चिकाय निरणैषीत् 'विभाषा चेः' इति कुत्वम् ।

निर्यायेति—मर्यादां सीमानमतीतं मर्यादातीतं तथाभूतं कौशलं चातुर्यं यस्य सः, कौरवो जीवन्धरः, तस्मात्पूर्वोक्तात्, आरामादुपवनात्, निर्याय निर्गत्य, वार्द्धकं वृद्धसम्बन्धि, रूपं वेषम्, आस्थाय धृत्वा, पुरि नगरे, विवेश प्रविष्टः ॥ ६ ॥

विरलदशनपङ्क्तिरिति—विरला सान्तरा दशनपङ्क्तिर्दन्तपङ्क्तिर्यस्य सः, कम्पमाना वेपमानाङ्गयष्टिः शरीरलता यस्य सः, प्रतिकलनिमिषेण प्रतिक्षणपक्ष्मपातेन, अस्पष्टानुद्घाटितप्राया दृष्टिर्यस्य सः, गलात्कण्ठाद्विकसितः प्रकटितः कासो 'खासी' इति प्रसिद्धो यस्य सः, श्लेष्मखण्डं कफशकलम्, वमन् प्रकटयन्, पलिताः शुक्ला विरलाश्च सान्तराश्च केशाः कचा यस्य तथाभूतः सः कृत्रिमः, वृद्धः स्थविरः, दण्डेन चरतीत्येवं शीलो दण्डचारी यष्टिचारी सन्, चचार चलति स्म । मालिनीच्छन्दः ॥ ७ ॥

तत्र रथ्यास्विति—तत्र नगरे, रथ्यासु मार्गेषु, प्रविशन्तं प्रवेशं कुर्वन्तम्, भुजगेन सर्पेण निर्मुक्तस्त्यक्तो यो निर्मोकः कञ्चुकस्तेन निकाशं सदृशं यच्चर्म त्वक् तेन विचित्रितं विचित्रां दशां प्राप्तम्, पुरोऽग्रे, हस्तेन पाणिनावलम्बितो धृतो दण्डो येन, पश्चात्पृष्ठभागे, अतिकुब्जः कुटिलीभूतो यस्तनुदण्डः शरीरदण्डस्तेन, समौर्वीकं सप्रत्यञ्चम्, कार्मुकं धनुः, तुलयन्तं सदृशीकुर्वन्तम्, शुक्तिकाभस्मेव मुक्तास्फोटभूतिरिव धवलो वलक्षः पलितकेशपाशो जराशुक्लकचसमूहो यस्मिंस्तेन, तिरोवेपथुना तिर्यक्कम्पनेन, कलितं सहितं तेन, मस्तकेन शिरसा, पूर्वतनरूपस्य वार्धक्यपूर्वकालोत्पन्नसौन्दर्यस्य स्मरणं ध्यानम्, अधुनातनरूपस्य वर्तमानकालिकसौन्दर्यस्य निरीक्षणं समवलोकनञ्च ताभ्यां जनितं समुत्पन्नं यदद्भुतमाश्चर्यं तस्य वशेन निघ्नतया, मनुमाहात्म्यं देवप्रदत्तरूपपरिवर्तनमन्त्रप्रभावम्, शिरसा मूर्ध्ना, श्लाघमानमिव प्रशंसन्तमिव, विराजमानं शोभमानम्, गलरन्ध्रे कण्ठविवरे निरुद्धानि प्रतिहतगतीनि यानि श्लेष्मखण्डानि कफशकलानि तानि, अतिप्रयत्नेन भूरिप्रयासेन, कुहकुहारावेण कासजन्याव्यक्तशब्दविशेषेण, सह साकम्, अनवरतं निरन्तरम्, उद्वमन्तं प्रकटयन्तम्, स्थाविरं स्थविरस्येदं स्थाविरं वृद्धसम्बन्धि, रूपं वेषम्, आदधानमपि धृतवन्तमपि, शनैः शनैर्मन्दं मन्दम्, गच्छन्तं व्रजन्तम्, सुरमञ्जर्या एतन्नामवल्लभायाः प्राप्तौ दूतीभूतायां चेटीरूपायाम्, जरायां वृद्धावस्थायाम्, अभीकमपि निर्भयमपि पक्षे कामुकमपि, जराभीरुं वार्धक्यभययुक्तम्, इममेतम्, स्थविर

क्रमेण सोऽय कपटद्विजातिवृद्धो गृहद्वारभुव प्रपेदे ।
यस्यान्तराले सुरमञ्जरी सा चकास्ति चञ्चन्मणिदीपिकेव ॥८॥

तत्र दौवारिकाभि किमत्रागमनफलमिति पृष्ट कुमारीतीर्थमागमनफलमिति प्रत्युत्तरेणाट्टहासमेदुरवदनान्प्रातिहारिकाजनान् विदधान कृपया ताभिरनिरुद्धोऽपि कामदेवस्तन्मन्दिरान्तरमगाहिष्ट ।

अन्त कासाञ्चन स्त्रीणा मा मेति प्रतिषेधनम् ।
अशृण्वन्निव बाधिर्यादाविवेश शनै शनै ॥९॥

तदनु भयाकुला काश्चन कमललोचना झणझणात्कारिनूपुररवमुखरितदिगन्तरा सत्वरगमनवशेन वल्गत्कुचकलशसन्ताड्यमानव्यालोलमुक्ताहाररुचिवीचिप्रकाशितसदनभागा परिचलितकचनिचयरुचिरसुममालिकानिषण्णोड्डीनमिलिन्दमञ्जुझङ्कारवाचाला कूजत्काञ्चीकलापा सुरमञ्जरीसमक्षमेत्य सगद्गदमेवमवादिषु ।

वृद्धद्विज कश्चिदपूर्वदृष्टो रुद्धोऽपि गेहान्तरमाविवेश ।
इतीयमालीवचन निशम्य त द्रष्टुमागात्कुतुकेन नुन्ना ॥१०॥

---

वृद्धम्, अवलोक्य दृष्ट्वा, पौरेषु नागरिकेषु, केचित् केऽपि, वैराग्यपरायणा विरक्तितत्परा , इतरेऽन्ये, विलसन्ती शोभमाना करुणा दया येषा तथाभूता सन्त , सम्बभूवुरजायन्त ।

क्रमेण सोऽयमिति—सोऽय पूर्वोक्त, कपटेन व्याजेन द्विजेषु विप्रेषु अतिवृद्ध स्थविरतर , वृद्धब्राह्मणवेषधारी जीवन्धर इति यावत्, क्रमेण क्रमश , गृहद्वारभुव भवनप्रवेशमार्गभूमिम्, प्रपेदे प्राप, यस्य गृहस्य, अन्तराले मध्ये, सा महनीयकान्तिमण्डिता, सुरमञ्जरी काम्यमाना प्रियतमा, चञ्चन्मणि दीपिकेव देदीप्यमानमणिदीपिका यथा, चकास्ति शोभते ॥८॥

तत्र दौवारिकाभिरिति—तत्र सुरमञ्जरीभवने, द्वारे भवा दौवारिका द्वारपालिन्यस्ताभि , अत्र भवनाभ्यन्तरे, आगमनफलमागतिप्रयोजनम्, किम् किमात्मकम्, इत्येव प्रकारेण, पृष्टोऽनुयुक्त , कुमारीतीर्थं तीर्थक्षेत्रविशेष , पक्षे कुमारी सुरमञ्जर्येव तीर्थमिति कुमारीतीर्थम्, आगमनफलमागतिप्रयोजनम्, ममास्तीति शेष इति प्रत्युत्तरेण प्रतिवचनेन, अट्टहासेन सशब्दहसितेन मेदुर मिलित वदन मुख येषा तथाभूतान् , प्रातिहारिकाजनान् द्वारपालिकालोकान् , विदधान कुर्वाण , कृपया दयया, ताभिर्दौवारिकाभि , अनिरुद्धोऽपि अनिवारितप्रवेशोऽपि, कामदेवो जीवन्धर पक्षेऽनिरुद्धोऽपि अनिरुद्धपुत्ररहितोऽपि, कामदेव प्रद्युम्न इति विरोध परिहारस्तूक्त , तन्मन्दिरान्तर तद्भवनमध्यम्, अगाहिष्ट प्रविवेश ।

अन्तरमिति—अन्तर्मध्ये, कासाञ्चन कासामपि, स्त्रीणा नारीणाम्, मा मा अत्र प्रवेश मा कुरु, इति, प्रतिषेधन निषेधाक्षरम्, बाधिर्यात् श्रवणशक्तिरहितत्वात् ,अशृण्वन्निवानाकर्णयन्निव, शनै शनैर्मन्द मन्दम्, आविवेश प्रविष्टोऽभूत् ॥९॥

तदन्विति—तदनु तदनन्तरम्, भयेन त्रासेनाकुला व्यग्रा , काश्चन का अपि, कमललोचना पद्माक्ष्य , झणझणात्कारिणा झणझणशब्दकारिणा नूपुराणा मञ्जीरकाणा रवेण शब्देन, मुखरित वाचालित दिगन्तर काष्ठान्तराल याभिस्ता , सत्वरगमनवशेन शीघ्रगतिनिघ्नतया, वल्गद्भ्या चलद्भ्या कुचकलशाभ्या स्तनवक्षोजाभ्या सन्ताड्यमाना पीड्यमाना ये व्यालोलाश्चञ्चला मुक्ताहारा मौक्तिकदामानि तेषा रुचिवीचिभि कान्तिपरम्पराभि प्रकाशिता शोभिता सदनभागा भवनप्रदेशा याभिस्ता , परिचलितेषु कम्पितेषु कचनिचयेषु केशसमूहेषु रुचिरा मनोहरा या सुममालिका पुष्पस्रजस्तासु पूर्वं निषण्णा स्थिता पश्चादुड्डीना उत्पतिता ये मिलिन्दा भ्रमरास्तेषा मञ्जुझङ्कारेण मनोहरझङ्कारेण वाचाला कृतशब्दा , कूजन्तोऽव्यक्तशब्द कुर्वन्त काञ्चीकलापा मेखलासमूहा यासा तास्तथाभूता सत्य , सुरमञ्जरीसमक्ष सुरमञ्जर्या समक्ष पुरस्तात् , एत्य गत्वा, सगद्गद गद्गदस्वरसहित यथा स्यात्तथा, एव वक्ष्यमाणप्रकारेण, अवादिषु- र्निवेदितवत्य ।

वृद्धद्विज इति—पूर्वं न दृष्ट इत्यपूर्वदृष्टोऽनवलोकितपूर्वं , कश्चित्कोऽपि वृद्धद्विज' स्थविरविप्र ,

द्विजातिवृद्धं पुरतो निषण्णं बुभुक्षितं वीक्ष्य सरोरुहाक्षी ।
समादिदेशाथ सखीसमाजं तद्भोजनाय प्रचुरादरेण ॥११॥

तदनु यथाविधि सहर्षं भुक्तवन्तं सखीजनैरन्तिकमानीतं तमेनमग्रासनमधिरोप्य, 'कुतो भवानागतः पुनः कुत्र गमिष्यसि' इति, सा सुरमञ्जरी मञ्जुलवचनचातुरीविजितपिकस्वरमाधुरी सकौतुकं पप्रच्छ ।

इति गिरः समवेत्य कथञ्चन स्थविर एवमुवाच शनैः शनैः ।
सुरुचिराधरि पृष्ठत आगतः पुरत एष गमिष्यति मानिनि ॥१२॥

इति वचनं निशम्य, विशालतरहासविशदवदनान् पार्श्ववर्तिजनानवलोक्य, द्विजातिवृद्धः 'किमिति मामकीनवार्धक्यजनितविपरीततां हसन्ति भवत्यः, क्रमेण भवतीनामप्येषा भविष्यति' इत्यवादीत् ।

पुनः पप्रच्छ मोदेन क्व गन्तव्यं त्वयेति सा ।
यत्र कन्यापरिप्राप्तिस्तत्रेत्ययमभाषत ॥१३॥

वयसा वपुषा च वृद्ध एषो मनसा नेति गिरापि मेदुरा ।
स्वयमभ्यवहृत्य सा कुमारी पुनरागत्य बभाण सादरम् ॥१४॥

---

रुद्धोऽपि वारितगमनोऽपि, गेहान्तरं भवनमध्यम्, आविवेश प्रविष्टः, इति एवं प्रकारम्, आलीवचनं सखीवचः, निशम्य श्रुत्वा, कुतुकेन कुतूहलेन, नुन्ना प्रेरिता, इयं सुरमञ्जरी, तं वृद्धद्विजम्, द्रष्टुमवलोकयितुम्, आगाराज्जगाम ॥१०॥

द्विजातिवृद्धमिति—अथागमनानन्तरम्, पुरतोऽग्रे, निषण्णं समासीनम्, बुभुक्षा सञ्जाता यस्य तं क्षुधायुक्तम्, द्विजातिवृद्धं विप्रस्थविरतरम्, वीक्ष्य दृष्ट्वा, सरोरुहाक्षी कमलनयना, सुरमञ्जरी, प्रचुरादरेण महाविनयेन, तद्भोजनाय तं भोजयितुम्, सखीसमाजं वयस्यावृन्दम्, समादिदेश समाज्ञप्तवती ॥११॥

तदनु यथाविधीति—तदनु तदनन्तरम्, यथाविधि विध्यनुसारेण, सहर्षं सानन्दम्, भुक्तवन्तं कृतभोजनम्, सखीजनैः सहचरीसमूहैः, अन्तिकं निकटम्, आनीतं प्रापितम्, एनं तं पूर्वोक्तवृद्धम्, अग्रासनं श्रेष्ठासनम्, अधिरोप्याधिष्ठाप्य, भवान्, कुतः कस्मात्स्थानात्, आगतः समायातः, पुनर्भूयः, कुत्र कस्मिन् स्थाने, गमिष्यसि व्रजिष्यसि, इत्येवं प्रकारेण, मञ्जुलवचनचातुर्या मनोहरवचोवैदग्ध्या जिता पराभूता पिकस्वरमाधुरी कोकिलालापमधुरिमा यया तथाभूता, सुरमञ्जरी, सकौतुकं कुतूहलसहितं यथा स्यात्तथा, पप्रच्छ पृच्छति स्म ।

इति गिरमिति—स्थविरो वृद्धरूपधरो जीवन्धरः, इति पूर्वोक्तप्रकाराम्, गिरः सुरमञ्जरीभारतीम्, कथञ्चन केनापि प्रकारेण, समवेत्य निश्चित्य, शनैः शनैर्मन्दं मन्दम्, एवं वक्ष्यमाणप्रकारेण, उवाच जगाद । हे सुरुचिराधरि ! हे शोभनदशनच्छदे ! हे मानिनि हे मानवति, एष जनः, पृष्ठतः पश्चात्प्रदेशात्, आगतः सम्प्राप्तः, पुरतोऽग्रे च गमिष्यति व्रजिष्यति ॥१२॥

इति वचनमिति—इति पूर्वोक्तं, वचनं वाणीम्, निशम्य समाकर्ण्य, विशालतरहासेन सुविस्तृतहसितेन विशदानि धवलानि वदनानि वक्त्राणि येषां तथाभूतान्, पार्श्ववर्तिजनान् निकटस्थजनान्, अवलोक्य दृष्ट्वा, द्विजातिवृद्धो विप्रातिस्थविरः, 'भवत्यो यूयम्, मामकीनेन मदीयेन वार्धक्येन स्थविरत्वेन जनिता समुत्पन्ना या विपरीतता विपर्यस्तबुद्धिता ताम्, इतीत्थम्, किं केन कारणेन, हसन्ति हसथ', क्रमेण क्रमशः, भवतीनामपि युष्माकमपि, एषा विपरीतता, भविष्यति, इत्येवम्, अवादीत् जगाद ।

पुनः पप्रच्छेति—सा सुरमञ्जरी, त्वया भवता, क्व कुत्र, गन्तव्यं यातव्यम्, इतीत्थम्, मोदेन हर्षेण, पुनर्भूयः, पप्रच्छ अनुयुङ्क्ते स्म, अयं वृद्धः, यत्र यस्मिन् स्थाने, कन्यापरिप्राप्तिः पतिंवरालाभः, भवेदिति शेषः, तत्र तस्मिन् स्थाने, गन्तव्यम्, इतीत्थम्, अभाषत जगाद ॥१३॥

वयसा वपुषेति—एष जनः, वयसा दशया, वपुषा च शरीरेण च, वृद्धो जीर्णः, अस्ति, मनसा

इदानीं भवतो यत्र वाञ्छावल्ल्यधिरोहति ।
तत्राशु गम्यता भद्र द्विजवर्य महामते ॥१५॥

इति तस्या मन्दस्मितचन्द्रिकामेदुरवदनचन्दिरसुधासारायमाणवचोधारा 'साधु-साधु सुष्ठूक्तम्' इति प्रशसमान, करेण यष्टिमालम्ब्य कृच्छ्रादुत्थाय प्रस्खलन्, तदीयविकचविचकिलकुसुमकुलसुरभिलहसतूलशयनाधिरोहाय प्रयतमान, तत्र हस्तावलम्बनवशेन तन्निवारणपर चेटीनिकर निवारयन्त्या सुरमञ्जर्या सहर्षमनुमत, स द्विजवृद्ध क्रमेण सुष्वाप ।

वृद्ध त तरुणीविलासरसिक वीक्ष्येव भासा पति-
वृद्ध स चरमक्ष्माधरगुहाकेलीगृह प्राविशत् ।
वारुण्या किलसगमाय रसिक स्फाराङ्गरागाञ्चित
कन्दर्पोऽपि शरासन करतले चक्रे पृपत्कै सह ॥ १६ ॥

तदनु सकलजनतादृष्टिरोधकरे तिमिरनिकरे विजृम्भिते, तमालन्ति सकलतरव, पिकजालन्ति विहगमा, नीलाचलन्ति भूमिधरा, भल्लूकन्ति निखिलवनमृगा, कालिन्दीमनुकुर्वन्ति निम्नगा, इति लोकस्य विभ्रमो बभूव ।

---

चेतसा, न, इति गिरापि वाण्यापि, मेदुरा मिलिता, तथा निवेदयन्तीति यावत्, सा कुमारी सुरमञ्जरी, स्वयम्, अभ्यवहृत्य भोजन कृत्वा, पुनर्भूय, आगत्य समेत्य, सादर ससम्मान यथा स्यात्तथा, बभाण जगाद ॥१४॥

इदानीमिति—इदानीमधुना, भवत श्रीमत, वाञ्छावल्ली इच्छालता, यत्र यस्मिन् स्थाने, अधिरोहति समधिरूढा भवति, हे महामते हे महाप्राज्ञ, द्विजवर्य विप्रप्रधान, भद्र साधो, तत्र तस्मिन् स्थाने, आशु शीघ्रम्, गम्यताम् व्रज्यताम्, भवतेति शेष ॥१५॥

इति तस्या इति—तस्या सुरमञ्जर्या, इति पूर्वोक्तप्रकाराम्, मन्दस्मित मन्दहसितमेव चन्द्रिका ज्योत्स्ना तया मेदुरो मिलितो यो वदनचन्दिरो मुखचन्द्रमास्तस्य सुधासारायमाणा पीयूषसारवदाचरन्ती या वचोधारा वाणीसन्ततिस्ताम्, साधु साधु श्रेष्ठ श्रेष्ठम्, सुष्ठूक्त शोभन गदितम्, इतीत्थ प्रशसमान श्लाघमान, करेण हस्तेन, यष्टिं लगुडिकाम्, आलम्ब्य समाश्रित्य, कृच्छ्राद् दुःखात्, उत्थाय समुत्थितो भूत्वा, प्रस्खलन् प्रपतन्, हसतूलस्य शयन हसतूलशयन, विकचानि प्रस्फुटानि यानि विचकिलकुसुमकुलानि मृदुलदलपुष्पविशेषनिकुरम्बाणि तै सुरभिल सुगन्धि, तदीय सुरमञ्जरीसम्बन्धि विकचविचकिलकुसुमकुलसुरभिल यद् हसतूलशयन तस्मिन्नधिरोहस्तस्मै, प्रयतमान प्रयत्न कुर्वाण, तत्र तस्मिन् कार्ये, हस्तावलम्बनवशेन हस्ताश्रयनिघ्नत्वेन, तन्निवारणपर तत्प्रतिषेधतत्परम्, चेटीनिकर दासीसमूहम्, निवारयन्त्या निषेधयन्त्या, सुरमञ्जर्या, सहर्ष सप्रमोदम्, अनुमत प्राप्तानुज्ञ, स पूर्वोक्त, द्विजवरो विप्रोत्तम, जीवन्धर इति यावत्, क्रमेण क्रमश, सुष्वाप शिश्ये ।

वृद्ध त तरुणीति—त पूर्वोक्तम्, वृद्ध स्थविरम्, तरुणीविलासे युवतिसम्भोगे रसिक सस्नेहम्, वीक्ष्येव समवलोक्येव, वृद्ध परिणत, भासा पति सूर्य, वारुण्या पश्चिमदिगङ्गनाया, सगमाय समुपभोगाय, रसिको रसयुक्त, स्फारेण महताङ्गरागेण विलेपनेनाञ्चित शोभित सन्, चरमक्ष्माधरस्यास्ताचलस्य गुहैव दर्येव केलीगृह क्रीडाभवनम्, प्राविशत् प्रविवेश, किलेति सम्भावनायाम्, कन्दर्पोऽपि कामोऽपि, पृपत्कैर्बाणै, सह साकम्, शरासन धनु, करतले हस्ततले, चक्रे कृतवान्, धरति स्मेति यावत् ॥१६॥

तदन्विति—तदनु तदनन्तरम्, सकलजनताया निखिलजनसमूहस्य दृष्टिरोधकरे दृगवरोधविधायके, तिमिरनिकरे ध्वान्तसमूहे, विजृम्भिते वृद्धिङ्गते सति, सकलतरवो निखिलवृक्षा तमालन्ति तापिच्छवृक्षा इवाचरन्ति, विहगमा शकुनय पिकजालन्ति कोकिलकलापा इवाचरन्ति, भूमिधरा पर्वता, नीलाचलन्ति अञ्जनगिरय इवाचरन्ति, निखिलवनमृगा अखिलविपिनजन्तव, भल्लूकन्ति ऋक्षा इवाचरन्ति, निम्नगा सरित, कालिन्दी यमुनाम्, अनुकुर्वन्ति विडम्बयन्ति, इतीत्थम्, लोकस्य जनस्य, विभ्रम सन्देह, बभूव ।

तत पूर्वाचलप्रान्ते बभौ कुमुदबान्धव ।
ध्वा तसिन्धुरसक्षोभमृगेन्द्र कुन्दनिर्मल ॥ १७ ॥

ततो वृद्ध सोऽय भुवनमहिता गानपदवी-
मतानीत्सानन्द मधुरसनिष्यन्दभरिताम् ।
[1]खगेश कन्याया परिणयकलाकालकलिता
निशम्याय जीवन्धर इति शशङ्के सुनयना ॥ १८ ॥

तदनु सा सुरमञ्जरी सहर्षमुत्थाय, अकूजत्काञ्चीकलापमगुञ्ज मञ्जीरमचलितकरवलय सखीजनान्पुरोधाय मन्द मन्द [2]तदीयशयनोपकण्ठमासाद्य, प्रवयस पुरतो वयस्याजन विधाय, स्वयमपि पश्चाद्भागमलङ्कुर्वन्ती, मालतीलताना पृष्ठतो रत्नवल्लीव विराजमाना, चकोरनयना भुवनमोहन गान शुश्राव ।

तावत्समाप्य चतुर कलगानलीला
द्राक्सामगीतमुदयुङ्क्त स मञ्जु गातुम् ।
श्रुत्वा कुरङ्गनयना कुतुकेन पूर्व
गीत पठेति परित परिवव्रुरेनम् ॥ १९ ॥

कुमारी मम तोषाय भवत्य कल्पयन्ति चेत् ।
गायते मधुर गानमिति वाचमुवाच स ॥ २० ॥

तत पूर्वाचलप्रान्त इति—ततस्तदनन्तरम्, पूर्वाचलप्रान्ते पूर्वगिरिसमीपे, ध्वान्त तिमिरमेव सिन्धुरो गजस्तस्य सक्षोभाय त्रासाय मृगेन्द्र सिंह, कुन्दनिर्मलो माघ्यकुसुमावदात, कुमुदबान्धवो रजनीकर, बभौ शुशुभे ॥१७॥

ततो वृद्ध इति—ततस्तदनन्तरम्, सोऽय पूर्वोक्त, वृद्ध स्थविर, खगानामीट् खगेट् तस्य खगेशो विद्याधरेन्द्रस्य गरुडवेगस्य, कन्याया पतिवराया गन्धर्वदत्ताया इति यावत्, परिणयकलाया विवाहोत्सवस्य काले समये कलिता कृताम्, भुवनमहिता लोकप्रशसिताम्, मधुररसस्य निष्यन्देन द्रवेण भरिता पूर्णाम्, गानपदवी सगीतपद्धतिम्, सानन्द सप्रमोद यथा स्यात्तथा, अतानीत् विस्तारयामास, ता गानपदवीम् निशम्य समाकर्ण्य, अयमेष वृद्ध, जीवन्धरो गन्धोत्कटसूनु, अस्तीति, सुनयना सुदृष्टि सुरमञ्जरी, शशङ्के शङ्कितवती । शिखरिणीच्छन्द ॥१८॥

तदनु सा सुरमञ्जरीति—तदनु तदनन्तरम्, चकोरनयना जीवजीवलोचना, सा सुरमञ्जरी, सहर्ष सानन्द यथा स्यात्तथा, उत्थाय समुत्थिता भूत्वा, अकूजन् शब्दमकुर्वाण काञ्चीकलापो मेखलादाम यस्मिन् कर्मणि तत्, अगुञ्जत् शिञ्जानमकुर्वत् मञ्जीर यस्मिन् कर्मणि तत्, अचलित सुस्थिर करवलयो हस्तकटको यस्मिन् कर्मणि तत् यथा स्यात्तथा, सखीजनान् वयस्याजनान्, पुरोधायाग्रेकृत्वा, मन्द मन्द यथा स्यात्तथा, तदीयशयनोपकण्ठ वृद्धशय्यासमीपम्, आसाद्य प्राप्य, प्रवयसो वृद्धस्य, पुरत पुरस्तात्, वयस्याजन सखीसमूहम्, विधाय कृत्वा, स्वयमपि स्वतोऽपि, पश्चाद्भाग पृष्ठप्रदेशम्, अलङ्कुर्वन्ती शोभयन्ती, मालतीलताना मल्लीवल्लीनाम्, पृष्ठत पश्चात्, रत्नवल्लीव मणिवल्लरीव, विराजमाना शोभमाना, सती, भुवनमोहन जगन्मोहनकारणम्, गान सगीतम्, शुश्राव शृणोति स्म ।

तावत्समाप्येति—तावत् यावत्सुरमञ्जरीतच्छय्यासमीपमाजगाम तावत्, चतुरो विदग्ध, स वृद्ध, कलगानकला मधुरसङ्गीतवैदग्धीम्, समाप्य समाप्ता कृत्वा, द्राग् झटिति, मञ्जु मनोहरम्, सामगीत सामरूपगानम्, गातुम्, उदयुङ्क्त उद्यतो बभूव, कुरङ्गनयना मृगलोचना, श्रुत्वा निशम्य, पूर्व प्राग्गीतम्, पठ निगद, इति ब्रुवाणा इति शेष, एनम् जीवन्धरम्, कुतुकेन कुतूहलेन, परिवव्रु परितो वृण्वन्ति स्म । वसन्ततिलकावृत्तम् ॥ १९ ॥

कुमारीमिति—भवत्यो यूयम्, चेद्यदि, मम वृद्धस्य, सन्तोषाय तोषाय, कुमारी काञ्चित्पतिवराम्,

१ विद्याधरस्य । २ तदीयशयनसदनोपकण्ठ ब० ।

तदनन्तर तद्वचन निशम्य हसन्तीषु सकलासु वामनयनासु यथायथ निवृत्य निद्रामुद्रा दधानासु, सा सुरमञ्जरी जीवन्धरस्मरणजनितसन्तापेनाक्रान्ततनुलता क्रमेण पल्लवशयनमधिशिश्ये।

तदनु पूषणि पूर्वधराधरे विलसति प्रचुरारुणमण्डले।
द्विजवरस्य समीपमुपागता मधुरवागवदत्सुरमञ्जरी ॥२१॥

शास्त्रेषु केषु भवत कुशलत्वमार्य
सङ्गीतशास्त्रवदमन्दगुणाम्बुराशे।
गाने मनोज्ञमधुरे भवत समानो
लोकत्रये न हि विना खलु जीवकेन ॥२२॥

इति तस्या अनुयोग द्विजवृद्धोऽप्येवमुत्तरयामास—

प्रज्ञासिर्मम सर्वशास्त्रनिकषप्रोल्लीढधाराधरो
दृप्यद्वादिमदाङ्कुर न सहते नैर्मल्यनर्मालय।
किञ्चास्माभिरदृष्टपूर्वमिह यच्छास्त्र तदेतज्जग-
त्याकाशाम्बुजतुल्यमब्जवदने बिम्बानुबिम्बाधरि ॥ २३ ॥

---

कलयन्ति समर्थयन्ति, तर्हि, मधुर मनोहरम्, गान गीतम्, गायते निगद्यते, इत्येवम्, वाच वाणाम्, स वृद्ध, उवाच जगाद ॥ २० ॥

तदनन्तरमिति—तदनन्तर तदनु, तद्वचन तद्वृद्धवाक्यम्, निशम्य श्रुत्वा, हसन्तीषु हास कुर्वाणासु सकलासु निखिलासु, वामनयनासु सुन्दरलोचनासु, यथायथ यथाक्रमम्, निवृत्य प्रत्यावृत्य, निद्रामुद्रा स्वापाकृतिम्, दधानासु धृतवतीषु, सतीषु, सा पूर्वोक्ता, सुरमञ्जरी, जीवन्धरस्य सात्यन्धरे स्मरणेन निध्यानेन जनित समुत्पन्नो य सन्ताप खेदस्तेन, आक्रान्ता व्याप्ता तनुलताशरीरवल्लरी यस्यास्तथाभूता सती, क्रमेण क्रमश पल्लवशयन किसलयशय्याम्, अधिशिश्ये शयनञ्चकार।

तदनु पूषणीति—तदनु तदनन्तरम्, प्रचुरमत्यन्तमरुण रक्त मण्डल बिम्ब यस्य तस्मिन्, पूषणि सूर्ये, पूर्वधराधरे उदयशैले, विलसति दीप्यमाने सति, द्विजवरस्य विप्रोत्तमस्य, समीपमभ्यर्णम्, उपगता प्राप्ता, मधुरवाग् मिष्टभाषिणी, सुरमञ्जरी, अवदत् जगाद ॥ २१ ॥

शास्त्रेषु केष्विति—हे आर्य हे पूज्य! अमन्दाना श्रेष्ठाना गुणाना दयादाक्षिण्यादीनामम्बुराशि सागरस्तत्सम्बुद्धौ हे अमन्दगुणाम्बुराशे! सगीतशास्त्रवद् गन्धर्वागम इव, भवतस्तव, केषु किन्नामधेयेषु, शास्त्रेषु सिद्धान्तेषु, कुशलत्व नैपुण्यम्, अस्तीति शेष। मनोज्ञमधुरेऽतिप्रिये, गाने सङ्गीते, विषयेऽर्थे सप्तमी, खलु निश्चयेन, जीवकेन जीवन्धरेण विना, भवतस्तव, समानस्तुल्य, लोकत्रये जगत्त्रये, नहि न वै विद्यते इति शेष। वसन्ततिलकावृत्तम् ॥ २२ ॥

इतीत्थम्—तस्या सुरमञ्जर्या, अनुयोग प्रश्नम्, द्विजवृद्धोऽपि ब्राह्मणस्थविरोऽपि, एव वक्ष्यमाणप्रकारेण, उत्तरयामास समादधे।

प्रज्ञासिरिति—हे अब्जवदने हे कमलमुखि! हे बिम्बानुबिम्बाधरि बिम्बफलतुलितरदनच्छदे! सर्वशास्त्राण्येव निखिलागमा एव निकषा शाणास्तेषु प्रोल्लीढा प्राप्तकषणा या धारास्तीक्ष्णाग्रभागास्तासा धरो धारक, नैर्मल्यस्य स्वच्छताया नर्मालय केलिभवनम्, मम वृद्धस्य, प्रज्ञासिर्बुद्धिकृपाण दृप्यद्वादिनामहङ्कारिवादिनाम् मदाङ्कुर गर्वप्ररोहम्, न सहते न तितिक्षति, सद्य एव प्रवादिना गर्वमपहरतीति यावत्। किञ्च अन्यच्च, इह लोके, यच्छास्त्र य सिद्धान्त, अस्माभि, पूर्व न दृष्टमित्यदृष्टपूर्वम् अनवलोकितपूर्वम्, भवेदिति शेष, तदेतच्छास्त्रम्, जगति भुवने, आकाशाम्बुजतुल्य गगनारविन्दसदृशम्, अस्तीति शेष। अखिलागमेषु मम प्रावीण्यमस्तीति भाव ॥ २३ ॥

---

१ भवता ब०।

इति तद्वाणीं निशम्य कौतुककोरकितान्तरङ्गा सा सुरमञ्जरी, 'निखिलनयनोत्पलानन्दसन्दायकमुखचन्द्रिरो जीवन्धरः पूर्वं धैर्येण सह मदीयमानसमपहृत्य निर्गतः क्वापि न ज्ञायते, तत्प्राप्तिर्मम कथं भविष्यति' इति पृच्छाञ्चक्रे ।

इति वाचमसौ श्रुत्वा क्षणं तूष्णीमवस्थितः ।
द्विजातिवृद्धो मधुरमुवाच वदतां वरः ॥२४॥

अयि पयोजनयने, बाह्योद्यानविराजमानस्य कामदेवस्य पूजया प्रसन्नस्य कृपाकटाक्षैः साक्षात्कृतो जीवन्धरस्तव मनोरथलतामङ्कुरयिष्यति ।

विचिकित्सा विशालाक्षि नात्र कार्या निरङ्कुशा ।
कामकोष्ठस्य गमने त्वरैव तनुमध्यमे ॥२५॥

तदनु हृदि विदित्वा कामितार्थं करस्थं
कमलविमलनेत्री सगता सा सखीभिः ।
सपदि मधुरशिञ्जन्मञ्जुमञ्जीरपादा
मणिमयमधिरूढा याप्ययानं प्रतस्थे ॥२६॥

ततश्च चकितसारङ्गविलोचना सा सुरमञ्जरी द्विजवृद्धं पुरोधाय कामालयमेत्य वामालकाभिरालीभिः समानीतसुरभिकुसुमादिभिस्तत्पूजां निर्वर्तयामास ।

---

इति तद्वाणीमिति—इति पूर्वोक्तप्रकाराम्, तद्वाणीं वृद्धगिरम्, निशम्य श्रुत्वा, कौतुकेन स्वेप्सितपृच्छाजन्यकुतूहलेन कोरकितं कुड्मलितं व्याप्तमन्तरङ्गं मनो यस्यास्तथाभूता, सा सुरमञ्जरी, निखिलानां सकलजनानां नयनोत्पलेभ्यो नेत्रकुवलयेभ्य आनन्दसन्दायको हर्षोत्पादको मुखचन्द्रिरो वदनचन्द्रो यस्य तथाभूतः, जीवन्धरो गन्धोत्कटसुतः, पूर्वं प्राक्, धैर्येण धीरत्वेन, सह साकम्, मदीयमानसं मच्चित्तम्, अपहृत्य चोरयित्वा, क्वापि कुत्रापि, निर्गतः प्रयातः, इति न ज्ञायते बुध्यते, तत्प्राप्तिस्तदुपलब्धिः, मम, कथं केन प्रकारेण, भविष्यति, इत्येवम्, पृच्छाञ्चक्रे पृच्छति स्म ।

इति वाचमिति—इति पूर्वोक्ताम्, वाचं वाणीम्, श्रुत्वा निशम्य, क्षणमल्पकालपर्यन्तम् तूष्णीमवस्थितो निःशब्दं विद्यमानः, वदतां वक्तॄणाम्, वरः श्रेष्ठः, द्विजातिवृद्धो ब्राह्मणातिस्थविरः, असौ, मधुरं मनोहरं यथा स्यात्तथा, उवाच जगाद ॥ २४ ॥

अयि पयोजनयने इति—हे पयोजनयने हे कमललोचने, बाह्योद्यानविराजमानस्य बाह्योपवनविशोभमानस्य, पूजया सपर्यया, प्रसन्नस्य प्रसन्नचेतसः, कामदेवस्य मदनस्य, कृपाकटाक्षैर्दयापाङ्गैः, साक्षात्कृतः प्रत्यक्षं निरीक्षितः, जीवन्धरो गन्धोत्कटसूनुः, तव भवत्याः, मनोरथलतामीप्सितवल्लरीम्, अङ्कुरयिष्यति समुत्पादयिष्यति ॥

विचिकित्सेति—हे विशालाक्षि हे दीर्घलोचने ! अत्र कार्ये, निरङ्कुशा स्वच्छन्दा, विचिकित्सा संशयः, न कार्या न विधातव्या, हे तनुमध्यमे हे कृशावलग्ने, कामकोष्ठस्य मदनागारस्य, गमनेऽभियाने, त्वरैव शीघ्रतैव साधीयसी विद्यत इति शेषः ॥ २५ ॥

तदनु हृदीति—तदनु तदनन्तरम्, कमलविमलनेत्री नीरजनिर्मलनयना, सा सुरमञ्जरी, हृदि स्वकीयचेतसि, कामितार्थमभिलषितपदार्थम्, करस्थं हस्तस्थितम्, विदित्वा ज्ञात्वा, सखीभिः सहचरीभिः, सगता संयुता, मधुरं मनोहरं यथा स्यात्तथा शिञ्जन्ति शब्दं कुर्वाणानि मञ्जीराणि तुलाकोट्यो ययोस्तथाभूतौ पादौ चरणौ यस्याः सा, मणिमयं रत्नमयम्, याप्ययानं शिविकाम्, अधिरूढाधिष्ठिता, सती प्रतस्थे प्रययौ । मालिनीच्छन्दः ॥ २६ ॥

ततश्चेति—ततश्च तत्पश्चाच्च, चकितसारङ्गस्य भीतकुरङ्गस्येव विलोचने नयने यस्यास्तथाभूता । सा पूर्वोक्ता, सुरमञ्जरी, द्विजवृद्धं विप्रप्रवयसम्, पुरोधायाग्रेकृत्वा, कामालयं मदनमन्दिरम्, एत्य प्राप्य, वामा मनोहरा अलकाश्चूर्णकुन्तला यासां ताभिः, आलीभिः सखीभिः, समानीता आलम्भिता ये सुरभिकुसुमाद्यः सुगन्धिपुष्पप्रभृतयस्तैः, तत्पूजां कामार्चाम्, निर्वर्तयामास चकार ।

रहसि कुसुमबाण प्रार्थयामास तन्वी
मुकुलितकरपद्मा त्व तथा कल्पयेति ।
मलयजरसलिप्ते मौक्तिकस्फारहारे
मदुरसि कुचभागे जीवकोऽसौ यथा स्यात् ॥२७॥

इति प्रार्थनामनुसरन्ती क्वचिदन्तर्हितस्य बुद्धिषेणस्य 'लब्धो वर' इति वाणीमेणाक्षी कामदेवस्य कृपासारविलसितवचोधारा मत्वा, प्रमोदमेदुरमानसा, किञ्चित्कन्धरा विनिवृत्य, पुरतो विराजमानम्, बहिरागतमिव साक्षात्कामदेवम्, जङ्गममिव कनकगिरिशृङ्गम्, सञ्चरन्तमिव नयनानन्दम्, साङ्गमिव शृङ्गाररसम्, साकारमिवाद्भुतरसप्रकारम्, सरूपधेयमिव निजभागधेयम्, लक्ष्मीविश्रान्त्यर्थमाकलितहैमशिलातलायमानललाटफलकम्, विशालविवृद्धिरोधाय बद्धसेतुवदायतनासावशम्, श्रु[1]ताङ्गालीलाडोलायमानमणिकुण्डलमण्डितश्रवणयुगल लक्ष्मीविहारधारागृहशङ्कावदान्यमुक्ताहारकान्तिस्वच्छजलशोभितवक्ष स्थल रम्भातरुसम्भावनासम्पादकसुवृत्तोरुयुगल कोकनदमदहरपदपल्लव कुरुवीर विलोकयामास ।

तन्वा रोमाञ्चकम्पौ नयनकलयो समदाश्रुप्रवास
वक्त्रेन्दौ मन्दहास घनजघनतटे घर्मतोयप्रचारम् ।
चित्ते ह्रीभीतिमोदाद्भुतरसमयता मारसतापमङ्गे
सेय सारङ्गनेत्री कुरुकलभमिम वीक्ष्य तूर्ण बभार ॥२८॥

रहसीति—रहसि विजने, तन्वी कृशाङ्गी, सा सुरमञ्जरी, मुकुलितकरपद्मा कुड्मलितहस्तारविन्दा सती कुसुमबाण मदनम्, त्व मदन, तथा तेन प्रकारेण, कल्पय कुरु, यथा येन प्रकारेण, असौ प्रसिद्ध, जीवको जीवन्धर, मलयजरसलिप्ते चन्दनलिप्ते, मौक्तिकस्फारहारे मुक्तामयविशालहारे, मदुरसि मदीयवक्षसि, कुचभागे स्तनप्रदेशे, स्याद्भवेत्, इति, प्रार्थयामास ययाचे । मालिनीच्छन्द ॥२७॥

इति प्रार्थनामिति—इति पूर्वोक्तप्रकाराम्, प्रार्थना याच्ञाम्, अनुसरन्तीमनुगच्छन्तीम्, क्वचित्-क्वापि, अन्तर्हितस्य तिरोहितस्य, बुद्धिषेणस्य तन्नाममित्रस्य, वरो जीवन्धर, लब्ध प्राप्त, इत्येवम्, वाणी भारतीम्, कामदेवस्य कन्दर्पस्य, कृपासारेण दयासारेण विलसिता शोभिता या वचोधारा वचनपङ्क्तिस्ताम्, मत्वा ज्ञात्वा, प्रमोदेन प्रहर्षेण मेदुर व्याप्त मानस चित्त यस्या सा, एणाक्षी मृगलोचना, सुरमञ्जरी, कन्धरा ग्रीवाम्, किञ्चिन्मनाक्, विनिवृत्य वक्रीकृत्य, पुरतोऽग्रे, विराजमान शोभमानम्, बहिरागत बहि प्राप्तम्, साक्षात् स्वयम्, कामदेवमिव प्रद्युम्नमिव, जङ्गम गतियुक्तम्, कनकगिरिशृङ्गमिव सुमेरुशिखरमिव, सञ्चरन्त प्रचलन्तम्, नयनानन्दमिव चक्षुप्रमोदमिव, साङ्ग सशरीरम्, शृङ्गाररसमिव प्रथमरसमिव, साकार सविग्रहम्, अद्भुतरसप्रकारमिव विस्मयरससस्थानमिव, सरूपधेय रूपसहितम्, निजभागधेयमिव स्वकीयभाग्यमिव, लक्ष्मीविश्रान्त्यर्थं कमलाविश्रमाय, आकलित धृत हैमशिलातलायमान सुवर्णशिलासदृश ललाटफलक निटिलतट येन तम्, विशाला प्रभूता या विवृद्धिस्तस्या रोधाय निवारणाय, बद्धो रचितो य सेतु पुलिन तद्वत्, आयतो दीर्घो नासावशो यस्य तम्, श्रुताङ्गाया सरस्वत्या लीलाडोलायमानाभ्या क्रीडान्दोलिकावदाचरद्भ्या मणिकुण्डलाभ्या रत्नमयकर्णालङ्काराभ्या मण्डित शोभित श्रवणयुगल कर्णयुग यस्य तम्, लक्ष्म्या श्रिया विहारधारागृहस्य क्रीडाधाराममन्दिरस्य शङ्काया सदेहे वदान्य उदारो यो मुक्ताहारो मौक्तिकयष्टिस्तस्य कान्तिर्दीप्तिरेव स्वच्छ निर्मल यज्जल सलिल तेन शोभित समुद्भासित वक्ष स्थलमुर स्थल यस्य तम्, रम्भातरुसम्भावनाया कदलीपादपो प्रेक्षाया सम्पादक विधायक सुवृत्तोरुयुगल वर्तुलस्थूलसक्थियुग यस्य तम्, कोकनदस्य रक्तकमलस्य मदहरौ गर्वापहारकौ पदपल्लवौ चरणकिसलयौ यस्य तम्, कुरुवीर जीवन्धरम्, विलोकयामास अद्राक्षीत् ।

तन्वा रोमाञ्चकम्पाविति—सारङ्गस्येव नेत्रे यस्यास्तथाभूता मृगलोचना, इय सा सुरमञ्जरी,

---

१ श्रुताङ्गाना ब० ।

तदनु पार्श्वतो वृद्धमसमीक्ष्य निरर्गलव्रीलतरलनयना नमितवदना जीवन्धरस्तत्क्षणमालिङ्ग्य, कपोले परिचुम्ब्य, निजाङ्कमारोप्य, चाटुवचनपरिपाटीभिश्चूर्णवासादिकथाभिश्च प्रीतेः परां काष्ठां प्रापयामास।

विकचकुसुमतल्पे वृद्धरूपः शयानः
कुरु पदयुगलीसंवाहमित्यब्रवीत्ताम्।
हृदि विलसितरागां तां तथा कुर्वतीं द्राक्
सहचरकुलमेतं वीक्ष्य तुष्टाव हृष्टम्॥ २९॥

ततश्चतुरन्तयानमारुह्य सखीभिः सह निजमन्दिरान्तरं प्रविष्टायां सुरमञ्जर्यां वयस्याजनमुखविदितवृत्तौ तौ मातापितरौ सुमतिकुबेरदत्तनामधेयौ तत्क्षणकन्दलितानन्दमन्थरौ विवाहमङ्गलं विस्तारयितुमारभेताम्।

ततः कुबेरदत्तेन मुहूर्ते शुभसंगते।
विश्राणितां वरश्रोणीं करे जग्राह कौरवः॥३०॥

---

इमं पूर्वोक्तम्, कुरुकलभं जीवन्धरम्, वीक्ष्य विलोक्य, तूर्णं क्षिप्रम्, तन्वा शरीरे रोमाञ्चश्च कम्पश्चेति रोमाञ्चकम्पौ पुलकवेपथू, नयनकमलयोर्नेत्रारविन्दयोः, समदाश्रुप्रवाहं हर्षाश्रुपूरम्, वक्त्रेन्दौ मुखचन्द्रमसि, मन्दहासं मनाग्हसितम्, घनजघनतटे स्थूलनितम्बप्रान्ते, घर्मतोयप्रचारं स्वेदजलसंचारम्, चित्ते मनसि, ह्रीर्लज्जा भीतिर्भयं मोदो हर्षः अद्भुतं विस्मयः, एत एव रसास्तन्मयतां तद्रूपताम्, अङ्गे देहे, मारसन्तापं मदनदाहम्, च, बभार दधार। स्रग्धराच्छन्दः॥२८॥

तदन्विति—तदनु तदनन्तरम्, पार्श्वतः समीपे, वृद्धं द्विजस्थविरम्, असमीक्ष्यानवलोक्य, निरर्गलेन निष्प्रतिबन्धेन व्रीलेन लज्जया तरले चपले नयने यस्यास्ताम्, व्रीडव्रीलादिशब्दयोर्यथेच्छं प्रयुज्यन्ते। तथाहि 'गण्डूषगर्जभुजजागरहारकीलज्वालाझटारमसवर्तकगर्द्धश्रृङ्गाः। व्रीडादयश्च वरटश्च वराटकश्च उत्कण्ठबाणकरकाश्च समावयाश्च'। इति स्त्रीपुलिङ्गः कथने रभसः। नमितवदनां नम्रवक्त्राम्, तां सुरमञ्जरीम्, जीवन्धरः, तत्क्षणं तत्कालम्, आलिङ्ग्य समाश्लिष्य, कपोले गण्डे, परिचुम्ब्य परितश्चुम्बनं विधाय, निजाङ्कं स्वकीयोत्सङ्गम्, आरोप्याधिष्ठाप्य, चाटुवचनपरिपाटीभिः प्रियवाक्परम्पराभिः, चूर्णवासादिकथाभिश्च चतुर्थलम्बवर्णितचूर्णामोदादिचर्चाभिश्च, प्रीतेः प्रेम्णः, परामन्तिमाम्, काष्ठामवधिम्, प्रापयामास लम्भयामास।

विकचकुसुमतल्प इति—विकचकुसुमानां प्रस्फुटितपुष्पाणां तल्पे शयने, शयानः शयनं कुर्वाणः, वृद्धरूपः स्थविरवेषः, जीवन्धरः, पदयुगलीसंवाहं चरणयुगसमर्दनम्, कुरु विधेहि, इति, तां सुरमञ्जरीम्, अब्रवीत् जगाद। अथ च, हृदि चेतसि, विलसितरागां प्रकटितप्रीतिम्, तथा तादृशाम्, द्राक् सत्वरम्, कुर्वतीं विदधतीम्, तां सुरमञ्जरीम्, वीक्ष्य विलोक्य, सहचरकुलं मित्रसमूहः, हृष्टं प्रहर्षोपेतं सत्, एतं स्वामिनम्, तुष्टाव स्तौति स्म। मालिनीच्छन्दः॥२९॥

ततश्चतुरन्तयानमिति—ततस्तदनन्तरम्, सुरमञ्जर्याम्, चतुरन्तयानं शिविकावाहनम्, आरुह्य समधिष्ठाय, सखीभिरालीभिः, सह सार्धम्, निजमन्दिरान्तरं स्वकीयभवनाभ्यन्तरम्, प्रविष्टायां कृतप्रवेशायां सत्याम्, वयस्याजनमुखादालीजनवदनाद्विदितो ज्ञातो वृत्तान्तः समाचारो याभ्यां तौ सुमतिकुबेरदत्तनामधेयौ, मातापितरौ, 'आनङ्ऋतो द्वन्द्वे' इति पूर्वपदस्यानङ्, तत्क्षणकन्दलितानन्दमन्थरौ तत्कालाध्वतप्रमोदभारौ, सन्तौ, विवाहमङ्गलं परिणयोत्सवम्, विस्तरयितुं प्रपञ्चयितुम्, आरभेताम् प्रक्रमं चक्रतुः।

ततः कुबेरदत्तेनेति—ततस्तदनन्तरम्, कौरवो जीवन्धरः, शुभसंगते कल्याणप्रदे, मुहूर्ते समये, कुबेरदत्तेन एतन्नाम्ना वैश्यपतिना, विश्राणितां प्रदत्ताम्, वरश्रोणीं श्रेष्ठनितम्बाम्, तां सुरमञ्जरीमिति यावत्, करे पाणौ, जग्राह स्वीकृतवान्, परिणिनायेति यावत्॥३०॥

बाला शम्बरशत्रुशास्त्रपदवीशाला रसाम्भोनिधे-
वेला श्लाघ्यतमोल्लसद्गुणमणीशीला मरालीगतिम् ।
नीलाम्भोरुहलोचना शशिलसत्फाला सुमुक्तावली-
माला ता रमयन्नय स्मितसुधालीलापद प्राप स ॥३१॥

*इति महाकविहरिचन्द्रविरचिते श्रीमति जीवन्धरचम्पूकाव्ये*
*सुरमञ्जरीलम्भो नाम नवमो लम्भ ।*

---

बालामिति—पदव्या मार्गे विद्यमाना शाला भवन पदवीशाला, शम्बरशत्रुशास्त्रस्य कामशास्त्रस्य पदवीशाला ताम्, रस एवाम्भोनिधिस्तस्य स्नेहसागरस्य, वेला तीरभूमिम्, श्लाघ्यतममतिशयेन प्रशसनीय-मुल्लसच्छोभमान गुणमणीशील श्रेष्ठगुणमयनिसर्गो यस्यास्ताम्, मरालीगति हसगमनाम्, नीलाम्भोरुहलोचना नीलोत्पलनयनाम्, शशीव चन्द्र इव लसच्छोभमान फालो भालो यस्यास्ताम्, सुष्ठु मुक्तावलीमाला यस्यास्ताम्, ता पूर्वोक्ताम्, बाला सुरमञ्जरीम्, रमयन् क्रीडयन् , उपभुञ्जान इति यावत् , सोऽय जीवन्धर , स्मितसुधाया मन्दहसितपीयूषस्य लीलापद क्रीडास्थानम्, प्राप लेभे ॥३१॥

इति महाकविहरिचन्द्रविरचिते श्रीमति 'कौमुदी' व्याख्याधरे जीवन्धरचम्पूकाव्ये
सुरमञ्जरीलम्भो नाम नवमो लम्भ ।

## दशमो लम्भः

तत कुरुकुमार सुरमञ्जरीवदनात्कथञ्चिदुदञ्चितानुमति, तत्सदनान्निर्गत्य सकलसहचरनिकरपरिमेदुरपार्श्वभाग स्वकीयनिकाय्यमासाद्य, पित्रोर्नेत्राणि पीयूषाञ्जनैरिव रञ्जयामास।

नत पादाम्भोजे नयनसुभग वीक्ष्य तनुज
परिष्वज्य प्रेम्णा शिरसि पुनराघ्राय च मुहु ।
दृशा पाय पाय तनयवदनाम्भोरुहसुधा
श्रवोभ्या वाङ्माध्वी सुखममितमातेनतुरिमौ ॥ १ ॥

वाचामभूमिं मुदमाससाद गन्धर्वदत्ता तमिम समीक्ष्य ।
उपागत गेहमुदारसत्त्वमुवाच चैव कमलायताक्षी ॥ २ ॥

आर्यपुत्र, सा खलु गुणमाला भवदीयविरहाशुशुक्षणिकृशिततनुलता, क्षणे क्षणे ताम्यति मुह्यति मूर्च्छति च, अतस्तामम्भोरुहाक्षी प्रथमत सम्भाव्यात्रागन्तुमर्हसीति ।

विवेश गुणमालायास्तनो गेह कुरूद्वह ।
एकान्ते ता विलोक्यायमालिलिङ्ग च सगत ॥ ३ ॥

आर्यपुत्र मन्निमित्त खल्वेतावद्दुखमनुभूतवानस्यतो मन्दभाग्या मा मा सस्पृशेति सविषादमुक्तो

---

तत इति—ततस्तदनन्तरम्, कुरुकुमारो जीवन्धर, सुरमञ्जरीवदनान्नवोढावक्त्रात्, कथञ्चित्केनापि प्रकारेण, उदञ्चिता प्राप्तानुमतिराज्ञा येन स तथाभूत सन्, तस्या सुरमञ्जर्या सदनाद्भवनात्, निर्गत्य नि सृत्य, सकलसहचरनिकरेण निखिलमित्रमण्डलेन परिमेदुरो मिलित पार्श्वभाग समीपप्रदेशो यस्य तथाभूत सन्, स्वकीयनिकाय्य निजनिकेतनम्, आसाद्य प्राप्य, पित्रोर्मातापित्रो नेत्राणि नयनानि, पीयूषाञ्जनैरिव सुधाञ्जनैरिव, रञ्जयामास रञ्जयति स्म रागयुक्तानि चकारेति भाव ।

नत पादाम्भोज इति—अयञ्च इयञ्चेतीमौ मातापितरौ, पादाम्भोजे चरणकमले, नत नम्रम्, नयनसुभग नेत्रप्रियम्, तनुज पुत्रम्, वीक्ष्य समवलोक्य, प्रेम्णा प्रीत्या, परिष्वज्य समालिङ्ग्य, पुनरनन्तरम्, मुहुर्भूयोभूय, शिरसि मूर्ध्नि, आघ्राय च घ्राणविषयीकृत्य च, तनयवदनाम्भोरुहसुधा पुत्रमुखकमलपीयूषम्, दृशा दृष्ट्या, वाङ्माध्वी वचनमधु, श्रवोभ्या श्रवणाभ्याम्, पाय पाय पीत्वा पीत्वा, अमितमपरिमितम्, सुख शर्म, आतेनतुर्विस्तारयामासतु । शिखरिणीच्छन्द ॥ १ ॥

वाचामभूमिमिति—कमले इवायते अक्षिणी यस्या सा, गन्धर्वदत्ता खचरेन्द्रपुत्री, गेह गृहम्, उपागत प्राप्तम्, उदारसत्त्वमुत्कृष्टबलयुक्तम्, तमिम प्रसिद्धम्, जीवन्धरम्, समीक्ष्य दृष्ट्वा, वाचा वचनानाम्, अभूमिमपात्रम्, मुदमानन्दम्, आससाद प्राप, एव वक्ष्यमाणप्रकारेण, उवाच च जगाद च ॥ २ ॥

आर्यपुत्रेति—खलु निश्चयेन, सा प्रसिद्धा, गुणमाला भवद्वल्लभा, भवदीयविरहाशुशुक्षणिना त्वद्विरहानलेन कृशिता क्षीणा तनुलता शरीरवल्लरी यस्यास्तथाभूता सती, क्षणे क्षणे प्रतिसमयम्, ताम्यति दु खीभवति, मुह्यति मोह करोति, मूर्च्छति च मूर्च्छां प्राप्नोति च । अत कारणत्, ता प्रसिद्धा, अम्भोरुहाक्षीं कमललोचनाम्, प्रथमत पूर्वम्, सम्भाव्य सन्तोष्य, अत्रेह, आगन्तुम् अर्हसीति योग्योऽसीति ।

विवेशेति—ततस्तदनन्तरम्, कुरूद्वह सत्यन्धरसुत, गुणमालाया द्वितीयपत्न्या, गेह भवनम्, विवेश प्रविशति स्म, एकान्ते रहसि, ता गुणमालाम्, विलोक्य दृष्ट्वा, अय सगत सप्राप्त सन्, आलिलिङ्ग च समाश्लेषण चकार च ॥ ३ ॥

आर्यपुत्र मन्निमित्तमिति—हे आर्यपुत्र हे हृदयवल्लभ, मन्निमित्त मत्कारणम्, खलु निश्चयेन, एतावत् इयत्परिमाणम्, दु खमशर्म, अनुभूतवानसि समनुबभूविथ, अतोऽस्मात्कारणात्, मन्दभाग्यामलब-

जीवन्धर , तरुणि तरुणारुणकिरणविकसदम्बुजवदने भवदीयपूर्वकृतसुकृतप्रभावेनैवैतादृश सवृत्तोऽन्यथा पुनर्बहुतरदु खमनुभवेयमिति ता समाश्वास्य, क्रमेण गन्धर्वदत्तानिलय निजालय चागत्य,तत्र मन्त्रविदामग्रणीर्गन्धोत्कटेन साक मन्त्रयित्वा, वयस्यवलयविलसितपार्श्वभागो मनोजवगन्धर्वबन्धनेन स्यन्दनेन कामनीयकसीमाकोश विदेहदेशमशिश्रियत् ।

धरणीतिलकाख्यया प्रतीता नगरी तत्र जगाम कौरव ।
अधितिष्ठति या स्वमातुल स पतिगोविन्दमहीपचन्द्रमा ॥ ४ ॥

तावद्विदितोदन्तेन गोविन्दमहीकान्तेन प्रशासितपुरुषपरिष्कृतासु विकीर्णविमलकुसुमकुलसौगन्ध्यसमाहूतपुष्पन्धयझङ्कारमेदुरविविधवाद्यरवमुखरासु दिदृक्षापरवशपौरजनसमर्दनिवारणपरराजचरकरचपलकनकवेत्रलताकान्तिबालातपशीलासु हर्म्याग्रनिबद्धपताकापटवितानछत्रचामरादिभिर्निवारितदिनकरकरजालासु प्रतोलीषु सक्रीडद्भि शताङ्गै प्रविशमान वेलातीतविलोकनकुतूहलचन्द्रशालासमिलितलोलाक्षीजनकटाक्षखेलाकलितनीलोत्पलमालामादधानास्ते जीवन्धरपुर सरा कुमारा क्रमेण राजमन्दिरमाविविशु । तत्र च ।

---

सुकृताम्, मा गुणमालाम्, मा सस्पृश नो स्पृष्टा कुरु, इति, सविषाद सखेद यथा स्यात्तथा, उक्तो निवेदित , जीवन्धरो जीवक , तरुणारुणस्य मध्याह्नसूर्यस्य किरणैर्मयूखैर्विकसत्प्रस्फुटद् यदम्बुज कमल तद्वद्वदन मुख यस्यास्तत्सम्बुद्धौ हे तरुणारुणकिरणविकसदम्बुजवदने, तरुणि युवति, भवदीय त्वदीय यत्पूर्वकृतसुकृत पुराविहितपुण्य तस्य प्रभावेणैव माहात्म्येनैव, एतादृश ईदृक्प्रकार , सवृत्तो भूत , अन्यथा इतरथा, पुनर्भूय , बहुतरदु ख विपुलासातम्, अनुभवेयम्, इतीत्थम्, ता गुणमालाम्, समाश्वास्य सम्बोध्य, क्रमेण क्रमश , गन्धर्वदत्तानिलय खेचरसुतासदनम्, निजालय स्वभवनञ्च, आगत्य समेत्य, तत्र स्वभवने, मन्त्रविदा मन्त्रज्ञानाम्, अग्रणी प्रधान , स , गन्धोत्कटेन वैश्येशेन, साक सार्धम्, मन्त्रयित्वा विमर्श कृत्वा, वयस्यवलयेन मित्रसमूहेन विलसित शोभित पार्श्वभागो यस्य तथाभूत सन् , मनोजवस्य मानसरयस्य गन्धर्वस्य हयस्य बन्धन वहन यस्य तेन, स्यन्दनेन रथेन, कामनीयकसीमाया सौन्दर्यावधे कोशो निधान तम्, विदेहदेश विदेहजनपदम् । अशिश्रियत् श्रयति स्म, तत्र जगामेति भाव ।

धरणीतिलकाख्ययेति—कौरवो जीवन्धर , तत्र विदेहदेशे, धरणीतिलकाख्यया धरणीतिलकेति नाम्ना, प्रतीता प्रसिद्धाम्, ता नगरी पुरीम्, जगाम वव्राज, याम्, स्वमातुल स्वकीयमाम , स प्रसिद्ध , पतिश्चासौ गोविन्दमहीपचन्द्रमाश्चेति पतिगोविन्दमहीपचन्द्रमा स्वामिगोविन्दराजश्रेष्ठ, अधितिष्ठति समधिवसति ॥ ४ ॥

तावदिति—तावत् तावत्कालपर्यन्तम्, विदितोदन्तेन ज्ञातसमाचारेण, गोविन्दमहीकान्तेन गोविन्दराजेन, प्रशासिता आज्ञापिता ये पुरुषास्तै परिष्कृता सहितास्तासु, विकीर्णानि यत्र तत्र प्रक्षिप्तानि यानि विकचविमलकुसुमकुलानि प्रस्फुटितनिर्मलप्रसूनसमूहास्तेषा सौगन्ध्येन सौरभ्येण समाहूता आकारिता ये पुष्पन्धया भ्रमरास्तेषा झङ्कारेण गुञ्जनशब्देन मेदुरा मिलिता ये विविधवाद्यरवा नैकविधवादित्रशब्दास्तैर्मुखरा शब्दायमानास्तासु, द्रष्टुमिच्छा दिदृक्षा तस्या परवशा आयत्ता ये पौरजना नागरिकनरास्तेषा समर्दस्य सघातस्य निवारणे निराकरणे परा लीना ये राजचरा नृपतिदूतास्तेषा करैर्हस्तैश्चपलाश्चञ्चला या कनकवेत्रलता सुवर्णवेत्रवल्लर्यस्तासा कान्तिभिर्दीप्तिभिर्बालातपशीलासु प्रात कालिकलोहितघर्मयुक्तासु, हर्म्याग्रेषु भवनाग्रभागेषु निबद्धा निस्यूता या पताका वैजयन्त्यस्तासा पटा वस्त्राणीति हर्म्याग्रनिबद्धपताकापटा , ते च वितानानि चोल्लोचाश्च छत्राणि चातपवारणानि च चामराणि च प्रकीर्णकानि चेति द्वन्द्वस्तान्यादौ येषा तै , निवारित दूरीकृत दिनकरकरजाल मार्तण्डमरीचिमण्डल यासु तासु, प्रतोलीषु रथ्यासु, सक्रीडद्भिश्चलद्भि , शताङ्गै रथे , प्रविशमाना प्रवेश कुर्वाणा , विलोकनस्य कुतूहलमिति विलोकनकुतूहल दर्शनकौतुकम्, वेलातीत निर्मर्याद यद् विलोकनकुतूहल तेन, चन्द्रशालासु भवनोपरिभागेषु समिलिता समुपस्थिता ये लोलाक्षीजना ललनासमूहास्तेषा कटाक्षखेलाभिरपाङ्गसचारै कलिता समुत्पादिता

गोविन्दभूपतिरिम कुरुवशकेतु-
मालिङ्ग्य मोदविवश स्फुटरोमहर्ष ।
आपृच्छ्य सौख्यमखिलाश्च यथोचित तान्
समान्य साधु विदधे विविधोपचारान् ॥ ५ ॥

अथ सचिवकुलेन जीवन्धरेण च सहितो गोविन्दमहीपति कुरुवीर पञ्चाननचञ्चदासने का ष्ठाङ्गार च मृत्युवदने कदनेन निधत्सुर्मन्त्रशालामधिष्ठितो मितजनपरिवृतोऽपि रत्नभित्तिसक्रान्तप्रतिमाभिरनेकपुरुषपरिवृत इव शोशुभ्यमान समन्त्रयितुमारेभे ।

ततो विदितमेदिनीकमनभावकूलङ्कषा
नयाम्बुनिधिपारगा जगदुरञ्जसा मन्त्रिण ।
महीश स हि वञ्चनाकलितचित्तवृत्ती रिपु
प्रतारयितुमद्य नो विनयपत्रिका प्राहिणोत् ॥ ६ ॥

कदाचिन्मत्तदन्तावल पाटितालानो निर्मूलितनिगल सक्षुभितकटक सकलभटघटादुरासद सत्यन्धरवसुन्धरापतिमन्दिरोपकण्ठसञ्चार, कोपान्निर्गत तमेनमस्मत्प्राणायमान निहत्य, निखिलपौरलोक शोकपारावारे मामकीर्तिपूरे च निमज्जयामास ।

---

या नीलोत्पलमाला कुवलयपङ्क्तिस्ताम्, आदधाना धृतवन्त, ते पूर्वोक्ता, जीवन्धरपुर सरा जीवकप्रमुखा, कुमारा, क्रमेण क्रमश, राजमन्दिर नृपेन्द्रनिकेतनम्, आविविशु प्रविशन्ति स्म । तत्र च राजभवने ।

गोविन्दभूपतिरिति—गोविन्दमहाराज, इम पूर्वोक्तम्, कुरुवशकेतु जीवन्धरम्, आलिङ्ग्य समाश्लिष्य, मोदविवशो हर्षपरवश, स्फुटरोमहर्ष प्रकटितरोमाञ्च सन्, सौख्य कुशलम्, आपृच्छ्य समन्तात् पृष्ट्वा, अखिलान् समग्रान्, तान् कुमारान्, यथोचित यथायोग्य यथा स्यात्तथा, समान्य सत्कृत्य, साधु सुष्ठु यथा स्यात्तथा, विविधोपचारान् नैकविधसत्कारान्, विदधे चक्रे ॥५॥

अथ सचिवकुलेनेति—अथोपचारानन्तरम्, सचिवकुलेन मन्त्रिसमूहेन, जीवन्धरेण स्वकीयभागिनेयेन च, सहितो युक्त, गोविन्दमहीपतिर्विदेहधरावल्लभ, कुरुवीर जीवन्धरम्, पञ्चाननै सिहैश्चञ्चच्छोभमान यदासन विष्टर तस्मिन्, काष्ठाङ्गारञ्च सत्यन्धरनृपतिघातकञ्च, मृत्युवदने यमवक्त्रे, समरेण, निधातुमिच्छुर्निधित्सु, मन्त्रशाला मन्त्रागारम्, अधिष्ठितस्तत्र स्थित सन्, मितजनैरल्पनरै परिवृतोऽपि परीतोऽपि, रत्नभित्तिषु मणिकुड्येषु सक्रान्ता प्रतिफलिता या प्रतिमा प्रतिकृतयस्ताभि, अनेकपुरुषपरिवृतनानाजनपरीत इव, शोशुभ्यमानोऽतिशयेन भ्राजमान, सन्, समन्त्रयितु गुप्तमन्त्रणा कर्तुम्, आरेभे तत्परो बभूव ।

ततो विदितमेदिनीति—ततस्तदनन्तरम्, विदिता ज्ञाता मेदिनीकमनस्य राज्ञो भावकूलङ्कषाभिप्रायतरङ्गिणी यैस्ते, नय एवाम्बुनिधिरिति नयाम्बुनिधिर्नीतिपारावारस्तस्य पार गच्छन्तीति नयाम्बुनिधिपारगा मन्त्रिण सचिवा, अञ्जसा याथार्थ्येन, जगदु कथयामासु, हे महीश हे नृपाल, वञ्चनाकलिता प्रतारणायुता चित्तवृत्तिर्मनोवृत्तिर्यस्य तथाभूत, स रिपु काष्ठाङ्गार, हि निश्चयेन, नोऽस्मान्, प्रतारयितु छलयितुम्, अद्येदानीम्, विनयपत्रिका नम्रतासूचकदलम्, प्राहिणोत् प्रेषितवान् । पृथ्वीच्छन्द ॥६॥

कदाचिदिति—कदाचिज्जातुचित्, पाटितालान उन्मूलितबन्धनस्तम्भ, निर्मूलितनिगलो दूरीकृतनिगड, सक्षुभितकटक सञ्चलितसैन्य, सकलभटघटया निखिलयोद्धृसमूहेन दुरासदो धर्तुमशक्य, सत्यन्धर वसुन्धरापते सत्यन्धरभूपालस्य मन्दिरोपकण्ठे भवनसमीपे सचारो गमन यस्य तथाभूत, मत्तदन्तावलो मत्तगजेन्द्र, कोपात्क्रोधात्, निर्गत भवनाद् बहिर्यातम्, अस्मत्प्राणायमान मत्प्राणवदाचरन्तम्, एन त प्रसिद्धम्, सत्यन्तरवसुधारमणम्, निहत्य मारयित्वा, निखिलपौरलोक सकलनागरिकजनम्, शोकपारावारे विषादसागरे, मा काष्ठाङ्गारञ्च, अकीर्तिपूरे 'सत्यन्धरोऽनेन मारित' इति दुर्यशसि, निमज्जयामास निमग्न चकार ।

अघेन मयि विस्तृता मिलदकीर्तिमेता भवान्
प्रभाकर इवाम्बुजाकरवरे हिमानीं तताम् ।
विनाशयितुमर्हति क्षितिपते दयावारिधे
तत पुरमुपागतो मम च मित्रता लालय ॥ ७ ॥

इति शात्रवसन्देशमाकर्ण्य कन्दलितमन्दहासो गोविन्दमहीपतिर्जीवन्धरवदनारविन्दनर्तित-नयनखञ्जनो बभूव ।

नृप मातुल नि शङ्क मद्भुजोष्मा निरङ्कुश ।
इम न सहते शत्रु तत्कालस्तु प्रतीक्ष्यते ॥ ८ ॥

इति कुरुवीरवचनचातुरीनिशमनधीरधीरमना धरापतिश्चतुरङ्गबलेन राजपुरी प्रति गमन तत्र निजनन्दिनीस्वयवरततन[1] नानादेशनरपतिसमेलनमरातिनिधन च निश्चित्य काष्ठाङ्गारेण सजातसख्य प्रख्यापयन्डिण्डिम सन्ताडयामास ।

चलन्तमिव सागरं निजबल नराणा पति-
र्विलोक्य स समादिशन्निखिलत प्रयाणोद्यमम् ।
चकार च जिनेशिन पदपयोजपूजा मुदा
बहूनि कुतुकान्वित सपदि पात्रदानानि च ॥ ९ ॥

---

अघेन मयीति—हे दयावारिधे हे कृपाकूवार, हे क्षितिपते हे राजन्, भवान्, अम्बुजाकरवरे कमलाकर-श्रेष्ठे, तता व्याप्ताम्, हिमानीं हिमसमूहम्, प्रभाकर इव सूर्य इव, अघेन पापेन, मयि काष्ठाङ्गारे, विस्तृता विततताम्, एता मयानुभूयमानाम्, मिलदकीर्तिं प्राप्यमाणदुर्यश , विनाशयितु दूरीकर्तुम्, अर्हति योग्योऽस्ति, यत , ततस्तस्मात्कारणात्, पुर राजपुरनगरम्, उपागत प्राप्त सन् , मम मित्रता च सौहार्दञ्च, लालय पालय । मैत्रीं रचितु मन्नगरीमागत्य तदपवादो दूरीक्रियतामिति भाव । पृथ्वीच्छन्द ॥७॥

इति शात्रवसदेशमाकर्ण्येति—इतीत्थम्, शत्रुरेव शात्रवस्तस्य सन्देशस्तम्, अथवा शत्रोरय शात्रव स चासौ सन्देशश्चेति त शात्रवसन्देश रिपुवाचिकम्, आकर्ण्य निशम्य, कन्दलितो धृतो मन्दहासो मन्दहसित येन स , गोविन्दमहीपति , जीवन्धरस्य वदनारविन्दे लपनपद्मे नर्तितौ सचारितौ नयनखञ्जनौ नेत्रखञ्जरीटौ यस्य तथाभूतो बभूव ।

नृप मातुलेति—हे नृप हे राजन्, हे मातुल हे मातृभ्रात , निरङ्कुशो निष्प्रतिबन्ध , मद्भुजोष्मा मद्बाहुनिदाघता, इममेतम्, शत्रु सपत्नम्, न सहते न तितिक्षति, तु किन्तु, तत्कालस्तस्य मृत्युस्तद्योग्य-समयो वा, प्रतीक्ष्यतेऽपेक्ष्यते ॥ ८ ॥

इति कुरुवीरवचनेति—इत्येवम्, कुरुवीरस्य जीवन्धरस्य वचनचातुर्या वाग्दक्षताया निशमने समाकर्णने धीर्बुद्धिर्यस्य तथाभूत , अधीर क्षुभित मनो हृदय यस्य तथाभूत , धरापतिर्गोविन्दभूपाल , चतुरङ्गबलेन चतुरङ्गसैन्येन, राजपुरी प्रति हेमाङ्गदजनपदराजधानी प्रति, गमन प्रयाणम्, तत्र राजपुर्याम्, निजनन्दिन्या स्वसुताया स्वयवरततन स्वयवरविस्तारम्, नानादेशनरपतीना नैकजनपदराजाना समेलन समुपस्थापनम्, अरातिनिधन काष्ठाङ्गारहतिश्च, निश्चित्य समवधार्य, काष्ठाङ्गारेण सह, सजातसख्य समुत्पन्नसौहार्दम्, प्रख्यापयन् प्रथयन्, डिण्डिम भेरीम्, सन्ताडयामास समन्तात्ताडयति स्म ।

चलन्तमिव सागरमिति—निखिलत समन्तत , चलन्त क्षुभ्यन्तम्, सागरमिव समुद्रमिव, निजबल स्वसैन्यम्, विलोक्य दृष्ट्वा, प्रयाणोद्यम प्रस्थानोपक्रमम्, समादिशन् समाज्ञापयन्, नराणा पति गोविन्दनरेन्द्र , मुदा हर्षेण, जिनेशिनो जिनेन्द्रदेवस्य, पदपयोजयोश्चरणाकमलयो पूजा सपर्या ताम्, कुतुकान्वित कौतुककलित सन्, सपदि झटिति, बहूनि भूयासि, पात्रदानानि च योग्यमनुजेभ्यो विहापितानि च, चकार विदधे । पृथ्वीच्छन्द ॥९॥

---

१ तनन ब० ।

शुभे लग्ने धीरस्तदनु विचचाल क्षितिपती
रथारूढो जीवन्धरमुखकुमारैः परिवृतः ।
विदूरे सैन्येशाः प्रणतशिरसस्तं परिगताः
पुरस्तात्तत्सैन्यं मुकुलितधराभोगमगमत् ॥ १० ॥

तदा भेरीघोषैर्हयनिचयहेषापटुरवै
रथानां चीत्कारैर्मदगजघटाबृंहितभरैः ।
जगत्सर्वं तूर्णं स्थगितमभवद्भास्कररथो
रथैरीर्ष्यावेशादिव स पिहितो रेणुनिकरैः ॥११॥

तदानीं धवलातपत्रडिण्डीरविचित्रा रङ्गत्तुरङ्गमतरङ्गसंगता मत्तद्विपपृथुयादःकुलकलिता विलोलासिलतामत्स्यव्रातपरिवृता तद्वाहिनी वाहिनीव प्रजवं निर्जगाम ।

चलति निखिले सैन्ये यद्रेणुपुञ्जमजृम्भत
प्रसृतममितं व्योम्नि स्फारेभयूथमदाम्बुभिः ।
तदिदमगमच्छान्तिं शुण्डोद्धृतैर्जलशीकरै-
र्हयमुखगलल्लालामालाजालैश्च समन्ततः ॥ १२ ॥

तदनु दुरासदमदाकुलतया ईषदामीलितलोचनैर्दण्डकोटिनिषण्णशुण्डादण्डैरुभयपार्श्वाव-

---

शुभे लग्न इति—तदनु तदनन्तरम्, धीरो गभीरः, रथारूढः स्यन्दनस्थितः, जीवन्धरमुखकुमारैः जीवकप्रमुखकुमारैः, परिवृतः पर्यागतः, क्षितिपती राजा, शुभे उत्तमे, लग्ने समये, विचचाल चलति स्म, प्रणता शिरसो विनतमूर्धानः, सैन्येशाः सेनापतयः, विदूरे किञ्चिद्दूरे, तं नृपम्, परिगताः परीत्य जग्मुः, पुरस्तादग्रे, तत्सैन्यं तद्बलम्, मुकुलितः सकोचितो धराभोगो वसुन्धराविस्तारो येन तथाभूतं सत्, अगमत् जगाम । शिखरिणीच्छन्दः ॥१०॥

तदा भेरीघोषैरिति—तदा गोविन्दभूपालसप्रयाणकाले, हयनिचयस्य वाजिवृन्दस्य हेषापटुरवैः हेषणोच्चशब्दैः, रथानां शताङ्गानाम्, चीत्कारैरव्यक्तशब्दविशेषैः, मदेनोपलक्षिता गजघटेति मदगजघटा मदोन्मत्तहस्तिपङ्क्तिस्तस्या बृंहितभरा गर्जितसमूहास्तैः, सर्वं निखिलम्, जगद् भुवनम्, तूर्णं शीघ्रम्, स्थगितं समाच्छादितम्, अभवद् बभूव, स प्रसिद्धः, भास्कररथः सूर्यस्यन्दनम्, ईर्ष्यावेशादिव मात्सर्यावेशादिव, रथैः स्यन्दनैः, रेणुनिकरैर्धूलिसमूहैः, पिहितः समाच्छादितः । उत्प्रेक्षा । शिखरिणीवृत्तम् ॥११॥

तदानीमिति—तदानीं तस्मिन् काले, धवलातपत्राण्येव श्वेतच्छत्राण्येव डिण्डीराः फेनास्तैर्विचित्रा विलक्षणा, रङ्गत्तुरङ्गमा एव चलदश्वा एव तरङ्गा भङ्गास्तैः संगता सहिता, मत्तद्विपा एव मत्तगजा एव पृथुयादांसि स्थूलजलजन्तवस्तेषां कुलेन समूहेन कलिता युक्ता, विलोलासिलता एव चञ्चलकृपाणवल्लर्य एव मत्स्यव्राता मकरसमूहास्तैः परिवृता परीता, तद्वाहिनी तत्पृतना, वाहिनीव सरिदिव, प्रजवं प्रकृष्टवेगसहितं यथा स्यात्तथा, निर्जगाम निश्चक्राम ।

चलति निखिल इति—निखिले समग्रे, सैन्येऽनीके, चलति गच्छति, सति, व्योम्नि नभसि, स्फाराणि प्रचुराणि यानीभयूथस्य हस्तिसमूहस्य मदाम्बूनि दानवारीणि तैः, प्रसृतं व्याप्तम्, अमितं परिमाणातीतम्, यद् रेणुपुञ्जं धूलिसमूहः, अजृम्भत वर्धते स्म, तदिदं रेणुपुञ्जम्, शुण्डोद्धृतैर्गजकरसमुच्छलितैः, जलशीकरैर्वारिकणैः, हयमुखेभ्यो वाजिवदनेभ्यो गलन्त्यो निःसरन्त्यो या लालामाला लालासमूहास्तासां जलैश्च नीरैश्च, समन्ततः परितः, शान्तिं समाप्तिम्, अगमत्प्रापत् । हरिणीच्छन्दः ॥ १२ ॥

तदन्विति—तदनु तदनन्तरम्, दुरासदो दुष्प्राप्यो यो मदो दानं तेनाकुला व्यग्रास्तेषां भावस्तत्ता तया, ईषद् मनाग् आमीलितानि मुद्रितानि लोचनानि नयनानि येषां तैः, दन्तकोट्या रदनाग्रभागे निषण्णाः स्थापिताः शुण्डादण्डाः करदण्डा येषां तैः, उभयपार्श्वावलम्बितौ पार्श्वद्वयससमानौ वर्णकम्बलौ रक्तकुथपटौ

लम्बितवर्णकम्बलतया गैरिकधातुसान्द्रान् गिरीन्द्रास्तुलयद्भि कर्णान्तावलम्बिकनकाङ्कुशतया कृतकर्णपूरैरिव जङ्गमैरिव कुलाचलै सख्यातीतैर्दन्तावलैराक्रान्तसकलदिशावकाशम्, मुखभागकलितकनकखलिनै समुखागतमाकाशमापिबद्भिरिव चलाचलोष्ठपुटैर्मुहुर्मुहु कम्पितोदररन्ध्रेण परिपूरितभुवनोदरेण हेषारवेण वेगगर्वधूर्वह गरुत्मन्त निर्भर्त्सयद्भिरिव सादिजनकृतजवनिरोधक्रोधघुर्घुरायमाणघोणै परिस्फुरत्प्रोथपुटेन पदे पदे मुक्तपूत्कारेण जवनिपीतमनिलमिव नासिकाविवरेणोद्वमद्भिर्मूर्तिमद्भिरिव रह समूहैर्गन्धर्वैर्बन्धुरम्, सन्दानितघण्टाघणघणात्कारमुखरैश्चक्रक्षुण्णक्षोणीतलै स्यन्दनै परिशोभितम्, भिण्डिपालमण्डलाग्रपट्टसपरश्वधद्रुघणप्रमुखायुधधारिणा पादातेन सनाथम्, मायूरातपत्रसहस्रान्धीकृताष्टदिङ्मुखमनीक पुरोधाय, कैश्चित्प्रयाणैर्गोविन्दराज क्वचन राजपुरीं निकषा निषसाद ।

> तदनु विदितवार्तो माययाऽसौ कृतघ्नो
> दधदिव बहु सख्य प्राहिणोत्प्राभृतानि ।
> अयमपि नरपालो लालयस्तानि सद्य-
> स्तदतिशयितमेतत्प्रेषयामास तस्मै ॥ १३ ॥

---

येषा तेषा भावस्तत्ता तया, गैरिकधातुभिर्लोहितमृत्तिकाविशेषै सान्द्रा निविडास्तान्, गिरीन्द्रान् महापर्वतान् तुलयद्भिरुपमिन्वद्भि, कर्णान्तावलम्बिन श्रवणसमीपावलम्बिन कनकाङ्कुशा सुवर्णाङ्कुशा येषा तेषा भावस्तत्ता तया, कृतकर्णपूरैरिव धृतकर्णाभरणैरिव, जङ्गमैर्गतिशीलै, कुलाचलैरिव कुलपर्वतैरिव, सख्यातीतै रसख्यै, दन्तावलैर्हस्तिभि, आक्रान्तो व्याप्त सकलदिशावकाशो निखिलकाष्ठान्तराल येन तत्, मुखभागे वदनप्रदेशे कलितो धृत कनकखलिन सुवर्णकविका येषा तै, समुखागत पुरस्तात्प्राप्तम्, आकाश गगनम्, आपिबद्भिरिव धयद्भिरिव, चलाचलोष्ठपुटैरतिचपलदशनच्छदपुटै, मुहुर्मुहुर्भूयोभूय कम्पितोदररन्ध्रेण वेपितजठरविवरेण, परिपूरित सम्भरित भुवनोदर जगन्मध्य येन तेन, हेषारवेण हेषणशब्देन, वेगगर्वधूर्वह रयाहङ्कारभारधारिणम्, गरुत्मन्त गरुडम्, निर्भर्त्सयद्भिरिव तिरस्कुर्वद्भिरिव, सादिजनैरारोहिपुरुषै कृतो विहितो यो जवननिरोधो वेगप्रतिबन्धस्तेन समुत्पन्नो य क्रोध कोपस्तेन घुर्घुरायमाणा अव्यक्तशब्दविशेष कुर्वाणा घोणा नासा येषा तै, परिस्फुरत्प्रोथपुटेन प्रकम्पमानघ्राणाग्रभागेन, पदे पदे प्रतिपदमिति यावत्, मुक्तपूत्कारेण प्रकटितपूत्कारध्वनिना, नासिकाविवरेण घ्राणरन्ध्रेण, जवनिपीत वेगगृहीतम्, अनिल पवनम्, उद्वमद्भिरिव प्रकटयद्भिरिव, मूर्तिमद्भि शरीरधारिभि, रह समूहैरिव वेगकलापैरिव, गन्धर्वैर्वाहै 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तय' इत्यमर, बन्धुर मनोहरम्, अतिदूरोन्नता अतिदूरोत्क्षिप्ता ये पताकापटा वैजयन्तीवस्त्राणि तैस्तिरोहित पिहितो रविरथ सूर्यस्यन्दन यैस्तै, सैन्यमेव सागर सैन्यसागर पृतनापारावारस्तस्यावर्तायमानैरम्भसाभ्रमैरिवाचरद्भि, सन्दानिता बद्धा या घण्टास्तासा घणघणात्कारेणाव्यक्तशब्दविशेषेण मुखरैर्वाचालै, चक्रै रथाङ्गै क्षुण्ण चूर्णीकृत क्षोणीतल महीतल यैस्तै, स्यन्दनै शताङ्गै, परिशोभित समुद्भासितम्, भिन्दिपालश्च सृगश्च मण्डलाग्रश्च कृपाणश्च, पट्टिसश्च शस्त्रविशेषश्च परश्वधश्च कुठारश्च, द्रुघणश्च मुद्गरश्चेति भिण्डिपालमण्डलाग्रपट्टिसपरश्वधद्रुघणा ते प्रमुखा प्रधाना येषु तथाभूतानि यान्यायुधानि शस्त्राणि तेषा धारिणा धारकेण, पदातेन पदातिसमूहेन, सनाथ सहितम्, मायूराणि शिखण्डिपिच्छनिर्मितानि यान्यातपत्रसहस्राणि छत्रसहस्राणि तैरन्धीकृतानि श्यामीकृतान्यष्टदिङ्मुखानि येन तथाभूतम्, अनीक सैन्यम्, पुरोधाय पुरस्तात् कृत्वा, कैश्चित्कतिपयै, प्रयाणै प्रस्थानै गोविन्दराजो विदेहवसुधारमण, राजपुरीं निकषा राजपुर्या समीपे, 'अभित परित समया निकषाहाप्रतियोगेऽपि' इति द्वितीया, क्वचन कुत्रापि स्थाने, निषसाद निषण्णो बभूव ।

तदनु विदितवार्त इति—तदनु तदनन्तरम्, विदिता वार्ता यस्य स ज्ञातसमाचार, असौ कृतघ्न काष्ठाङ्गार, मायया छलेन, बहु प्रभूतम्, सख्य मैत्रीम्, दधदिव बिभ्रदिव, प्राभृतानि समुपायनानि, प्राहिणोत् प्रेषयामास । तानि प्राभृतानि, लालयन् स्वीकुर्वन्, अयमेष, नरपालोऽपि गोविन्दभूपालोऽपि,

ततः काष्ठाङ्गारेण निजबलशबलेनाभ्यागत्य बहुधा सम्मानितो गोविन्दमहीपतिः, राजराजपुरीनिकाशां राजपुरीं प्रविश्य, तत्र विविधरत्नचयविचित्रस्वयवरशालां परिकल्प्य, वराहत्रयशोभितचन्द्रकयन्त्रभेदं कन्याशुल्कतया सकलदेशेषु घोषयामास ।

परःसहस्राः प्रथिता महीपाः प्रापुस्तदा तां नगरीं गरिष्ठाम् ।
भेरीरवालोलसमस्तलोकाः सेनारजोभिः पिहिताभ्रभागाः ॥ १४ ॥

स्वयवरगृहे तत्र महीशाः सानुयायिनः ।
मञ्चेषु मिलिता मेरुशृङ्गेष्विव सुरेश्वराः ॥ १५ ॥

तत्र मध्यनिबद्धसम्भ्रमद्यन्त्रभेदिनमतिमानमहिमानं युवानमस्मन्नन्दिनी शशिकलेव प्रदोषं शचीदेवीव पुरन्दरमलंकरिष्यतीति गोविन्दराजेन कारितमारावं निशम्याहमहमिकया चलितेन, वक्षःस्थलविलसितपाटीरपङ्कसंगतकुङ्कुमस्थासकरजःपुञ्जपिञ्जरितदशदिशेन, आक्षेपडोलायमानमुक्ताकलापेन चलितनवमालिकोड्डीनभृङ्गसङ्घसंस्तूयमानयशोविभवेन, अर्धावलम्बितकर्णपूरचुम्ब्यमानगण्डस्थलेन राजकेन स्वयवरमण्डपः स्वयमुच्चलितमिवाभवत् ।

---

तस्मै काष्ठाङ्गाराय, सद्यो झटिति, तदतिशयितं काष्ठाङ्गारप्रहितप्राभृतेभ्योऽपि समुत्कृष्टम्, एतत् प्राभृतम्, प्रेषयामास प्रजिघाय । मालिनीवृत्तम् ॥ १३ ॥

ततः काष्ठाङ्गारेणेति—ततस्तदनन्तरम्, निजबलेन स्वकीयसैन्येन शबलश्चित्रितस्तेन, काष्ठाङ्गारेण कृतघ्नेन, अभ्यागत्य सम्मुखमागत्य, बहुधा नैकधा, समानितः समादृतः, गोविन्दमहीपतिर्विदेहाधीशः, राजराजस्य कुबेरस्य पुरी नगरी राजराजपुरी तस्या निकाशा सदृशी ताम् अलकासनिभाम्, राजपुरीं हेमाङ्गदविषयराजधानीम्, प्रविश्य प्रवेशं विधाय, तत्र पुर्याम्, विविधरत्नचयैर्नैकप्रकारमणिमण्डलैर्विचित्रा विस्मयकरी या स्वयरशाला स्वयवरसभा ताम्, परिकल्प्य कारयित्वा, वाराहत्रयेण कृत्रिमसूकरत्रितयेन शोभितममलङ्कृतं यच्चन्द्रकयन्त्रं चन्द्रकवेधयन्त्रं तस्य भेदं विदारणम्, कन्याशुल्कतया स्वसुताशुल्कत्वेन, सकलदेशेषु निखिलजनपदेषु, घोषयामास डिण्डिमध्वनिना प्रकटयामास ।

परःसहस्रमिति—भेरीरवेण दुन्दुभिनादेनालोकाश्चलाः सतृष्णा वा समस्तलोका निखिलनरा यैस्ते, 'लोलश्चलसतृष्णयोः' इत्यमरः, सेनारजोभिः पृतनापरागैः, पिहितः समाच्छादितोऽभ्रभागो गगनप्रदेशो यैस्ते, प्रथिताः प्रसिद्धाः, परःसहस्राः सहस्रादप्यधिकाः, महीपा राजानः, तदा तस्मिन् काले, गरिष्ठां श्रेष्ठाम्, तां नगरीं राजपुरीम्, प्रापुः प्राप्तवन्तः, तत्र समाजग्मुरिति यावत् । उपजातिवृत्तम् ॥१४॥

स्वयवरगृह इति—मेरुशृङ्गेषु सुराद्रिशिखरेषु, सुरेश्वरा इव देवेन्द्रा इव, सानुयायिनः सानुचराः, महीशा राजानः, तत्र तस्मिन्, स्वयवरगृहे स्वयवरशालायाम्, मञ्चेषु पर्यङ्केषु, मिलिताः सगता बभूवुरिति शेषः ॥१५॥

तत्र मध्यनिबद्धेति—तत्र स्वयवरगृहे, मध्यनिबद्धमन्तःस्थापितं सम्भ्रमच्च घूर्णमानं च यद्यन्त्रं तद् भिनत्तीत्येवं शीलम्, अतिमानो लोकोत्तरो महिमा प्रभावो यस्य तथाभूतम्, युवानं तरुणम्, अस्मन्नन्दिनी मत्पुत्री, प्रदोषं रजनीमुखम्, शशिकलेव चन्द्रकलेव, पुरन्दरं शक्रम्, शचीदेवीव पुलोमजेव, अलङ्करिष्यति शोभयिष्यति, इत्येवम्, गोविन्दराजेन गोविन्दभूपालेन, कारितं विधापितम्, आरावं घोषणाम्, निशम्य समाकर्ण्य, अहमहमिकयाऽहपूर्वभावेन, चलितेन स्वस्थानात्प्रयातेन, वक्षःस्थलेषु बाहुमध्यस्थलेषु विलसिताः शोभिता ये पाटीरपङ्कसंगतकुङ्कुमस्थासकाश्चन्दनद्रवयुक्तघुसृणतिलकास्तेषां रजःपुञ्जेन परागसमूहेन पिञ्जरिता पिङ्गलवर्णीकृता दश दिशा दश काष्ठा येन तेन, आक्षेपेण प्रकम्पेन डोलायमानः आन्दोलिकावदाचरन् मुक्ताकलापो मौक्तिकस्रक् यस्य तेन, चलिताभ्यो नवमालिकाभ्यो नूतनस्रग्भ्य उड्डीना उत्पतिता ये भृङ्गसङ्घाः षट्पदसमूहास्तैः संस्तूयमानाः सन्नूयमाना विभवा ऐश्वर्याणि यस्य तेन, अर्धावलम्बितेन मनाक् स्रसमानेन कर्णपूरेण कर्णाभरणेन चुम्ब्यमानं गण्डस्थलं कपोलभागो यस्य तेन, राजकेन राजकुमारसमूहेन, स्वयवरमण्डपः स्वयवरभवनम्, स्वयं स्वतः, उच्चलितमिव समुद्गच्छदिव, अभवत् बभूव ।

---

१ सम्भ्रमसतत ब० ।

वराहयन्त्रमभितो धराधीशाश्चकाशिरे ।
कुलाद्रिं परित कीर्णा शिलाखण्डलवा इव ॥ १६ ॥

ततश्च मगधाधिपे विदितशक्तिलोपे भृश
कलिङ्गनरनायके विषयमस्पृशत्सायके ।
नृपे च विनतापुरो निहितलक्ष्यधूलीहरे
शरव्यचलनोदरे प्रथितपोदनाधीश्वरे ॥ १७ ॥

अयोध्याभूपाले भुवि पतति धैर्येण विकले
तथावन्तीनाथे वितथभुजशौर्ये मितकथे ।
नृपेष्वन्येष्वेव कुवलयदृशा हासविषये-
ष्वय काष्ठाङ्गार कुतुकवशचित्त प्रचलित ॥ १८ ॥

तदनु काष्ठाङ्गारो दर्पदुर्ललिताकार कलभनिभचार, तद्यन्त्राधोभागभ्रमच्चक्रे पाद निधाय पारवश्येन भुवि पतित, क्षितिपतिवलयस्य कमलाक्षीजनस्य च हास्यवदान्यो बभूव ।

कुमारेऽस्मिन्धीरे सहचरघटामध्यलसिते
यथा प्रोद्यत्तारागणपरिवृते शीतकिरणे ।
तदानी गोविन्दक्षितिपतिरदादृष्टिमधिका-
मुदस्थात् सोऽप्येष स्मितविशदवक्त्र कुरुवर ॥ १९ ॥

वराहयन्त्रमभित इति—वराहयन्त्र यन्त्रविशेषम्, अभित परित, धराधीशा राजान, कुलाद्रिं कुलाचलम्, परित समन्तात्, कीर्णा व्याप्ता, शिलाखण्डलवा दृषच्छकलाशा इव, चकाशिरे शुशुभिरे ॥१६॥

ततश्चेति—ततश्च तदनन्तरञ्च, मगधाधिपे मगधेश्वरे, भृशमत्यर्थम्, विदित प्रज्ञात शक्तिलोपोऽसामर्थ्यं यस्य तथाभूते, कलिङ्गनरनायके, कलिङ्गभूपाले, विषय शरव्यम्, अस्पृशन् स्पर्शमकुर्वन् सायको बाणो यस्य तथाभूते, विनतापुर एतन्नामनगरस्य, नृपे च राजनि च, निहित धृत यल्लक्ष्य शरव्य तस्य धूलीहरे रजोहरे न तु घातके, प्रथितपोदनाधीश्वरे प्रख्यातपोदनपुराधिपे, शरव्यचलन लक्ष्यभ्रंशकमुदर यस्य तथाभूते सति, अत्र सर्वत्र 'यस्य च भावे भावलक्षणम्' इति सप्तमी, अग्रश्लोकेन सम्बन्ध । पृथ्वीच्छन्द ॥ १७ ॥

अयोध्याभूपाल इति—धैर्येण स्थैर्येण, विकले शून्ये, अयोध्याभूपाले साकेताधिपे, भुवि पृथिव्याम्, पतति स्खलति, सति, तथा तेनैव प्रकारेण, अवन्तीनाथेऽवन्तीदेशाधिपे, वितथ व्यर्थं भुजशौर्यं बाहुपराक्रमो यस्य तथाभूते, मितकथेऽल्पभाषणे च सति, एवमनेन प्रकारेण, अन्येष्वपि नृपेषु राजसु, कुवलयदृशा नीलोत्पललोचनानाम्, हासविषयेषु हास्यस्थानेषु सत्सु, कुतुकवश कोतूहलायत्त चित्त यस्य तथाभूत, काष्ठाङ्गारो राजघ, प्रचलितो वराहयन्त्र भेत्तु प्रचलितवान् ॥ १८ ॥

तदन्विति—तदनु तदनन्तर दर्पेण गर्वेण दुर्ललितो विषम आकार सस्थान यस्य तथाभूत, कलभनिभचारो गजशावकसदृशगमन, काष्ठाङ्गार कृतघ्न, तद्यन्त्रस्य पूर्वोक्तवराहत्रयोपलक्षितयन्त्रस्याधोभागे निम्नप्रदेशे, भ्रमच्चक्रे घूर्णमानरथाङ्गे, पाद चरणम्, निधाय निक्षिप्य, पारवश्येन पारतन्त्र्येण, भुवि पृथिव्याम्, पतितो भ्रष्ट सन्, क्षितिपतिवलयस्य राजसमूहस्य, कमलाक्षीजनस्य च ललनासमूहस्य च, हास्यवदान्यो हसितोदार, बभूव । त पतित दृष्ट्वा सर्वे हसन्ति स्मेति भाव ।

कुमारेऽस्मिन्निति—तदानी तस्मिन् काले, गोविन्दक्षितिपतिर्गोविन्दमहाराज, प्रोद्यत्तारागणेन समुदीयमाननक्षत्रनिचयेन परिवृते परीते, शीतकिरणे चन्द्रमसि, यथा, धीरे गम्भीरे, सहचरघटाया मित्रमण्डलस्य मध्येऽन्तर्लसित शोभितस्तस्मिन्, अस्मिन् कुमारे जीवन्धरे, अधिका विपुलाम्, दृष्टि दृशम्, अदात् दत्तवान्, स्मितेन मन्दहसितेन विशद धवल वक्त्र वदन यस्य तथाभूत, स एष लोकोत्तरकौशलनिकेतनीभूत, कुरुवरोऽपि जीवन्धरोऽपि उदस्थात् उदतिष्ठत् 'ष्ठा गतिनिवृत्तौ' इत्यस्य लुङि रूपम् 'गातिस्थाघुपाभूभ्य सिच परस्मैपदेषु' इति सिचो लुक् । शिखरिणीच्छन्द ॥ १९ ॥

तदनु सखेल भुवि पदानि निदधान जयलक्ष्मीनिब धननिगलकटकशङ्कावहमरकताङ्गद-शोभित सञ्चरणसञ्चलन्मुक्तादामबाभास्यमानवक्षःस्थल जीवन्धरमवलोक्य तत्रत्या एवमेव विदामासु ।

कुमार भूपाला कतिचन विदुर्भूपतिलक
परे मर्त्याकारस्थगितममर सजगदिरे ।
सदेह कन्दर्प कुवलयदृशोऽवादिषुरमु
तथा काष्ठाङ्गारप्रमुखमहिपा मृत्युमविदन् ॥ २० ॥

एव सर्वैर्विलोक्यमानो जीवन्धरो यन्त्रसमीपमासाद्य विद्याजलधिसुधाकरश्चन्द्रकलानु-कारिदंष्ट्राविराजितवराहयन्त्र चिर विलोकमानस्तच्छेदनावसरमीक्षमाण क्षणाधिचक्रमुत्प्लुत्य सज्जीकृतधनुष्टङ्कारकम्पितवसुधातलस्तद्यन्त्र महीभुजा दर्प मानिना खेद गोविन्दपार्थिवस्य शङ्का च युगपच्चापसमारोपितरोपेण विव्याध ।

आनन्दोद्रिक्तहृदयो गोविन्दमहिपस्तदा ।
राज्ञा धुरि जगादोच्चै प्राज्ञानामग्रणीरिदम् ॥ २१ ॥

---

तदनु सखेलमिति—तदनु तदनन्तरम्, सखेल सक्रीड यथा स्यात्तथा, भुवि मह्याम्, पदानि चरणानि, निदधान निक्षिपन्तम्, जयलक्ष्म्या विजयश्रिया निबन्धनायावरोधनाय यो निगलकटको निगड-वलयस्तस्य शङ्कावह सशयोत्पादक यन्मरकताङ्गद हरिन्मणिमयकेयूर तेन शोभित समलङ्कृतम्, सञ्चरणेन सद्गमनेन सञ्चलत् चपलीभवद् यन्मुक्तादाम मौक्तिकस्रक् तेन बाभास्यमानमतिशयेन शोभमान वक्षःस्थल बाहुमध्य यस्य तथाभूतम् जीवन्धर सात्यन्धरिम्, अवलोक्य दृष्ट्वा, तत्रत्या तत्र स्थिता जना, एवमेवम् इत्थमित्थम्, विदामासुर्जज्ञु ।

कुमार भूपाला इति—कतिचन केऽपि, भूपाला राजान, कुमार जीवन्धरम्, भूपतिलक नृपति-श्रेष्ठम्, विदुर्जज्ञु, परेऽन्ये भूपाला, मर्त्याकारेण मनुजवेषेण, स्थगित पिहितस्तम्, अमर निर्जरसम्, सजगदिरे कथितवन्त, कुवलयदृशो नीलोत्पललोचना ललना, अमु कुमारम्, सदेह शरीरसहितम्, कन्दर्प मानकेतनम्, अवादिषुरगदिषु, तथा किञ्च, काष्ठाङ्गार कृतघ्न प्रमुखो मुखो येषु तथाभूताश्च ते महिपाश्च राजानश्चेति काष्ठाङ्गारप्रमुखमहिपा मृत्यु यमम्, अविदन् जज्ञु, अत्र 'अविदन्' इति प्रयोगश्चिन्त्य, 'सिजभ्यस्तविदिभ्यश्च' इत्यनेन झस्य जुसादेशे 'अविदु' इति स्यात् । शिखरिणीच्छन्द ॥२०॥

एव सर्वैरिति—एवमनेन प्रकारेण सर्वैर्निखिलै विलोक्यमानो दृश्यमान, विद्याजलधिसुधाकरो विद्यार्णवरजनीकर, जीवन्धरो जीवक, यन्त्रसमीप वराहयन्त्राभ्यर्णम्, आसाद्य प्राप्य, चन्द्रकलानुकारि-दंष्ट्राभ्या शशिकलासदृग्दंष्ट्राभ्या विराजित शोभित यद् वराहयन्त्र तत्, चिर दीर्घकाल यावत्, विलोकमान पश्यन्, तस्य च्छेदनस्यावसरमिति तच्छेदनावसर तद्वराहयन्त्रभेदनकालम्, ईक्षमाणो विलोकमान, क्षणादल्पकालेनैव, चक्र इत्यधिचक्र चक्रोपरीति यावत्, उत्प्लुत्य समुद्गत्य, सज्जीकृत सप्रत्यञ्चीकृत यद्धनु कोदण्ड तस्य टङ्कारेणाव्यक्तध्वनिना कम्पित वेपित वसुधातल महीतल येन तथाभूत सन्, तद्यन्त्र पूर्वोक्तवराहयन्त्रम्, मही भूमि भुञ्जन्ति रक्षन्तीति महीभुजस्तेषाम्, दर्प गर्वम्, मानिनामहङ्कारिणाम्, खेद द्वेषम् 'खेदो द्वेषोऽपहर्षश्च' इति धनञ्जय, गोविन्दपार्थिवस्य स्वकीयमातुलस्य, शङ्का च यन्त्रभेदनवि-दग्धोऽय न वेति सन्देहञ्च, युगपदेककालावच्छेदेन, चापे धनुषि समारोपितो धृतो यो रोपो बाणस्तेन, विव्याध चिच्छेद ।

आनन्दोद्रिक्तहृदय इति—तदा तस्मिन्काले, प्राज्ञानामवसरज्ञानाम्, अग्रणी प्रधान, आनन्देन हर्षेणोद्रिक्त सम्भृत हृदय चेतो यस्य तथाभूत, गोविन्दमहिपो गोविन्दमहाराज, महि-मही-भूमि भूमी,

---

१ महिपा ब० ।

धीरो वारिधिमेखला वसुमती प्राक्पालयामास य-
स्तस्य श्लाघ्यगुणस्य मान्ययशस सत्यन्धरस्यात्मज ।
एष द्वेषिमहीपदावदहन प्रख्यातदोर्विक्रम
श्रीमान् मे भगिनीसुतो विजयते वीरश्रिया वल्लभ ॥ २२ ॥
वसुधाधिपा धनुषि पाटवात्तथा
वपुषि स्फुरद्विशदलक्षणात्क्षणात् ।
क्षितिपालसूनुरयमित्यथास्मर-
न्नवलोक्य त ललितमभ्यनन्दिषु ॥ २३ ॥

एवविधगोविन्दनरपतिवचनेनाशनिगर्जनेन भुजग इव भीतमानसविकार काष्ठाङ्गारा मनसि चिन्तामेव तरङ्गयामास ।

सत्यन्धरस्य सूनुश्चेदय हन्त हता वयम् ।
जागरूका भवन्त्यस्मिन् वीर्यशौर्यपराक्रमा ॥ २४ ॥

पुरास्मदीयामाज्ञा मालामिव शिरसा समादधानो मथनो वणिक्पाशमेन कथमवधीत् । अत सर्व स्वार्थपरो लोक इति सत्यमेतत् । कि वास्य मातुल समाहूत । धिङ्मा मूढपरिवृढ-

---

वल्लि वल्ली अवनि अवनीत्यादय शब्दा ह्रस्वदीर्घाभ्या यथेच्छ प्रयुज्यन्ते कविभि , राज्ञा भूपालानाम्, धुरि पुरस्तात् , उच्चैरुच्चस्वरेण, इद वक्ष्यमाणम्, जगाद समुवाच ॥२१॥

धीरो वारिधिमेखलामिति—प्राक् पूर्वम्, धीरो गम्भीर , य , वारिधिरेव मेखला रशना यस्या-स्ता समुद्रान्तामिति यावत् , वसुमती पृथिवीम् , पालयामास ररक्ष, श्लाघ्या प्रशसनीया गुणा यस्य तस्य, मान्य समादरणीय यश कीर्तिर्यस्य तस्य, सत्यन्धरस्य तन्नामनरेन्द्रस्य, आत्मज पुत्र , द्वेषिमहीपा एव प्रत्यर्थिपार्थिवा एव दावा वनानि तेषा दहनोऽनल 'वने च वनवह्नौ च दवो दाव इहेष्यते' इति विश्व , प्रख्यात प्रसिद्धो दोर्विक्रमो भुजपौरुष यस्य तथाभूत , श्रीमान् शोभासम्पन्न , वीरश्रिया वीरलक्ष्म्या , वल्लभ स्वामी, एष सर्वेषा भवता पुरस्तादासीन , मे मम, भगिनीसुत स्वस्रीय , विजयते सर्वोत्कर्षेण वर्तते । शार्दूलविक्रीडितच्छन्द ॥२२॥

वसुधाधिपा इति—अथ गोविन्दभूपोक्त्यनन्तरम्, वसुधाधिपा राजान , ललित मनोहरम्, त जीव न्धरम्, अवलोक्य दृष्ट्वा, धनुषि कोदण्डे, तथा सत्यन्धरमहाराजस्य यथाभूतादृशात् , पाटवाच्चातुर्यात् , वपुषि देहे, स्फुरत्प्रकाशमान विशद निर्मल यल्लक्षण चिह्न तस्मात् , क्षणादचिरेण, अयमेष , क्षितिपालस्य सत्यन्धरभूपालस्य सूनु पुत्र , इतीत्थम्, अस्मरन् निध्यायन्ति स्म, ललित मनोहर त पुत्रम्, अभ्यनन्दिषु-रभिनन्दितवन्त । मञ्जुभाषिणीवृत्तम् ॥२३॥

एवविधेति—एव विध पूर्वोक्तप्रकारम् यद् गोविन्दनरपतिवचन गोविन्दभूपालवचस्तेन, अशनि-गर्जनेन वज्रगर्जितेन, भुजग इव पन्नग इव, भीतस्त्रस्तो मानसविकारश्चेतोविकारो यस्य तथाभूत काष्ठा-ङ्गार , मनसि चेतसि, एव वक्ष्यमाणप्रकाराम्, चिन्ता तर्कपरम्पराम्, तरङ्गयामास वर्धयमास ।

सत्यन्धरस्य सूनुरिति—चेद् यदि, अयमेष , सत्यन्धरस्य महाराजस्य, सूनु पुत्र , अस्ति तर्हीति शेष , वयम्, हता नष्टा , हन्तेति खेदे, अस्मिन् नरेन्द्रनन्दने, वीर्यं च शौर्यं च पराक्रमश्चेति वीर्यशौर्य-पराक्रमा शक्तिसुभटत्वपौरुषाणि, जागरूका जागृतिशाला , भवन्ति विद्यन्ते ॥२४॥

पुरास्मदीयामाज्ञामिति—पुरा पूर्वम्, अस्मदीया मामकीनाम्, आज्ञामादेशम्, मालामिव स्रजमिव, शिरसा मूर्ध्ना, समादधानो धरन् , मथन एतन्नामा मच्छ्यालः, एनमेतम्, वणिक्पाश दुष्टवणिजम्, कथ केन प्रकारेण, अवधीत् जघान । अतोऽस्मात्कारणात् , सर्वो निखिल , लोको जन , स्वार्थपर स्वप्रयोजन-साधननिपुण , इत्येतदाभाणकम्, सत्य तथ्यम् । अस्यैतस्य, मातुलो मामो गोविन्दमहीपाल इति यावत् , कि वा केन कारणेन वा, समाहूत समाकारित । मूढपरिवृढ मूर्खस्वामिनम्, अतएव, आत्मवधाय स्वविना-

मात्मवधाय कृत्योत्थापनमाचरन्तम्। किं करिष्यति वा किंकुर्वाणराजसन्दोहेन गोविन्दमहीपालेन कृतसाहाय्यकोऽयं समीरपुरस्कृत इव समीरसख।

इति चिन्तां कुर्वाणः खर्वेतरगर्वविजृम्भितक्रोधेन तुमुलसमीकेन कन्यामाहर्तुमना मनागितरबलमेदुरेण क्षुद्रक्षितीशनिकरेण साकं समन्त्रयितुं स दुर्मेधसामग्रणीर्निजनिवेशमाविवेश।

पराशयविदा ततः कुरुवरेण राज्ञा सहा-
स्थितेन नयकोविदाः सपदि सोपदाः केचन।
पितुर्विषयसंगतान्नरपतीन्प्रति प्रेपिता-
स्तथा परिचितान्नृपान्विशदपत्रिकाभिः सह॥ २५॥

सत्यन्धरक्षितिपतेर्विजयामहिष्या
सञ्जात एष खलु जीवकनामधेयः।
दैवात्तदा विरहितः कुटिलात्पितृभ्यां
वैश्याधिपस्य समवर्धिषि मन्दिरेऽहम्॥ २६॥

अथ किल दुराचारः काष्ठाङ्गारः काष्ठाङ्गारादिविक्रयेण प्राणसन्धारणं कुर्वाणः क्रमेण युष्मदुर्वीपतिना मन्त्रिपदवीमारोपितस्तमेव निहतवानिति विदितमेव हि भवताम्।

अतो मम यथा सोऽयमुच्छेद्यो भवतामपि।
शत्रुत्वाद्राजघत्वाच्च कृतघ्नत्वाद्दुराशयः॥ २७॥

---

शाय, कृत्योत्थापनं कार्योपस्थापनम्, आचरन्तं कुर्वन्तम्, माम्, धिक्। वाथवा किङ्कुर्वाणः किङ्करायमाणो राजसन्दहो नृपतिसमूहो यस्य तथाभूतेन, गोविन्दमहापालेन गोविन्दभूभुजा, कृतं साहाय्यकं यस्य विहितसाहाय्यः, अयं जीवन्धरः, समीरपुरस्कृतो वायूद्दीपितः समीरसख इव पावक इव, किं करिष्यति किं विधास्यति।

इति चिन्तामिति—इति पूर्वोक्ताम्, चिन्तां निध्यानम्, कुर्वाणो विदधानः, कन्यां लक्ष्मणाम्, आहर्तुमना आहरणोद्युक्तः दुर्मेधसां दुर्बुद्धीनाम्, अग्रणीरग्रेसरः, स काष्ठाङ्गारः, खर्वेतरश्चासौ गर्वश्चेति खर्वेतरगर्वो दीर्घाहङ्कारस्तेन विजृम्भितो वर्धितः क्रोधो रोषो यस्य तेन, तुमुलं भयङ्करं समीकं युद्धं यस्य तेन, मनागितरबलेन दीर्घसैन्येन मेदुरो मिलितस्तेन, क्षुद्रक्षितीशानां तुच्छप्रकृतिकपार्थिवानां निकरेण समूहेन, साकं सार्धम्, समन्त्रयितुं गुप्तमन्त्रणां कर्तुम्, निजनिवेशं स्वनिकेतनम्, आविवेश प्राविशत्।

पराशयविदेति—ततस्तदनन्तरम्, पराशयविदा पराभिप्रायज्ञेन, राज्ञा गोविन्दभूपालेन, सह सार्धम्, आस्थितेन विद्यमानेन, कुरुवरेण जीवन्धरेण, सपदि शीघ्रम्, नयकोविदा नीतिनिपुणाः, सोपदाः सोपायनाः, केचन केऽपि पुरुषाः, पितुः सत्यन्धरस्य, विषयसंगतान् देशस्थितान्, नरपतीन् नृपान्, तथा किञ्च, परिचितानभिज्ञातान्, नृपान् भूपान्, प्रति, विशदपत्रिकाभिः स्पष्टोदन्तदलैः, सह साकम्, प्रेषिता प्रहिताः। पृथ्वाछन्दः॥२५॥

सत्यन्धरक्षितिपतेरिति—खलु निश्चयेन, जीवकनामधेयो जीवन्धरनाम्ना विश्रुतः, एषोऽहम्, सत्यन्धरक्षितिपतेः सत्यन्धरमहीभृतः, विजयामहिष्या विजयाराज्ञ्याम्, सञ्जातः समुत्पन्नः, तदा जन्मवेलायाम्, कुटिलाद् वक्रात्प्रतिकूलादिति यावत्, दैवाद् भाग्यात्, पितृभ्यां मातापितृभ्याम्, विरहितो वियुक्तः, सन्, वैश्याधिपस्य गन्धोत्कटस्य, मन्दिरे भवने, समवर्धिषि सवृद्धोऽभूवम्। वसन्ततिलकावृत्तम्॥ २६॥

अथ किलेति—अथ किल एष किल, दुराचारो दुर्वृत्तः, काष्ठाङ्गारः एतन्नामकृतघ्नः, काष्ठाङ्गारादीनामिङ्गालादीनां विक्रयेण, प्राणसन्धारणं जीविकाम्, कुर्वाणो विदधानः, क्रमेण क्रमशः, युष्मदुर्वीपतिना भवद्भूपालेन सत्यन्धरमहाराजेनेति यावत्, मन्त्रिपदवीं सचिवास्पदम्, आरोपितोऽधिष्ठापितः, सन्, तमेव भूपालमेव, निहतवान् मारयामास, इति हि भवतां युष्माकम्, विदितमेव ज्ञातमेव।

अतो ममेति—अतोऽस्मात्कारणात्, सोऽयं कृतघ्नशिरोमणिः, यथा येन प्रकारेण, मम तत्पुत्रस्य,

रसातले वा वसुधातले वा महीधरे वा विपिनान्तरे वा ।
तिरोहितश्चेदपि हन्यतेऽसौ तत. समागच्छत वाहिनीभि ॥ २८ ॥
सन्देशमेव कुरुकुञ्जरस्य सामन्तभूपा शिरसा दधाना ।
सत्यन्धरे भक्तिवशेन नुन्ना सेनासमेता मिलिता बभूवु ॥ २९ ॥

तावन्नयविशालो नाम कुरुवीरदूत, सचिववृद्धस्य नयपारगस्य धर्मदत्तस्य निकेतने प्रविश्य, तेन विदितोदन्तेन सन्धानाय नरेन्द्रमन्दिर नीयमान, तत्र परिमितैर्नरपालै परिवृतम्, अनतिदूरावस्थितेन सविनयमवनमितपूर्वकायेन मथनेन सविस्रम्भमालपन्तम्, क्रोधकृशानुविस्फुरन्निश्वासधूमविवर्णमुक्ताहार काष्ठाङ्गारमुपजगाम । तत्र धर्मदत्त एव जगाद ।

जानाति देव सकल तथापि श्रोतव्यवाच सचिवा नृपेण ।
नाकाधिराजोऽपि निरीक्ष्यकृत्यो बृहस्पतेर्वाग्विसर शृणोति ॥ ३० ॥

इदानीमुदारसत्त्वैर्गरुडवेगगोविन्दपल्लववल्लभप्रभृतिभि खेचरतदितरमहीपालैर्नन्दाढ्यप्रमुखैर्महावीरै सहचरैश्च परिवृत कल्पान्तजलधिरिव निरर्गलप्रसर सकलजगतीतलविख्यातवीरो जीवन्धरकुमार क्रुद्धो युद्धाय बद्धादरो वर्तते ।

---

उच्छेद्यो विनाशनीय, अस्तीति शेष, तथा तेन प्रकारेण, शत्रुत्वाद्रिपुत्वात्, राजघत्वात् नृपतिघातकत्वात्, कृतघ्नत्वाच्चाकृतज्ञत्वाच्च, दुराशयो दुष्टाभिप्राय, स, भवतामपि युष्माकमपि, उच्छेद्योऽस्तीति सम्बन्धो योजनीय ॥२७॥

रसातले वेति—असो काष्ठाङ्गार, रसातले वा पाताले वा, वसुधातले वा भूतले वा, महीधरे वा पर्वते वा, विपिनान्तरे वा वनमध्ये वा तिरोहितोऽन्तर्हित, चेदपि यद्यपि, भवेदिति शेष, तथापि, हन्यते मार्यते, तत कारणात्, यूय, वाहिनीभि पृतनाभि, सह, समागच्छत समायात ॥२८॥

सन्देशमेवमिति—एव पूर्वोक्तप्रकारम्, कुरुकुञ्जरस्य जीवन्धरस्य, सन्देश वाचिकम्, शिरसा मूर्ध्ना, दधाना धरन्त, सामन्तभूपा मण्डलेश्वरा, सत्यन्धरे जीवन्धरजनके, भक्तिवशेन प्रीत्यतिशयेन, नुन्ना प्रेरिता, सन्त, सेनासमेता पृतनायुता, मिलिता सगता, बभूवुरासन् ॥२९॥

तावन्नयविशालो नामेति—तावत्–यावत् सामन्तभूपा समागतास्तावत्, नयविशाल एतन्नामधेय कुरुवीरदूतो जीवन्धरसन्देशहर, सचिवेषु मन्त्रिषु वृद्धो ज्येष्ठस्तस्य, नयस्य पार गच्छतीति नयपारगस्तस्य महानीतिज्ञस्य, धर्मदत्तस्य तन्नामामात्यस्य, निकेतने भवने, प्रविश्य प्रवेश कृत्वा, विदितोदन्तेन विज्ञातसमाचारेण, तेन धर्मदत्तेन, सन्धानाय सन्धि कर्तुम्, नरेन्द्रमन्दिर काष्ठाङ्गारनिकेतनम्, नीयमान सन्, प्राप्यमान सन्, तत्र नरेन्द्रमन्दिरे, परिमितै कतिपयै, नरपालै राजभि, परिवृत परीतम्, अनतिदूरावस्थितेन निकटस्थितेन, सविनय विनयोपेत यथा स्यात्तथा, अवनमितो नीचै कृत पूर्वकाय पूर्वशरीरभागो यस्य तेन, मथनेन तन्नामस्वश्यालेन सविस्रम्भ सप्रत्यय यथा स्यात्तथा, आलपन्त भाषमाणम्, क्रोधकृशानो कोपवैश्वानरस्य विस्फुरन्निर्गच्छन्त्यो नि.श्वास एव धूमस्तेन विवर्णो मलिनो मुक्ताहारो मौक्तिक दाम यस्य तम्, काष्ठाङ्गार कृतघ्नशिरोमणिम्, उपजगाम समुपयाति स्म । तत्र धर्मदत्त सचिव वृद्ध, एवमनेन प्रकारेण, जगाद प्रोवाच ।

जानातीति—यद्यपि देवो भवान्, सकल कृत्स्नम्, जानाति बुध्यते, तथापि, नृपेण राज्ञा, सचिवा मन्त्रिण, श्रोतव्या आकर्णनीया वाक् येषा तथाभूता, सन्ति, निरीक्ष्य कृत्य कार्य यस्य तथाभूत, नाकाधिराजोऽपि पुरन्दरोऽपि, बृहस्पतेर्वाचस्पते, वाग्विसर वचनसमूहम्, शृणोति समाकर्णयति ॥ ३० ॥

इदानीमिति—इदानी साम्प्रतम्, उदारसत्त्वैरुत्कृष्टपराक्रमै, गरुडवेगश्च गोविन्दश्च पल्लववल्लभश्चेति गरुडवेगगोविन्दपल्लववल्लभास्ते प्रभृति येषा तै, खेचरतदितरमहीपालैर्विद्याधरतदितरभूपतिभि, नन्दाढ्यप्रमुखैर्नन्दाढ्यप्रधाने, महावीरैर्महासुभटै, सहचरैश्च वयस्यैश्च, परिवृत परिवेष्टित, कल्पान्तजलधिरिव प्रलयपाथोनिधिरिव, निरर्गल स्वच्छन्द प्रसरो यस्य तथाभूत, सकलजगतीतले निखिलभूमितले विख्यात-

व्याधान्दु साधबाधान्गजतुरगमुखैर्मद्बलै सम्प्रवृत्तै-
हेलामात्रेण जित्वा निखिलपशुगण मोचयामास य प्राक् ।
वीणाशुल्के च दृप्यन्नरपतिनिचय धावयामास सख्ये
सोऽय नैकोऽपि जय्य किमुत खगनराधीश्वरै सगतश्चेत् ॥ ३१ ॥

अत इदमनिद प्रथमप्रवृत्त तदीयराजपद तद्भुजे समर्प्य यथापुर सचिवपदमधिष्ठातुमर्हति देव इति ।

एव मन्त्रिगिर निशम्य समय तूष्णीं स्थित सोऽवदत्
कर्णे लग्नमुखेन तत्र मथनेनादीपितक्रोधन ।
रे रे केन ससाध्वस बहुतर पृष्टोऽसि वक्तु पुरो
भीरुस्त्व यदि तिष्ठ वेश्मनि मुधा क्लीबोऽसि कि भाषितै ॥ ३२ ॥

माद्यद्दन्तिघटापटुस्फुटनटद्घोटप्रहृष्यद्भटा-
टोपाच्छादितदिक्तटे रणतले खड्गोल्लसद्धारया ।
आहृत्य श्रियमाहवोद्यतरिपुक्षोणीभृतामुज्ज्वला
कीर्त्या कोमलया दिशो धवलयाम्युत्फुल्लकुन्दश्रिया ॥ ३३ ॥

---

श्चासौ प्रसिद्धश्चासौ वीरश्चेति सुभटश्चेति सकलजगतातलविख्यातवीर, जीवन्धरकुमार सात्यन्धरि, क्रुद्धो रुष्ट सन्, युद्धाय समराय, बद्धादरो बद्धसन्मानस्तत्पर इति यावत्, वर्तते विद्यते ।

व्याधानिति—यो जीवन्धर, प्राक् पूर्वम्, गजतुरगमुखैर्हस्तिहयप्रधानै, सम्प्रवृत्तै सञ्चलितै, मद्बलैरस्मत्सैन्यै, दु साधबाधान् विकटान्, व्याधान् शबरान्, हेलामात्रेण लीलामात्रेण, जित्वा पराभूय, निखिलपशुगण सकलपशुसमूहम्, मोचयामास मोचयति स्म, वीणाशुल्के च गन्धर्वदत्तापरिणयवेलाया वीणावादनशुल्के च, दृप्यन्तोऽहङ्कुर्वन्तो ये नरपतयो राजानस्तेषा निचय समूहस्तम्, सख्ये समरे, धावयामास विद्रावयामास, सोऽय जीवन्धर, एकोऽप्येकाक्यपि, न जय्यो न जेतु शक्य, चेद्यदि, खगनराधीश्वरै विद्याधरधरावल्लभै, सगत सहित, तर्हि, किमुत किम्पुनर्वक्तव्यम् ? स्रग्धराच्छन्द ॥ ३१ ॥

अत इदमिति—अतोऽस्मात्कारणात्, अनिद, प्रथमप्रवृत्त प्राक्प्रवृत्तम्, इदमेतत्, तदीयराजपद तत्सम्बन्धिराज्यभार, तद्भुजे तद्बाहो, समर्प्य निक्षिप्य, यथापुर पूर्ववत्, सचिवपदममात्यस्थानम्, अधिष्ठातुमधिवसितुम्, देवो भवान्, अर्हति योग्योऽस्ति, इति धर्मदत्तामात्य काष्ठाङ्गार जगादेति सम्बन्ध ।

एव मन्त्रिगिरमिति—एवमित्थम्, मन्त्रिगिर सचिवभारतीम्, निशम्य श्रुत्वा, समय क्षण यावत्, तूष्णी निर्वचनम्, स्थितो विद्यमान, तत्र स्थाने, कर्णे श्रवसि, लग्नमुखेन सयोजितवदनेन, मथनेन तच्छ्यालेन, आदीपित प्रज्वलित क्रोधन क्रोधो यस्य तथाभूत सन्, अवदत् जगाद, रे रे वृद्धापसद, ससाध्वस सभयम्, बहुतर प्रभूतम्, पुरोऽग्रे, वक्तु निगदितुम्, केन पृष्टोऽसि पृच्छाविषयीकृतोऽसि, त्व यदि भीरु कातरस्तर्हि, वेश्मनि भवने, तिष्ठ स्थितो भव, क्लीबोऽसि नपुसकोऽसि, मुधा व्यर्थम्, भाषितै कथनै, कि किंप्रयोजन न किमपीति यावत् ॥ ३२ ॥

माद्यद्दन्तिघटेति—माद्यता दन्तिना घटा इति माद्यद्दन्तिघटा गन्धगजगणा, पटुस्फुट चातुर्यप्रकाश यथा स्यात्तथा नटन्तो नृत्यन्तो ये घोटा हया इति पटुस्फुटनटद्घोटा, प्रहृष्यन्तश्च ते भटाश्चेति प्रहृष्यद्भटा प्रमोदमानशूरा, माद्यद्दन्तिघटाश्च पटुस्फुटनटद्घोटाश्च प्रहृष्यद्भटाश्चेति माद्यद्दन्तिघटापटुस्फुटनटद्घोटप्रहृष्यद्भटा तेषामाटोपेन विस्तारेणाच्छादितानि पिहितानि दिक्तटानि काष्ठान्तभागा यस्मिंस्तस्मिन्, रणतले समराङ्गणे, खड्गस्य कृपाणस्योल्लसन्ती शोभमाना या धारा तीक्ष्णाग्रभागस्तया, आहवे समर उद्यता तत्परा इत्याहवोद्यता स्ते च ते रिपुक्षोणीभृतश्च शत्रुराजाश्चेति तेषाम्, उज्ज्वला निर्मलाम्, श्रिय लक्ष्मीम्, आहृत्य समाच्छिद्य, कोमलया मृदुलया, उत्फुल्लाना विकसिताना कुन्दाना माध्याना श्रीरिव श्रीर्यस्यास्तया, कीर्त्या यशसा, दिश काष्ठा, धवलयामि धवला करोमि ॥ ३३ ॥

किञ्च ।

आ ज मतो न लिखित भुवनाधिपत्य
यद्भालसीमनि पर तु वणिक्क्रियैव ।
तेनाधमेन वणिजस्तनयेन किंवा
स धानमद्य नरपालमणीशिना न ॥ ३४ ॥

ध्वजिनीरुद्धपार्श्वस्य मथनस्य शरावले ।
विघसोऽजनि य पूर्व कवलीक्रियतेऽधुना ॥ ३५ ॥

इति दर्पदुर्ललितवचनविलसितमाकर्ण्य कोपारुणीकृतभालो नयविशालो गम्भीरमिमा गिरमुज्जगार ।

पुलिन्दवृन्देन गवा कुले हृते बलेन साक मथने पलायिते ।
पिधाय वेगेन कवाटमन्ततो वृतो वधूभिस्तनुकम्पमत्यज ॥ ३६ ॥

एवविधपराक्रममण्डितभुजदण्डमण्डितस्य न युक्तमेव कौरवेण सन्धानम् ।

किं धर्मदत्तेन हि षण्डवृत्त्या प्रचण्डवृत्त्या भवतापि किं वा ।
कुरुप्रवीरस्य कराग्रनुन्न राज्यश्रिय चक्रमल प्रदातुम् ॥ ३७ ॥

इति निगद्य जवान्निर्गत्य यथावृत्त कुरुवीर विज्ञापयति नयविशाले विशालतरसमीकसनाह

---

किञ्च—किञ्चान्यत् किमपि ।

आ जन्मत इति—यद्भालसीमनि यल्ललाटावधौ, आ जन्मतो जन्मन आरभ्य, भुवनाधिपत्य लोकसाम्राज्यम्, न लिखित नाङ्कितम्, परन्तु किन्तु, वणिक्क्रियैव सार्थवाहकृतिरेव, लिखिता विहिता, अधमेन नीचेन, तेन पूर्वोक्तेन, वणिजो वैश्यस्य, तनयेन पुत्रेण, नरपालमणीशिना नरपालमणिषु श्रेष्ठराजेषु ईशन्ते ऐश्वर्ययुक्ता भवन्तीत्येव शालास्तेषाम्, नोऽस्माकम्, अद्य साम्प्रतम्, किं वा सन्धान सन्धिकरणम्, सर्वथाऽशक्य तदिति भाव ॥ ३४ ॥

ध्वजिनीरुद्धेति—यो वणिक्तनय , पूर्व प्राक्, ध्वजिन्या पृतनया रुद्ध परीत पार्श्व समीपप्रदेशो यस्य तस्य, मथनस्य काष्ठाङ्गारश्यालस्य, शरावलेर्बाणसमूहस्य, विघसो भुक्तावशिष्ट , अजनि बभूव, स इति शेष, अधुना साम्प्रतम्, कवलीक्रियते ग्रस्यते ॥ ३५ ॥

इति दर्पेति—इतीत्थम्, दर्पेण गर्वेण दुर्ललितानि विसष्ठुलानि यानि वचनानि वचासि तेषा विलसित विलासम्, आकर्ण्य निशम्य, कोपेन रुषारुणीकृतो लोहितीकृतो भालो निटिलो यस्य तथाभूत , नयविशाल एतन्नाम जीवन्धरदूत , गम्भीर यथा स्यात्तथा, इमा वक्ष्यमाणाम्, गिर वाणीम्, उज्जगार प्रकटयामास ।

पुलिन्दवृन्देनेति—पुलिन्दवृन्देन शबरसमूहेन, गवा सौरभेयीणाम्, कुले समूहे, हृते मुषिते, बलेन सैन्येन, साक सार्धम्, मथने भवच्छ्याले, पलायिते दर्शितपृष्ठे, सति, अन्ततोऽन्ते, वेगेन रयेण, कवाटमररम्, पिधाय मेलयित्वा, वधूभिर्ललनाभि , धृतो दत्तालम्बन कृताश्वासश्च सन्, तनुकम्प शरीरवेपथुम्, अत्यजस्त्यक्तवान्, एव नु भो महाशूरस्त्वमिति सोत्प्रासवाक्यम् ॥ ३६ ॥

एवविधेति—एवविधपराक्रमेण पूर्वोक्तप्रकारविक्रमेण मण्डितौ शोभितौ यौ भुजदण्डौ बाहुदण्डौ ताभ्या मण्डितस्य शोभितस्य, तव, कौरवेण जीवकेन, सह सन्धान सन्धिकरण मेलनमिति यावत्, न युक्तमेव नोचितमेव, सुष्ठूक्त त्वयेति भाव ।

किं धर्मदत्तेनेति—षण्ढवृत्त्या दीनवृत्त्या, उपलक्षितेन, धर्मदत्तेन तन्नामवृद्धामात्येन, हि निश्चये, किं किं प्रयोजनम्, प्रचण्डवृत्त्या तीक्ष्णव्यवहारेण, उपलक्षितेन, भवतापि त्वयापि, वा किं किं प्रयोजनम्, न किमपीति यावत्, कुरुप्रवीरस्य जीवन्धरस्य, कराग्रनुन्न हस्ताग्रप्रेरितम्, चक्र शस्त्रविशेष , राज्यश्रिय राज्यलक्ष्मीम्, प्रदातु समर्पयितुम्, अल पर्याप्त समर्थमिति यावत् ॥ ३७ ॥

इति निगद्येति—इत्येवम्, निगद्य नितरा कथयित्वा, जवाद्वेगात्, निर्गत्य निष्क्रम्य, यथावृत्त यथाभूतम्, कुरुवीर जीवन्धरम्, विज्ञापयति निवेदयति, नयविशाले तदभिधानदूते, विशालतरो विपुलतर

कुरुकुमारः पद्मास्यं वरूथिनीनामाधिपत्ये विधाय यथायोग्यं गरुडवेगगोविन्दलोकपालपल्लवमहीपालप्रभृतीनापृच्छ्य रणाङ्गणावतरणाय सेनामादिदेश ।

काष्ठाङ्गारोऽपि सेनायाः पतिं मथनमादिशत् ।
पृतनायाः प्रयाणाय रणरङ्गस्थलं प्रति ॥ ३८ ॥

तदनु विकटकटविगलद्दानधाराप्रवाहानुभयतः सृजद्भिः सनिर्झरैरिव नीलाचलैर्विशददन्तप्रभादन्तुरिताङ्गतया रजनिकरकरनिकरचुम्बितसवर्तकालाम्बुदविडम्बकैः कर्णद्वयसन्दानितधवलचामरशोभिततया पद्मिनामसाम्येन समागतमरालशङ्कामङ्कुरयद्भिः पादन्यासेन महीं कम्पयद्भिः घनाघनघनगर्जितानुकारिबृंहितरवेण गिरिदरीसुखसुप्तपञ्चास्यान् क्रोधेनोत्पत्य कुत्रत्योऽयं करिशब्द इति निरीक्षमाणान् कुर्वाणैर्वारणैः सञ्छादितदिग्भागाः, सूर्याश्वशिरस्ताडनायेवोर्ध्वप्रसारितपूर्वचरणयुगलैः प्रलयजलधरविमुक्तवर्षोपलासारपरुषेण जर्जरयतेव वसुधातलमतिनिष्ठुरेण खरखुरपुटविन्यासेन जनितपांसुपारम्पर्यैः सकलजगदन्धङ्करणधुरीणैर्हेषितरवेण गगनतलं पूरयद्भिः प्रतिपक्षैरिव मारुतस्य प्रत्यादेशैरिवोच्चैःश्रवसो निदर्शनैरिव मनसो मूर्तैरिव जवैर्गन्धर्वैरुपशोभिताः,

समीकसन्नाहो युद्धाभिनिवेशो यस्य तथाभूतः, कुरुकुमारो जीवकः, पद्मास्यं तन्नामसखम्, वरूथिनीनां पृतनानाम्, आधिपत्ये स्वामित्वे, विधाय कृत्वा, तं सेनापतिं कृत्वेति यावत्, यथायोग्यं यथार्हम्, गरुडवेगश्च गोविन्दश्च लोकपालश्च पल्लवमहीपालश्चेति गरुडवेगगोविन्दलोकपालपल्लवमहीपालाः, ते प्रभृतिर्येषां तान्, आपृच्छ्यामन्त्र्य, रणाङ्गणे समरचत्वरेऽवतरणं प्रवेशस्तस्मै, सेनां चमूम्, आदिदेश समादिष्टवान् ।

काष्ठाङ्गारोऽपीति—काष्ठाङ्गारोऽपि राजद्रोहोऽपि, पृतनायाः सेनायाः, रणरङ्गस्थलं प्रति समररङ्गभूमिमुद्दिश्य, प्रयाणाय प्रस्थानाय, मथनं तन्नामधेयम्, सेनायाः पतिं ध्वजिन्या नाथम्, आदिशत् आज्ञापयामास ॥ ३८ ॥

तदन्विति—तदनु तदनन्तरम्, उभयतः पार्श्वद्वये, विकटकटाभ्यां विशालगण्डाभ्यां विगलन्तः पतन्तो ये दानधाराप्रवाहा मदधारास्रोतांसि तान्, सृजद्भिः रचयद्भिः, सनिर्झरैर्निर्झरोपेतैः, नीलाचलैरिव नीलपर्वतैरिव, विशददन्तप्रभाभिर्धवलतरदनदीप्तिभिर्दन्तुरितं व्याप्तमङ्गं देहो येषां तेषां भावस्तत्ता तया, रजनिकरस्य चन्द्रमसः करनिकरेण किरणकलापेन चुम्बिताः संयुक्ता ये सवर्तकालाम्बुदाः प्रलयकालवारिदास्तेषां विडम्बका अनुकर्तारस्तैः, कर्णद्वये श्रवणयुग्मे सन्दानिताभ्यां बद्धाभ्यां चामराभ्यां बालव्यजनाभ्यां शोभिततया समलङ्कृततया, पद्मेति नाम पद्मनाम तस्य साम्यं सादृश्यं तेन 'पद्मोऽस्त्री पद्मके व्यूहनिधिसङ्ख्यान्तरेऽम्बुजे । ना नागे स्त्री फञ्जिकाश्रीचारटीपन्नगेषु च' इति मेदिनी, समागताः समायाता ये मराला हंसास्तेषां शङ्कां सन्देहम्, अङ्कुरयद्भिः प्रादुर्भावयद्भिः, पादन्यासेन चरणनिक्षेपेण, महीं भूमिम्, कम्पयद्भिर्वेपयद्भिः, घनाघनस्य मेघस्य यद् घनगर्जितं विकटगर्जनं तस्यानुकारि यद् बृंहितं गजशब्दस्तस्य रवो नादस्तेन, गिरिदरीषु शैलगुहासु सुखेन शर्मणा सुप्ताः कृतशयना ये पञ्चास्याः सिंहास्तान्, क्रोधेन रोषेण, उत्पत्योत्क्रम्य, कुत्रत्योऽयं कुत्रभवोऽयम्, करिशब्दो गजगर्जितम्, इति हेतोः, निरीक्षन्त इति निरीक्षमाणा अवलोकमानास्तान्, कुर्वाणैर्विदधानैः, वारणैर्गजैः, सञ्छादिताः पिहिता दिग्भागाः काष्ठाप्रदेशा येषां ते, सूर्याश्वानामर्कहयानां शिरसि मूर्ध्नि ताडनं प्रहरणं तस्मा इव, ऊर्ध्वप्रसारितमुन्नमितं चरणयुगलं येषां तैः, प्रलयजलधरैः प्रलयमेघैर्विमुक्तस्त्यक्तो यो वर्षोपलानां करकाणामासारो धारासंपातस्तद्वत् परुषः कठोरस्तेन, वसुधातलं भूतलम्, जर्जरयतेव जीर्णं कुर्वतेव, अतिनिष्ठुरेण कठोरातिशयेन, खरखुरपुटानां तीक्ष्णखुरपुटानां विन्यासो निक्षेपस्तेन, जनिताः समुत्पादिता याः पांसुपारम्पर्यो धूलिसन्ततयस्ताभिः, सकलजगतो निखिलभुवनस्यान्धङ्करणे सतिमिरीकरणे धुरीणा निपुणास्तैः, हेषितरवेण हेषाध्वनिना, गगनतलं व्योमतलम्, पूरयद्भिः सम्भरद्भिः, गरुत्मतो गरुडस्य प्रतिपक्षैरिव प्रतिद्वन्द्विभिरिव, मारुतस्य पवनस्य, पर्यायैरिव प्रतिकृतिभिरिव, उच्चैःश्रवसो देवराजवाजिनः प्रत्यादेशैरिव निराकरणैरिव, मनसश्चेतसः, निदर्शनैरिव दृष्टान्तैरिव, मूर्तैः शरीरधारिभिः, जवैरिव वेगैरिव, गन्धर्वैर्वाहैः, 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरः, उपशोभिताः

सुरविमानसकाशैश्चक्रक्षुण्णक्षोणीतलैर्मनोरथैरिवामितरथै परिपूर्णा , क्ष्वेलारवबधिरीकृतलोकैर्विविधायुधविचित्रैर्विधृततनुत्रै पदातिभि परिवृता , उभयेऽपि सैनिका , क्रमेणाजिरङ्गणमगाहन्त । तत्र च,

अभ्रलिहाना पटमन्दिराणा पङ्क्तिर्बभौ शारदमेघशुभ्रा ।
विचित्रयुद्धस्य विलोकनाय समागता राजपुरीव साक्षात् ॥ ३६ ॥

तदनु विनिर्मितविशालविशिखासहस्रविराजमानम् , मदमेदुरसिन्धुरघटान्धकारितदिङ्मुखतया जलधरदिवसायमानम् , अभ्रङ्कषैरपहसितरजताचलशोभैरमलसुधावदातैर्मन्थानगिरि मथ्यमानदुग्धसिन्धुगर्भाविलुठत्तरङ्गायमानानिलडोलायितसितध्वजतया उपरिपरिपतदभ्रगङ्गाप्रवाहैरिव तुषारगिरिशिखरै पटमन्दिरैर्विभ्राजितम् , नीलकवचावगुण्ठितदेहै सितोष्णीषैरत्युन्नतवेत्रासनोपरिविष्टैर्धर्ममयैरिव धर्माधिकारिभिर्महापुरुषैस्तन्तन्यमानसेनासविभागसविधानम् , स्फुरितनिशितकरधृतकरवालप्रतिबिम्बप्ररोहकरालितातपेनोर्ध्वावरुद्धमौलिकलापेन धवलचन्दनलिप्तभुजदण्डेन सेवकजनेनाध्यासितद्वारदेशम् , विविधवस्तुविचित्रितै पण्याहरणसमर्दनपरक्रयिकविक्रयिकलोकैर्महाविपणिपथैरुपशोभितम , यौवनमदमत्ततरुणजनानुसार्यमाणतरुणीजननिरन्तरवेशवाटम् , विविधायुधसस्कारपरजनबभ्राम्यमाणशाणचक्रप्रभृतिसस्कारसाधनसञ्छादित तद्रङ्गस्थलमशोभत ।

---

विराजिता , सुरविमानसकाशैर्देवयानसन्निभै , चक्रै रथाङ्गै क्षुण्ण विदीर्ण क्षोणीतल भूतल यैस्तै , मनोरथैरभिलषितैरिव, अमितरथैरसख्यस्यन्दने , परिपूर्णा युक्ता , क्ष्वेलारवेण सिंहनादेन बधिरीकृता श्रवणशक्तिरहितीकृता लोका जना यैस्तै , विविधानि विविधप्रकाराणि यान्यायुधानि शस्त्राणि तैर्विचित्रैर्विस्मयकारिभि , विधृततनुत्रै र्धृतकवचै , पदातिभि पत्तिभि , परिवृता परीता , उभयेऽपि पक्षद्वयसम्बन्धिन , सैनिका योद्धार , क्रमेण क्रमश आजिरङ्गण समरचत्वरम्, अगाहन्त प्रविविशु । तत्र च तस्मिन्नजिराङ्गणे च ।

अभ्रलिहानामिति—अभ्रलिहाना गगनचुम्बिनाम्, पटमन्दिराणा पटभवनानाम्, शारदमेघशुभ्रा शारदजलधरधवला, पङ्क्तिस्तति , विचित्रयुद्धस्य विलक्षणसाम्परायस्य, विलोकनाय दर्शनाय, समागता सम्प्राप्ता, साक्षात्, राजपुरीव हेमाङ्गदराजधानीव, बभो शुशुभे ॥ ३६ ॥

तदन्विति—तदनु तदनन्तरम्, तद्रङ्गस्थल तत्समरक्षेत्रम्, अशोभत व्यराजत, कथभूत तदिति तदेव विशेषयितुमाह—विनिर्मिता रचिता या विशालविशिखा विस्तीर्णरथ्यास्तासा सहस्रैर्दशशतैर्विराजमान शोभमानम्, मदमेदुरा दानमिलिता या सिन्धुरघटा गजपङ्क्तिस्तयान्धकारित तिमिरित दिङ्मुख काष्ठान्तो यस्मिंस्तस्य भावस्तत्ता तया, जलधरदिवसायमान प्रावृड्वदाचरत्, अभ्रकषैर्मेघस्पर्शिभि अपहसिता पराभूता रजताचलशोभा विजयार्धश्रीर्यैस्तै , अमलसुधावदातैर्निर्मलचूर्णोज्ज्वलै , मन्थानगिरिर्मन्दरपर्वतस्तेन मथ्यमानो विलोड्यमानो यो दुग्धसिन्धु क्षीरार्णवस्तस्य गर्भे मध्ये विलुठन्त सञ्चलन्तो ये तरङ्गा कल्लोलास्तद्वदाचरन्ति, अनलडोलायितानि पवनप्रकम्पितानि सितध्वजानि शुक्लपताका यस्मिंस्तस्य भावस्तत्ता तया, उपरि परिपतन्त स्खलन्तोऽभ्रगङ्गाप्रवाहा मन्दाकिनीस्रोतासि येषा तै , तुषारगिरिशिखरैर्हिमालयशृङ्गैरिव, पटमन्दिरैर्वस्त्रनिकेतनै , विभ्राजितम्, नीलकवचै श्यामतनुत्रैरवगुण्ठित सवृतो देहो येषा तै , सितोष्णीषैर्धवलशिरोवेष्टनै , अत्युन्नतानि तुङ्गतमानि यानि वेत्रासनानि वेत्रविष्टराणि तेषामुपरिविष्टैरुपरिस्थितै , धर्ममयैरिव धर्मनिर्मितैरिव, धर्माधिकारिभिर्धर्माधिकारयुक्तै , महापुरुषैर्महाजनै , तन्तन्यमान विस्तार्यमाण सेनासविभागस्य पृतनाविभागस्य सविधान करण यस्मिंस्तत्, स्फुरित सञ्चलितो निशित स्तीक्ष्णो य करधृतो हस्तावलम्बित करवाल कृपाणस्तस्मिन् प्रतिबिम्ब प्रतिफलन तस्य प्ररोहै किरणाङ्कुरै करालितो व्याप्त आतपो घर्मो येन तथाभूतेन, ऊर्ध्वमुपरि अवरुद्ध आवृतो मौलिकलापो मुकुटसमूहो येन तेन, धवलचन्दनेन शुक्लमलयजेन लिप्तो दिग्धो भुजदण्डो बाहुदण्डो यस्य तेन, सेवकजनेन सेवकसमूहेन अध्यासितोऽधिष्ठितो द्वारदेशो यस्य तत् , विविधवस्तुभिर्नैकविधपदार्थैर्विचित्रितानि शबलानि तै , महाविपणिपथैर्विस्तीर्णहाटकख्याभि , उपशोभित समलङ्कृतम्, यौवनपदेन तारुण्यातिरेकेण मत्ता मदयुक्ता ये तरुणजना युवजनास्तैरनुसार्यमाणोऽनुगम्यमानो यस्तरुणीजनो युवतिसमूहस्तेन निरन्तर समाकीर्णो

युद्धप्रारम्भकेलीपिशुनजयमहावाद्यघोषैरशेषै-
हेषारावैर्हयानां मदमुदितकरिबृंहितैर्जृम्भमाणैः ।
रथ्याध्वानैः पदातिप्रचुरतरगलत्सिंहनादैरमन्दैः
शब्दैकाम्भोधिमग्नं जगदिदमभवत्कम्पमानं समन्तात् ॥ ४० ॥

रणान्तरायं कुर्वाणा धूल्यो या व्योम्नि जृम्भिताः ।
तन्नाशाय ध्वजा मृत्युसमार्जन्य इवारुचन् ॥ ४१ ॥

उद्यन्निस्साणराणप्रसरमथ सुरा जृम्भमाणं निशम्य
क्षीबक्षोणीपतीनां कदनविलसितं वीक्षितुं सम्प्रवृत्तम् ।
पुष्पाण्याहृत्य कल्पक्षितिरुहवनतः सौरभाकृष्टभृङ्ग-
व्यूहव्यारावपूराण्यधिककुतुकतः सङ्गता व्योमसीम्नि ॥ ४२ ॥

सेनापयोधी समदाट्टहासौ शनैः शनैः सङ्घटितौ व्यभाताम् ।
कल्पावसाने खलु वर्धमानावम्भोनिधी यद्वदमन्दवेगौ ॥ ४३ ॥

पदातिः पदातिस्तुरङ्गं तुरङ्गो मदेभं मदेभो रथस्थं रथस्थः ।
इयाय क्षणेन स्फुरद्युद्धरङ्गे ध्वनज्जैत्रवाद्ये स्वनच्छिञ्जिनीके ॥ ४४ ॥

---

वेशवाटो वेश्यावासाभोगो यस्मिंस्तत्, विविधायुधानां नैकविधशस्त्राणां संस्कारपरा समुत्तेजनलीना ये जनाः पुरुषास्तैर्भ्राम्यमाणानि सञ्चार्यमाणानि शाणचक्रप्रभृतीनि निकषचक्रादीनि यानि संस्कारसाधनानि समुत्तेजनोपायास्तैः सञ्छादितं व्याप्तम् ।

युद्धप्रारम्भकेलीति—युद्धप्रारम्भकेल्याः समरप्रारम्भक्रीडायाः पिशुना सूचका ये जयमहावाद्यघोषा विजयमहावादित्रशब्दास्तैः, अशेषैः सम्पूर्णैः, हयानामश्वानाम्, हेषारवैर्हेषितशब्दैः, जृम्भमाणैर्वर्धमानैः मदेन दानेन मुदिताः प्रसन्ना इति मदमुदितास्ते च ते करिणो हस्तिनश्चेति मदमुदितकरिणस्तेषां बृंहितानि गर्जितानि तैः, रथ्याध्वानैः रथसमूहशब्दैः, अमन्दैः प्रचुरैः, पदातीनां पदगानां प्रचुरतरं प्रभूततरं यथा स्यात्तथा गलन्तः प्रकटीभवन्तो ये सिंहनादाः क्ष्वेडितरवास्तैः, शब्दैकाम्भोधिमग्नं शब्दैकार्णवनिमग्नम्, इदमेतत्, जगद् भुवनम्, समन्तात्परितः कम्पत इति कम्पमानं वेपथुसहितम्, अभवत् आसीत् । शार्दूलविक्रीडितच्छन्दः ॥ ४० ॥

रणान्तरायमिति—रणान्तरायं समरप्रत्यूहम्, कुर्वाणा विदधानाः, या धूल्यो रजांसि, व्योम्नि नभसि, जृम्भिता विततानि, तन्नाशाय तदपहाराय, ध्वजाः पताकाः, मृत्युसमार्जन्य इव यमावस्करापहारिण्य इव, अरुचन् व्यशोभन्त ॥ ४१ ॥

उद्यन्निस्साणेति—अथ युद्धप्रारम्भानन्तरम्, सुरा अमराः, जृम्भमाणं वर्धमानम्, उद्यन्तः प्रकटीभवन्तो ये निस्साणराणा रणवादित्रशब्दास्तेषां प्रसरं समूहस्तम्, निशम्य समाकर्ण्य, सम्प्रवृत्तं प्रारब्धम्, क्षीबाः पराक्रमातिरेकेणोन्मत्ता ये क्षोणीपतयो राजानस्तेषाम्, कदनविलसितं सम्परायचेष्टितम्, वीक्षितुं द्रष्टुम्, कल्पक्षितिरुहवनतः कल्पवृक्षविपिनात्, सौरभेण सौगन्ध्येनाकृष्टा वशीकृता ये भृङ्गा भ्रमरास्तेषां व्यूहस्य समूहस्य यो व्यारावो गुञ्जनशब्दस्तस्य पूरः सन्ततिर्येषु तानि, पुष्पाणि कुसुमानि, आहृत्य समादाय, अधिककुतुकतः प्रभूतकौतुकातिशयेन, व्योम्नि विहायसि, सङ्गताः सम्मिलिताः, आसन्निति शेषः । स्रग्धरावृत्तम् ॥ ४२ ॥

सेनापयोधी इति—समदाट्टहासौ सगर्वाट्टहाससहितौ, शनैः शनैर्मन्दं मन्दम्, सङ्घटितौ सम्मिलितौ, सेनापयोधी पृतनापारावारौ, तद्वत् तथा व्यभाताम् व्यशोभेताम्, यद्वत् यथा, कल्पावसाने प्रलयवेलायाम्, वर्धमानौ समेधमानौ, अमन्दवेगौ प्रभूतरयौ, अम्भोनिधी सागरौ, खलु निश्चयेन ॥४३॥

पदातिमिति—ध्वनज्जैत्रवाद्ये शब्दायमानविजयवादित्रे, स्वनच्छिञ्जिनीके शब्दायमानमौर्वीके, स्फुरद्युद्धरङ्गे प्रकाशमानरणाजिरे, पदातिः पत्तिः, पदातिं पत्तिम्, तुरङ्गोऽश्वः, तुरङ्गं हयम्, मदेभो मत्त-

दृप्यद्दन्तिकरोद्यता जलकणा व्योम्नि स्फुरत्तारका
कारा रेजुरभूच्च नाकसुदतीवक्त्र निशानायक ।
धूलीभि पिहिते च चण्डकिरणे सग्रामलीला बभौ
निर्दोषापि विभावरीव सतत क्रीडद्रथाङ्गापि च ॥ ४५ ॥

यावन्नाक्षिपति क्षणेन करिणो वक्त्रच्छद विस्तृत
हस्त्यारोहवर प्रतिद्विपगतो वीर शरैस्तावता ।
शुण्डा तस्य मद च लोपमनयत्कोपेन सोऽप्युद्धत
छिन्नेनैव करेण त प्रतिभट मूर्च्छास्पद द्राग्व्यधात् ॥ ४६ ॥

भल्लै प्रतिद्विरदमल्लधनुर्विमुक्तै
कुम्भेषु मग्नशिखरैर्व्यलसन्गजेन्द्रा ।
आरावहीनवदनै शिखिना समूहै-
रारूढतुङ्गशिखरा इव शैलवर्गा ॥ ४७ ॥

इह खलु, कौचन मत्तदन्तावलौ क्रोधतरलौ समीककलाकुशलौ परस्परदण्डसघट्टनजनितगम्भीरारावेण बृहितभरेण च गगनतल पूरयन्तौ, गण्डतलविसृत्वरमदधारासौरभप्रचुरकर्णतालविगलत्समीरैराजिरङ्गतले मूर्च्छितान् भटान् प्रबोधयन्तौ, भुग्नवालौ सक्थिजवघटितरदविन्यासेन वसुन्धरा

---

मतङ्गज, मदेभ मत्तमतङ्गजम्, रथस्थ स्यन्दनस्थ, रथस्थ स्यन्दनस्थम्, क्षणेन शीघ्रम्, इयाय प्राप । भुजङ्गप्रयातच्छन्द ॥ ४४ ॥

दृप्यद्दन्तिकरोद्यता इति—दृप्यता समदाना दन्तिना करिणा करेभ्य शुण्डाभ्य उद्यता उत्पतिता, जलकणा सलिलसीकरा, व्योम्नि गगने, स्फुरत्तारकाकारा देदीप्यमाननक्षत्रसनिभा, रेजु शुशुभिरे, नाकसुदतीवक्त्र देवीवदनम्, निशानायकश्चन्द्रमा, अभूच्च बभूव च । धूलीभि परागै, चण्डकिरणे सूर्ये पिहिते च समाच्छादिते च सति, सग्रामलीला समरक्रीडा, निर्दोषापि रात्रिरहिताऽपि, सतत सर्वदा क्रीडन्तो रथाङ्गाश्चक्रवाका यस्या तथाभूता सत्यपि च, विभावरीव रात्रिरिव, बभौ शुशुभे, पक्षे निर्दोषा पङ्ककण्टकादिदोषरहिता, क्रीडन्ति सभ्रमन्ति रथाङ्गानि चक्राणि यस्या तथेति च ॥ ४५ ॥

यावन्नाक्षिपतीति—यावत् यावत्कालपर्यन्तम् हस्त्यारोहवरो गजाधिष्ठातृवर, क्षणेन सत्वरम्, विस्तृत विततम्, करिणो गजस्य वक्त्रच्छद मुखावरणम्, नाक्षिपति न दूरीकरोति, तावता कालेन, प्रतिद्विप गत प्रतिगजस्थित, वीर शूर, शरै सायकै, तस्य करिण, शुण्डा करम्, मद च दानञ्च गर्व वा, लोप विनाशम्, अनयत् प्रापयामास, कोपेन क्रोधेन, उद्धत समुद्दण्ड, सोऽपि छिन्नशुण्ड शुण्डालोऽपि, छिन्नेनैव कृत्तेनैव, करेण शुण्डया, त प्रतिभट प्रतिवीरम्, द्राग् झटिति, मूर्च्छास्पद चैतन्यातीतम्, व्यधाच्चकार ॥४६॥

भल्लैरिति—प्रतिद्विरदमल्लाना विपक्षगजस्थितशूराणा धनुर्भ्य कोदण्डेभ्यो विमुक्तास्त्यक्तास्तै कुम्भेषु गण्डस्थलेषु मग्न निचित शिखर मुख येषा तै, भल्लै प्रासै गजेन्द्रा हस्तिप्रमुखा आरावहीन केकारहित वदन मुख येषा तै, शिखिना केकिना समूहै कलापै, आरूढानि समधिष्ठितानि तुङ्गशिखराणि समुच्चशृङ्गाणि येषा तथाभूता शैलवर्गा इव पर्वतसमूहा इव, व्यलसन् शुशुभिरे । उपमा । वसन्ततिलकावृत्तम् ॥४७॥

इह खलु कौचनेति—इह समराङ्गणे, खलु निश्चयेन, क्रोधेन कोपेन तरलौ चपलाविति क्रोधतरलौ, समीककलाया समरवैदग्ध्या कुशलौ निपुणौ, कौचन कावपि, मत्तदन्तावलौ मत्तगजौ, परस्परमन्योऽन्य दन्तसघट्टनेन रदनाघातेन जनित समुत्पादितो यो गम्भीरारावो गम्भीरशब्दस्तेन, बृहितभरेण च गजितसमूहेन च, गगनतल नभस्तलम्, पूरयन्तौ सम्भरन्तौ गण्डतलाभ्या कटप्रदेशाभ्या विसृत्वरा प्रसरणशीला या मदधारा दानसन्ततयस्तासा सौरभेण सौगन्ध्येन प्रचुरा प्रपूर्णा, तथाभूता कर्णतालविगलन्तश्च श्रवणव्यजनानि सरन्तश्च ये समीरा पवनास्तै, आजिरङ्गतले समररङ्गभूमौ, मूर्च्छितान् सम्प्राप्तमोहान्,

स्थपुटितामादधानौ, पूर्वपश्चिमसमीरसमीरितौ सजलजलदाविवापतन्तौ, सकललेखजनतनूरुहसौख्यशायनिक भयानक समीकमातेनतु ।

आयोधन विदधतोर्गजयो कयोश्चिद्
दन्तप्रघट्टजनिताग्निकणा स्फुरन्त ।
हैमप्रदीप्रवलयावलिखण्डतुल्या
माञ्जिष्ठचामरगता सुभटैर्नु दृष्टा ॥ ४८ ॥

कश्चिद्गज प्रतिभट चरणे गृहीत्वा
सम्भ्रामयन्दिवि रुषा परुषप्रचार ।
चिक्षेप दूरतरमूर्ध्वमय च मानी
द्रागेत्य कुम्भयुगलीमसिना बिभेद ॥ ४६ ॥

इभोद्गताना नवमौक्तिकाना वर्षेण सख्ये निरवग्रहेण ।
मुक्तामयत्व दधती च रङ्गस्थली गदाढ्या बत सबभूव ॥ ५० ॥
निपात्य कचिद्भुवि शुण्डयारि दन्तेन हन्तु करिणि प्रवृत्ते ।
दन्तान्तराल प्रविशन्स धीरश्चिच्छेद शुण्डा करवालवल्लया ॥ ५१ ॥

---

भटान् योद्धृन्, प्रबोधयन्तौ सचेतनान्कुर्वन्तौ भुग्न आकुञ्चितो वालो वालधिर्ययोस्तौ 'वाल पुसि शिशो केशे वाजिवारणवालधौ' इति विश्वलोचन । सक्थिजवघटित ऊरूरयसहितो य पदविन्यासश्चरणनिक्षेपस्तेन, वसुन्धरा वसुधाम्, स्थपुटिता नतोन्नताम्, आदधानौ कुर्वाणो, पूर्वपश्चिमसमीराभ्या प्राचीप्रतीचीपवनाभ्या समीरितौ प्रेरितौ, सजलजलदाविव सतोयतोयदाविव, आपतन्तौ समागच्छन्तौ, सकलाश्च ते लेखजनाश्चेति सकललेखजना रणकौतुकदर्शनाय समापतिता निखिलामरसमूहास्तेषा तनूरुहाणा रोम्णाम् सौख्यशायनिक सुखशयनसमाचारपृच्छक रोमहर्षणमिति यावत्, भयानक भयङ्करम्, समीक युद्धम्, आतेनतु विस्तारयामासतु ।

आयोधनमिति—आयोधन युद्धम्, विदधतो कुर्वतो, कयोश्चित् कयोरपि द्वयो, गजयो करिणो, स्फुरन्त समुत्पतन्त, मञ्जिष्ठचामरगता मञ्जिष्ठरागरक्तवालव्यजनप्राप्ता, दन्तयो रदनयो प्रघट्टेन समाघातेन जनिता समुत्पन्ना येऽग्निकणा अनलस्फुलिङ्गास्ते, सुभटै शूरै, हैमा सुवर्णनिर्मिता प्रदीप्रा प्रभास्वरा ये वलया कटकास्तेषामावलि पङ्क्तिस्तस्या खण्डै शकलैस्तुल्या सन्निभा, नु वितर्के, दृष्टा समवलोकिता ॥४८॥

कश्चिद्गज इति—परुष कठोर प्रचार प्रभ्रमण यस्य तथाभूत, कश्चित्कोऽपि, गज करी, प्रतिभट विपक्षशूरम्, चरणे पादे, गृहीत्वाऽऽदाय, दिवि गगने, सम्भ्रामयन् सघूर्णयन्, रुषा रोषेण, दूरतरमतिविप्रकृष्टम्, ऊर्ध्वमुपरि, चिक्षेप क्षिपति स्म, मानी गर्वोपेत, अयञ्च प्रतिभट, द्राग् झटिति, एत्य समागत्य, असिना कृपाणेन, कुम्भयुगली गण्डयुग्मम्, बिभेद विदारयामास ॥४९॥

इभोद्गतानामिति—सख्ये समरे, इभोद्गताना गजोत्पतितानाम्, नवमौक्तिकानामभिनवमुक्ताफलानाम्, निरवग्रहेण प्रतिबन्धरहितेन, वर्षेण वृष्ट्या, 'वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ' इत्यमर, मुक्तामयत्व मौक्तिकप्रचुरताम्, विरोधपक्षे नीरोगताम्, दधती बिभ्रती, रङ्गस्थली रङ्गभूमि, गदाढ्या गदाभिधानशस्त्रसहिता विरोधपक्षे गदै रोगैराढ्या सहिता सबभूव समजायत, बतेति खेदे । विरोधाभासालङ्कार, उपजातिवृत्तम् ॥५०॥

निपात्य कश्चिदिति—करिणि गजे, कञ्चित्कमपि, अरि शत्रुम्, शुण्डया करेण, भुवि पृथिव्याम्, निपात्य समास्फाल्य, दन्तेन रदनेन, हन्तु मारयितुम्, प्रवृत्ते तत्परे, सति, दन्तान्तराल रदनमध्यम्, प्रविशन् प्रवेश कुर्वन्, धीरो धैर्योपेत, सोऽरि, करवालवल्लया कृपाणलतया, शुण्डा करम्, चिच्छेद छिनत्ति स्म ॥५१॥

चक्रेण कृत्त निजमेव हस्तमग्रप्रदेशाद्धरणौ पतन्तम् ।
पिपेष पादेन रुषा परीत करेणुराज स्नुतरक्तपङ्कम् ॥ ५२ ॥

गृहीतो नागेन प्रतिभटवर पुष्करगतो
वितन्वानो डोलामसिनिहृतहस्तेन करिणा ।
पदा पेष्टु नीत सपदि पदमध्ये प्रचलितो
गृहीत्वा वालाग्रे व्यसुममुमधान्मुष्टिहतिभि ॥ ५३ ॥

तत्र फुल्लकुन्दकुसुमावदाता जितवातजवना वाजिनो गगनतलोत्क्षिप्ताग्रपादतया नभ -स्थलमाक्रमितुमिव प्रवृत्ता, पुरत पतितानि महाशैलकुलानीव दन्तावलशरीराणि लङ्घयन्त, सगरसागरे परस्पर कलहायमाना कल्लोला इव विरेजिरे ।

खुराघातै कश्चित्प्रजवनहय कम्पितधर
पृषत्कै कीर्णाङ्गोऽप्यविरहितशिक्षानुसरण ।
पदे खड्गच्छिन्नोऽप्यहितसुभटेनापतदसौ
न तावद्यावत्त न निजवरसादी निहतवान् ॥ ५४ ॥

छिन्नेऽपि दक्षिणभुजे करवालवल्ली
वामे करे विचलयन् रिपुमाप सादी ।
वीरस्य तस्य रिपुखण्डनकेलिकाया-
मक्षीणशक्तिरगमत् स हि दक्षिणत्वम् ॥ ५५ ॥

---

चक्रेण कृत्तमिति—रुषा कोपेन, परीतो व्याप्त, करेणुराजो गजेन्द्र, चक्रेण शस्त्रविशेषेण, कृत्त छिन्नम्, अग्रप्रदेशान्मुखाग्रभागात्, धरणौ पृथिव्याम्, पतन्त स्खलन्तम्, स्नुत क्षरितो रक्तपङ्को रुधिरकर्दमो यस्मात्तम्, निजमेव स्वकीयमेव, हस्त शुण्डाम्, पादेन चरणेन, पिपेष पिनष्टि स्म । क्रोधे को विवेक इति भाव ॥५२॥

गृहीतो नागेनेति—नागेन गजेन, गृहीत आत्त, पुष्करगत शुण्डाग्रभागस्थित प्रतिभटवरो विपक्षयोद्धा, असिना खड्गेन निहत खण्डितो हस्तो यस्य तेन, करिणा गजेन, डोला हिन्दोलिकाम्, वितन्वान कुर्वाण सन्, पदा चरणेन, पेष्टु चूर्णयितुम्, पदमध्ये चरणमध्ये, नीत प्रापित, किन्तु, सपदि झटिति, प्रचलित प्रकर्षेण चलित स, वालाग्रे पिच्छाग्रे, गृहीत्वा समालम्ब्य, मुष्टिहतिभिर्मुष्टिप्रहारै, अमु गजम्, विगता विनष्टा असव प्राणा यस्य त मृतमिति यावत्, व्यधात् अकार्षीत् । शिखरिणी च्छन्द ॥५३॥

तत्र फुल्लकुन्देति—तत्र तस्मिन्, सगरसागरे समरपयोनिधा, फुल्लकुसुमानीव प्रस्फुटितमाध्य-पुष्पाणीवावदाता समुज्ज्वला, जितवातजवना पराभूतपवनवेगा, वाजिनो हया, गगनतले नभस्तल उत्क्षिप्तावुत्थापितावग्रपादौ पुरश्चरणौ येषा तेषा भावस्तत्ता तया, नभ स्थल गगनतलम्, आक्रमितु-मुल्लङ्घयितुम्, प्रवृत्ता इव तत्परा इव, पुरत पुरस्तात्, पतितानि भ्रष्टानि, महाशैलकुलानीव महाचल-कदम्बकानीव, दन्तावलशरीराणि गजेन्द्रकायान्, लङ्घयन्त समुत्क्राम्यन्त, परस्पर मिथ, कलहायमाना कलह कुर्वाणा, कल्लोला इव तरङ्गा इव, विरेजिरे शुशुभिरे ।

खुराघातैरिति—खुराणा शफानामाघाता प्रहारास्तै कम्पिता वेपिता धरा पृथिवी येन तथाभूत, कश्चित् कोऽपि प्रजवनश्चासौ हयश्चेति प्रजवनहय प्रकृष्टवेगवाह, पृषत्कैर्बाणै, कीर्णाङ्गोऽपि व्याप्तशरीरोऽपि, अहितसुभटेन शत्रुशूरेण, पदे चरणे, खड्गच्छिन्नोऽपि कृपाणकृत्तोऽपि, अविरहितमत्यक्त शिक्षानुसरण येन तथाभूत, असौ हय, तावत् तावत्कालपर्यन्तम्, न अपतत् नो पपात, यावत् यावत् कालपर्यन्तम्, निजवरसादी स्वारोहिजन, तमहितसुभटम्, न निहतवान् नो निजघान । शिखरिणीच्छन्द ॥५४॥

छिन्नेऽपि दक्षिणभुज इति—सादी हयारोही, दक्षिणभुजे वामेतरबाहौ, छिन्नेऽपि कृत्तेऽपि सति

अश्वारोहै कृत्तदण्डानि भूमौ पर्यस्तानि स्फारच्छत्राणि रेजु ।
रूप्यस्थालानीव क्लृप्तानि मृत्योराहाराय प्रौढचन्द्रद्युतीनि ॥ ५६ ॥
खड्गै कृत्ता वाजिना वक्त्रभागा रक्तस्रोतोनीयमाना जवेन ।
मग्नाङ्गानामुन्मुखाना हयाना भ्रान्ति तेनु पश्यतामाजिरङ्गे ॥ ५७ ॥

भटाना रोषेण प्रतिभटसमीप प्रचलता
समुद्धाता रेजुश्चलदसिलता पाणिकलिता ।
भुजश्रीखण्डद्रुप्रकरकुहरोद्यद्विषधरा
रिपूणा प्राणालिं कबलयितुकामा इव तदा ॥ ५८ ॥

समीकपदवीविद समदसिंहनादा भटा
ववल्गुरमितै शरै रचितमण्डपा पुष्करे ।
निरस्ततपनातपश्रमभरा क्षणाद्भङ्गुरै
शरीरनिकरैर्यश स्थिरतनूर्भुवि प्रेप्सव ॥ ५९ ॥

तत्र समीककलाविपश्चिदाश्चर्यवृत्ति पदाति, केनचित्पदगेन भुजध्वजतिर्यगर्पितवैजयन्ती-

---

वामे सव्ये, करे पाणौ, करवालवल्ली कृपाणलताम्, विचलयन् कम्पयन्, रिपु वैरिणम्, आप प्राप, तदभि मुख जगामेति यावत्। तस्य पूर्वोक्तस्य, वीरस्य शूरस्य, रिपुखण्डनकेलिकाया शत्रुशकलनक्रीडायाम्, अक्षीणा शक्तिर्यस्य तथाभूतोऽहीनसामर्थ्य, स वामो बाहु, हि निश्चयेन, दक्षिणत्व वामेतरत्वम्, पक्षे कौशलम्, अगमत्प्राप । वसन्ततिलकावृत्तम् ॥५५॥

अश्वारोहैरिति—अश्वारोहै सादिभि, कृत्ताश्छिन्ना दण्डा येषा तानि, अतएव भूमौ पृथिव्याम्, पर्यस्तानि विकीर्णानि, स्फारच्छत्राणि विशालातपत्राणि, मृत्योर्यमस्य, आहाराय भोजनाय, क्लृप्तानि रचितानि, प्रौढचन्द्रस्येव द्युतिर्येषा तानि तरुणहिमरश्मिकान्तीनि रूप्यस्थालानीव रजतपात्राणीव, रेजु शुशुभिरे । शालिनीच्छन्द ॥५६॥

खड्गैरिति—खड्गै कृपाणै, कृत्ताश्छिन्ना, वाजिना वाहानाम् 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तय' इत्यमर, वक्त्रभागा मुखप्रदेशा, जवेन वेगेन रक्तस्रोतोनीयमाना रुधिरप्रवाहनीयमाना सन्त, आजिरङ्गे समराजिरे, पश्यतामवलोकयताम्, जनानामिति शेष, मग्नाङ्गाना ब्रुडितदेहानाम्, उन्मुखानाम् उत्थितवक्त्राणाम्, हयाना वाहानाम्, भ्रान्ति भ्रमम्, तेनु विस्तारयामासु । शालिनीच्छन्द ॥५७॥

भटानामिति—तदा तस्मिन् काले, रोषेण कोपेन, प्रतिभटसमीप प्रतियोद्धृनिकट यथा स्यात्तथा, प्रचलता गच्छताम्, भटाना शूराणाम्, समुद्धाता समुत्थापिता, पाणिकलिता हस्तधृता, चलदसिलताश्चञ्चलकृपाणवल्ल्यं, रिपूणा वैरिणाम्, प्राणालिं जीवितसमूहम्, कवलयितुकामा ग्रस्तुमनस, भुजा एव बाहव एव श्रीखण्डद्रुप्रकराश्चन्दनवृक्षसमूहास्तेषा कुहरेभ्यो विवरेभ्य उद्यन्त समुत्तिष्ठन्तो ये विषधरा नागास्त इव, रेजु शुशुभिरे । रूपकोत्प्रेक्षे । शिखरिणीच्छन्द ॥ ५८ ॥

समीकपदवीविद इति—समीकपदवी युद्धपदवी विदन्ति जानन्तीति समीकपदवीविद समद साहङ्कार सिंहनाद क्ष्वेडा येषा ते समदसिंहनादा, अमितैरसख्यातै, शरैर्बाणै, पुष्करे गगने, रचितो विहितो मण्डपो वस्त्रभवन यैस्त इति रचितमण्डपा, तपनस्य सूर्यस्यातपेन घर्मेण जन्य श्रमभर खेदातिशय इति तपनातपश्रमभर निरस्तो दूरीकृतस्तपनातपश्रमभरो यैस्त इति निरस्ततपनातपश्रमभरा, क्षणादल्पेनैव कालेन, भङ्गुरैर्विनश्वरै, शरीरनिकरैर्देहसमूहै, यशास्येव कीर्तय एव स्थिरतन्व स्थायिशरीराणि ता इति यश स्थिरतनू, भुवि पृथिव्याम्, प्रेप्सव प्राप्तुमिच्छव, भटा शूरा, ववल्गु सञ्चलन्ति स्म । पृथ्वीवृत्तम् ॥ ५९ ॥

तत्र समीककलेति—तत्र समरे, समीककलाविपश्चित्सु युद्धकलाकोविदेष्वाश्चर्यवृत्तिर्विस्मयावहचरित इति समीककलाविपश्चिदाश्चर्यवृत्ति', पदाति पत्ति, भुजध्वजेन बाहुध्वजेन तिर्यगर्पिता तिर्यगात्ता या

तुलिता कृपाणीलता बिभ्राणेन 'इदं मदीयनामधेयपूर्वभाग बिभर्ति' इति रोषादिव पदद्वये निकृत्तो-ऽपि, अखण्डितमात्मसत्त्वमिव घनवशजात चापमालम्ब्य, शूरो न पपात ।

नीलाभ्रतुल्ये कवचे भटस्य नीते प्रभेद करवालवल्ल्या ।
तत्र प्रवृत्ता घनशोणिताालि सौदामिनीसाम्यमवाप दीर्घा ॥ ६० ॥
कश्चिद्भट शत्रुशरै परीतसमस्तदेह समिति व्यलासीत् ।
यथा महीज प्रचुरप्ररोहो यथा च नागाततचन्दनद्रु ॥ ६१ ॥

वीराग्रेसर पदचर प्रथितरिपुमण्डलाग्रखण्डितमस्तकविगलदसृग्धाराभयङ्करमुखभागतया बहि प्रसृतया क्रोधपरम्परया परीत इव मृत्युमूर्धानं दृढतरमुष्णीषेण प्रभुकार्यापरिसमाप्तौ प्राणोत्क्रमण निरोद्धुमिव निबध्य करे कृपाण मनसि धैर्यं सपत्ने दृष्टि महीतले रिपुशिर सहस्रपतन च युगपदा-तन्वान क्रतुभुजा श्लाघाना पुष्पवृष्टीना च पात्रमजायत ।

सैन्यद्वये तत्र विमिश्रितेऽपि विशेष एष व्यलसद्रणाग्रे ।
स्वीया पराश्च पदगा पुरस्ताद्ये समुखास्ते रिपुसैन्यवर्गा ॥६२॥

वैजयन्ती पताका तया तुलिता सन्निभा ताम्, कृपाणालता खड्गवल्लरीम्, बिभ्राणेन गृह्णता, केनचित् केनापि, पदगेन पदातिना, 'इद पदद्वयम्, मदीयनामधेयस्य मामकनाम्न पूर्वभाग पूर्वावयवम्, बिभर्ति दधाति' इति रोषादिव इति क्रोधादिव, पदद्वये चरणयुगले, निकृत्तोऽपि छिन्नोऽपि, शूरो योद्धा अख-ण्डितमत्रुटित पक्षेऽस्खलितम्, आत्मसत्त्वमिव स्वकीयधैर्यमिव, घनवशजात सुदृढवेणुसमुत्पन्न पक्षे सुकुलोत्पन्नम्, चाप धनु, आलम्ब्य समाश्रित्य, न पपात न पतति स्म, छिन्नपादोऽपि धनुर्यष्टिसाहाय्येन भुवि तस्थाविति भाव ।

नीलाभ्रतुल्य इति—नीलाभ्रतुल्ये श्यामपयोदप्रतिमे, भटस्य शूरस्य, कवचे वारवाणे, करवालवल्ल्या कृपाणलतया, प्रभेद प्रभिन्नता नीते प्रापिते सति, तत्र कवचे, प्रवृत्ता प्रादुर्भूता, दीर्घा विशाला, घनशोणि ताालि सान्द्ररुधिरपङ्क्ति, सौदामिनीसाम्य विद्युत्सादृश्यम्, अवाप लेभे ॥ ६० ॥

कश्चिद्भट इति—समिति समरे, शत्रुशरै रिपुबाणै, परीतो व्याप्त समस्तदेहो निखिलशरीरो यस्य तथाभूत, कश्चित् कोऽपि, भटो योद्धा, प्रचुरा भूयास प्ररोहा अङ्कुरा यस्य तथाभूत, महीजो यथा वृक्ष इव, नागै पन्नगैराततो व्याप्त इति नागातत स चासौ चन्दनद्रुश्च मलयजमहीरुहश्चेति नागातत-चन्दनद्रु, यथा च इव च, व्यलासीच्छोभते स्म ॥ ६१ ॥

वीराग्रेसर इति—वीराग्रेसर शूरप्रधान, पदचर पदाति, प्रथितरिपो प्रसिद्धशत्रो मण्डलाग्रेण कृपाणेन खण्डित निकृत्त यन्मस्तक शिरस्तस्माद्विगलन्ती पतन्ती या सृग्धारा रुधिरसन्ततिस्तया भयङ्करो भीत्युत्पादको मुखभागो यस्य तस्य भावस्तत्ता तया, बहि प्रसृतया बहिर्निसृतया, क्रोधपरम्परया रोषसन्तत्या, परीत इव व्याप्त इव, मृत्युनोपलक्षितो मूर्धा मृत्युमूर्धा तम्, मृतशिर, उष्णीषेण शिरोवेष्टनवस्त्रेण, प्रभुकार्य-स्य स्वामिकृत्यस्यापरिसमाप्तावनवसाने प्राणोत्क्रमण जीवननिसरणम्, निरोद्धुमिव निवारयितुमिव, दृढतर सुदृढ यथा स्यात्तथा, निबध्य निबद्ध कृत्वा, करे हस्ते, कृपाण करवालक, मनसि चेतसि, धैर्यं धीरताम्, सपत्ने शत्रौ दृष्टि दृशम्, महीतले भूपृष्ठे, रिपुशिर सहस्रपतनञ्च शत्रुमस्तकसहस्रावपातञ्च, युगपदेककाला-वच्छेदेन, आतन्वान कुर्वाण, क्रतुभुजा देवानाम्, श्लाघाना प्रशसानाम्, पुष्पवृष्टीनाञ्च सुमनोवर्षाणाञ्च, पात्र भाजनम्, अजायत बभूव ।

सैन्यद्वय इति—तत्र रणाग्रे तस्मिन् समरमुखे, सैन्यद्वये पक्षद्वयसैन्ये, विमिश्रितेऽपि सम्मिलितेऽपि एष एव विशेष एतावदेव वैशिष्ट्यम्, व्यलसद् व्यशोभत, यद् स्वीया स्वकीया परा वा परकीया वा ये पदगा पत्तय, पुरस्तादग्रे, समुखा अभिमुखा आसन्, त एव, रिपुसैन्यवर्गा शत्रुसैनिकवर्गा, आसन्निति शेष, सैन्यद्वये परस्पर मिलिते सति शत्रुमित्रपक्षाभिज्ञान नावशिष्ट किन्तु यो यस्य पुरस्तात्तस्थौ स एव तस्य शत्रुरासीदिति भाव ॥६२॥

तदानी रिपुशरनिकृत्तचापलताश्चापलकरवालैर्भग्नकरवाला पाणिभिश्छिन्नपाणयश्चरणै-र्भिन्नचरणा दुर्वचनै क्रोधपरीता योधा परस्परमाजघ्नु । एव शब्दपूरितगगनजयानके भयानके समीके विजृम्भिते मथननिर्मुक्तनाराचधारापातेन दीना निजसेवामालोक्य करकलितकार्मुकलता विस्फारघोषेण द्विविधानपि महीभृत कम्पयन्कोपारुणास्य पद्मास्यो वेगविततचक्रस्पन्दनेन स्यन्दनेन विपक्षवाहिनीं दिधक्षन्निवाभिदुद्राव ।

पद्मास्यप्रहिता प्रभूतविशिखा सेनान्तराले रिपौ-
योधास्तत्र सहस्रशो निपतितान्भूमौ व्यधु पङ्क्तिश ।
घोटान् पाटितविग्रहान् गजघटा प्राणालिभिर्दुर्घटा
कूजच्चापधरान् बहूञ्छरधिकाश्चक्रु र्व्यसून् सयुगे ॥ ६३ ॥

तस्यामितै शरगणैर्गगन रिपूणा
सैन्य च पूरितमभूद्घनसप्रहारे ।
भूमिश्च भग्नभटवाजिगजै परीता
हाहारवैरखिलस्य दिशावकाश ॥ ६४ ॥

द्विषता तत्पतीना च नवास्रैर्निम्नगा सृजन् ।
पद्मास्य प्रीणयामास निजसैन्यनदीपतिम् ॥ ६५ ॥

---

तदानीमिति—तदानी तस्या वेलायाम्, रिपुशरे शत्रुबाणैर्निकृत्ता छिन्ना चापलता धनुर्वल्ली येषा ते, योधा भटा, चापलकरवालै चञ्चलकृपाणै, भग्नकरवाला खण्डितखड्गा, पाणिभिर्हस्तै, छिन्नपाणय कृत्तकरा, चरणै पादै, भिन्नचरणा शकलितपादा, दुर्वचनैर्दुष्टवचोभि, क्रोधपरीता कोपव्याप्ता, सन्त, परस्परमन्योऽन्यम्, आजघ्नु प्रजह्रु । एवमनेन प्रकारेण, शब्दै पूरित गगन येन स शब्दपूरित गगन, तथाभूतो जयानको विजयदुन्दुभिर्यस्मिस्तस्मिन्, भयानके भयङ्करे, समीके युद्धे, विजृम्भिते सति वृद्धिगते सति, मथनेन काष्ठाङ्गारश्यालेन निर्मुक्तास्त्यक्ता या नाराचधारा बाणसन्ततयस्तासा पातेन पतनेन, दीना दु खीभूताम्, निजसेना स्वकीयपृतनाम्, आलोक्य दृष्ट्वा, करकलिता हस्तधृता या कार्मुकलता धनुर्वततिस्तस्या विस्फारघोषेण प्रचुरशब्देन, द्विविधानपि द्विप्रकारानपि महीभृतो राज्ञ पर्वताश्च, कम्पयन् वेपयन्, कोपारुणास्य क्रोधलोहितवदन, पद्मास्यो जीवकसुहृद्विशेष, वेगेन जवेन वितत विस्तृत चक्रस्पन्दन रथाङ्गसञ्चरण यस्य तेन, स्यन्दनेन रथेन, विपक्षवाहिनी शत्रुसेनाम्, दिधक्षन्निव दग्धुमिच्छन्निव, अभिदुद्राव सम्मुखमाजगाम ।

पद्मास्यप्रहिता इति—पद्मास्येन प्रहिता प्रेरिता इति पद्मास्यप्रहिता, प्रभूतविशिखा प्रचुर-बाणा, तत्र तस्मिन्, सेनान्तराले पृतनामध्ये, सहस्रश सहस्रसख्याकान्, रिपोरराते, योधान् योद्धॄन्, भूमौ रणपृथिव्याम्, पङ्क्तिश श्रेणिक्रमेण, विपतितान् स्खलितान्, व्यधुश्चक्रु, घोटानश्वान्, पाटितो विदा-रितो विग्रहो देहो येषा तान्, गजघटा करिपङ्क्ति प्राणालिभि प्राणसमूहै, दुर्घटा वियुक्ता, कूजच्चापधरान् शब्दायमानधनुर्धारकान्, शरधिकान्बाणधारकान्, बहून्प्रभूतान्, जवानिति शेष, सयुगे समरे, विगता निष्क्रान्ता असव प्राणा येषा तथाभूतान् मृतानीति यावत्, चक्रुर्विदधु ॥६३॥

तस्यामितैरिति—घनसप्रहारे विकटयुद्धे, तस्य पद्मास्यस्य, अमितैरपरिमितै, शरगणैर्बाणसमूहै, गगन नभ, रिपूणा शत्रूणाम्, सैन्यञ्च पृतना च, पूरित सम्भृतम्, अभूदासीत् । भटाश्च वाजिनश्च गजाश्चेति भटवाजिगजा योद्धृहयहस्तिन, भग्नाश्च ते खण्डिताश्च ते भटवाजिगजाश्चेति भग्नभटवाजिगजास्तै, भूमिश्च समरभूश्च, परीता व्याप्ता, अखिलस्य शत्रुमण्डलस्य, हाहारवैर्हाहाशब्दै, दिशावकाश काष्ठान्तरालम्, परीतो व्याप्त, अभूत् ॥६४॥

द्विषतामिति—द्विषतामरातीनाम्, तत्पतीनाञ्च तत्स्वामिनाञ्च, नवास्रैर्नूतनरुधिरै निम्नगा नदी, सृजन् रचयन्, पद्मास्यस्तन्नामा जीवकसुहृद्, निजसैन्यमेव स्वकीयपृतनैव नदीपति सागरस्तम् प्रीणयामास सम्प्रीतञ्चकार ॥६५॥

शरास्तदानी जलजाननस्य नामाक्षराणा मलिता न भूयात् ।
इतीव राज्ञा हृदये प्रविष्टा प्राणानगृह्णन्त न रक्तलेशम् ॥ ६६ ॥

एव निजध्वजिनीक्षोभमालोक्य तत्क्षणकन्दलितकोपौ मगधमागधभूपौ कुटिलीकृतचापौ निर्निरोधप्रचारेण रथेन क्षोणीतल क्षोभयन्तौ निजसैनिकशिखावलघनगर्जितायमानसिहनादेन वैरिजनधैर्यमुन्मूलयन्तौ जवेन पद्मास्यमापतताम् ।

त मागधमहीपाल स्वर्भानुरिव भास्करम् ।
दधाव रथिन वीरो देवदत्तो धनुर्धर ॥ ६७ ॥

तदनु करलाघवकोरकितधनुर्लतारिनिरन्तरनिर्मुक्तशरनिकरदूरोत्सारितनभ स्थलसमिलितामरलोक पाणिपात्रस्थकीलालपाननिरुत्सुकैर्विस्मयस्तिमितलोचनैस्तृषोत्तालैर्वेतालैर्विलोक्यमानशरसन्धानमोक्षणमन्योऽन्यास्त्रसघट्टसञ्जातप्रोज्ज्वलत्प्रचुरविस्फुलिङ्गपरम्परावित्रासितकुञ्जरकुल वैमानिकजनसीमातीतश्लाघाविषयभूमाञ्चित सकलवीरजनोत्साहदानशौण्ड प्रचण्डतरदोर्दण्डयोर्मथनपद्मास्ययोर्मागधदेवदत्तयोश्च वाचामगोचर समरमुदजृम्भत ।

मथनदलितान्बाणान्दृष्ट्वा निजान्बहुशस्तदा कमलवदन सोऽय कर्णान्तनर्तितशिञ्जिनि ।
विततविशिखै सूत केतु च तस्य विभेदयन्निजगलगलत्सिहध्वानैर्नभ समभेदयत् ॥ ६८ ॥

---

शरास्तदानीमिति—तदानी तस्मिन् काले, नामाक्षराणा नामधेयवर्णानाम्, मलिता मालिन्यम्, न भूयाद् न भवेदितीव हेतो, जलजाननस्य पद्मास्यस्य, शरा बाणा, राज्ञा क्षितिपतीनाम्, हृदये मनसि, प्रविष्टा सन्त, प्राणान् जीवान्, अगृह्णन्त गृह्णन्ति स्म, रक्तलेश रुधिरबिन्दुम्, नागृह्णन्त । तदीया शरा वेगेन विपक्षपार्थिवविग्रहान् छित्त्वा बहिर्निष्क्रान्ता इति भाव ॥६६॥

एवमिति—एवमनेन प्रकारेण, निजध्वजिनीक्षोभ स्ववाहिनीचापल्यम्, आलोक्य दृष्ट्वा, तत्क्षण तत्काल कन्दलित समुत्पन्न कोपो ययोस्तौ, मगधमागधभूपौ मगधमागधराजौ, कुटिलीकृतचापौ वक्रीकृतकार्मुकौ, निर्निरोधोऽप्रतिबन्ध प्रचारो गमन यस्य तेन, रथेन शताङ्गेन, क्षोणीतल महीपृष्ठम्, क्षोभयन्तौ, सञ्चलयन्तौ, निजसैनिका एव स्वकीयवीरा एव शिखावला मयूरास्तेषा घनगर्जितायमानो मेघगर्जनसन्निभो य सिंहनाद क्ष्वेडा तेन, वैरिजनधैर्यं शत्रुसमूहधीरताम्, उन्मूलयन्तावुत्पाटयन्तौ, जवेन वेगेन, पद्मास्यम्, आपतताम् अभ्यगच्छताम् ।

त मागधेति—स्वर्भानू राहु, भास्करमिव सूर्यमिव, धनुर्धर कोदण्डधारक, देवदत्त स्तन्नामा, वीरो भट, रथिन स्यन्दनचारिणम्, त प्रसिद्धम्, मागधमहीपाल मागधराजम्, दधाव धावति स्म ॥६७॥

तदन्विति—तदनु तदनन्तरम्, करलाघवेन हस्तक्षिप्रकारित्वेन कोरकिता कुड्मलिता धनुर्लता कृपाणवल्ली येषा तथाभूता येऽरय शत्रवस्तैर्निर्मुक्तस्त्यक्तो य शरनिकरो बाणसमूहस्तेन दूरोत्सारिता विप्रकृष्टोत्सारिता नभ स्थलसमिलिता गगनतलसमागता अमरलोका देवसमूहा यस्मिस्तत्, पाणिपात्रस्थ करभाजनस्थित यत्कीलाल रुधिर तस्य पाने धयने निरुत्सुकैर्निरुत्कण्ठितै विस्मयस्तिमितानि लोचनानि येषा तैराश्चर्याचलनयनै, तृषोत्तालैरुदन्योत्कटै, वेतालै प्रेतविशेषै, विलोक्यमाने दृश्यमाने शराणा बाणाना सन्धानमोक्षणे धारणत्यजने यस्मिस्तत्, अन्योऽन्यस्य परस्परस्यास्त्रसघट्टेन शस्त्रसमर्दनेन सञ्जाता समुत्पन्ना प्रोज्ज्वलन्त समुत्पतन्त प्रचुरा प्रभूता ये विस्फुलिङ्गा अग्निकणास्तेषा परम्पराभि सन्ततिभिर्वित्रासित सभयीकृत कुञ्जरकुल हस्तिसमूहो यस्मिस्तत्, विमानेन चरन्तीति वैमानिकास्ते च ते जनाश्चेति वैमानिकजना देवसमूहास्तेषा सीमातीता असख्याता या श्लाघा प्रशसास्तासा विषयभूम्ना विषयबाहुल्ये नाञ्चित शोभितम्, सकलवीरजनाना निखिलवीरपुरुषाणामुत्साहदाने शौण्ड समर्थम्, प्रचण्डतरौ तीक्ष्णतरौ दोर्दण्डौ भुजदण्डौ ययोस्तयो, मथनपद्मास्ययो मागधदेवदत्तयोश्च, वाचा वाणीनाम्, अगोचर विषयातीतम्, समर युद्धम्, उदजृम्भत वर्धते स्म ।

मथनदलितानिति—तदा तस्मिन् काले, कर्णान्ते श्रवणाभ्यर्णे नर्तिता चालिता शिञ्जिनी मौर्वी

ततश्च दुर्धर्षामर्षपाटलवदनेन मथनेनार्धचन्द्रेण निकृत्ते निजकार्मुकगुणे, पद्मास्य, करतलताण्डवितकोदण्डान्तरसमारोपितकाण्डप्रकाण्डै रिपुमण्डलानि खण्डयन्, तस्य सपत्नस्य शरासन समरोत्साह च युगपद्विदारयामास।

तत्तादृग्देवदत्तप्रचलकरतलात्पत्रिणो युद्धरङ्गे
पेतु प्रोद्धूतपक्षा कतिचन गगने तस्थुरुद्यद्भयाढ्या ।
लेखाना मेघमार्गे पिहितपरिलसत्सौरभाणि प्रकाम
तस्थु पेतुश्च जीवन्धरनिखिलबले कानिचित्पुष्पकाणि ॥ ६९ ॥

यत्र तत्र रिपुवाहिनीतले पुण्डरीकमुदयत्कबन्धके।
आविरास बहुधा शिलीमुखास्तत्र तस्य जयिन समापतन् ॥ ७० ॥

एव देवदत्तस्य रणमत्तस्य दुर्ललितदोर्दर्पविलसितमसहमान किरीटखचितकुरुविन्दमणिवृन्दप्रभापुनरुक्तवदनवनजकोपारुणकान्तिप्रसर परन्तपप्रतापो मागधभूप करनर्तितचापलता-

---

येन तथाभूत, सोऽथ प्रसिद्ध, कमलवदन पद्मास्याभिधान सुहृद्, बहुशोऽनेकवारान्, निजान् स्वकीयान्, बाणान् शरान्, मथनदलितान् कृतघ्नश्यालखण्डितान्, दृष्ट्वा विलोक्य, विततविशिखैर्विस्तारितबाणै, तस्य मथनस्य, सूत सारथिम्, केतुञ्च पताकाञ्च, विभेदयन् खण्डयन्, निजगलात्स्वकण्ठाद् गलन्तो नि सरन्तो ये सिहध्वाना क्ष्वेडितरवास्तै, नभो गगनम्, समभेदयत् भिनत्ति स्म। स्वोदात्तशब्दैरम्बर पूरयामासेति भाव। हरिणीच्छन्द ॥६८॥

ततश्चेति—ततश्च तदनन्तरञ्च, दुर्धर्षश्चासावमर्षश्चेति दुर्धर्षामर्षो विकटक्रोधस्तेन पाटल श्वेतरक्त वदन मुख यस्य तेन, मथनेन राजघश्यालेन, अर्धचन्द्रेण अर्धचन्द्राकारबाणेन, निजकार्मुकगुणे स्वकीयकोदण्डप्रत्यञ्चायाम्, निकृत्ते छिन्ने, सति, पद्मास्यो जीवकसुहृत्प्रधान, करतले हस्ततले ताण्डवित नर्तित यत्कोदण्ड धनुस्तस्यान्तरे मध्ये, समारोपिता समधिष्ठापिता ये काण्डप्रकाण्डा बाणश्रेष्ठास्तै, रिपुमण्डलानि शत्रुसमूहान्, खण्डयन् विदारयन्, तस्य सपत्नस्य पूर्वोक्तस्याराते, शरासन धनु, समरोत्साहञ्च युद्धोल्लासञ्च, युगपदेककालावच्छेदेन, विदारयामास खण्डयासास।

तत्तादृगिति—प्रोद्धूतपक्षा प्रकम्पितगरुत, कतिचन केऽपि, पत्रिणो बाणा पक्षिणश्च, तत्तादृग्देव दत्तस्य तथाविधदेवदत्तस्य प्रचल चपल यत्करतल हस्ततल तस्मात्, युद्धरङ्गे समराङ्गणे, पेतु पतन्ति स्म, कतिचन केऽपि च उद्यद्भयेन समुत्पद्यमानभीत्याढ्या युक्ता पक्षे उद्यद्भया समुत्पद्यमानदीप्त्या आढ्या सहिता, सन्त, गगने नभसि, तस्थुस्तिष्ठन्ति स्म। पिहितमाच्छादित परिलसच्छोभमान सौरभ मानोज्ञक यैस्तथाभूतानि, लेखाना देवानाम्, पुष्पकाणि व्योमयानानि, प्रकाममत्यर्थं यथा स्यात्तथा, मेघमार्गे गगने, तस्थुस्तिष्ठन्ति स्म, कानिचिच्च कान्यपि च, पिहित व्याप्त परिलसच्छोभमान सौरभ सौगन्ध्य येषा तानि, लेखाना विजयावलोकनप्रहृष्टदेवानाम्, पुष्पाण्येव पुष्पकाणि कुसुमानि, जीवन्धरनिखिलबले जीवकसमग्रसैन्ये, पेतु पतन्ति स्म ॥ ६९ ॥

यत्र यत्रेति—यत्र यत्र यस्मिन् यस्मिन्, उदयन्त उत्पतन्त कबन्धा शिरोहीनमृतकदेहा यस्मिंस्तस्मिन्, पक्षे उदयत्समुच्छलत्कबन्ध पाथो यस्मिंस्तस्मिन्, रिपुवाहिनीतले शत्रुसैन्यमध्ये पक्षे शत्रुनदीमध्ये, 'वाहिनी स्यात्तरङ्गिण्या सेनासैन्यप्रभेदयो' इति मेदिनी, पुण्डरीक सितच्छत्र पक्षे सिताम्भोजम् 'पुण्डरीक सिताम्भोजे सितच्छत्रे च भेषजे' इति मेदिनी, आविरास प्रकटीबभूव, तत्र तत्र, जयिनो विजयवत तस्य देवदत्तस्य, शिलीमुखा शरा पक्षे बाणाश्च, 'शिलीमुखोऽलिकाण्डयो' इति मेदिनी, समापतन् पतन्ति स्म। श्लेष ॥ ७० ॥

एवं देवदत्तस्येति—एवमनेन प्रकारेण, रणेन समरेण मत्त प्रगर्वितस्तस्य, देवदत्तस्य तन्नामसुभटस्य, दुर्ललितयोरास्फाल्यमानयोर्दोषो भुजयोर्यो दर्पो गर्वस्तस्य विलसित चेष्टितम्, असहमानोऽक्षाम्यन्, किरीटखचिताना मकुटनिस्यूताना कुरुविन्दमणीना पद्मरागरत्नाना वृन्द समूहस्तस्य प्रभया दीप्त्या पुनरुक्तो वदनवनजस्य मुखकमलस्य कोपारुणकान्तिप्रसरो रोषलोहितदीप्तिसमूहो यस्य स, परन्तप शत्रुसन्ताप-

निर्मुक्तबाणगणाचान्तविपक्षपक्षदुर्मद पञ्चषै पृषत्कैर्देवदत्तस्य रथघोटान्पाटयामास ।

निशितविशिखवर्यैर्विश्रुतो देवदत्त
कवचमथ विभिन्दन्मागधेशस्य कोपात् ।
उरसि निहितशक्तिस्तस्य शक्ति विलुम्पन्-
समिति विमलकीर्ति पातयामास शत्रुम् ॥ ७१ ॥

ततश्च प्रभो प्रतापमिव भुवि पातित महावीर मगधभूपालमवलोक्य क्रोधसज्वलन्नयनविगलद्विस्फुलिङ्गकलिङ्गभूपाल कुटिलितभ्रूभङ्गभीषणवदन कर्णान्ताकृष्टचापचोदितरोपवर्षेण धर्षितपरमदो हर्षितनिजचतुरङ्गबल पाटितघोटगजघटाभटपटल सरभसमेव कौरवसेना क्षोभयामास ।

विहायसि विहारिभि शरगणै कलिङ्गेशितु-
र्भयाद् द्रुतमपासरन्न परमाकुला निर्जरा ।
क्षितौ च रिपुसैनिका दिशि दिशि क्षणाद्धाविता
स्वसैनिकभयोद्यमा निजयशस्तरङ्गास्तथा ॥ ७२ ॥

विस्फारघोषैर्गगन पूरयन्हर्षयन्बलम् ।
श्रीदत्तोऽभिजगामैत मृगेन्द्र इव कुञ्जरम् ॥ ७३ ॥

---

वर्धक प्रतापो यस्य तथाभूत, मागधभूपो मगधजनपदेश, करनर्तिता हस्तकम्पिता या चापलता धनुर्वल्लरी तस्या निर्मुक्ता निष्पतिता ये बाणगणा शरसमूहास्तैराचान्तो गृहीतो विपक्षपक्षस्य शत्रुसैन्यस्य दुर्मदो दुरहकारो येन तथाभूत सन्, पञ्च षड् वा पञ्चषास्तै पृषत्कैर्बाणै, देवदत्तस्य तन्नामसुभटस्य, रथघोटान् स्यन्दनहयान्, पाटयामास विदारयामास ।

निशितविशिखवर्यैरिति—अथानन्तरम्, विश्रुतो विख्यात देवदत्त, कोपात् क्रोधात्, विशिखेषु बाणेषु वर्या श्रेष्ठा इति विशिखवर्या, निशितास्तीक्ष्णाश्च ते विशिखवर्याश्चेति निशितविशिखवर्यास्तै, मागधेशस्य मगधराजस्य, कवच वारबाणम्, विभिन्दन् विदारयन्, उरसि वक्षसि, निहिता निखाता शक्ति शस्त्रविशेषो येन तथाभूत, तस्य मगधेशस्य, शक्ति सामर्थ्यम्, विलुम्पन् नाशयन्, विमलकीर्तिरवदातयशा, सन्, समिति समरे, शत्रु सपत्नम्, पातयामास पातयति स्म । मालिनीच्छन्द ॥ ७१ ॥

ततश्च प्रभोरिति—ततश्च तदनन्तरञ्च, प्रभो स्वामिन, प्रतापमिव तेज इव, भुवि पृथिव्याम्, पातित महावीर महाभटम्, मगधभूपाल मगधेशम्, अवलोक्य दृष्ट्वा, क्रोधेन कोपेन सज्वलद्भ्या सरक्तीभवद्भ्या नयनाभ्या चक्षुर्भ्या विगलन्तो विस्फुलिङ्गा अग्निकणा यस्य स, कलिङ्गभूपाल कलिङ्गविषयनरपति, कुटिलितयोर्वक्रीकृतयोर्भ्रुवोर्भङ्गेन भीषण भयावह वदन मुख यस्य स, कर्णान्त श्रवणान्तमाकृष्टेन चापेन धनुषा चोदिता प्रेरिता ये रोपा बाणास्तेषा वर्षेण वृष्ट्या, धर्षितो विध्वस्त परमद शत्रुगर्वो येन स, हर्षित प्रसादित निजचतुरङ्गबल स्वकीयचतुरङ्गसैन्य येन स, पाटित विदारित घोटगजघटाभटाना हयहस्तिसमूहशूराणा पटल समूहो येन तथाभूत सन्, सरभसमेव सवेगमेव, कौरवसेना जीवकपृतनाम्, क्षोभयामास क्षोभिता चकार ।

विहायसीति—विहायसि नभसि, विहारिभिर्विहरणशीलै, कलिङ्गेशितु कलिङ्गभूपालस्य, शरगणै र्बाणसमूहै, भयाद् भीते, परमत्यन्तम्, आकुला व्यग्रा, निर्जरा देवा, द्रुत सत्वरम्, नापासरन् नापसरन्ति स्म, किन्तु, क्षितौ पृथिव्याम्, रिपुसैनिकाश्च शत्रुभटा अपि, स्वसैनिकाना स्वसैन्याना भयोद्यमास्त्रासचेष्टितानि, निजयशस्तरङ्गास्तथा स्वकीययशोभङ्गा अपि, क्षणादल्पेनैव कालेन, दिशि दिशि प्रतिकाष्ठम्, धाविता प्रसृता, कलिङ्गेशस्य शरगणैर्नभसि स्थिता अमरा द्रुतमपसरन्ति स्म, शत्रुसैनिका भीत्या प्रतिकाष्ठ धाविता, स्वकीयसैनिकाना भयचेष्टितानि पलायितानि, स्वयश सन्ततयश्च प्रसृता बभूवुरिति भाव ॥ ७२ ॥

विस्फारघोषैरिति—विस्फारघोषैर्धनुरास्फालनशब्दै, गगन व्योम, पूरयन्, सम्भरन् । बल सैन्यम्,

तदानी सकलवीरजनकर्णाभरणायमानभुजप्रतापयो श्रीदत्तकलिङ्गभूपयो परस्परनिकृत्त-विशिखमनिमेषैरप्यलक्ष्यशरसन्धानमोक्षणमगोचरजयपराजयमदृष्टपूर्वं दिविषदामद्भुततर समर-मुदजृम्भत ।

श्रीदत्त एष करनर्तितचापदण्डमाकृष्य सयति तथा विशिखान्मुमोच ।
एको यथा दशगुणक्रमत प्रवीरानाक्रम्य कृतन्ति जवाद्रिपुसैन्यवर्गे ॥ ७४ ॥

श्रीदत्तो रन्ध्रमन्विष्य शरैस्तस्य महीपते ।
पातयामास मकुट प्रगर्जञ्छिरसा सह ॥ ७५ ॥

तदीयमकुटोद्गतैरमितमौक्तिकै पातितै रराज समराजिर पतितभूमिभृन्मस्तकम् ।
कलिङ्गवसुधापतिप्रथितराज्यलक्ष्म्यास्तदा विकीर्णमिव विस्तृतैर्नयनबाष्पबिन्दूत्करै ॥७६॥

तदनु भासा निधौ पश्चिमपाथोनिधौ निमज्जति शोकहर्षपारावारनिमग्ना, कमलेषु मुकुलीभवत्सु मुकुलीकृतसमरविलासा, जगदेकवीरे मारे समधिरोपितशरासनगुणे क्षणादवरोपितचापगुणा, उभयेऽपि सैनिका स्वकटकभुवमासेदु । अपरेद्यु काष्ठाङ्गारेण रिपुजनगहनाङ्गारेण बहुधा प्रोत्साहितविजयकथनो मथन प्रतिफलिततपनविम्बप्रभापिञ्जरितदिशावकाश कवलयन्निव रिपु-सेनासमुद्रमाजिरङ्गमाजगाम ।

---

हर्षयन् प्रमोदयन्, श्रीदत्त एतन्नामा सुभट, मृगेन्द्र सिह, कुञ्जरमिव गजमिव, एत कलिङ्गभूपालम्, अभिजगाम तत्सम्मुखमाजगाम ॥ ७३ ॥

तदानीमिति—तदानीं तस्मिन् काले, सकलवीरजनाना निखिलशूराणा कर्णाभरणायमान श्रवणा-लङ्कारायमाणो भुजप्रतापो बाहुतेजो ययोस्तयो, श्रीदत्तकलिङ्गभूपयो श्रीदत्तकलिङ्गेशयो परस्पर मिथो-निकृत्ताश्छिन्ना विशिखा बाणा यस्मिंस्तत्, अनिमेषैरपि देवैरपि, अलक्ष्ये अदृश्ये शराणा बाणाना सन्धानमोक्षणे धारणत्यजने यस्मिंस्तत्, अगोचरावविषयौ जयपराजयौ यस्मिंस्तत्, दिविषदा देवानाम्, अदृष्टपूर्वमनव-लोकितपूर्वम्, अद्भुततरमाश्चर्यजनकम्, समर युद्धम्, उदजृम्भत वर्धते स्म ।

श्रीदत्त एषेति—एष श्रीदत्त, सयति समरे, करनर्तितचापदण्ड हस्तचालितकोदण्डदण्डम्, आकृष्य समाकृष्ट कृत्वा, तथा तेन प्रकारेण, विशिखान् बाणान्, मुमोच तत्याज, यथा येन प्रकारेण, एको विशिख दशगुणक्रमतो दशगुणितान्, प्रवीरान् योद्धॄन्, आक्रम्य रिपुसैन्यवर्गे विपक्षपृतनासमूहे, जवात् वेगात्, कृन्तति छिनत्ति ॥ ७४ ॥

श्रीदत्तो रन्ध्रमिति—प्रगर्जन् गर्जित कुर्वन्, श्रीदत्त, रन्ध्र छिद्रम्, अन्विष्य मार्गयित्वा, शरैर्बाणै, तस्य महीपते राज्ञ, शिरसा सह मूर्ध्ना साकम्, मकुट मौलिम्, पातयामास पातयति स्म ॥ ७५ ॥

तदीयमकुटोद्गतैरिति—तदा तस्मिन् काले पतितानि स्खलितानि भूमिभृता राज्ञा मस्तकानि शिरासि यस्मिंस्तत्, समराजिर युद्धाङ्गणम्, तदीयमकुटोद्गतैस्तन्मौलिसमुत्पतितै, पातितै स्रंसितै, मौक्तिकैर्मुक्ताफलै कलिङ्गवसुधापते कलिङ्गभूपालस्य प्रथिता प्रसिद्धा या राजलक्ष्मी साम्राज्यश्रीस्तस्या, विस्तृतैर्विततै, नयनबाष्पबिन्दूत्करैरश्रुपृषतासमूहै, विकीर्णमिव व्याप्तमिव, रराज शुशुभे ॥ ७६ ॥

तदनु भासा निधाविति—तदनु तदनन्तरम्, भासा निधौ सूर्ये, पश्चिमपाथोनिधौ पश्चिमार्णवे, निमज्जति सति निमग्नीभवति, शोकहर्षपारावारे विषादामोदसागरे निमग्ना ब्रुडिता, कमलेषु पद्मेषु, मुकुलीभवत्सु निमीलत्सु, मुकुलीकृत सङ्कोचित समरविलासो युद्धचेष्टित यैस्ते, जगदेकवीरे त्रिलोकप्रधान-सुभटे, मारे मदने, समधिरोपित समधिष्ठापित शरासने धनुषि गुणो मौर्वी येन तथाभूते सति, क्षणादल्पेनेव कालेन, अवरोपितो विमोचितश्चापगुणो धनु प्रत्यञ्चा यैस्ते तथाभूता, उभयेऽपि पक्षद्वयसम्बन्धिनोऽपि, सैनिका सुभटा, स्वकटकभुवं निजशिविरपृथिवीम्, आसेदु प्रापु । अपरेद्युरन्यस्मिन् दिवसे, रिपुजन एव शत्रुलोक एव गहन वन तस्याङ्गारस्तेन, काष्ठाङ्गारेण राजघ्नेन, बहुधा विविधप्रकारेण, प्रोत्साहितानि प्रवधि-तानि विजयकथनानि यस्य तथाभूत, मथनस्तच्छ्यालं, प्रतिफलित प्रतिबिम्बित यत्तपनबिम्ब सूर्यमण्डल

अनीकिनी पुरोधाय पद्मास्योऽपि रणाङ्गणम् ।
आससाद धराधीशखेचराधीशसगत ॥ ७७ ॥

तदनु मथनपद्मास्याभ्या तिलकितमुखभागा कोणताडितनिस्साणप्रभृतिविविधवाद्यरवाहूतनिर्जरनिरन्तरान्तरिक्षप्रदेशा, क्ष्वेलारवविजृम्भितसिंहगर्जनभयतर्जितदिशावशावल्लभा, नूतननिकपकषणनिर्मूलीकृतकरचलितकरवालवल्लिकाप्रतिविम्बितरविबिम्बतया मूर्तीकृतमिव निजप्रतापमाबिभ्राणा, उभयेऽपि वीरा श्लाघायोग्य युद्ध विधातुमारभन्त ।

कदनदुर्दिनमत्तशिखावल करतलोद्धृतकार्मुकभीकर ।
स मथन प्रचचाल रणाजिरे विपिनदेश इवोद्धतकेसरी ॥ ७८ ॥

विपाट्य घोटान्गजता निपात्य भटान्विभिद्य क्षितिपै सहायम् ।
सक्षोभयामास कुरूद्वहस्य बलाम्बुधि मन्दरवत्पयोब्धिम् ॥ ७९ ॥

प्रधाव्य वेगाद्रथमाजिसीम्नि पद्माननस्तस्य पुरो बभूव ।
काम्पिल्यकेशस्य स पल्लवेशो लाटाधिराजस्य च बुद्धिषेण ॥ ८० ॥

महाराष्ट्रमहीशस्य गोविन्दधरणीपति ।
अन्येषा पुरतस्तस्थुर्नन्दाढ्यविपुलादय ॥ ८१ ॥

---

तस्य प्रभया दीप्त्या पिञ्जरिता पिङ्गलवर्णीकृता दिशावकाशा काष्ठान्तरालानि येन तथाभूत सन्, रिपुसेनासमुद्र प्रत्यर्थिपृतनापारावारम्, कवलयन्निव ग्रसयन्निव, आजिरङ्ग युद्धभूमिम्, आजगाम समापतति स्म ।

अनीकिनीमिति—धराधीशखेचराधीशैर्भूमिभृद्विद्याधरराजै सगत सहित, पद्मास्योऽपि जीवकसुहृत्प्रधानोऽपि, अनीकिनी पृतनाम्, पुरोधायाग्रे कृत्वा, रणाङ्गण समराजिरम्, आससाद प्राप ॥ ७७ ॥

तदन्विति—तदनु तदनन्तरम्, मथन काष्ठाङ्गारश्याल पद्मास्यो जीवन्धरसुहृत् ताभ्याम्, तिलकित स्थासकयुतो मुखभागो येषा ते, कोणैर्वादनदण्डैस्ताडितानि समाहतानि यानि निस्साणप्रभृतिविविधवाद्यानि नि साणप्रमुखनैकवादित्राणि तेषा रवै शब्दैराहूता आकारिता ये निर्जरा देवास्तैर्निरन्तरो निरवकाशोऽन्तरिक्षप्रदेशो गगनभागो यैस्ते, क्ष्वेलारवै सिंहनादैर्विजृम्भित वर्धित यत् सिंहगर्जनभय मृगेन्द्रगर्जितभीतिस्तया तर्जिता भर्त्सिता दिशावशावल्लभा दिग्गजा यैस्ते, नूतननिकषेषु प्रत्यग्रनिकषोपलेषु कषणेन घर्षणेन निर्मलीकृता स्वच्छीकृता करचालिता पाणिप्रकम्पिता या करवालवल्लिका कृपाणलतास्तासु प्रतिबिम्बित प्रतिफलित यद्रविबिम्ब सूर्यमण्डल तस्य भावस्तत्ता तया, मूर्तीकृतमिव सदेहीकृतमिव निजप्रताप स्वतेज, आबिभ्राणा दधाना, उभयेऽपि पक्षद्वयसम्बन्धिनोऽपि, वीरा योद्धार, श्लाघायोग्य प्रशसार्हम्, विधातु कर्तुम्, आरभन्त तत्परा बभूवु ।

कदनदुर्दिनेति—कदन युद्धमेव दुर्दिन मेघच्छन्न दिन तस्मिन् मत्तशिखावलो मत्तमयूर, 'मेघच्छन्नेऽह्नि दुर्दिनम्' इत्यमर । करतले हस्ततले उद्धृतमुत्थापित यत्कार्मुक धनुस्तेन भीकरो भयङ्कर, स पूर्वोक्त, मथनो राजश्याल, विपिनदेशे गहनप्रान्ते, उद्धतकेसरीव दृप्तमृगेन्द्र इव, रणाजिरे समराङ्गणे, प्रचचाल प्रचलति स्म । द्रुतविलम्बितवृत्तम्, 'द्रुतविलम्बितमाह नभौ भरौ' इति लक्षणात् ॥७८॥

विपाट्येति—अथ मथन, क्षितिपै राजभि, सह सार्धम्, घोटान् वाहान्, विपाट्य विदार्य, गजता हस्तिसमूहम्, निपात्य पातयित्वा, भटान् योद्धृन्, विभिद्य खण्डयित्वा, पयोऽब्धिम् क्षीरसागरम्, मन्दरवत् सुमेरुरिव, कुरूद्वहस्य जीवन्धरस्य, बलाम्बुधि पृतनापारावारम्, सक्षोभयामास क्षुभित चकार ॥७९॥

प्रधाव्येति—आजिसीम्नि युद्धाजिरे, वेगात् प्रजवात्, रथ स्यन्दनम्, प्रधाव्य धावयित्वा, पद्मानन पद्मास्य, तस्य मथनस्य, पुरोऽग्रे, बभूव, स प्रसिद्ध, पल्लवेश पल्लवजनपदेश काम्पिल्यकेशस्य काम्पिल्यनगरनाथस्य, पुरो बभूव, बुद्धिषेणश्च तन्नामा जीवकसुहृत्, लाटाधिराजस्य लाटदेशस्वामिन, पुरो बभूव ॥८०॥

महाराष्ट्रेति—गोविन्दधरणीपतिर्जीवन्धरमातुल, महाराष्ट्रमहीशस्य महाराष्ट्रभूपालस्य, नन्दाढ्य-

समापतन्ती सहसा समन्तादनीकिनी पद्मामुखप्रवीर ।
प्रत्यग्रहीदेष शरप्रचारै स्रोतस्विनीरेप इवाम्बुराशि ॥ ८२ ॥
सौजन्यमानते कुर्वञ्जन्यमुद्धतशत्रुषु ।
शरान्मुमोच पद्मास्यो न परान्मापि लाघवम ॥ ८३ ॥
मथनेन शरावलि तमिस्रा सृजता तत्र निशामुखायितम् ।
विशिखै किरणैर्विभिन्दता ता जलजास्येन निशाकरायितम् ॥८४॥

एव परस्परशरखण्डनेन व्रणकथानभिज्ञगात्रयो , विस्मयविस्तारितलोचनै श्लाघोन्मुखैर्बहिर्मुखैर्निरन्तर निरीक्ष्यमाणयो , दिगन्तविसारिभि शरासारैराकाश मूर्तमिवादधानयो , प्रवीराभिलाषेणोभयो समीप मुहुर्मुहुर्गतागतक्लेशमविगणय्योत्सर्पन्त्या जयश्रिया दृढमालिङ्गितवपुषो , साहसविलोकनसमयसुरवृष्टकल्पतरुकुसुमसुरभिलभुजयुगलयो , चक्रीकृतचापलीलामध्यविराजमानशरीरतया परिवेषमध्यगयो परस्परसमुखयोरिव दिवाकरयो , प्रवीरयोरनयो समरक्रीडामातन्वतो , कुपितवदनो मथन , पद्माननस्य कार्मुकगुण विभिद्य हर्षेण प्रगर्जन् , इम व्याहारमुररीचकार ।

चापस्य जीवविच्छेदात्क धावसि भयाकुल ।
ननु रे भवतोऽप्येव जीवमेष हरिष्यति ॥ ८५ ॥

---

विपुलादयो नन्दाढ्यविपुलप्रमुखा , अन्येषामितरेषाम्, पुरतोऽग्रे, तस्थुस्तिष्ठन्ति स्म ॥ ८१ ॥

समापतन्तीरिति—एकोऽद्वितीय प्रधानो वा, अम्बुराशि सागर , स्रोतस्विनीरिव नदारिव, एषोऽयम्, पद्मामुखप्रवीर पद्मास्यप्रधानसुभट , सहसा झटिति, समन्तात् सर्वत , समापतन्ती समागच्छन्ती , अनीकिनी पृतना , शरप्रचारैर्बाणप्रचारै , प्रत्यग्रहीत् निवारयामास ॥८२॥

सौजन्यमिति—आनते आनम्रे, सौजन्य साधुताम्, उद्धतशत्रुषु दृप्तारातिषु, जन्य समरम् । कुर्वन् विदधत् , पद्मास्य शरान्मुमोच बाणान् तत्याज, लाघव क्षुद्रत्वम्, परानपि शत्रूनपि, न मुमोच न तत्याज ॥ ८३ ॥

मथनेन शरावलिमिति—तत्र युद्धे, तमिस्रा मलिनाम्, शरावलि बाणपङ्क्तिम्, पक्षे बाणपङ्क्तिरूपा कृष्णरजनीम्, सृजता रचयता, मथनेन राजश्यालेन, निशामुखायित रजनीमुखमिवाचरितम्, विशिखैर्बाणै', किरणैर्मरीचिभि', ता पूर्वोक्ताम्, तमिस्रा भिन्दता खण्डयता, जलजास्येन पद्मास्येन, निशाकरायित चन्द्रवदाचरितम् ॥ ८४ ॥

एव परस्परशरखण्डनेनेति—एवमनेन प्रकारेण परस्परशरखण्डनेन मिथोबाणशकलनेन, व्रणकथाया ईर्मचर्चाया अनभिज्ञमपरिचित गात्र शरीर ययोस्तयो , विस्मयेनाश्चर्येण विस्तारिते लोचने नयने येषा तै , श्लाघोन्मुखै प्रशसातत्परै , बहिर्मुखैरमरै , निरीक्ष्यमाणयोरवलोक्यमानयो दिगन्तविसारिभि काष्ठान्तप्रसरणशीलै , शरासारैर्बाणवर्षणै , आकाश गगनम्, मूर्तमिव सशरीरमिव, आदधानयो कुर्वाणयो , प्रवीराभिलाषेण प्रकृष्टयोद्धृप्राप्तीच्छया, उभयोर्द्वयो , समीप निकटम्, मुहुर्मुहुर्भूयोभूय , गतागतक्लेश याता यातदु खम्, अविगणय्य समुपेक्ष्य, उत्सर्पन्त्या प्रवर्धमानया, जयश्रिया जयलक्ष्म्या, आलिङ्गित समाश्लिष्ट वपु शरीर ययोस्तयो , साहसविलोकनसमये अवदानावलोकनकाले सुरवृष्टानि देववृष्टानि यानि कल्पतरुकुसुमानि कल्पवृक्षपुष्पाणि तै सुरभिल सुगन्धित भुजयुगल बाहुयुग ययोस्तयो , चक्रीकृत वर्तुलीकृत यच्चाप धनुस्तस्य लीला शोभा तस्या मध्येऽभ्यन्तरे विराजमान शोभमान शरीर ययोस्तयोर्भावस्तत्ता तया, परिवेषस्य परिधेर्मध्ये गच्छत इति परिवेषमध्यगौ तयो , परस्परसम्मुखयोरन्योऽन्याभिमुखयो , दिवाकरयोरिव सूर्ययोरिव, समरक्रीडा युद्धकेलिम्, आतन्वतोर्विस्तारयतो , अनयो प्रवीरयो प्रकृष्टसुभटयो', मध्ये कुपितवदन क्रुद्धमुख , मथन काष्ठाङ्गारजायासनाभि , पद्माननस्य पद्मास्यस्य, कार्मुकगुण धनुर्ज्याम्, विभिद्य खण्डयित्वा, हर्षेण प्रमदेन, प्रगर्जन् गर्जित कुर्वन्, इम वक्ष्यमाणम्, व्याहारमालापम्, उररीचकार स्वीकृतवान् ।

चापस्येति—चापस्य धनुष , जीवविच्छेदात् प्रत्यञ्चानाशात् , भयाकुलस्त्रासव्यग्र सन् , क्व धावसि

इति लपितमवेत्य पद्मवक्त्र स्फुटतरमाह गिर गभीरनाद ।
अयि मथन ममास्ति चन्द्रहास परिहृतशत्रुसतीमुखेन्दुहास ॥ ८६ ॥

इति कृपाणमुत्पाटच करे विचलयन, शताङ्गोत्सङ्गादुत्प्लुत्यामन्दतरलाघवाक्रान्तशात्रवानीक पञ्चाननप्रत्यनीकपराक्रम पद्मानन, कदनदुर्मदविलासितस्य मथनस्य शिरसि समुत्खातकरवाल निचखान ।

मथने भुवि पतिते रणाग्रे जलजास्ये निपपात पुष्पवृष्टि ।
रिपुसैनिकनेत्रतोऽम्बुवृष्टि कुपिताद्राजगणाच्च बाणवृष्टि ॥ ८७ ॥

तदानी कौरवबलकोलाहलमाकर्ण्य प्रवृद्धकोपौ कुटिलीकृतचापौ तपननिकाशप्रतापौ लाटकाम्पिल्यकभूपौ बुद्धिषेणपल्लवराजयोरभिमुख तस्थिवासौ दिशावकाशनिबिडितसायक हर्षितनिजनायक वैमानिकजनसीमातीताद्भुतहर्षदायक भयानक समीकमाकलय्य कल्पान्तदहनसकाशे तयो शरनिकरहुताशे पतङ्गौ बभूवतु ।

महाराष्ट्रविदेहेशो समर समजृम्भत ।
दारुण शरसभिन्नवारण जयकारणम् ॥ ८८ ॥

---

कुत्र पलायसे, ननु निश्चयेन, रे शत्रो, एवमनेन प्रकारेण, एवोऽहम्, भवतोऽपि तवापि, जीव प्राणम्, हरिष्यति अपनेष्यति ॥ ८५ ॥

इति लपितमिति—इति पूर्वोक्तम्, लपित कथितम्, अवेत्य ज्ञात्वा, गभीरनाद उच्चतरशब्द, पद्मवक्त्र पद्मास्य, स्फुटतरमतिस्पष्ट यथा स्यात्तथा, गिर वाचम्, आह जगाद, अयि मथन भो राजश्यालं, मम पद्मास्यस्य, परिहृतो दूरीकृत शत्रुसतीना शत्रुशीलवतीना मुखेन्दुहासो वदनचन्द्रहासो येन तथाविध, चन्द्रहास खड्ग, अस्ति विद्यते, मम हस्ते चन्द्रहासे विद्यमाने कोदण्डमौर्वीच्छेदो हानिप्रदो नास्तीति भाव ॥ ८६ ॥

इति कृपाणमिति—इति पूर्वोक्तप्रकारेण, कृपाण खड्गम्, उत्पाट्य कोशान्निःसार्य, करे हस्ते विचलयन् कम्पयन्, शताङ्गस्य रथस्योत्सङ्गस्तस्मात्, उत्प्लुत्य समुत्पत्य, अमन्दतरलाघवेन प्रभूतक्षिप्रत्वेनाक्रान्त पराभूत शात्रवानीक शत्रुसैन्य येन तथाभूत, पञ्चाननप्रत्यनीक सिंहसदृश पराक्रमो वीर्यं यस्य स, पद्मानन पद्मास्य, कदनदुर्मदेन युद्धदुर्गर्वेण विलासित शोभितस्तस्य, मथनस्य काष्ठाङ्गारश्यालस्य, शिरसि मूर्ध्नि, समुत्खातकरवाल समुत्पाटितकृपाणम्, निचखान निहितवान् ।

मथने भुवीति—मथने, भुवि रणवसुधायाम्, पातिते सति, रणाग्रे समरशिरसि, जलजास्ये पद्मास्ये, पुष्पवृष्टि सुमनोवर्षणम्, पपात पतति स्म । रिपुसैनिकनेत्रत शत्रुसुभटनयनात्, अम्बुवृष्टिर्जलवृष्टि, निपपात, कुपितात् क्रोधयुक्तात्, राजगणाच्च नृपतिनिचयाच्च बाणवृष्टि शरवर्षम्, पपात ॥ ८७ ॥

तदानीमिति—तदानी मथनमरणकाले, कौरवबलस्य जीवन्धरसैन्यस्य कोलाहल कलकलशब्दम्, आकर्ण्य श्रुत्वा, प्रवृद्धो वृद्धिङ्गत कोप क्रोधो ययोस्तौ, कुटिलीकृतो वक्रीकृतश्चापो धनुर्ययोस्तौ, तपननिकाश सूर्यसदृश प्रतापस्तेजो ययोस्तौ, लाटकाम्पिल्यकयोर्देशविशेषयोर्भूपौ राजानौ, बुद्धिषेणपल्लव राजयो सुभटविशेषयो, अभिमुख पुरस्तात्, तस्थिवासौ तिष्ठन्तौ, दिशावकाशेषु काष्ठामध्येषु निबिडिता सान्द्रीकृता सायका बाणा यस्मिस्तत्, हर्षिता प्रमुदिता निजनायका स्वस्वामिनो यस्मिंस्तत्, वैमानिकजनेभ्यो निर्जरजनेभ्य सीमातीतस्य निर्मर्यादस्याद्भुतहर्षस्य विचित्रप्रमोदस्य दायक दातृ, भयानक भीकरम्, समीक युद्धम्, आकलय्य दृष्ट्वा, कल्पान्तदहनसकाशे प्रलयपावकसदृशे, तयो बुद्धिषेणपल्लवराजयो, शरनिकरहुताशे बाणसमूहवह्नौ, पतङ्गौ शलभौ, बभूवतुरास्ताम् । मृताविति भाव ।

महाराष्ट्रेति—महाराष्ट्रविदेहेशोर्महाराष्ट्रविदेहभूपालयो, दारुण भयकरम्, शरैर्बाणै सभिन्ना खण्डिता वारणा गजा यस्मिंस्तत्, जयकारण विजयनिमित्तम्, समर युद्धम्, समजृम्भत ववृधे ॥८८॥

प्रदीप्रशरसङ्कटं प्रचुरदीर्णदृप्यद्भटं निलिम्पजनलालितं निखिलशस्त्रलीलायितम् ।
प्रदर्शकनिदर्शनं प्रथितयुद्धविद्याविदा वितेनतुरिमौ तदा विविधसंगरं भीकरम् ॥ ८९ ॥

गोविन्दराजस्य शरेण लूनं शीर्षं रणे तस्य धराधिपस्य ।
राहुभ्रमं तीव्रकरस्य कुर्वंस्तत्कीर्तिनुत्यै दिवि केतुरासीत् ॥ ९० ॥

एवं निजपृतनायां महतां राज्ञां निधनं निशम्य विशालतरामर्षः काष्ठाङ्गारः, सर्वाभिसारेण निजबलं पुरोधाय, तेजोविभवविजितविकर्तनप्रतापान्भूपानहितजनमृत्युसरूपान्कौरवजनसंक्षोभाय प्रेषयामास ।

कारं कारं बलोत्साहं तेषां क्षोणीशिनां रुषा ।
पुरो बभूव नन्दाढ्यः करिणामिव केसरी ॥ ९१ ॥

ततश्च यदुचितं सकलवीरश्लाघानाम्, यद्युक्तं जीवन्धरानुजस्य, यदुदाहरणं पाण्डवयुद्धानाम्, यत्समुचितं नीतिमार्गाणाम्, यदासेचनकं लेखलोचनानाम्, यदानन्दनं निजसैनिकानाम्, यन्निदानं कुन्दनिर्मलकीर्तिकल्लोलानाम्, यद्रङ्गस्थलं जयलक्ष्मीताण्डवस्य, यदधिकरणं कल्पद्रुमानल्पपुष्पवृष्टीनाम्, यदगोचरपदं कविवचनविलासानाम्, तादृशमायोधनं नन्दाढ्यः कन्दलयामास ।

---

प्रदीप्रशरसङ्कटमिति—तदा तस्मिन् काले, इमौ महाराष्ट्रविदेहेशौ, प्रदीप्रैर्भास्वरैः शरैर्बाणैः सङ्कटं व्याप्तम्, प्रचुरं प्रभूतं यथा स्यात्तथा दीर्णाः खण्डिता दृप्यद्भटा मत्तशूरा यस्मिंस्तम्, निलिम्पजनैरमरसमूहैर्लालितं प्रशंसितम्, निखिलशस्त्रलीलायितं सर्वायुधकेलितुल्यम्, प्रदर्शकाणां दर्शकजनानां निदर्शनमुदाहरणम्, युद्धविद्यां विदन्तीति युद्धविद्याविदः प्रथिताश्च ते प्रसिद्धाश्च ते प्रथितयुद्धविद्याविदश्च प्रसिद्धसमरविद्याज्ञातारश्चेति प्रथितयुद्धविद्याविदस्तेषाम्, भीकरं भयङ्करम्, विविधसंगरं नानाविधसमरम्, वितेनतुर्विस्तारयामासतुः । पृथ्वीच्छन्दः ॥८९॥

गोविन्दराजस्येति—रणे युद्धे, गोविन्दराजस्य जीवकमातुलस्य, शरेण बाणेन, लूनं छिन्नम्, तस्य धराधिपस्य राज्ञः, शीर्षं मस्तकम्, तीव्रकरस्य सूर्यस्य, राहुभ्रमं विधुन्तुदशङ्काम्, कुर्वन् विदधत्, तत्कीर्तिनुत्यै तदीययशःस्तुत्यै, दिवि गगने, केतुर्वैजयन्ती, आसीद् बभूव ॥९०॥

एवं निजपृतनायामिति—एवमनेन प्रकारेण, निजपृतनायां स्वसेनायाम्, महतां श्रेष्ठानाम्, राज्ञां नृपाणाम्,, निधनं मृत्युम्, निशम्य श्रुत्वा, विशालतरः प्रभूततमोऽमर्षः क्रोधो यस्य तथाभूतः, काष्ठाङ्गारः, सर्वाभिसारेण सर्वप्रयत्नेन, निजबलं स्वसैन्यम्, पुरोधायाग्रे कृत्वा, कौरवजनानां जीवकपक्षीयाणां संक्षोभस्तस्मै, तेजोविभवेन प्रतापसम्पत्त्या विजितः पराभूतो विकर्तनप्रतापस्तपनतेजो यैस्तान्, अहितजनमृत्युसरूपान् शत्रुजनकालप्रतिमान्, भूपान् राज्ञः प्रेषयामास प्रजिघाय ।

कारं कारमिति—बलोत्साहं सैन्योत्साहम्, कारं कारं कृत्वा कृत्वा, नन्दाढ्यो जीवकानुजः, करिणां गजानाम्, केसरीव सिंह इव, रुषा क्रोधेन, तेषां क्षोणीशिनां पृथ्वीपालानां, पुरोऽग्रे, बभूव ॥९१॥

ततश्च यदुचितमिति—ततश्च तदनन्तरञ्च, यद् आयोधनं सकलवीरश्लाघानां निखिलसुभटप्रशंसानाम्, उचितं योग्यम्, यद्, जीवन्धरानुजस्य जीवककनिष्ठस्य, युक्तमर्हम्, यत्, पाण्डवयुद्धानां पाण्डुपुत्रसमराणाम्, उदाहरणं निदर्शनम्, यत्, नीतिमार्गाणां सुनयवर्त्मनाम्, समुचितं योग्यम्, यत्, लेखलोचनानां निर्जरनयनानाम्, आसेचनकमतृप्तिकरम्, यत्, निजसैनिकानां स्वकीयसुभटानाम्, आनन्दनं प्रमोदकारणम्, यत्, कुन्दनिर्मलकीर्तिकल्लोलानां माघ्यतुल्यविमलयशःपरम्पराणाम्, निदानमादिकारणम्, यत्, जयलक्ष्मीताण्डवस्य विजयश्रीनर्तनस्य, रङ्गस्थलं रङ्गभूमिः, यत्, कल्पद्रुमानल्पपुष्पवृष्टीनां कल्पानोकहविपुलकुसुमवर्षाणाम्, अधिकरणमाधारस्थानम्, यत्, कविवचनविलासानां कविवाग्वैभवानाम्, अगोचरपदम् अस्थानम्, तादृशं तथाभूतम्, आयोधनं युद्धम्, नन्दाढ्यः, कन्दलयामास वर्धयामास ।

वीरस्य तस्य निशितैर्घनकङ्कपत्रै सम्पूरिते नभसि युद्धमपश्यमाना ।
जोष निषेदुरमरा युधि वीतदेहा वीराश्च सूर्यमनिरीक्ष्य चिर ववल्गु ॥ ६२ ॥

तस्य मार्गणविभिन्नशरीरैरुत्पलायितमरिव्रजवीरै ।
शोणितप्रसृतवाहिनीगतैरुत्पलायितमिभावलिखण्डै ॥ ६३ ॥

अनास्थया तेन निपीड्य मुक्ता विलक्षता प्रापुररिप्रवीरा ।
न पत्रिणस्तत्र महाहवाग्रे सुरासुराणामपि दुर्निरीक्ष्ये ॥ ६४ ॥

तदानी मन्थानाचलमिव रिपुबलजलधिं क्षोभयन्तमतिविस्मयनीयकरलाघव रणरङ्गे निर्निरोधशताङ्गप्रचार निस्तुलसेनासपदमप्यद्वितीयम्, निरस्तदोषमपि महादोषम्, अमितगजतुरगादिसहायमपि चापैकसहायम्, रथगतमपि धनुषि निषण्णम्, समुत्सारितविद्विडिन्धनमपि ज्वलत्प्रतापानलम्, आयतलोचनमपि सूक्ष्मदर्शनम्, नन्दाढ्य एकमपि द्विधा त्रिधा चतुर्धा च वीक्ष्य बहवो मेदिनीपतयस्तत्क्षणमभ्यसूययेव स्वय पञ्चत्वमाजग्मु ।

---

वीरस्येति—वीरयत इति वीरस्तस्य शूरस्य, तस्य नन्दाढ्यस्य, निशितैस्तीक्ष्णै, घनकङ्कपत्रैर्निबिड बाणविशेषै, नभसि गगने, सम्पूरिते सम्भृते सति, युद्ध समरम्, अपश्यमाना अनवलोकयन्त, अपश्यमाना इत्यत्र परस्मैपदाच्छानच्प्रयोगश्चिन्त्य, अमरा निलिम्पा, जोष तूष्णीं यथा स्यात्तथा, निषेदुस्तस्थु, युधि समरे, वीतो विनष्टो देहो येषा ते, वीराश्च सुभटाश्च, सूर्यं दिवाकरम्, अनिरीक्ष्यानवलोक्य, चिर दीर्घकालपर्यन्तम्, ववल्गु सञ्चलन्ति स्म ॥६२॥

तस्य मार्गणैरिति—तस्य नन्दाढ्यस्य, मार्गणैर्बाणैर्विभिन्न खण्डित शरीर येषा तै, अरिव्रजवीरै शत्रुसमूहसुभटै, उत्पलायितमुपरिधावितम्, शोणितस्य रुधिरस्य प्रसृता या वाहिनी नदी तस्या गतै प्राप्तै, इभावलिखण्डै शुण्डालसमूहशकलै, उत्पलमिव कुवलयमिवाचरितमित्युत्पलायितम् ॥ स्वागता रथोद्धतासम्मिश्रणादुपजातिवृत्तम् ।

अनास्थयेति—तेन नन्दाढ्येन, निपीड्य समर्द्य, अनास्थया उपेक्षया, मुक्तास्त्यक्ता, अरिप्रवीरा शत्रुसुभटा, विलक्षतां व्रीडितत्वम्, प्रापुर्लेभिरे, सुरासुराणामपि देवदानवानामपि, दुर्निरीक्ष्ये दुरवलोक्ये, तत्र तस्मिन्, महाहवाग्रे महायुद्धाग्रे, पत्रिणो बाणा, विलक्षता लक्ष्यभ्रष्टताम्, न प्रापु ॥६४॥

तदानीमिति—तदानी तस्मिन् काले, मन्थानाचलमिव मन्दरगिरिमिव, रिपुबलजलधि शत्रुसैन्यसमुद्रम्, क्षोभयन्त क्षुभित कुर्वन्तम्, अतिविस्मयनीयमत्याश्चर्यकर करलाघव हस्तक्षिप्रकारित्व यस्य तम्, रणरङ्गे समराजिरे निर्निरोधो निर्बाध शताङ्गप्रचारो रथसञ्चारो यस्य तम्, निस्तुला निरुपमा सेनासपत् पृतनासम्पत्तिर्यस्य तथाभूतमपि, अद्वितीय द्वितीयरहितम्, यस्य पार्श्वे निरुपमा पृतना स्यात्स कथमद्वितीयो भवेदिति विरोध, अद्वितीय सादृश्यरहित इति परिहार, निरस्ता दूरीकृता दोषा अवगुणा येन तथाभूतमपि महादोष महावगुणसहितम्, यो निरस्तदोष स महादोषयुत कथ भवेदिति विरोध, परिहारस्तु महादोष महाबाहुम्, 'दोर्दोषौ च भुजो बाहु' इत्यमर, अमिता अपरिमिता गजतुरगादयो हस्त्यश्वप्रभृतय सहाया यस्य तथाभूतमपि, चापैकसहाय कोदण्डैकसहायमिति विरोध, कोदण्डप्रत्ययसहित इति परिहार, रथगतमपि स्यन्दनस्थितमपि धनुषि चापे निषण्ण स्थितमिति विरोध, धनु प्रत्ययसहितमिति परिहार, समुत्सारित दूरीकृत विद्विडिन्धन शत्रुसमित् येन तथाभूतमपि ज्वलन् देदीप्यमान प्रतापानल प्रतापपावको यस्य तमिति विरोध, भास्वरप्रभावपावकमिति परिहार, आयतलोचनमपि दीर्घचक्षुषमपि, सूक्ष्मदर्शन सूक्ष्मलोचनमिति विरोध, सूक्ष्मपदार्थदर्शकमिति परिहार, एकमपि एकसख्याविशिष्टमपि पक्षेऽप्रतिमपि, द्विधा त्रिधा चतुर्धा च द्विप्रकारेण, त्रिप्रकारेण चतु प्रकारेण च, वीक्ष्य दृष्ट्वा, बहवो विपुला, मेदिनीपतयो राजान, तत्क्षण तत्कालम्, अभ्यसूययेव मत्सरेणेव, स्वय स्वत, पञ्चत्व पञ्चसख्याकत्वम् पक्षे मृत्युम्, आजग्मु प्रापवन्त ।

नपुले विपुले च चापवल्ली भृशमाकृष्य किरत्यतीव रोपान् ।
खगमण्डलमेदुर बताभ्र पिहितोद्यत्खगमण्डल बभूव ॥ ९५ ॥
तावत्कोङ्कणभूपतिर्द्रुततर धावद्रथेनागत
क्रोधान्धो नपुले ववर्ष विशिखासार महागर्जन ।
यद्वद् दुर्धरवज्रपातमधिक सवर्तकालोद्यतो
जीमूतो वसुधाधरस्य शिखरे नि सीमघोरारव ॥ ९६ ॥
दिश प्रतीचीमिव पद्मबन्धु मूर्छा गत मन्दतरप्रतापम् ।
अपासरत्सगरभूमिभागविहायसो वीरमिम नियन्ता ॥ ९७ ॥

तदिदमाकर्ण्य शोककातर निजजामातर कोपारुणवदन कुरुपञ्चवदन समीक्ष्य विद्याधरक्षोणीपतिर्गरुडवेग प्रथितनिजबलकोलाहलव्यालोलितलोक स्तोकेतरपराक्रम क्रमेण सग्रामसीमामवजगाहे ।

सग्रामोपरि जृम्भित खगपति कोपात्करालानन
शक्तीस्तोमरशूलजालपरिघान्कुन्तानसीन्पर्वतान् ।
वर्षन्भीमगदाट्टहासरभसक्षुभ्यद्दिशामण्डल-
श्चिक्रीडाम्बरसीम्नि सगरकलातुङ्गीभवद्दोर्मद ॥ ९८ ॥
दृष्ट्वेम रुधिराणि तत्र ववमु केचिद्भटा शत्रुषु
प्राणा केचन तत्यजुर्भयभरात्पेतु क्षितौ केचन ।

---

नपुले विपुले चेति—नपुले विपुले च एतन्नामके सुभटद्वये, चापवल्ली धनुर्लताम्, भृशमत्यर्थम् आकृष्य, अतीवात्यन्तम्, रोपान् बाणान्, किरति वर्षति सति, खगमण्डलै बाणसमूहै, पक्षिसमूहैर्मेदुर व्याप्तम्, अभ्र गगनम्, बत खेदे, पिहितमाच्छादितमुद्यत्खगमण्डलमुदीयमानसूर्यबिम्ब यस्मिस्तथाभूतम्, बभूव । 'खग सूर्ये ग्रहे देवे मार्गणे च विहङ्गमे' इति मेदिनी ॥९५॥

तावत्कोङ्कणभूपतिरिति—तावत् तावत्कालपर्यन्तम् द्रुततर शीघ्रतरम्, धावद्रथेन प्रगच्छत्स्यन्दनेन आगत समायात, क्रोधान्ध कोपान्ध, महागर्जनो विपुलध्वनि, कोङ्कणभूपति कोङ्कणनृपति, नपुले एतन्नामधेयप्रत्यर्थिसुभटे, विशिखासार बाणसमूहम्, तद्वत् ववर्ष वर्षति स्म, यद्वत्, येन प्रकारेण, सवर्तकालोद्यत प्रलयकालोद्गत, नि सीमघोरारवो निर्मर्यादभयङ्करस्तनित, जीमूतो बलाहक, वसुधाधरस्य शैलस्य, शिखरे कूटे, अधिक विपुलम्, दुर्धरवज्रपात प्रचण्ड पविपातम्, वर्षति । शार्दूल विक्रीडितवृत्तम् ॥९६॥

दिश प्रतीचीमिवेति—प्रतीचीं दिश पश्चिमाशाम्, गत प्राप्तम्, पद्मबन्धुमिव सूर्यमिव, मन्दतरोऽतिशयेन क्षीण प्रतापस्तेजो यस्य तम्, इम वीर सुभट नपुलमिति यावत्, नियन्ता सारथि, सगरभूमिभाग एव युद्धवसुधाभोग एव विहायो गगन तस्मात्, अपासरत् अपनिनाय ॥९७॥

तदिदमाकर्ण्येति—तदिदम् पूर्वोक्तम्, आकर्ण्य श्रुत्वा, शोककातर विषाददीनम्, निजजामातर स्वदुहितृपतिम्, कोपेन क्रोधेनारुण रक्त वदन मुख यस्य तथाभूतम्, कुरुपञ्चवदन कुरुसिंहम्, समीक्ष्य समवलोक्य, विद्याधरक्षोणीपति खेचरेन्द्र, प्रथितेन प्रसिद्धेन निजबलकोलाहलेन स्वसैन्यकलकलेन व्यालोला श्चपलिता लोका जना येन तथाभूत, स्तोकेतरो विपुल पराक्रमो यस्य तथाभूत, गरुडवेगो विद्याधरपति, सग्रामसीमा युद्धक्षेत्रम्, अवजगाहे प्रविवेश ।

सग्रामोपरीति—सग्रामोपरि समराग्रे, जृम्भित समापतित, कोपात् क्रोधात्, करालाननो भयङ्करमुख, शक्ती, तोमरशूलजालपरिघान्, कुन्तान्, पर्वतान् पादपान् शैलान्वा, वर्षन्, भीमगदाट्टहासरभसेन भयावहगर्वप्रहासवेगेन क्षुभ्यद् दिशामण्डल येन स, सगरकलया युद्धचातुर्या तुङ्गीभवन् दोर्मदो भुजदर्पो यस्य तथाभूत, खगपतिर्गरुडवेग, अम्बरसीम्नि गगनसीमायाम्, चिक्रीड क्रीडति स्म ॥९८॥

दृष्ट्वेममिति—तत्र समरे, इम गरुडवेगम्, दृष्ट्वा, शत्रुषु वैरिषु मध्ये, केचिद्भटा केचन शूरा,

केचिद्धावनलालसा वसुमतीपालाश्च दिङ्मोहतो
भ्राम्यन्तो रणसीम्नि शिक्षितहयाभ्यासप्रकर्षं दधु ॥९९॥

रे रे कुत्र पलायितोऽसि समरे मा कम्पन प्राप्नुया-
स्तिष्ठाग्रे हत कोङ्कणेश शमनस्त्वामीहते भक्षितुम् ।
शीर्षं ते विनिपात्य कर्णविगलद्रक्तप्रवाहै परा
तृप्तिं कल्पयति क्षणात्क्षितिपतिर्भूतावलीनामिह ॥ १०० ॥

एव जगर्जु खचरसैनिका सिहविक्रमा । सपत्नकण्ठकदलीकाण्डताण्डवितासय ॥ १०१ ॥

तदानीं पुष्पितकिंशुककाननमिव पल्लविताशोकवनमिव पारिभद्रद्रुमविपिनमिव च परित क्षत निजबलमवलोक्य कृताभिषेणन कोङ्कणमहीपति कर्णपूरसौरभ्यसमाकृष्टभृङ्गावलिशङ्कावहशिञ्जिनीविगलद्विशिखधाराभिर्गगनतल पूरय तमेनममन्दवेगो गरुडवेग क्षणेन वक्षसि शक्त्या विव्याध ।

भेत्स्यन्ति मे मण्डलमद्य वीरा विद्याधरेन्द्रेण विदीर्णदेहा ।
इतीव वेगेन पयोजबन्धुरस्ताचलोदग्रदरी विवेश ॥ १०२ ॥

तदनु गरुडवेगविक्षिप्तगण्डशैलखण्डिताङ्गेन हतशेषेण सैन्येन काष्ठाङ्गारसेनाधिपे कटकं

---

रुधिराणि रक्तानि, ववमुर्वमन्ति स्म, केचन केऽपि, प्राणान् जीवितानि, तत्यजुर्मुमुचु , केचन केऽपि, भयभरात् त्रासाधिक्यात्, क्षितौ पृथिव्याम्, पेतु पतन्ति स्म, धावनलालसा पलायनोत्सुका, केचित् केऽपि, वसुमतीपालाश्च राजानश्च, दिङ्मोहतो दिशाभ्रान्त्या, रणसीम्नि समराभोगे, भ्राम्यन्त पर्यटन्त सन्त , शिक्षितहयाभ्यासप्रकर्षं शिक्षिताश्वाभ्यासाधिक्यम्, दधुर्धरन्ति स्म ॥९९॥

रे रे कुत्रेति—रे रे हत कोङ्कणेश, नीच कोङ्कणधराधीश्वर ! कुत्र पलायितोऽसि क्व प्रधावितोऽसि, समरे युद्धे, कम्पन वेपथुम्, मा प्राप्नुया मा लभेथा , अग्रे पुरस्तात्, तिष्ठ निवृत्तगतिर्भव, शमनो यम , त्वा भवन्तम्, भक्षितुमत्तुम्, ईहते चेष्टते, क्षितिपती राजा, इह समरे, ते तव, शीर्षं शिर , विनिपात्य छित्त्वा, कर्णाभ्या कण्ठप्रदेशाभ्या विगलन्तो नि सरन्तो ये रक्तप्रवाहा रुधिरस्रोतांसि तै भूतावलीना पिशाचपङ्क्तीनाम्, तृप्तिं सतोषम्, क्षणादल्पेनैव कालेन, कल्पयति विदधाति ॥ शार्दूलविक्रीडितच्छन्द ॥१००॥

एव जगर्जुरिति—एव पूर्वोक्तप्रकारेण, सिहस्येव विक्रमो येषा ते सिहविक्रमा मृगेन्द्रपराक्रमा , सपत्नाना शत्रूणा कण्ठकदलीना ग्रीवामोचातरूणाम् काण्डेषु प्रताकेषु ताण्डविनो नृत्य कुर्वाणोऽसिर्येषा ते, खचरसैनिका विद्याधरसेनामनुजा , जगर्जुर्गर्जन्ति स्म ॥१०१॥

तदानीमिति—तदानी तस्मिन् काले, पुष्पित कुसुमित यत्किंशुककानन पलाशवन तद्वत् पल्लवित किसलयित यदशोकवन कङ्केलिकानन तद्वद्, पारिभद्रद्रुमविपिनमिव च मन्दारमहीरुहवनमिव च 'पारिभद्रस्तु मन्दारे निम्बद्रो देवदारुणि' इति मेदिनी, परित समन्तात् , क्षत खण्डितम्, निजबल स्वसैन्यम्, अवलोक्य दृष्ट्वा, कृताभिषेणन विहिताक्रमणम्, कर्णपूरयो कर्णाभरणपुष्पयो सौरभ्येण सौगन्ध्येन समाकृष्टा स्वसात्कृता या भृङ्गावलिर्भ्रमरपङ्क्तिस्तस्या शङ्कावहा सशयधारिका या शिञ्जिनी मौर्वी तस्या विगलन्त्य पतन्त्यो या विशिखधारा बाणसन्ततयस्ताभि , गगनतल नभस्तलम् पूरयन्त सम्भरन्तम्, एन कोङ्कणमहीपतिं पूर्वोक्त कोङ्कणराजम्, अमन्दवेग प्रकृष्टरय , गरुडवेगो गन्धर्वदत्ताजनक , क्षणेन, वक्षसि बाहुमध्ये, शक्त्या शक्तिनामकशस्त्रविशेषेण, विव्याध विध्यति स्म ।

भेत्स्यन्तीति—अद्येदानीम्, विद्याधरेन्द्रेण गरुडवेगेन, विदीर्णं खण्डितो देहो विग्रहो येषा ते, वीरा योद्धार , मे मम, मण्डल बिम्बम्, भेत्स्यन्ति विदारयिष्यन्ति, रणे निहिता शूरा सूर्यमण्डल भित्त्वा स्वर्गं यान्तीति प्रसिद्धे , इतीव हेतो , पयोजबन्धु सूर्य , वेगेन रयेण, अस्ताचलस्यापरशैलस्योदग्रदरी समुन्नत गुहाम्, विवेश प्रविष्टवान् । उत्प्रेक्षा ॥१०२॥

तदन्विति—तदनु सूर्यास्तानन्तरम्, गरुडवेगेन विद्याधरेन्द्रेण विक्षिप्तैर्विप्रकीर्णैर्गण्डशैलै स्थूलोपलै,

प्रविष्टे, गरुडवेगमहीपालोऽपि समरावलोकनसमुखबर्हिर्मुखकरवृष्टकल्पकतरुप्रसूनसुरभिलभुजदण्डघटितकोदण्ड, सहर्षपरस्परसल्लापकल्लोलकोरकितकुतुकेन समरकलाविलासविजयसस्मरणजनिननिजस्वामिश्लाघापरेण सैनिकनिकरेण प्रतिक्षणमीक्ष्यमाण, पल्लवक्षितिवल्लभगोविन्दमहीपाललोकपालप्रभृतिभि सभाषमाणो, ग्रहोन्मुक्तेनेव चन्द्रेण मूर्च्छोन्मुक्तेन नपुलेन पुरस्कृत स्वकटकभुवमाससाद ।

अपरेऽहनि वाहिनीपतीना मणिमालामकुटाङ्गदाम्बरादीन् ।
रथसूततुरङ्गकङ्कटादीन्प्रतिपाद्याशु कृतघ्नक प्रतस्थे ॥ १०३ ॥

एव पारितोषिकप्रदानपरिवर्धितोत्साहेनाहमहमिकापरवशेन सर्वाभिसारेण बलेन स्थगितक्षितितलाभोग, पर्वतनिकाश विजयगिरिनामधेय गन्धसिन्धुरमधिरूढो, भाविचक्रपातसूत्रन्यासरेखाशङ्कावदान्यरेखात्रयशोभित गलमभितो लम्बमानेव चक्रपतनसप्रतीक्षस्य स्कन्धगतस्य मृत्यो करवितीर्णेनेव पाशेन मुक्ताहारेण भासुरवक्ष स्थल, कोटीरमणिगणप्रतिविम्बितमार्तण्डमण्डलतया 'कुरुवीरशरसमाच्छादिते गगने सोऽय न मत्सनिधानमागन्तुमर्हति' इति करुणाकरेण पूर्वमेव गृहीतमस्तक इव बाभास्यमान, कुटिलितभ्रुकुटीघटितवदन काष्ठाङ्गार स्वयमेव सग्रामाङ्गणमाजगाम ।

---

खण्डित विदारितमङ्ग यस्य तेन, हताशेषेण भिन्नावशिष्टेन, सैन्येन पृतनया, सह, काष्ठाङ्गारसेनाधिपे राज घसैन्यपतौ, कटक शिविरम्, प्रविष्टेऽन्तर्गते, सति, गरुडवेगमहीपालोऽपि विद्याधरधरावल्लभोऽपि, समरावलोकने, युद्धदर्शने समुखास्तत्परा ये बहिर्मुखा देवास्तेषा करेभ्यो हस्तेभ्यो वृष्टानि पातितानि यानि कल्पकतरुप्रसूनानि कल्पवृक्षपुष्पाणि तै सुरभिल सुगन्धियुक्त यद्भुजदण्ड बाहुदण्ड तत्र घटित धारित कोदण्ड धनुर्येन स, सहर्ष सप्रमोदो य परस्परसल्लापकल्लोलो मिथोवार्तालापसन्ततिस्तेन कोरकित कुड्मलित कुतुक कौतुक यस्य तेन, समरकलाविलासे युद्धकलाविलासे यो विजयस्तस्य सस्मरणेन निध्यानेन जनिता समुत्पादिता या निजस्वामिश्लाघा स्वभर्तृस्तुतिस्तस्या परेण दक्षेण, सैनिकनिकरेण सुभटसमूहेन, प्रतिक्षण प्रतिसमयम्, ईक्ष्यमाण समवलोक्यमान, पल्लवक्षितिवल्लभश्च गोविन्दमहीपालश्च, लोकपालश्चेति पल्लवक्षितिवल्लभगोविन्दमहीपाललोकपालास्ते प्रभृतिर्येषा तै, सह, सभाषमाणो वार्तालाप कुर्वाण, ग्रहोन्मुक्तेन राहुत्यक्तेन, चन्द्रेणेव शशिनेव, मूर्च्छोन्मुक्तेन मोहातीतेन, नपुलेन तन्नामकसुभटाधीशेन, पुरस्कृत सहितम्, यथा स्यात्तथा, स्वकटकभुव निजशिविरभूमिम्, आससाद प्राप ।

अपरेऽहनीति—अपरेऽहनि द्वितीये दिवसे, कृतघ्नक काष्ठाङ्गार, वाहिनीपतीना सेनापतीनाम्, मणिमालामकुटाङ्गदाम्बरादीन् रत्नस्रग्मौलिकेयूरवस्त्रादीन्, रथसूततुरङ्गकङ्कटादीन् स्यन्दनसारथिहयकवचप्रभृतीन्, प्रतिपाद्य वितीर्य, आशु झटिति, प्रतस्थे प्रस्थितो बभूव ॥१०३॥

एव पारितोषिकेति—एवमनेन प्रकारेण, पारितोषिकस्य पुरस्कारस्य प्रदानेन वितरणेन परिवर्धित समेधित उत्साहो यस्य तेन, अहमहमिकापरवशेन अह पूर्वमह पूर्वमित्यहमिका तस्या परवश तेन, सर्वाभिसारेण विश्वतोमुखेन, बलेन सैन्येन, स्थगित समाच्छादित क्षितितलाभोग पृथ्वीतलविस्तारो येन स, पर्वतनिकाश गिरिसन्निभम्, विजयगिरिनामधेयमेतन्नामकम्, गन्धसिन्धुर मत्तगजेन्द्रम्, अधिरूढोऽधिष्ठित, भावी भविष्यन्यश्चक्रपातोऽरिनिक्षेपस्तस्य सूत्रन्यासस्य सूत्रपातस्य या रेखा लेखास्तासा शङ्काया सदेहे वदान्य समुदार यत् रेखात्रय लेखात्रय तेन शोभित समलङ्कृतम्, गल कण्ठम्, अभित समन्तात्, लम्बमानेन स्रसमानेन, चक्रपतनस्यारिपातस्य सप्रतीक्षा यस्य तस्य, स्कन्धगतस्य भुजमूर्धस्थितस्य, मृत्यो यमस्य करवितीर्णेन पाणिप्रदत्तेन, पाशेनेव बन्धनेनेव, मुक्ताहारेण मौक्तिकस्रजा, भासुर देदीप्यमान वक्ष स्थल भुजमध्यस्थल यस्य स, कोटीरमणिगणे मौलिमणिगणे प्रतिविम्बित मार्तण्डमण्डल सूर्यविम्ब यस्य तस्य भावस्तत्ता तया, कुरुवीरस्य जीवन्धरस्य शरैर्बाणै समाच्छादित स्थगित तस्मिन्, गगने नभसि सति, सोऽय काष्ठाङ्गार, मत्सन्निधान मन्निकटम्, आगन्तुमायातुम्, नार्हति न योग्योऽस्ति, इत्येव करुणाकरेण दयाधारेण, दिवाकरेण सूर्येण, पूर्वमेव प्रागेव, गृहीतमस्तक इवात्तशीर्ष इव, बाभास्यमान शोशुभ्यमान कुटिलित-

कुरूणा वीरोऽपि प्रचुरबलकोलाहलकलाविलासव्याप्ताशापतिसदनवातायनमुख ।
क्रमात्क्रामन्गन्धद्विपमशनिवेगाभिधमथ रणाग्र सप्राप क्षितिविदितदोर्दण्डमहिमा ॥ १०४ ॥
जडीकृतश्रव पुटे दिवौकसा जयानकारवे सुराचलोल्लसद्दरीर्विसत्यनेकश ।
सुपर्वकामिनीजनप्रहर्षगीतकौशल बभूव निष्फल तदा प्रतिध्वनद्गुहारवै ॥ १०५ ॥
रथक्षुण्णक्षोणीतलगलितपासून्मुखगतान्दिशानागा शुण्डोद्गतजलकणै शान्तिमनयन् ।
रह स्त्रीणा रूप्याचलकुहरतल्पेषु खचरा विवस्त्राणामङ्गेष्वतिबहललग्ना वसनत ॥ १०६ ॥
अदृष्टचरमाहव सुरगणैरथोज्जृम्भित क्षणेन मदमेदुर प्रचुरवीरवादोत्कटम् ।
चलाचलकृपाणिकाप्रतिफलद्विवस्वत्प्रभादुरीक्षमतुल तदा जयरमातुलारोहणम् ॥ १०७ ॥

वीर्यश्रीप्रथमावतारसरणौ तस्मिन्कुरूणा पतौ
बाणान्मुञ्चति हस्तनर्तितधनुर्वल्लीसमारोपितान् ।
दीर्णक्षत्रभटच्छटाभिरभित सभिद्यमानान्तर
भास्वद्बिम्बमहो बभार गगनश्रेणीमधुच्छत्रताम् ॥ १०८ ॥

---

भृकुटीभ्या वक्रीकृतभ्रूभ्या घटित युक्त वदन मुख यस्य तथाभूत, काष्ठाङ्गार कृतघ्नशिरोमणि, स्वयमेव स्वत एव, सग्रामाङ्गण समराजिरम्, आजगाम समाययौ ।

कुरूणामिति—प्रचुरेण प्रभूतेन बलस्य सैन्यस्य कोलाहलकलाविलासेन कलकलध्वनिसञ्चारेण व्याप्तानि सम्भरितानि आशापतिसदनाना दिक्पालभवनाना वातायनमुखानि गवाक्षविवराणि येन स, क्षितौ पृथिव्या विदित प्रसिद्धो दोर्दण्डमहिमा बाहुदण्डप्रभावो यस्य तथाभूत, अयमेष, कुरूणा वीरोऽपि जीवन्धरोऽपि, क्रमात् क्रमश, अशनिवेगोऽभिधा यस्य तम् अशनिवेगनामानम्, गन्धद्विप मत्तहस्तिनम्, क्रामन् अधितिष्ठन्, रणाग्र समराग्रम्, सप्राप ययौ । शिखरिणीच्छन्द ॥१०४॥

जडीकृतश्रव पुट इति—तदा तस्मिन् काले, जडीकृतश्रव पुटे सम्भरितकर्णविवरे, दिवौकसा देवानाम्, जयानकारवे जयदुन्दुभिनादे, अनेकशो नैकवारान्, सुराचलस्य सुमेरोरुल्लसन्त्य शोभमाना या दर्यो गुहास्तासु, विशति कृतप्रवेशे सति, प्रतिध्वनद्गुहारवै प्रतिनदद्दरीशब्दै, सुपर्वकामिनीजनाना देवाङ्गनाना प्रहर्षगीतस्यानन्दगायनस्य कौशल चातुर्यम् निष्फल निरर्थम्, बभूव, पञ्चचामरच्छन्द ॥१०५॥

रथक्षुण्णक्षोणीति—दिशानागा दिग्गजा, मुखगतान् समुखायातान्, रथै स्यन्दनै क्षुण्ण चूर्णीकृत यत्क्षोणीतलं भूमितल तस्माद् गलिता निष्पतिता या पासवो धूलयस्तान्, शुण्डोद्गतजलकणै करोत्पतितसलिलशीकरै, शान्ति शमनम्, अनयन् प्रापयन् । खचरा विद्याधरा, रहो विजने, रूप्याचलकुहरतल्पेषु विजयार्धगुहाशयनेषु, विवस्त्राणा वस्त्ररहितानाम्, स्त्रीणा वनितानाम्, अङ्गेषु देहेषु, अतिबहललग्नान् अतिनिषक्तान् उक्तविधपासून्, वसनतो वस्त्रात्, शान्ति शमनम्, अनयन्, प्रापयन् । वस्त्रखण्डैर्वनितादेहस्थपासून् दूरीचक्रुरिति भाव । शिखरिणीच्छन्द ॥१०६॥

अदृष्टचरमाहवमिति—अथानन्तरम्, तदा तस्मिन् काले, सुरगणैर्देवसमूहै, अदृष्टचरमनवलोकितपूर्वम्, क्षणेनाल्पेनैव कालेन, मदमेदुर गर्वयुक्तम्, प्रचुरवीरवादै प्रभूतसुभटगर्जनैरुत्कट सुयुक्तम्, चलाचलकृपाणिकासु चञ्चलखड्गेषु प्रतिफलन् प्रतिबिम्बितीभवन् यो विवस्वान् सूर्यस्तस्य प्रभया दीप्त्या दुरीक्ष दुरवलोक्यम्, अतुलमनुपमम्, जयारमातुलारोहण विजयलक्ष्मीतुलारोहणम्, आहव युद्धम्, उज्जृम्भित वर्धितम् । पृथ्वीच्छन्द ॥१०७॥

वीर्यश्रीप्रथमावतारसरणाविति—वीर्यश्रिया वीरलक्ष्म्या प्रथमावतारस्य पूर्वावतरणस्य सरणिर्मार्गस्तस्मिन्, तस्मिन् पूर्वोक्ते, कुरूणा पतौ जीवन्धरे, हस्तयो करयोर्नर्तिता कम्पिता या धनुर्वल्ली कोदण्डलता तस्या समारोपिता सधृतास्तान्, बाणान् शरान्, मुञ्चति त्यजति सति, अभित परित, दीर्णा खण्डिता ये क्षत्रभटा क्षत्रियशूरास्तेषा छटा पङ्क्तयस्ताभि, सभिद्यमानान्तर खण्डितमध्यम्, भास्वद्बिम्ब

दृप्यत्सिन्धुरदीर्णकुम्भयुगलीप्रोन्मुक्तमुक्ताफलै-
बाणावासिजयश्रिय प्रविगलन्मोदाश्रुबिन्दुप्रभै ।
लेखाना कुसुमोत्कर सुरभिल द्राग्वर्षता हर्षता
प्रत्यर्चा चतुरश्चकार समरे सोऽय कुरूणा पति ॥ १०६ ॥

एव भिन्दन्बल वीर कृतघ्नमभियाय स । वीरश्रियानुधावन्त्या समालिङ्गितविग्रह ॥ ११० ॥

एव जयश्रीताण्डवरङ्गस्थलायमानभुजयुगल कुरुवीरमवलोक्य काष्ठाङ्गार एवमुवाच ।

क्व वैश्यपुत्रस्त्वमतीव भीरुर्वय क्व चापागमपारनिष्ठा ।
अथापि ते सयति सप्रवृत्तावनात्मवेदित्वमवेहि हेतुम् ॥ १११ ॥

तुलादण्डधृतौ वैश्य तव यत्करकौशलम् । विस्तारयसि तच्चापे धिक्चापलमहो तव ॥ ११२ ॥

साहसेन रणे तिष्ठन्मुमूर्षुरसि मुग्धधी ।
त्वत्प्राणवायो क पाता मत्कृपाणाहिना विना ॥ ११३ ॥

इति काष्ठाङ्गारदर्पविलसितदुर्वचनमाकर्ण्य कुरुवीरोऽप्येव जगाद ।

---

सूर्यमण्डलम्, गगनश्रेणीमधुच्छत्रताम् नभ श्रेणीचौद्रच्छत्रकताम्, बभार दधार, इत्यहो आश्चर्यम् ॥ शार्दूलविक्रीडितच्छन्द ॥१०८॥

दृप्यत्सिन्धुरेति—समरे युद्धे, चतुरो विदग्ध, सोऽय पूर्वोक्त, कुरूणा पतिर्जीवन्धर, बाणेषु शरेष्वावसत्येव शीला बाणावासिनी सा चासौ जयश्रीश्च विजयलक्ष्मीश्चेति बाणावासिजयश्रिय, प्रविगलन्त पतन्तो ये मोदाश्रुबिन्दवो हर्षाश्रुशीकरास्तेषा प्रभेव प्रभा येषा तै, दृप्यन्तो माद्यन्तो ये सिन्धुरा हस्तिनस्तेषा दीर्णा खण्डिता या कुम्भयुगली गण्डयुग तस्या प्रोन्मुक्तानि पतितानि यानि मुक्ताफलानि मौक्तिकानि तै, द्राग् झटिति, सुरभिल, सुगन्धियुक्तम्, कुसुमोत्कर पुष्पप्रचयम्, वर्षता मुञ्चताम्, हर्षता मोदमानानाम्, लेखाना देवानाम् प्रत्यर्चा प्रतिपूजाम्, चकार विदधे। देवै पुष्पाणि वर्षितानि जीवन्धरेण च गजगण्डेभ्यो मुक्ताफलानीति भाव ॥१०९॥

एव भिन्दन्बलमिति—एवमनेन प्रकारेण, बल सैन्यम्, भिन्दन् विदारयन्, अनुधावन्त्या, समनुगच्छन्त्या, वीरश्रिया वीरलक्ष्म्या, समालिङ्गित समाश्लिष्टो विग्रहो यस्य तथाभूत, स पूर्वोक्त, वीरो जीवन्धर, कृतघ्न काष्ठाङ्गारम्, अभियाय तदभिमुख जगाम् ॥११०॥

एव जयश्रीति—एवमनेन प्रकारेण, जयश्रिया विजयलक्ष्म्यास्ताण्डवस्य नर्तनस्य रङ्गस्थलायमान रङ्गभूमिवदाचरत् भुजयुगल बाहुयुग यस्य तथाभूतम्, कुरुवीर जीवन्धरम्, अवलोक्य दृष्ट्वा, काष्ठाङ्गार कृतघ्न, एवमनेन प्रकारेण, उवाच जगाद ।

क्व वैश्य पुत्र इति—अतीव नितराम्, भीरु कातर, वैश्यपुत्रो वणिक्सुत, त्वम्, क्व, चापागमस्य धनु शास्त्रस्य पारेऽन्ते निष्ठा येषा तथाभूता, वय क्षत्रियपुत्रा, क्व च कुत्र च, द्वयोर्महदन्तरमस्तीति भाव, अथापि युद्धयोग्यताया अभावेऽपि, ते तव, सयति युद्धे, सप्रवृत्तौ सप्रवर्तने, अनात्मवेदित्वमनात्मज्ञताम्, हेतु कारणम्, अवेहि जानीहि । स्वाज्ञानाभाव एव त्व युद्धे प्रवर्तसे इति भाव ॥१११॥

तुलादण्डधृताविति—हे वैश्य हे वणिक्, तुलादण्डधृतौ तुलायष्टिधारणे, तव ते, यत्करकौशल यद्धस्तचातुर्यम्, अस्ति, तत्, चापे धनुषि, विस्तारयसि वितानयसि, अहो आश्चर्यम्, तव ते चापल क्षुद्रत्वम्, धिक् ॥११२॥

साहसेनेति—साहसेन धैर्येण, रणे समरे, तिष्ठन् विद्यमान, मुग्धधीर्मन्दमति त्वम्, मुमूर्षुर्मर्तुमिच्छुरसि। मत्कृपाण एव मत्करवाल एवाहि पन्नगस्तेन, विनान्तरेण, त्वत्प्राणवायोस्त्वज्जीवितपवनस्य, पाता पानकर्ता, क, न कोऽपीति यावत् । रूपकम् ॥११३॥

इतीति—इत्येव प्रकारेण, काष्ठाङ्गारस्य कृतघ्नस्य दर्पदुर्विलसित गर्वचेष्टित यद् दुर्वचन दुर्वाक्य तत् आकर्ण्य श्रुत्वा, कुरुवीरोऽपि, जीवन्धरोऽपि, एवमित्थम्, जगाद समुवाच ।

त्रपा विना मे पुरत प्रजल्पसे कृतघ्न वीर्यं तव दृष्टपूर्वम् ।
त्वया सम कोऽपि न लक्ष्यते क्षितौ नून प्रभुद्रोहविधौ समर्थ ॥ ११४॥
विरम विरम शत्रो विश्रुतोऽसि त्वमेकस्त्रिजगति परिशुद्ध पातकिप्राग्रगण्य ।
प्रसरति मम बाण प्राणहारी पुरस्तात्त्वमपि कुरु समीके जीवरक्षाप्रयत्नम् ॥ ११५ ॥

इति वदत कुरुवीरस्य विस्फारघोषेणाशनिगर्जनशङ्कावदान्येन दृढार्तिसघटित कम्पमानजीव चापभुजगमाकृष्य विषज्वालायमानान्भल्लान्काष्ठाङ्गार कौरव प्रति दुर्धर्षामर्षेण ववर्ष ।

विच्छिद्य विच्छिद्य शराननेकान्रिपो शरासाद्गलितान्गभीरान् ।
अलक्ष्यसधानविकर्षमोक्षान्बाणा सपत्ने स ववर्ष वीर ॥ ११६ ॥

गृहीतपक्षा पटव पुङ्खा कौरवचापत । प्रसस्रु सगरे शब्दा वादिनो वदनादिव ॥ ११७ ॥

विपाठवर्षेण कुरूद्वहस्य नभ स्थली द्राक्पिहिताब्जबन्धु ।
तिरोहितारिक्षितिपालसेना बभूव धात्री युगपद्रणाग्रे ॥ ११८ ॥

विपाठपञ्जरेणासौ विद्विषत्पक्षिणा कुलम् । बबन्ध स्पन्दनायोग्य मन्देतरपराक्रम ॥ ११९ ॥

---

त्रपामिति—कृत हन्तीति कृतघ्नस्तत्सम्बुद्धौ हे कृतघ्न, त्रपा विना लज्जामन्तरेण, मे मम, पुरतोऽग्रे, प्रजल्पसे निरर्थक वचो ब्रूषे । तव ते, वीर्यमवदानम्, पूर्वं दृष्टमिति दृष्टपूर्वम्, अवलोकितपूर्वम्, नून निश्चयेन, क्षितौ पृथिव्याम्, प्रभुद्रोहविधौ राजद्रोहकार्ये समर्थो दक्ष , त्वया भवता, समस्तुल्य , न लक्ष्यते नो दृश्यते । उपजातिवृत्तम् ॥११४॥

विरम विरमेति—हे शत्रो हे अराते, विरम विरम विरतो भव विरतो भव, त्रिजगति त्रिलोक्याम्, त्वम्, एकोऽद्वितीय , परिशुद्ध पातकैकपूर्ण , पातकिप्राग्रगण्य पापिजनाग्रेसर , विश्रुतोऽसि प्रसिद्धोऽसि, प्राणहारी जीवनघातक , मम, बाण शर , पुरस्तात् अग्रे, प्रसरति प्रगच्छति, त्वमपि, समीके समरे, जीवरक्षाप्रयत्न प्राणरक्षोपायम्, कुरु विधेहि । मालिनीवृत्तम् ॥११५॥

इति वदत इति—इत्येवम्, वदत कथयत , कुरुवीरस्य जीवन्धरस्य, अशनिगर्जनशङ्कावदान्येन वज्रगर्जनसदेहदाननिपुणेन, विस्फारघोषेण विशालमौर्वीरवेण, सहितम्, दृढा चासावार्तिश्चेति दृढार्तिस्तया सघटित सुदृढधनुष्कोटिसहितम् 'आर्त्ति पीडा धनुष्कोट्यो ' इति मेदिनी, कम्पमानो जीवो यस्य त वेपमानप्रत्यञ्चम्, चापभुजम्, चापभुजग धनु पन्नगम्, आकृष्य समुत्ताप्य, विषज्वालायमानान् गरलानलतुल्यान्, भल्लान् प्रासान्, काष्ठाङ्गार कृतघ्न , कौरव प्रति जीवन्धरमुद्दिश्य, दुर्धर्षामर्षेण विकटकोपेन, ववर्ष वर्षति स्म ।

विच्छिद्य विच्छिद्येति—स वीर पूर्वोक्तसुभट , रिपो शत्रो , शरासात् कोदण्डात्, गलितान् नि सृतान्, गभीरान् सुदृढान्, अनेकान् बहून्, शरान् बाणान्, विच्छिद्य विच्छिद्य खण्डयित्वा खण्डयित्वा, सपत्ने रिपौ, अलक्ष्या वेगाधिक्येनादृश्या सधानविकर्षमोक्षा धारणकर्षणमोक्षा येषा तथाभूतान्, बाणान् शरान्, ववर्ष वर्षति स्म ॥११६॥

गृहीतपक्षा इति—सगरे युद्धे पक्षे वाग्युद्धे शास्त्रार्थे इति यावत्, वादिन पूर्वपक्षस्थापिनो विदुष , वदनान्मुखात्, शब्दा इव वाच इव, कौरवचापत स्वामिशरासनात्, पुङ्खा बाणा , प्रसस्रुर्निं सरन्ति स्म, उभयो सादृश्यमाह–गृहीतपक्षा समर्थितस्वाभिप्राया पक्षे धृतपतत्रा , पटवश्चातुर्योपेता पक्षे समर्था इति ॥११७॥

विपाठवर्षेण—कुरूद्वहस्य जीवकस्य, विपाठवर्षेण शरवर्षेण, नभ स्थली गगनभूमि , द्राक् झटिति, पिहिताब्जबन्धुस्तिरोहितसूर्या, बभूव, रणाग्रे समराग्रे, धात्री पृथिवी च, युगपदेककालावच्छेदेन, तिरोहिता पिहितारिक्षितिपालसेना शत्रुभूपालपृतना यस्या तथाभूता, बभूव ॥११८॥

विपाठपञ्जरेणेति—मन्देतरो विशाल पराक्रमो यस्य स, असौ जीवन्धर , स्पन्दनायोग्य

तदानीमुदारपराक्रमप्रथितभुजदण्डयो समकालमिव गीर्वाणगणलक्ष्यमाणमार्गणसधानविकर्षणमोक्षयोरन्योन्य विजयाशाविजृम्भितरन्ध्रान्वेषणयोराश्चर्यकर्मकलाविलोकनसमयसतुष्टवृन्दारकजनकरारविन्दसदीयमानमन्दारकुसुमतुन्दिलसविधप्रदेशयो मध्यप्रसृतमृत्युनासायमानबाहुदण्डविधृतचक्रीकृतकोदण्डतया कोपकुटिलितमृत्युभ्रूयुगलशङ्कासपादकयो प्रवृद्धोत्साहयोर्भयानकसमरमादधानयो कुरुवीरकाष्ठाङ्गारयो परस्परशरघट्टनजनितविस्फुलिङ्गपरम्परामेघमालासु प्रविष्टापि न शान्तिमाससाद ।

तादृक्षे समरे प्रसन्नमनसो वीरस्य सात्यधरे-
बाणालीशरदा विभिन्नवपुषि क्षीणे क्षणेनाखिले ।
द्वेषिच्छ्मापशिलीमुखाभ्रपटले स्वीया तदा वाहिनी
प्रोन्मीलन्मुखवारिजा प्रविलसच्छ्रीराजहसा बभौ ॥ १२० ॥

जीवधरस्य करपद्मगत सपत्नशस्त्रालिवारणपर घनदीप्रखेटम् ।
अर्धे विभिद्य युधि राहुनिगीर्णचन्द्र-बिम्बार्धवत्प्रविदधत्स जगर्ज शत्रु ॥ १२१ ॥

कोपेनाथ कुरूद्वह प्रतिदिश ज्वालाकलापोर्मिल
चक्र शत्रुगले निपात्य तरसा चिच्छेद त मस्तकम् ।

---

सचलनानर्हम्, विद्विषन्त एव पक्षिण खेचरास्तेषाम्, कुल समूहम्, विपाठपञ्जरेण शरशलाकागृहेण, बबन्ध बध्नाति स्म । शरसमूहै शत्रवो निरुद्धा इति भाव ॥११९॥

तदानीमिति—तदानीं तस्मिन् समये, उदारपराक्रमेण विशालावदानेन प्रथितौ प्रसिद्धौ भुजदण्डौ ययोस्तयो, समकालमिव युगपदिव, गीर्वाणगणेन देवसमूहेन लक्ष्यमाणा दृश्यमाना मार्गणाना बाणाना ग्रहणसधानविकर्षणमोक्षा आदानधारणाकर्षणत्यजनानि ययोस्तयो, अन्योऽन्य परस्परम्, विजयाशया विजयाभिलाषेण विजृम्भित वृद्धिङ्गत रन्ध्रान्वेषण छिद्रान्वेषण ययोस्तयो, आश्चर्यकर्मकलाना विस्मयावहकार्यवैदग्धीना विलोकनसमये दर्शनकाले सतुष्टा प्रसन्ना ये वृन्दारकजना देवसमूहास्तेषा करारविन्दैर्हस्तकमलै सदीयमानानि वितीर्यमाणानि यानि कुसुमानि पुष्पाणि तैस्तुन्दिल स्थूलीभूत सविधप्रदेशो ययोस्तयो, मध्ये प्रसृत प्रसार प्राप्तो यो मृत्युर्यमस्तस्य नासायमानयोर्घ्राणसदृशयोर्बाहुदण्डयोर्भुजदण्डयोर्विधृतमारोपित चक्रीकृत वर्तुलाकार कोदण्ड धनुर्ययोस्तयोर्भावस्तत्ता तया, कोपकुटिलिते क्रोधवक्रीकृते ये मृत्युभ्रुवौ यमभ्रकुटी तयोर्युगल द्वय तस्य शङ्काया सशयस्य सपादकौ विधायकौ तयो, प्रवृद्धोत्साहयोर्वर्धमानोल्लासयो, भयानकसमर भयावहयुद्धम्, आदधानयो कुर्वाणयो, कुरुवीरकाष्ठाङ्गारयो जीवन्धरकृतघ्नयो, परस्परशरघट्टनेन मिथोबाणाघातेन जनिता समुत्पन्ना या विस्फुलिङ्गपरम्परा वह्निकणसन्तति सा, मेघमालासु घनराजिषु, प्रविष्टापि समन्तर्गताऽपि, शान्तिं विध्यापनम्, नाससाद न प्राप ।

तादृक्षे समर इति—तदा तस्या वेलायाम्, तादृक्षे पूर्वोक्तप्रकारे, समरे युद्धे, अखिले सम्पूर्णे, द्वेषिच्छ्मापस्य शत्रुराजस्य शिलीमुखा एव बाणा एवाभ्रपटल मेघमण्डल तस्मिन्, प्रसन्नमनस प्रमुदितचेतस, वीरस्य वीर्याधारस्य, सात्यन्धरेजीवन्धरस्य, बाणाली शरसन्ततिरेव शरद् जलदान्तर्तुस्तया, क्षणेनाल्पेनैव कालेन, विभिन्नवपुषि खण्डितशरीरे, क्षीणे सति, स्वीया स्वकीया, वाहिनी नदी सेना च, प्रोन्मीलन्ति विकसन्ति मुखवारिजानि वदनकमलानि यस्या तथाभूता, प्रविलसन्त शोभमाना श्रीराजहसा लक्ष्म्युपलक्षितराजश्रेष्ठा पक्षे शोभोपलक्षितहसविशेषा यस्या तथाभूता सती, बभौ शुशुभे । रूपकालङ्कार ॥१२०॥

जीवन्धरस्येति—युधि युद्धे, जीवन्धरस्य सात्यन्धरे, करपद्मगत पाणिकमलस्थितम्, सपत्नशस्त्रालिवारणपर शत्रुहेतिततिनिवारणतत्परम्, घनदीप्रखेट सुदृढभास्वरबाणवारकम्, अर्धे अर्धं भागे, विभिद्य खण्डयित्वा, राहुणा विधुन्तुदेन निगीर्ण निगलित यच्चन्द्रबिम्ब शशिमण्डल तस्यार्धवत्, प्रविदधत् कुर्वन्, शत्रु काष्ठाङ्गार, जगर्ज गर्जति स्म ॥१२१॥

कोपेनाथेति—अथ स्वकीयखेटच्छेदानन्तरम्, कुरूद्वहो जीवक, कोपेन क्रोधेन, प्रतिदिश

देवा पुष्पमवाकिरन्नविकल श्लाघासहस्रै सम
लोकान्दोलनतत्पर कुरुबले कोलाहल कोऽप्यभूत् ॥ १२२ ॥

तदानी सत्रासपलायमान शात्रवबलमवलोक्य, कुरुवीर करुणाकर क्षणादभयघोषणा विधाय, तद्बन्धुता दीनामाहूय, तत्कालोचितसम्भाषणादिभि परिसान्त्वयामास ।

विजया विजयाधिकेन पुत्रप्रवरेणाद्य बभूव वीरमाता ।
अधुना विधुना समानवक्त्रा मम पुत्री च चिराय वीरपत्नी ॥१२३॥

इत्युक्त्वा मातुल सोऽय गोविन्दधरणीपति ।
कुरुवीर कुलोद्धार कुतुकादभ्यनन्दयत् ॥ १२४ ॥

वसुन्धरा क्षुद्रकृतघ्नसगात्समार्ष्टुकामा समवेतदोषम् ।
कुरुप्रवीरस्य विशालदोषमुपाश्रिताभूदिति चित्रमेतत् ॥ १२५ ॥

तदनु जीवन्धरो मुकुलिताञ्जलिकञ्जाना समन्तत सामन्तवसुमतीपालानामानतीरालोकनेनाङ्गीकुर्वाण , पूर्वाचलमिव पयोजबन्धुर्गन्धसिन्धुरमधिरूढो, दूरादनुगच्छद्भि सेनाध्यक्षैरनुक्षण प्रतिपाल्यमानेक्षणावसर , सामजविराजितैर्गरुडवेगगोविन्दपल्लवपतिलोकपालप्रभृतिभिर्महीपालै परिवृतसविधप्रदेश , शताङ्गसगतैर्नन्दाढ्यप्रमुखै सहोदरै पद्मास्यप्रभृतिभि सहचरैश्च परिशोभित , प्रसन्न-

---

प्रतिकाष्ठम्, ज्वालाकलापोर्मिल ज्वालासमूहसन्ततियुक्तम्, चक्र शस्त्रविशेषम्, शत्रुगले वैरिकण्ठे, निपात्य पातयित्वा, तरसा बलेन, तन्मस्तक शत्रुशिर , चिच्छेद कर्तयामास । देवा अमरा , श्लाघासहस्रैर्बहुविधप्रशसाभि , सम सार्धम्, अविकल पूर्णं यथा स्यात्तथा, पुष्प कुसुमम्, अवाकिरन् ववृषु । कुरुबले जीवन्धरसैन्ये, लोकान्दोलनतत्परो लोकोच्चालनदक्ष , कोऽप्यद्भुत , कोलाहल कलकलशब्द , अभूत् ॥१२२॥

तदानीमिति—तदानी काष्ठाङ्गारमहाप्रयाणकाले, सत्रासेन भयेन पलायमान समन्ताद्धावमानम्, शात्रवबल प्रत्यर्थिपृतनाम्, अवलोक्य दृष्ट्वा, करुणाकरो दयाखनि , कुरुवीरो जीवन्धर , क्षणादल्पेनैव कालेन, अभयघोषणामभयध्वनिम्, विधाय कृत्वा, दीना दु खीभूताम्, तस्य बन्धुता बन्धुसमूहस्ताम्, आहूयाकार्य, तत्कालोचितसम्भाषणादिभि तत्समययोग्यवार्तालापप्रभृतिभि , परिसान्त्वयामास शमयामास ।

विजयेति—अद्याधुना, विजया मम भगिनी, विजयाधिकेन विजयेनाधिको विजयाधिकस्तेन विजयवर्धमानेन, पुत्रप्रवरेण श्रेष्ठपुत्रेण, वीरमाता वीरजननी, बभूव । अधुना साम्प्रतम्, विधुना शशिना, समान सदृश वक्त्र मुख यस्यास्तथाभूता, मम पुत्री च मे सुता च, चिराय चिरकालेन, वीरपत्नी वीरजाया, बभूव ॥१२३॥

इत्युक्त्वेति—मातुलो मातृसहोदर , सोऽय प्रसिद्ध , गोविन्दधरणीपतिर्गोविन्दमहीपाल , इति पूर्वोक्तप्रकारेण, उक्त्वा कथयित्वा, कुलोद्धार वशोन्नायकम्, कुरुवीर सात्यन्धरिम्, कुतुकात्कौतूहलेन, अभ्यनन्दयत् प्रशशस ॥१२४॥

वसुन्धरेति—वसुन्धरा वसुधा, क्षुद्रश्चासौ कृतघ्नश्चेति क्षुद्रकृतघ्नो नीचकाष्ठाङ्गारस्तस्य सगात्सम्बन्धात्, समवेतदोष प्राप्तावगुणम्, समार्ष्टुकामेव दूरीकर्तुमना इव, कुरुवीरस्य जीवन्धरस्य, विशालदोष प्रचुरावगुण पक्षे दीर्घबाहुम्, उपाश्रिता समालम्बिता, अभूद् बभूव, इति चित्रमाश्चर्यम् ॥१२५॥

तदन्विति—तदनु तदनन्तरम्, जीवन्धरो जीवक , समन्तत परित , मुकुलितानि कुड्मलितानि अञ्जलिकञ्जानि हस्तपुटकमलानि येषा तेषाम्, सामन्तवसुमतीपालाना मण्डलेश्वरभूपालानाम्, आनतीर्नमस्कारान्, आलोकनेन दर्शनेन, अङ्गीकुर्वाण स्वीकुर्वाण , पूर्वाचलमुदयगिरिम्, पयोजबन्धुरिव सूर्य इव, गन्धसिन्धुर मत्तमतङ्गजम्, अधिरूढोऽधिष्ठित , दूराद् विप्रकृष्टात् , अनुगच्छद्भिरनुयाद्भि , सेनाध्यक्षै पृतनापतिभि , अनुक्षण प्रतिसमयम्, प्रतिपाल्यमानोऽपेक्ष्यमाण ईक्षणावसारोऽवलोकनकालो यस्य स , सामजेषु गजेषु विराजिता शोभितास्तै , गरुडवेग गोविन्द-पल्लवपति-लोकपालप्रभृतिभि , महीपालै राजभि परिवृत परीत सविधप्रदेशो निकटस्थभूभागो यस्य स , शताङ्गसगतै रथसहितै नन्दाढ्यप्रमुखैर्नन्दाढ्यप्रधानै , सहोदरै सनाभिभि , पद्मास्यप्रभृतिभि पद्मास्यादिभि सहचरैश्च मित्रैश्च, परिशोभित समलङ्कृत , प्रसन्न

निजमुखसुधाकरालोकैरुल्लसता बलजलधिना मेदुरपुरोभाग, सहर्षोद्वेगमहमहमिकया सरभसापनीतातपत्रान्परस्परोत्पीडनकुपिततुरङ्गमनिवारणायासहानेकैकश प्रतिनामग्रहण समीपगतै काष्ठाङ्गारबन्धुभिरावेद्यमानान्प्रणामसमयप्रचलितमकुटतटघटितपद्मरागप्रभाप्रसरणकैतवेन प्रकटीकृतानुरागाञ्छात्रवपक्षलक्षितक्षोणीपतीन्यथार्ह बहुमन्यमान समरसमानीतसपत्नलक्ष्मीनिवासविकचपुण्डरीकायमानेन निजबलजलधिफेनकूटशङ्कावहेनातपत्रेण विभ्राजित, पार्श्वद्वयसमुद्धूयमानचामरसमीरनर्तितकर्णावतस, पुरतो 'जय जय' इति मधुरमुच्चै पठता वन्दिवृन्देन पापठ्यमाननिजविरुदवैभव, क्रमेण समासाद्य तत्र ध्वजकलशतोरणवितानाद्यष्टशोभाभिरलकृतासु रथ्यासु प्रविशमान, सकलपुरतरुणीजनबाहुवशगलितमुक्ताफलायमानै पुष्पलाजोपहारै सभाव्यमानो राजमन्दिरमाससाद । तत्र च,

विसृष्टनिखिलावनीपतिचय कुरूणा पति-
मितै परिजनैर्युत प्रविशति स्म सोऽन्त पुरम् ।
निमग्नमरिकामिनीजनमतीव शोकाम्बुधौ
निरीक्ष्य करुणाकर सपदि सान्त्वनायोद्यत ॥ १२६ ॥

तत कुरुवीर शोकसन्त्रासदीनमन्त पुरिकाजन समीपमानीय तत्र कुररीमिव क्रन्दन्तीं

---

प्रहृष्ट निजमुखमेव स्वकीयास्यमेव सुधाकरश्चन्द्रस्तस्यालोकै प्रकाशै, उल्लसता वर्धमानेन प्रसन्नीभवता च, बलजलधिना सेनासागरेण मेदुरो मिलित पुरोभागो यस्य स, सहर्षोद्वेग प्रमोदोद्वेगसहित यथा स्यात्तथा, अहमहमिकया अह पूर्वमह पूर्वमिति भावेन, सरभस सवेगमपनीत दूरीकृतमातपत्र छत्र येषा तान्, परस्परोत्पीडनेन मिथ समर्दनेन कुपिता रुष्टा ये तुरङ्गमा अश्वास्तेषा निवारणे प्रतिरोधन आयाससहा खेदसहास्तान्, प्रणामसमये नमस्कारवेलाया प्रचलितानि यानि मकुटतटानि मौलिपार्श्वाणि तेषु घटिता खचिता ये पद्मरागा लोहितकमणयस्तेषा प्रभाया कान्तेर्यत्प्रसरण विस्तारस्तस्य कैतव व्याज तेन, प्रकटीकृतानुरागान् प्रदर्शितप्रेम्ण, शात्रवपक्षेण सपत्नपक्षेण लक्षिता युक्ता ये क्षोणीपतयो राजानस्तान्, यथार्हं यथायोग्यम्, बहुमन्यमान तान्प्रति सन्मान प्रदर्शयन् समरे सगरे समानीता समाकृष्टा या सपत्नलक्ष्मी शत्रुश्रीस्तस्या निवासो वसतिस्थान यद् विकचपुण्डरीक प्रफुल्लपद्म तद्वदाचरता, निजबलमेव जलधिर्निजबलजलधि स्वकीयसेनापारावारस्तस्य फेनकूटस्य डिण्डीरपिण्डस्य शङ्कावह सदेहाधायक यदातपत्र छत्र तेन, विभ्राजित शोभित, पार्श्वद्वये तटयुगे समुद्धूयमाने कम्प्यमाने ये चामरे प्रकीर्णके तयो समीरेण पवनेन नर्तित कम्पित कर्णावतसो यस्य तथाभूत, पुरतोऽग्रे, 'जय जय' इति मधुर मनोहर यथा स्यात्तथा, उच्चैरुदात्तस्वरेण, पठता, वन्दिवृन्देन मागधसमूहेन, पापठ्यमान भूयोभूयोऽतिशयेन वा पठ्यमान निजविरुदवैभव स्वकीर्तिसपद्यस्य स, एवम्भूत सन्, क्रमेण क्रमश, पुरी राजपुरीनगरीम्, समासाद्य सम्प्राप्य, यत्र पुर्याम्, ध्वजकलशतोरणवितानाद्यष्टशोभाभि पताकाकुम्भतोरणचन्दोपकप्रभृत्यष्टविधशोभोपकरणै, अलकृतासु विराजितासु, रथ्यासु वीथीषु, प्रविशमान प्रवेश कुर्वाण, सकलपुरस्य निखिलनगरस्य तरुणीजनाना युवतिजनाना बाहुवशेभ्यो भुजवेणुभ्यो गलितानि पतितानि यानि मुक्ताफलानि मौक्तिकानि तद्वदाचरद्भि, पुष्पलाजोपहारै कुसुमभर्जितधान्यपुष्पोपायनै, सभाव्यमान सत्क्रियमाण, सन्, राजमन्दिर नृपतिनिकेतनम्, आससाद प्राप । तत्र च तस्मिंश्च राजमन्दिरे ।

विसृष्टेति—विसृष्ट प्रत्यावर्तितो निखिलावनीपतिचयोऽखिलनरेन्द्रसमूहो येन स, मितैरल्पै, परिजनै परिवारै, युक्त सहित, स पूर्वोक्त कुरूणा पति स्वामी, अन्त पुर निशान्तम्, प्रविशति स्म प्राविशत् । तत्र, अतीवात्यन्तम्, शोकाम्बुधौ खेदपारावारे, निमग्न ब्रुडितम्, अरिकामिनीजन शत्रुस्त्रीसमूहम्, निरीक्ष्य दृष्ट्वा, करुणाकरो दयाकर, स, सपदि झटिति, सान्त्वनाय समाश्वासनाय, उद्यतस्तत्परो बभूव । पृथ्वीछन्द ॥१२६॥

तत कुरुवीर इति—ततस्तदनन्तरम्, कुरुवीरो जीवक शोकसन्त्रासाभ्या खेदभयाभ्या दीन कातरम्, अन्त पुरिकाजन निशान्तनारीसमूहम्, समीप निकटम्, आनीय समाहूय, तत्र तेषु, कुररीमिव

काष्ठाङ्गारमहिषी तत्पुत्राश्चावलोक्य कृपातरङ्गित परिसान्त्वनकलाप्रवीण पीयूषमधुराभिर्विचित्राभिर्गिरा परम्पराभि समाश्वासमानिन्ये ।

तदनु जलधौ भासा पत्यौ निमज्जति पश्चिमे
करधृतमणिश्रेणीदीपैर्जनै परिसेवित ।
सखिपरिवृत सोऽय कोश विवेश शनै शनै-
र्धनमणिगणैर्वस्त्रैरन्यैश्च वस्तुभिरुज्ज्वलै ॥ १२७ ॥

तदनु कोशधनादिक निजमुद्रया मुद्रयित्वा निद्रासुखमनुबुभूषु कुरुवीर प्रासादमधिरुह्य मणिमञ्चोपरि हसतूलशयने सुष्वाप । ततश्च निशायामवसन्नाया प्राबोधिकजनहृद्यपद्यालापैर्मङ्गलविचित्रवादित्रारावैश्च प्रबुद्धोऽसौ जीवन्धर कृतप्राभातिककृत्य सकलपरिवारसहितो गोविन्दराजेन सह भगवज्जिनभवनमासाद्य तत्र पूजा विस्तारयामास ।

तत सर्वै साक नृपभवनमासाद्य सहसा
विदेहक्षोणीश सचिवगणमानीय पुरत ।
समादिश्य श्रीमान्प्रजवमभिषेकप्रयतन
समापृच्छच्चैव कुतुकितमना कञ्जनयन ॥ १२८ ॥

कि नवरत्नप्रभापरिहसितपुरन्दरसभामण्डपमभिषेकमण्डप विनिर्मितम् । कि वा तत्र सर्व

---

क्रौञ्चपक्षिणीमिव, क्रन्दन्तीं रुदन्तीम्, काष्ठाङ्गारमहिषी कृतघ्नकामिनीम्, तत्पुत्रान् तत्सुताश्च, अवलोक्य दृष्ट्वा, कृपातरङ्गितो दयातरङ्गित, परिसान्त्वनकलाया समाश्वासनचातुर्याम्, प्रवीणो दक्ष, पीयूषमधुराभि रमृतमिष्टाभि, विचित्राभिर्विविधप्रकाराभि, गिरा वाणीनाम्, परम्पराभि सन्ततिभि, समाश्वास परिसान्त्वनम्, आनिन्ये प्रापयामास ।

तदनु जलधाविति—तदनु तदनन्तरम्, भासा पत्यौ सूर्ये, पश्चिमे पश्चिमाशावलम्बिनी, जलधौ सागरे, निमज्जति सति निमज्जनोद्यते सति, करेषु पाणिषु धृता अवलम्बिता मणिश्रेणीरूपा रत्नपङ्क्तिरूपा दीपा यैस्तै, जनैर्लोकै, परिसेवित परिवृत, सखिभिर्मित्रै परिवृतो युक्त, सोऽय जीवन्धर, शनै शनैर्मन्द मन्दम्, धनमणिगणैर्वित्तरत्नसमूहै, वस्त्रै पटै, अन्यैश्च भिन्नैश्च, उज्ज्वलैर्निर्मलै, वस्तुभि पदार्थै, उपलक्षित कोश भाण्डागारम्, विवेश विशति स्म । हरिणीच्छन्द ॥१२७॥

तदनु कोशधनादिकमिति—तदनु तत्पश्चात्, कोशधनादिक भाण्डारवित्तप्रभृतिकम्, निजमुद्रया स्वकीयनामाक्षरमुद्रया, मुद्रयित्वा मुद्रित कृत्वा, निद्रासुख स्वापसौख्यम्, अनुबुभूषुरनुभवितुमिच्छु, कुरुवीरो जीवन्धर, प्रासाद भवनम्, अधिरुह्याधिष्ठाय, मणिमञ्चोपरि रत्नपर्यङ्किकाया उपरि, हसतूलशयने हसतूलशय्यायाम्, सुष्वाप शिश्ये । ततश्च तदनन्तरञ्च, निशाया रजन्याम्, अवसन्नाया पूर्णाया सत्याम्, प्राबोधिकजनाना प्रबोधप्रयोजनकलोकाना हृद्याश्च ते मनोहराश्च ते पद्यालापाश्च श्लोकालापाश्चेति तै, मङ्गलविचित्रवादित्राणा मङ्गलप्रयोजनकविविधवाद्यानामारावैश्च ध्वनिभिश्च, प्रबुद्धो जागृत, असौ पूर्वोक्त, जीवन्धरो जीवक, कृतानि सम्पादितानि प्राभातिकानि प्रात कालिकानि कृत्यानि येन स, सकलपरिवारसहितो निखिलपरिजनयुत, सन्, गोविन्दराजेन सह मातुलेन सार्धम्, भगवज्जिनभवन भगवज्जिनेन्द्रमन्दिरम्, आसाद्य लब्ध्वा, तत्र मन्दिरे, पूजा सपर्याम्, विस्तारयामास वितताान ।

तत सर्वैरिति—ततस्तदनन्तरम्, विदेहक्षोणीशो गोविन्दभूपाल सर्वैर्निखिलै, साक सह, नृपभवन राजसदनम्, आसाद्य प्राप्य, सहसा झटिति, पुरतोऽग्रे, सचिवगण मन्त्रिमण्डलम्, आनीय प्रापय्य, प्रजव प्रवेग यथा स्यात्तथा, अभिषेकप्रयतन राज्याभिषेकसम्भारम्, समादिश्य समाज्ञाप्य, कुतुकितमना कौतूहलाक्रान्तचित्त, कञ्जनयन कमलनेत्र, श्रीमान् शोभासम्पन्न, एव वक्ष्यमाणप्रकारेण, समापृच्छत् पप्रच्छ । शिखरिणीच्छन्द ॥१२८॥

कि नवरत्नप्रभेति—नवरत्नप्रभाभिर्नूतनमणिदीप्तिभि परिहसित तिरस्कृत पुरन्दरसभामण्डप शक्रास्थानमण्डपो येन तथाभूतम्, अभिषेकमण्डपमभिषेकास्थानम्, विनिर्मित रचित किम् । कि वा तत्र

वर्णवृद्धा समिलिता । कच्चित्सज्जीकृतानि सुरभिशीतलप्रसन्नतीर्थपूर्णानि कनककलशकुलानि । कच्चित्तत्र सम्भृतानि तदुपयुक्तोपकरणानि । किं कार्तान्तिका मङ्गलमुहूर्तकृतावधाना । कच्चिन्नानादेशनरपाला सज्जीकृतोपायना सनद्धा । किं वा नगररथ्या परिष्कृता ।

इति प्रश्न समाकर्ण्य सचिवा सञ्चितादरा । सर्वं सुघटित देवस्याज्ञयेति बभाषिरे ॥ १२६ ॥

क्षीराम्भोधिपय प्रपूर्णकलशानाहृत्य यक्षेश्वरो
यक्षै स्वानुचरैस्तदा परिवृत सूर्यप्रतीपच्छवि ।
सम्प्रापत्कुरुकुञ्जर पितृपदे राज्येऽभिषेक्तु मुदा
तत्रत्यक्षितिपावलि स्म भजते वैलक्ष्यवीचारसम् ॥ १३० ॥

ततश्चाभिषेकमण्डपमध्यस्थापितरत्नपीठोपरि विराजमान कौरव क्षीरवाराकरवारिभिर्यक्षराजगोविन्दमहाराजप्रमुखा सहर्षमभिषिषिचु । तदानीमनेकप्रहतपटहमृदङ्गशङ्खझल्लरीप्रभृतिवाद्यारावस्तर्जयन्निव घनाघनमण्डलमास्फोटयन्निवाखिलजनश्रुतिमान्दोलयन्निव लोकमाह्वयन्निवाभिषेकदिदृक्षुजनमाक्रमन्निव भुवनोदरमुदपादि ।

तदनु दिव्यदुकूलविभूषणाञ्चितशरीरकुरूद्वहमूर्धनि ।
मकुटमुज्ज्वलरत्नविभासुर करधृत निदधे स हि यक्षराट् ॥ १३१ ॥

---

मण्डपे सर्वेषा वर्णाना वृद्धा स्थविरजना, समिलिता एकत्रिता, सुरभि सुगन्धि शीतल शिशिर प्रसन्न स्वच्छ च यत्तीर्थतोय तीर्थोदक तेन पूर्णानि सम्भृतानि, कनककलशकुलानि सुवर्णकुम्भसमूहान्, सज्जीकृतानि सुरचितानि, कच्चित् कामप्रवेदने, तत्र मण्डपे, तदुपयुक्तोपकरणानि राज्याभिषेकयोग्यसाधनानि, सम्भृतानि सधृतानि, कच्चित् कार्तान्तिका देवज्ञा मङ्गलमुहूर्ते कल्याणकालनिर्धारणे कृत विहितमवधान चित्तैकाग्र्य यैस्तथाभूता किं सन्ति, कच्चित्, नानादेशनरपाला नैकजनपदभूपा सज्जीकृतोपायना सुरचितोपहारा सन्ति, किं वा अथवा, नगररथ्या पुरमार्गा, परिष्कृता परिशोभिता ।

इति प्रश्नमिति—इति पूर्वोक्तम्, प्रश्नमनुयोगम्, समाकर्ण्य श्रुत्वा, सञ्चितादरा प्राप्तसन्माना, सचिवा अमात्या, देवस्य भवत, आज्ञया समादेशेन, सर्वं कृत्स्नम्, सुघटित सुरचितम्, इति बभाषिरे जगदु ॥१२६॥

क्षीराम्भोधीति—तदा तस्मिन् काले, सूर्यप्रतीपा दिवाकरसदृशी छविर्दीप्तिर्यस्य स, यक्षेश्वर सुदर्शन, स्वानुचरैर्निजसेवकै, यक्षैर्देवविशेषै परिवृत परीत सन्, क्षीराम्भोधे पय पारावारस्य पयसा जलेन प्रपूर्णा सम्भृता ये कलशा कुम्भास्तान्, आहृत्य आनाय्य, कुरुकुञ्जर जीवन्धरम्, मुदा हर्षेण, पितृपदे जनकधामनि, राज्ये साम्राज्ये, अभिषेक्तु समुक्षितुम्, सम्प्रापदाजगाम, तत्रभवास्तत्रत्यास्ते च ते क्षितिपाश्च राजानस्तेषामावलि पङ्क्ति, वैलक्ष्यवीचारस विस्मयावलोकनप्रीतिम्, भजते स्म भेजे । तदद्भुत दृष्ट्वा सर्वे राजानो विस्मिता बभूवुरिति भाव ॥१३०॥

ततश्चाभिषेकेति—ततश्च तदनन्तरञ्च, अभिषेकाय मण्डपमभिषेकमण्डपमभिस्नानास्थान तस्य मध्ये स्थापित निवेशित यद् रत्नपीठ मणिमयासन तस्योपरि, विराजमान शोभमानम्, अधितिष्ठन्तमिति यावत्, कौरव जीवन्धरम्, क्षीरवाराकरस्य पय पयोधे, वारिभिर्जलै, यक्षराज सुदर्शन, गोविन्दमहाराजो विदेहाधीश्वरो जीवन्धरस्य मातुल, तौ प्रमुखौ प्रधानौ ययोस्ते, सहर्ष सप्रमोदम्, अभिषिषिचु स्नपयन्ति स्म । तदानी तस्मिन् काले, अनेकेषा भूयसा प्रहताना ताडिताना पटहमृदङ्गशङ्खझल्लरीप्रभृतिवाद्यानाम् आनकमुरजकम्बुझल्लरीप्रमुखवादित्राणाम् आरव शब्द घनाघनमण्डल मेघसमूहम्, तर्जयन्निव भर्त्सयन्निव, अखिलजनश्रुतिं निखिललोककर्णम्, आस्फोटयन्निव विदारयन्निव, लोक भुवनम्, आन्दोलयन्निव सचलयन्निव, अभिषेकदिदृक्षुजन स्नपनविलोकनाभिलाषि लोकम्, आह्वयन्निव आकारयन्निव, भुवनोदर जगन्मध्यम्, आक्रामन्निव समधिरुहन्निव, उपपादि समजनि ।

तदन्विति—तदनु अभिषेकानन्तरम्, हि निश्चयेन, स पूर्वोक्त, यक्षराट् यक्षेश्वर सुदर्शन, दिव्यै

आपृच्छ्य कुरुभूपालमारुह्य व्योमयानकम् । आदिश्य परिवार स्वमयाद्यक्षोऽपि मन्दिरम् ॥१३२॥

तदानी निखिलनरपालकुलविलसितसल्लाप गोविन्दमहीवल्लभमग्रतो विधाय सप्रश्रयमवनतपूर्वकायेन पद्मास्येन दीयमानहस्तावलम्ब, सुरस्तम्बेरमसकाश महान्तमौपवाह्य गजराजमुदयधराधरमिव सरोजबन्धुरैरावणमिव गीर्वाणपतिरधिरूढ, प्रकृतिजनकुमुदषण्डचन्द्रमण्डलेन क्षीरोदधिडिण्डीरधवलेन स्थूलमुक्ताफलजालकावृतेनातपत्रेण परिष्क्रियमाणोर्ध्वभाग, पार्श्वद्वयोद्धूयमानाभ्या राज्यलक्ष्मीकटाक्षतरङ्गाभ्यामिव पय पारावारपरिलोलदूर्मिसकाशकनकदण्डविलसितचामराभ्या किञ्चिच्चञ्चलवसनाञ्चल, सर्वत सममपावृतकवाटपुटप्रकटवातायनतया कुरुपतिदर्शनकुतूहलसमुन्मीलितलोचनस्येव तत्पुरस्य हर्म्याग्रावलम्बिनीना पौरनितम्बिनीना कासाञ्चिदर्धपरिसमाप्तसाधनव्यापाराणा वामहस्तगतमणिदर्पणाना परिलसत्कोकारिपूर्णमण्डलानामिव राकारजनीनाम्, कासाञ्चन सरभसगमनविगलितमेखलाकलापाकुलितचरणपल्लवाना शृङ्खलाघटितचरणमारमदपट्टकरिणीनामिवापरासाम्, आर्द्रलाक्षारसारुणचरणसरोजाना कमलपरिपीतबालातपानामिव कमलि-

---

स्वर्गभवैर्दुकूलविभूषणै क्षौमाम्बरालङ्कारैरञ्चित शोभित शरीर गात्र यस्य, स चासौ कुरूद्वहश्चेति तस्य मूर्धनि शिरसि, उज्ज्वलरत्नैर्देदीप्यमानमणिभिर्विभासुर शोभमानम्, करकृत स्वहस्तस्थापितम्, मकुट मौलिम्, निदधे निचिक्षेप । द्रुतविलम्बितवृत्तम् ॥१३१॥

आपृच्छ्येति—यक्षोऽपि कृतज्ञचरोऽपि, कुरुभूपाल सात्यन्धरिमहाराजम्, आपृच्छ्य आमन्त्र्य, व्योमयानक विमानम्, आरुह्य समधिष्ठाय, परिवार परिजनम्, आदिश्य नियोग दत्वा, स्व स्वकीयम्, मन्दिर भवनम्, अयात् अगच्छत् ॥१३२॥

तदानीमिति—तदानी तस्मिन् काले, निखिलनरपालकुलेन समग्रराजसमूहेन विलसित कृत सल्लाप सम्भाषण येन तम्, गोविन्दमहीवल्लभ विदेहाधीश्वरम्, अग्रत पुरस्तात्, विधाय कृत्वा, सप्रश्रय सविनयम्, अवनतो विनम्र पूर्वकाय शरीरस्य पूर्वभागो यस्य तेन, पद्मास्येन तन्नामप्रमुखमित्रेण, दीयमानोऽर्प्यमाणो हस्तावलम्बो हस्ताश्रयो यस्य स, सुरस्तम्बेरमेण देवगजेन सकाश सदृशस्तम्, महान्त समुत्तुङ्गम्, औपवाह्य वाहनयोग्यम्, गजराज करीन्द्रम्, उदयधराधर पूर्वाचलम्, सरोजबन्धुरिव सूर्य इव, ऐरावण ऐरावतम्, गीर्वाणपतिरिव पुरन्दर इव, अधिरूढोऽधिष्ठित, प्रकृतिजना प्रजा जना एव कुमुदषण्ड कुमुदसमूहस्तस्य चन्द्रमण्डलेन शशिबिम्बेन, क्षीरोदधे क्षीरसागरस्य डिण्डार इव हिण्डीर इव धवल शुक्ल तेन, स्थूल विशाल यन्मुक्ताफलजालक मौक्तिकसमूहस्तेनावृत तेन, आतपत्रेण छत्रेण, परिक्रियमाण समलंक्रियमाण ऊर्ध्वभागो यस्य स, पार्श्वद्वये तटद्वय उद्धूयमानाभ्या प्रकीर्यमाणाभ्यामिव, राज्यलक्ष्मीकटाक्षतरङ्गाभ्यामिव साम्राज्यश्रीवीक्षकल्लोलाभ्यामिव, पय पारावारस्य क्षीरसागरस्य परिलोलद्भ्या सचलद्भ्यामूर्मिभ्या भङ्गाभ्या सकाशौ सदृशौ ताभ्याम् । कनकदण्डाभ्या सुवर्णदण्डाभ्या विलसिते शोभिते ये चामरे बालव्यजने ताभ्याम्, किञ्चिन्मनाग् चञ्चल चपल, वसनाञ्चल क्षौमप्रान्त यस्य स, सर्वत समन्तात्, सम युगपत्, अपावृतकपाटपुटानि दूरीकृताररपुटानि अतएव प्रकटानि स्पष्टानि वातायनानि गवाक्षा यस्य तस्य भावस्तत्ता तया, कुरुपतिदर्शनस्य जीवन्धरावलोकनस्य कुतूहलेन कौतुकेन समुन्मीलितानि समुद्घाटितानि लोचनानि नयनानि येन तस्येव, तत्पुरस्य तन्नगरस्य, हर्म्याग्रावलम्बिनीना भवनाग्रस्थितानाम्, पौरनितम्बिनीना नागरिकनारीणाम्, कासाचित् कासामपि, अर्धपरिसमाप्तोऽर्धनिष्पन्न प्रसाधनव्यापारोऽलङ्करणकार्य यासा तासाम्, वामहस्तगत सव्यकरस्थितो मणिदर्पणो रत्नादर्शो यासा तासाम्, परिलसच्छोभमान कोकारिपूर्णमण्डल चन्द्रपूर्णबिम्ब यासु तासाम्, राकारजनीनामिव पूर्णिमारात्रीणामिव, कासाचन कासामपि, सरभसगमनेन सवेगप्रधावनेन विगलित भ्रष्टो यो मेखलाकलापो रशनासमूहस्तेनाकुलिता व्यग्राश्चरणपल्लवा पादकिसलया यासा तासाम्, शृङ्खलया घटिता युक्ताश्चरणा पादा यासा तथाभूता या मारस्य कन्दर्पस्य मदपट्टकरिण्यो मदोन्मत्तप्रधानकरेणवस्तासामिव, अपरासामन्यासाम्, आर्द्रलाक्षारसेन सरसयावकद्रवेणारुणानि रक्तानि चरणसरोजानि

नीनामन्यासाम्, मरकतमणिखचितवातायनदत्तवदनारविन्दाना सुन्दरीमणीना विकसितैकशतपत्रशोभिता गगनतलविलसिता कमलिनी तुलयन्तीनाम्, करारविन्दगलितमरन्दबिन्दुशङ्कासपादकैर्नखसुधाकरपरिगलत्तुषारशीकरस न्देहसन्दायकै सकुसुमैर्लाजाञ्जलिभिरवकीर्यमाण , पुर सरवविविधवाद्यरवविमिश्रितेन पुरोयायिना मङ्गलपाठकाना 'जय जय' इति मधुरवचनरचनानुयातेन सक्षोभसमुत्पतत्पुष्पलीनपुष्पन्धयझङ्कारमेदुरेण प्रासादपुञ्जसञ्जातप्रतिध्वानेन दीर्घतरतामुपगतेन कोलाहलेन मुखरितदिगन्तर , ता पुरी प्रदक्षिणीकृत्य द्वारदेशमवतीर्ण , प्रज्वलद्दीपशोभितकनकपात्र वहन्तीना वारवनिताना निचयेन विरचितनीराजनमङ्गल , सत्यधरात्मजो, विततवितानविलम्बिमुक्तादामविस्तारिते दन्दह्यमानधूपसुरभिले मणिमण्डपे प्रविश्य, कुलक्रमागत सिंहासनमलञ्चकार ।

> मोदाम्बुराशिर्व्यलसत्प्रजाना कुरुप्रवीरेन्दुमहोदयेन ।
> पौराङ्गनाना नयनोत्पलेषु मरन्दधाराश्रुजलच्छलेन ॥ १३३ ॥
> क्षुद्रक्षितीशेन कृत प्रजाना सक्षोभमालक्ष्य दयालुरेप ।
> राजा समा द्वादश नैजकीर्तिगौरा धरित्रीमकरा चकार ॥ १३४ ॥

---

पादपद्मानि यासा तासाम्, कमलै पयोजै परिपीतो गृहीतो बालातप प्रात कालिकलोहितघर्मो याभिस्तासामिव, अन्यासामितरासाम्, मरकतमणिखचितानि हरिन्मणिनि स्यूतानि यानि वातायनानि गवाक्षा स्तेषु दत्त बहिर्निसारित वदनारविन्द मुखकमल याभिस्तासाम्, अतएव विकसितेन प्रोत्फुल्लेन एकेनाद्वितीयेन शतपत्रेण कमलेन शोभिता समलङ्कृता ताम्, गगनतलविलसिता नभस्तलविशोभिताम्, कमलिनी सरोजिनीम्, तुलयन्तीनामुपमिमानानाम्, सुन्दरीमणिना युवतिरत्नानाम्, करारविन्देभ्य पाणिपद्मेभ्यो गलिता पतिता या मरन्दबिन्दवो मकरन्दशीकरास्तेषा शङ्कासम्पादकै सदेहजनकै , नखसुधाकरेभ्यो नखरचन्द्रेभ्य परिगलन्त परिपतन्तो ये तुषारशीकरा हिमकणास्तेषा सदेहदायकै सशयजनकै , सकुसुमै सपुष्पै , लाजाञ्जलिभिर्भर्जितधान्याञ्जलिभि अवकीर्यमाणोवक्षिप्यमाण , पुर सराणा पुरोगामिना विविधवाद्याना विविधवादित्राणा रवेण शब्देन मिश्रितो मिलितस्तेन, पुरोयायिनामग्रयायिनाम्, मङ्गलपाठकाना मागधानाम्, 'जय जय' इति मधुरवचनरचनानुयातेन मिष्टवाग्रचनासहितेन, सक्षोभेण व्यग्रभावेन समुत्पतन्त समुड्डीयमाना पुष्पलीना कुसुमस्थिता ये पुष्पन्धया भ्रमरास्तेषा झङ्कारेणाव्यक्तशब्दविशेषेण मेदुरो मिलितस्तेन, प्रासादपुञ्जे राजभवनसमूहे सञ्जात समुत्पन्न प्रतिध्वान प्रतिध्वनिर्यस्य तेन, दीर्घतरता विशालताम्, उपागतेन प्राप्तेन, कोलाहलेन कलकलशब्देन, मुखरितदिगन्तरो वाचालितकाष्ठामध्य , सन्, ता पुरी राजपुरीनगरीम्, प्रदक्षिणीकृत्य परिक्रम्य, द्वारदेश प्रवेशमार्ग प्रान्तम्, अवतीर्ण समवरूढ , प्रज्वलद्दीपशोभित प्रकाशमानदीपविभ्राजित यत्कनकपात्र सुवर्णभाजनम्, वहन्तीना दधतीनाम्, वारवनिताना वेश्यानाम्, निचयेन समूहेन, विरचित विहित नीराजनमङ्गलमारार्तिकमङ्गल यस्य तथाभूत , सत्यन्धरात्मजो जीवन्धर , विततविताने विस्तृतचन्द्रोपके विलम्बीनि यानि मुक्तादामानि मौक्तिकमाल्यानि तैर्विस्तारिते वितते, दन्दह्यमानेन भूयोभूयोऽतिशयेन वा दह्यमानेन धूपेन सुगन्धिचूर्णेन सुरभिले सुगन्धित तस्मिन्, मणिमण्डपे रत्नास्थाने, प्रविश्य प्रवेश कृत्वा, कुलक्रमागत वशपरम्परायातम्, सिंहासन हरिविष्टरम्, अलञ्चकार शोभयामास । तदध्यारूढो बभूवेति भाव ।

मोदाम्बुराशिरिति—कुरुप्रवीरो जीवन्धर एवेन्दुश्चन्द्रस्तस्य महोदयो महोद्गमस्तेन, प्रजाना लोकानाम्, मोदाम्बुराशि प्रमोदपारावार , व्यलसच्छुशुभे, अश्रुजलच्छलेन बाष्पसलिलव्याजेन, पौराङ्गनाना नागरिकनारीणाम्, नयनोत्पलेषु नेत्रकुवलयेषु, मरन्दधारा मकरन्दश्रेणि , व्यलसत् प्रकटीबभूव ॥१३३॥

क्षुद्रक्षितीशेनेति—दयालु कारुणिक 'स्याद्दयालु कारुणिक' इत्यमर , एष जीवन्धर , क्षुद्रक्षितीशेन काष्ठाङ्गारेण, कृत विहितम्, प्रजाना लोकानाम्, सक्षोभ व्याकुलत्वम्, आलक्ष्य दृष्ट्वा, नैजकीर्तिगौरा स्वकीययशोधवलाम्, धरित्री पृथिवीम्, द्वादशसमा द्वादश वर्षाणि 'हायनोऽस्त्री शरत्समा' इत्यमर ,

वृद्धक्षत्रपदे निषण्णमकरोद्गन्धोत्कट भूपति-
नन्दाढ्याय च यौवराज्यपदवी प्रादात्कुरूणा पति
तत्तद्योग्यपदे चकार निखिलान्पद्मास्यमुख्यान्सखी-
न याश्चापि धराधिपान्करुणया स्वे स्वे पदेऽस्थापयत् ॥ १३५ ॥

विद्याधरविशालाक्ष्या भाले चन्द्रार्धकोमले। पट्टबन्धनमातेने सोऽय वसुमतीपति ॥ १३६ ॥
राज्ञामुपायनान्येष गृहीत्वा कुरुकुञ्जर । ततो द्विगुणरत्नादिसार्थं प्रादान्मुदा नृप ॥ १३७ ॥
यथार्हं मन्त्रिवृद्धाना बहुमान धरापति । ततान वर्णवृद्धानामपि प्रत्येकमादरात् ॥ १३८ ॥

औदार्यप्रथमावतारसरणौ जीवन्धरे भूपता-
वर्थिभ्योऽभिमतप्रदानपदवीबद्धादरे जाग्रति ।
नाकानोकहदेवधेनुविलसच्चिन्तामणीना कथा
हास्याय प्रवदन्ति सभ्यविबुधा शास्त्राब्धिपारगता ॥ १३९ ॥

तदनु चतुरङ्गबलसगतेन नन्दाढ्येन समानीता निजजननी विजयामहादेवी पादयो प्रणिपत्य, तामानन्दपयोनिधिमग्नामाधाय, तया सह समागतस्य तापससदोहस्य वाञ्छितादधिक द्रविणजात प्रदाय, मुदा तेषा पुण्यैकलभ्या मोक्षपदवीमुपदिदेश । अन्यै समानीता पद्मादिदेवी समागत्य रहसि समालिङ्ग्य परिचुम्ब्य च सकलमनोव्यथानामवसानभूमि हर्षातिभूमि प्रापयामास ।

---

अत्यन्तसयोगे द्वितीया, अकरा वलिरहिताम्, चकार । काष्ठाङ्गारेण परिशोषिता पृथिवी द्वादशवर्षाणि यावत् करमुक्ताञ्चकारेति भाव ॥ १३४ ॥

वृद्धक्षत्रपदे इति—भूपतिर्नृप , कुरूणा पतिर्जीवन्धर , गन्धोत्कट वैश्याधिपम्, वृद्धक्षत्रपदे स्थविरक्षत्रियस्थाने, निषण्ण स्थितम्, अकरोत्, त पितृतुल्य विदधाविति यावत्, नन्दाढ्याय च गन्धोत्कटसुताय च, यौवराज्यपदवी यौवराज्यपदम्, प्रादात् प्रदत्तवान्, पद्मास्यमुख्यान् पद्मास्यप्रधानान्, निखिलान् सर्वान्, सखीन् मित्राणि, तत्तद्योग्यपदे यो यस्य योग्यस्तस्मिन् पदे, चकार विदधे, अन्यानपीतरानपि, धराधिपान् राज्ञ , करुणया कृपया, स्वे स्वे पदे स्वकीये स्वकीये पदे, अस्थापयत् स्थापयामास ॥ १३५॥

विद्याधरेति—सोऽय पूर्वोक्त , वसुमतीपतिर्जीवन्धर , विद्याधरविशालाक्ष्या गन्धर्वदत्ताया , चन्द्रार्धकोमले रजनीकरार्धमृदुले, भाले ललाटे, पट्टबन्धन पट्टराज्ञीबन्धनम्, आतेने चकार ॥ १३६ ॥

राज्ञामिति—एष कुरुकुञ्जर कुरुवशप्रधान , नृपो जीवक , राज्ञा भूपानाम्, उपायनानि प्राभृतानि, गृहीत्वा समादाय, ततस्तद्दत्तोपायनप्रमाणात्, द्विगुणरत्नादिसार्थं द्विगुणीभूतमणिप्रभृतिसमूहम्, प्रादात् दत्तवान् ॥ १३७ ॥

यथार्हमिति—धरापती राजा, यथार्हं यथायोग्यम्, मन्त्रिवृद्धाना वृद्धसचिवानाम्, वर्णवृद्धानामपि ब्राह्मणादिषु वर्णेषु वृद्धा ज्येष्ठास्तेषामपि, प्रत्येकम्, आदरात् सन्मानात्, बहुमान भूयान्समादरम्, ततान चकार ॥ १३८ ॥

औदार्येति—औदार्यस्य वदान्यत्वस्य प्रथमावतार प्रथमप्रवेशस्तस्य सरणिर्मार्गस्तस्मिन्, अर्थिभ्यो याचकेभ्य , अभिमतप्रदानपदव्या मनोरथदानकार्ये बद्धो विहित आदर सन्मान येन तस्मिन्, भूपतौ राजनि, जाग्रति सति विद्यमाने सति, शास्त्राब्धिपारगता श्रुतसागरपारीणा , सभ्यविबुधा सभ्यविद्वान्स , नाकानोकहश्च देवधेनुश्च विलसच्चिन्तामणिश्च तेषा कल्पवृक्षसुरगवीशुम्भच्चिन्तामणीनाम्, कथाश्चर्चा , हास्याय हास कर्तुम्, प्रवदन्ति निगदन्ति । दानशूरोऽसावासीदिति भाव ॥ १३९ ॥

तदन्विति—तदनन्तरम्, चतुरङ्गबलसगतेन चतुर्विधसैन्यसहितेन, नन्दाढ्येन, समानीता सम्प्रापिताम्, निजजननीं स्वमातरम्, विजयामहादेवी विजया राज्ञीम्, पादयोश्चरणयो , प्रणिपत्य नमस्कृत्य, ताम् मातरम्, आनन्दपयोनिधिमग्ना हर्षपारावारमग्नाम्, आधाय कृत्वा, तया मात्रा, सह साकम्, समागतस्य सम्प्राप्तस्य, तापससदोहस्य तापससमूहस्य, वाञ्छितादभिलषितात्, अधिक प्रभूतम्, द्रविण धनम्, प्रदाय दत्त्वा, मुदा हर्षेण, तेषा तापसानाम्, पुण्यैकलभ्या सुकृतैकप्राप्याम्, मोक्षपदवीमपवर्गमार्गम्, उपदिदेश

गोविन्दक्षितिपालकस्य तनुजा सल्लक्षणा लक्ष्मणा
कान्त्या काञ्चनवल्लरीसहचरी वृत्ताब्जकोशस्तनीम् ।
राकाशीतकरानना रतिपतेश्चापायमानभ्रुव
लग्ने सद्गुणगुम्भिते क्षितिपतिर्जग्राह पाणौ मुदा ॥ १४० ॥

तदानीं सरभसमितस्तत प्रधावितस्य परिजनस्य करधृतवेत्रलतापरस्परघट्टनजनितशब्दमेदुरेण विशृङ्खलमन्त्रविद्वचनारावविजृम्भितेन सभास्तारजनकृताशीर्वादविस्तृतेन घूर्णमानान्त पुरजनाभरणझङ्कारमनोहरेण पुरतो जननि सारणपरकञ्चुकिजनशब्दबन्धुरेण निर्दयप्रहतदुन्दुभिप्रभृतिवाद्यध्वनिनिर्भरेणानेकसहस्रकलकलबहलेनोत्सवकोलाहलेन त्रिभुवनमपूर्यत ।

जयश्रिया साकममन्दकीर्ति विन्दन्कुरूणा पतिरेष धीर ।
राज्यश्रिया सार्धमिमा कुमारीं लब्ध्वा प्रजाना वलय जुगोप ॥ १४१ ॥

*इति महाकविहरिचन्द्रविरचिते श्रीमति जीवन्धरचम्पूकाव्ये*
*लक्ष्मणालम्भो नाम दशमो लम्भ ॥*

---

समुपदिष्टवान् । अन्यैरितरै समानीता सम्प्रापिता, पद्मादिदेवी, समागत्य प्राप्य, रहसि विजने, समालिङ्ग्य समाश्लिष्य, परिचुम्ब्य च परिचुम्बन विधाय च, सकलमनोव्यथाना निखिलमानसिककष्टानाम्, अवसानभूमिमन्तस्थानम्, हर्षातिभूमिं प्रमोदातिस्थानम्, प्रापयामास ।

गोविन्देति—क्षितिपतिर्जीवन्धर, सन्ति समीचीनानि लक्षणानि चिह्नानि यस्यास्ताम्, कान्त्या रुच्या, काञ्चनवल्लरीसहचरी सुवर्णलतासदृशीम्, वृत्ताब्जकोशस्तनी वर्तुलकमलकुड्मलकुचाम्, राकाशीतकर इव पूर्णिमाचन्द्र इवानन मुख यस्यास्ताम्, रतिपतेर्मदनस्य, चापायमानौ कोदण्डायमानौ भ्रुवौ यस्यास्ताम्, गोविन्दक्षितिपालकस्य विदेहधरापते, तनुजा दुहितरम्, लक्ष्मणामेतन्नामधेयाम्, सद्गुणगुम्भिते उत्तमगुणसहिते लग्ने मुहूर्ते, मुदानन्देन, पाणौ हस्ते, जग्राह स्वीचकार । तामुदवोढेति भाव ॥१४०॥

तदानीमिति—तदानी लक्ष्मणापरिणयनकाले, सरभस सवेग यथा स्यात्तथा, प्रधावितस्य प्रगतस्य, परिजनस्य परिकरलोकस्य, करेषु धृता करधृता हस्तारोपिता, ताश्च ता वेत्रलताश्च तासा परस्परघट्टनेन मिथोघातेन जनित समुत्पादितो य शब्दस्तेन मेदुरस्तेन, विशृङ्खला स्वच्छन्दा ये मन्त्रविदा मन्त्रज्ञाना वचनारावा वचनशब्दास्तैर्विजृम्भितो वृद्धिगतस्तेन, सभास्तारजनै सभास्थितपुरुषै कृतो विहितो य आशीर्वाद सम्यगाशसाशब्दस्तेन विस्तृतो विततस्तेन, घूर्णमाना इतस्ततो भ्राम्यन्तो येऽन्त पुरजनास्तेषामाभरणानि तेषा झङ्कारोऽव्यक्तशब्दविशेषस्तेन मनोहरो मनोज्ञस्तेन, पुरतोऽग्रे, जननि सारणपरा लोकोत्सारणपरा ये कञ्चुकिजनशब्दा अन्त पुरप्रतीहारीशब्दास्तैर्बन्धुरो मनोहरस्तेन, निर्दय यथा स्यात्तथा प्रहतानि यानि दुन्दुभिप्रभृतिवाद्यानि दुन्दुभिप्रमुखवादित्राणि तेषा ध्वनिना शब्देन निर्भर पूर्णस्तेन, अनेकसहस्रस्य भूयसा जनानामिति यावत्, य कलकलोऽव्यक्तशब्दस्तेन, बहल प्रचुरस्तेन उत्सवकोलाहलेन-उल्लासकलकलशब्देन, त्रिभुवन त्रिलोकी, अपूर्यत पूर्णा बभूव ।

जयश्रियेति—जयश्रिया साक विजयलक्ष्म्या सार्धम्, अमन्दकीर्ति विशालयश, विन्दन् लभमान धीरो गभीर, एषोऽयम्, कुरूणा पतिर्जीवन्धर, राज्यश्रिया साम्राज्यलक्ष्म्या, सार्धं सह, इमाम्, कुमारी लक्ष्मणाम्, लब्ध्वा प्राप्य, प्रजाना लोकानाम्, वलय समूहम्, जुगोप रक्षति स्म ॥१४१॥

इति महाकविहरिचद्रविरचिते श्रीमति 'कौमुदी' व्याख्याधरे, जीवन्धरचम्पूकाव्ये लक्ष्मणालम्भो नाम दशमो लम्भ ।

---

# एकादशो लम्भः

दोष्णा कुन्दसमानकीर्तिविसरैरामोदिनी मेदिनीं
वाचा सत्यविलासमुत्तममधुस्यन्दप्रतीपश्रिया ।
चित्तेन चितिपालनीतिपदवीं नेत्रेण सर्वप्रजा-
योगक्षेमकला बभार नृपतिर्हस्तेन दानोदकम् ॥ १ ॥

तस्मिन्नरपतौ तत्र प्रजापालनतत्परे । राज वती च भूरासीद्रत्नगर्भा वसुन्धरा ॥ २ ॥

तस्य च यशोमण्डल शिशिरमपि शात्रवजनसतापकारणम्, स्थिरमप्यनवरतभ्रमणशीलम्, निर्मलमपि मलिनीकृताराातिमुखकमलम्, धवलमपि प्रजानुरागपरिमेदुरम्, निन्दितराजमण्डलमप्यानन्दितमहाराजमण्डलमुदजृम्भत ।

तस्य च प्रतापाङ्कुरा दिक्सुन्दरीणा केशपाशेषु कल्हारशङ्काम, कर्णदेशेषु किसलयस्तोमविभ्रमम, घनकुचकुम्भेषु काश्मीरशोभाम, कटिप्रदेशेषु कौसुम्भपटसभावनाम्, कराम्बुजेषु कुरुविन्दमयकङ्कणविलासम , पादतलेषु लाक्षारसविच्छित्ति सपादयामासु ।

वह्निप्रतप्तद्रुतहेमवर्णै प्रतापलेशै कुरुकुञ्जरस्य ।
लिप्तेषु सर्वेष्वपि भूमिभृत्सु मेरुभ्रमोऽभूत्सुरसुन्दरीणाम् ॥ ३ ॥

दोष्णेति—नृपतिर्जीवन्धर , दोष्णा बाहुना, कुन्दसमानकीर्तिविसरैर्माध्यकुसुमकल्पयशोविस्तारै , आमोदिनी प्रहर्षिणीम्, मेदिनी पृथिवीम्, उत्तममधुस्यन्दस्य श्रेष्ठमाक्षिकप्रवाहस्य प्रतीपा प्रतिपक्षिणी श्री शोभा यस्यास्तथा, वाचा वचनेन, सत्यविलास तथ्यशोभाम्, चित्तेन चेतसा, क्षितिपालाना राज्ञा नीतिपदवी नयपद्धतिस्ताम्, नेत्रेण नयनेन, सर्वप्रजाना निखिलजनाना योगक्षेमयोरनजितप्राप्तिप्राप्तसरक्षणयो कला वैदग्धी ताम्, हस्तेन पाणिना, दानाय त्यागायोदक जलमिति दानोदकम्, बभार दधार ॥ १ ॥

तस्मिन्नरपताविति—तत्र हेमाङ्गदमण्डले, तस्मिन् पूर्वोक्ते, नरपतो जीवन्धरमहाराजे, प्रजापालनतत्परे जनावनदक्षे, सति, भू पृथिवी, राजन्वती प्रशस्तराजयुक्ता, रत्नानि मणयो गर्भे मध्ये यस्यास्तथाभूता रत्नगर्भा, वसुन्धरा च धनधारिणी च अभूत् आसीत् ॥ २ ॥

तस्य चेति—तस्य च राज्ञ , यशोमण्डल कीतिसमूह , शिशिरमपि शीतलमपि, शात्रवजनस्य शत्रुसमूहस्य सतापकारण दाहनिमित्तम्, स्थिरमपि स्थितिशीलमपि, अनवरत निरन्तर भ्रमण सञ्चरणशील स्वभावो यस्य तत् , निर्मलमपि विमलमपि, मलिनीकृतानि कृष्णीकृतानि अरातीना शत्रूणा मुखकमलानि वदनपद्मानि येन तत् , धवलमपि शुक्लमपि, प्रजाया लोकस्यानुरागेण लौहित्येन पक्षे प्रेम्णा परिमेदुर मिलितम्, निन्दित जुगुप्सित राजमण्डल चन्द्रबिम्ब येन तथाभूतमपि , आनन्दित प्रहर्षित महाराजमण्डल पूर्णचन्द्रबिम्ब पक्षे महानृपतिसमूह येन तत् , उदजृम्भत वृद्धि प्राप । विरोधाभासोऽलङ्कार ।

तस्य च प्रतापाङ्कुरा इति—तस्य च राज्ञ प्रतापाङ्कुरास्तेज प्ररोहा , दिक्सुन्दरीणा काष्ठाकामिनीनाम्, केशपाशेषु कचसमूहेषु, कल्हारशङ्का रक्तारविन्दसदेहम्, कर्णदेशेषु श्रवणप्रदेशेषु, किसलयस्तोमस्य पल्लवसमूहस्य विभ्रम आरेका तम्, घनकुचकुम्भेषु पानपयोधरकलशेषु, काश्मीरशोभा कुङ्कुमश्रियम्, कटिप्रदेशेषु मध्यदेशेषु, कोसुम्भपटस्य कुसुम्भरक्तवस्त्रस्य सभावनामुत्प्रेक्षाम्, कराम्बुजेषु पाणिपद्मेषु, कुरुविन्दमयकङ्कणविलास पद्मरागमणिनिर्मितकटकविभ्रमम्, पादतलेषु चरणतलेषु, लाक्षारसस्य यावकरसस्य विच्छित्ति शोभाम्, सम्पादयामासुश्चक्रु ।

वह्निप्रतप्तेति—वह्निना पावकेन प्रतप्त निष्टप्तम् अतएव द्रुत स्यन्दित यद्धेम सुवर्ण तस्य वर्णमिव वर्ण स्वरूप येषा तै , कुरुकुञ्जरस्य जीवन्धरस्य, प्रतापलेशैस्तेजोऽशै , लिप्तेषु दिग्धेषु, सर्वेष्वपि निखिले-

पद्माकराञ्चितस्यास्य राजहंसस्य सन्ततम् । बहुधावननिघ्नत्वमद्भुतं च न चाद्भुतम् ॥ ४ ॥
इयं[1] सुमधुराकारा लक्ष्मणा वरलक्षणा । राजहंसस्य पत्नीति परमाद्भुतमीक्ष्यते ॥ ५ ॥

अथ खलु लक्ष्मा[2]ञ्चितोऽपि पद्माभिख्याविराजितोऽपि सुमित्रानन्दनो, विजयानन्दनोऽपि कुण्डलाञ्चितकर्णो, धृतराष्ट्रोऽपि धर्ममयो, गन्धर्वदत्ताधिकहर्षोऽपि देवदत्ताधिकहर्षो, महिषीसंभवोऽपि वृषोत्पादी विरराज ।

लक्ष्मणाञ्चितगात्रोऽपि निर्मलः कुरुचन्द्रमाः । सदा कुवलयाह्लादी पद्मानन्दीति चाद्भुतम् ॥ ६ ॥

---

त्वपि, भूमिभृत्सु पर्वतेषु, सुरसुन्दरीणां देवाङ्गनानाम्, मेरुभ्रमो हेमाद्रिसन्देहः, अभूत् । तद्गुणमूलकभ्रान्तिमानलङ्कारः ॥३॥

पद्माकराञ्चितस्येति—पद्माकरेण कमलकासारेणाञ्चितस्य शोभितस्य, अस्य जीवन्धरस्य, राजहंसस्य मरालविशेषस्य, सन्ततं सर्वदा, बहुधानेकप्रकारेण, वनस्य जलस्य निघ्नत्वमाधीनत्वं न भवतीत्यवननिघ्नत्वम्, अद्भुतमाश्चर्यंकरम्, आसीदिति शेषः, किञ्च, नाद्भुतं नाश्चर्यंकरं यतो बहुधानेकप्रकारेण वननिघ्नत्वं काननाधीनत्वं मरालविशेषस्य निसर्ग एव, अथवा बहुधावनस्य भूरिभ्रमणस्य निघ्नत्वमाधीनत्वं मरालस्य स्वभाव एव, पक्षिजातिरितस्ततः सदा धावत एव । परिहारपक्षे, पद्मया लक्ष्म्या करेण पाणिनाञ्चितस्य पूजितस्य, अस्य राजहंसस्य श्रेष्ठनृपतेर्जीवन्धरस्य, सन्ततं सर्वदा, बहुधानेकप्रकारेण, वननिघ्नत्वं काननवासतत्परत्वम्, अद्भुतमाश्चर्यंकरम्, आसीत्, किञ्च नाद्भुतं नाश्चर्यंकरम् आसीत्, यतोऽनेकप्रकारेण अवननिघ्नत्वं रक्षणैकाधीनत्वं श्रेष्ठराजस्य निसर्ग एव । श्लेषः ॥४॥

इयं सुमधुराकारेति—सुमधुरोऽतिमनोहरः आकारः संस्थानं यस्याः सा, वराणि श्रेष्ठानि लक्षणानि चिह्नानि यस्याः सा, इयमेषा लक्ष्मणा सारसस्य योषित्, राजहंसस्य मरालविशेषस्य पत्नी योषिद्, इत्येतत्, परमाद्भुतं परमाश्चर्यम्, ईक्ष्यते दृश्यते । सारसस्य योषित् राजहंसस्य कथं भवेदित्याश्चर्यम्, पक्षे लक्ष्मणा लक्ष्मणानामधेया कन्या, राजहंसस्य जीवन्धराभिधानस्य श्रेष्ठराजस्य पत्नी बभूवेति । 'हंसस्य योषिद् वरटा सारसस्य तु लक्ष्मणा' इत्यमरः ॥५॥

अथ खल्विति—खलु निश्चयेन, अथ जीवन्धरः, लक्ष्मभिर्बलभद्रचिह्नैरञ्चितोऽपि, पद्म इत्यभिख्या पद्माभिख्या रामनाम तया विराजितोऽपि समुल्लसितोऽपि, सुमित्रायाः नन्दन इति सुमित्रानन्दनो लक्ष्मण इति विरोधः पक्षे लक्ष्माञ्चितोऽपि पद्मानां कमलानामभिख्या शोभा तया विराजितोऽपि सुमित्राणि सुसुहृदः आनन्दयतीति सुमित्रानन्दनः, विजयानन्दनोऽपि विजयेनानन्दयतीति विजयानन्दनोऽपि सन् कुण्डलाञ्चितश्चासौ कर्णश्चेति कुण्डलाञ्चितकर्णः कुण्डलाभिधानकर्णाभरणभूषितराधेय इति विरोधः, महाभारतसमरे कुण्डलाञ्चितकर्णस्य पराजयः प्रसिद्धो न तु विजय इति विरोधः पक्षे विजयायाः एतन्नाममातुर्नन्दनोऽपि पुत्रोऽपि कुण्डलाञ्चिते कर्णाभरणविशेषालङ्कृते कर्णे श्रवणे यस्य तथाभूतः । धृतराष्ट्रोऽपि धर्ममयो धर्मदेवमयः दुर्योधनादिजनको धृतराष्ट्रो धर्ममयो धर्मरूपो युधिष्ठिरपितृरूपः कथं भवेदिति विरोधः, पक्षे धृतं पालितं राष्ट्रं जनपदो येन तथाभूतोऽपि सन् धर्ममयो धर्मात्मक इति । गन्धर्वेभ्यो दत्तोऽधिको हर्षो येन तथाभूतोऽपि सन्, देवेभ्यो निर्जरेभ्यो दत्तोऽधिको हर्षो येन तथाभूत इति विरोधः पक्षे गन्धर्वदत्ताया एतन्नामपत्न्या अधिकहर्षोऽपि सन् देवेन सुदर्शनयक्षेण दत्तोऽर्पितोऽधिको हर्षो यस्य तथाभूत इति । महिषीसंभवोऽपि देहिकोत्पन्नोऽपि वृषोत्पादी बलीवर्दोत्पादक इति विरोधः पक्षे सत्यन्धरमहाराजपट्टराज्ञीजनितोऽपि वृषोत्पादी धर्मोत्पादक इति, विरराज शुशुभे । श्लेषमूलकविरोधाभासालंकारः ।

लक्ष्मणाञ्चितेति—लक्ष्मणा कलङ्केनाञ्चितगात्रोऽपि शोभितशरीरोऽपि निर्मलः कलङ्कातीत इति विरोधः पक्षे लक्ष्मणा विविधसामुद्रिकशास्त्रप्रणीतचिह्नेनाञ्चितगात्रोऽपि अथवा लक्ष्मणानामकभार्यया शोभितशरीरोऽपि निर्मलो निर्दोषः, कुरुचन्द्रमा जीवन्धरेन्दुः, सदा शश्वत्, कुवलयाह्लादी नीलोत्पलानन्दनः सन्नपि पद्मानन्दी कमलानन्दनो बभूवेति अद्भुतं विस्मयस्थानम् पक्षे कुवलयं महीमण्डलमाह्लादयति

१. पयस्सुमधुराकारा ब । २ लक्ष्मणाञ्चितोपि ब ।

कदाचिदसौ धरापतिर्विविधरत्नराशिभिर्महार्घैर्महनीयकान्तिकन्दलितमानन्दकर सकल भव्यजनानामासेचनक लेखलोचनानामकृत्रिमचैत्यालयप्रतिम भगवज्जिनमन्दिर शिल्पशास्त्रपारगतै शिल्पकैर्निर्मापयामास। तत्र च भगवतो नित्योत्सवपक्षोत्सवप्रमुखोत्सवपरम्परानिरन्तरनिष्पत्तये तत्समुचितानि[1] प्रशस्तक्षेत्राणि प्रतिपादयितुकामे शात्रवजनविरामे निखिलगुणाभिरामे साक्षात्कारो जीवधरो विजयादेवीपूर्वकृतोपकारस्मरणजनितहर्षेण तत्क्षेत्राधिपत्य तापसजनाय प्रदापयामास।

नृपस्य जननी ततो निखिलशीलमालाखनिर्व्यरज्यत विशालधी कुटिलसस्रुतावेकदा।
अपश्यमिह पैतृक पदममन्दकीर्तौ सुते पराक्रमजिताहिते किमधुनेति सा जानती॥ ७॥

ततश्च सा देवी, अष्टापि स्नुषा समीपे विधाय, हे वामालका हेमायितवल्लिकायमानतनुलता सीमातीतगुणगुम्भिता मरालगामिन्य पूर्वमेव यूयमष्टमालारूपेण मम स्वप्ने दृष्टा, इदानी धृतनवमालारूपेण, इत्युत्तरोत्तर भवतीना वैभवातिशयो विजृम्भतामिति प्रतिपाद्य, प्रकृतमर्थमेव प्रकटयामास।

---

समानन्दयतीति तथाभूतोऽपि सन्, पद्मा लक्ष्मीमानन्दयति वर्धयतीति तथाभूतो बभूवेति। विरोधाभासोऽलङ्कार ॥६॥

कदाचिदसाविति—कदाचित् जातुचित्, असौ धरापतिर्नरेन्द्र, महार्घैर्महामूल्यै, विविधरत्नराशिभिर्नैकमणिमण्डलै, महनीयकान्तिकन्दलित प्रशस्तप्रभापूर्णम्, सकलभव्यजनाना निखिलभव्यप्राणिनाम्, आनन्दकर हर्षविधायकम्, लेखलोचनाना निर्जरनयनानाम्, आसेचनकमतृप्तिकरम्, अकृत्रिमचैत्यालयप्रतिम कृत्रिमेतरजिनालयसदृशम्, भगवज्जिनमन्दिर भगवज्जिनचैत्यालयम्, शिल्पशास्त्रपारगतै वास्तुशास्त्रदक्षै, शिल्पकै कुशलकार्यकरै, निर्मापयामास रचयामास। तत्र च भगवज्जिनमन्दिरे भगवतो जिनेन्द्रस्य, नित्योत्सवपक्षोत्सवौ प्रमुखौ येषु तथाभूता य उत्सवास्तेषा परम्परा तस्या निरन्तरनिष्पत्तये शश्वत्सिद्धये, तत्समुचितानि तदर्हाणि, प्रशस्तक्षेत्राणि समुत्तमस्थानानि, प्रतिपादयितुकामे प्रदातुमनसि, निखिलगुणाभिरामे सकलगुणसुन्दरे, साक्षात्कामे प्रत्यक्षपञ्चशरे, जीवन्धर इति यावत्, सति, विजयादेवी तदीयजननी, पूर्वकृतोपकारस्य स्मरणेन निध्यानेन जनित समुत्पन्नो हर्षो मोदस्तेन, तत्क्षेत्राधिपत्य तत्स्थानस्वामित्वम्, तापसजनाय तापससमूहाय, प्रदापयामास दापितवान्।

नृपस्य जननीति—ततस्तदनन्तरम्, निखिलशीलमालाया समग्रशीलपङ्क्ते खनिराकर, विशालधीविपुलमति, नृपस्य जीवन्धरस्य सा पूर्वोक्ता जननी सवित्री, विजयेति यावत्, इह भुवने अमन्दा विपुला कीर्तिर्यशो यस्य तस्मिन्, पराक्रमेण वीर्येण जिता पराभूता अहिता शत्रवो येन तस्मिन्, सुते पुत्रे जीवन्धर इति यावत्, पैतृक पितृसम्बन्धि, पद धाम, राज्यमिति यावत्, अपश्यम् अवलोकयम्, अधुना साम्प्रतम्, किम्, किं प्रयोजन मदीयमवशिष्टम्, अपितु न किमपीति, जानती सती, एकदा एकस्मिन् काले, कुटिलसस्रुतौ मायाविससारे, व्यरज्यत विरक्ता बभूव। पृथ्वीच्छन्द ॥ ७॥

ततश्च सा देवीति—ततश्च तदनन्तरञ्च, सा देवी राज्ञी, अष्टापि स्नुषा पुत्रवधू, समीपे निकटे, विधाय कृत्वा, हे वामा कुटिला सुन्दरा वा अलकाश्चूर्णकुन्तला यासा ता, हेमायिता सुवर्णायिता या वल्लिका लता तद्वदाचरन्ती तनुलता देहवल्ली यासा ता, सीमातीतैरसख्यैर्गुणैर्दयासौन्दर्यादिभिर्गुम्भिता सहिता, मरालगामिन्यो गजगामिन्य, पूर्वमेव प्रागेव, यूय भवत्य, अष्टमालारूपेण वसुस्रक्सस्थानेन, मम, स्वप्ने स्वप्नावलोकनकाले, दृष्टा अवलोकिता, इदानीमधुना, धृता श्रिता नव नवसख्याका पक्षे नवा नूतना या माला स्रजस्तासा रूपेण, दृष्टा, इतीत्थम्, उत्तरोत्तरमग्रेऽग्रे, भवतीना युष्माकम्, वैभवातिशय ऐश्वर्यप्रकर्ष,

१ प्रशस्तदेवोपकरनिवद्ययोग्यनदीमातृकदेवमातृकक्षेत्राणि च प्रतिपाद्य शात्रवजनविरामो निखिलगुणाभिराम साक्षात्कारी जीवन्धरो ब०।

अपारे घोरससारे विरक्तिर्विस्तृता हृदि । दीक्षायै त्वरयत्यद्य मा राकेन्दुनिभानना ॥ ८ ॥

यूय खलु कुरुवशलतामुक्ताफलायमानान्पुत्रानुत्पाद्य सन्तत कान्तेन साक सौख्यमनुभूय वयोऽन्ते दीक्षामुपागन्तुमर्हथेति ।

श्वश्रूगिरमिमा श्रुत्वा शोकविह्वलमानसा । देव्यस्तस्या पुरस्तस्थुर्नमिताननपङ्कजा ॥ ९ ॥

ततश्च देवी विजया कुमार समीपमानाय्य धराधिराजम् ।
कादम्बिनी हसमिवारभट्या वैराग्यवाचा विधुरीचकार ॥ १० ॥

तदनु वैराग्यपदवीमनुगच्छन्त्या सुनन्दया सह महादेवी महीनाथ कृच्छ्रायमाण कृच्छ्रेणानुज्ञाप्य यथाविधि श्रमणीवर्याया पद्मार्याया सकाशेऽदीक्षिष्ट । श्रमणीनामग्रगण्या पद्मार्या विजयासुनन्दाभ्या विश्राणितश्रमणीपदा नभसो निपतिता रत्नवृष्टिरिव प्रव्रज्या न प्रतिषेध्येति महीनाथ बोधयामास ।

इति मधुरगिरा प्रबोधितोऽसौ नरपतिरानतमातृपादपद्म ।
विनयभरवशाद्विवेश धीरो निजसदन परिवारसम्परीत ॥ ११ ॥

तदनु कतिपयदिवसापगमे क्रमेण देवीनामुदराणि सरसीना जलानीव शशिबिम्बा गर्भा विविशु ।

---

विजृम्भताम् वर्धताम्, इत्येवम्, प्रतिपाद्य कथयित्वा, प्रकृत प्रस्तुतम्, अर्थं वृत्तम्, एवमनेन प्रकारेण, प्रकटयामास वर्धयामास ।

अपारे घोरससार इति—हे राकेन्दुनिभानना हे पूर्णचन्द्रसदृशवदना, अपारेऽनन्ते, घोरससारे भयकरभवे, विषयार्थे सप्तमी, हृदि मानसे, विस्तृता वितता, विरक्तिर्वैराग्यम्, अद्य साम्प्रतम्, माम्, दीक्षायै प्रव्रज्यायै, त्वरयति प्रेरयति ॥ ८ ॥

यूय खल्विति—यूय भवत्य, खलु निश्चयेन, कुरुवशलताया कुरुवशवल्लर्या मुक्ताफलानीवाचरन्तीति तथाभूतान्, पुत्रान् सुतान्, उत्पाद्य समुत्पन्नान् कृत्वा, सन्तत निरन्तरम्, कान्तेन पत्या, साक सार्धम्, सौख्य गार्हस्थ्यसुखम्, अनुभूय समुपभुज्य, वयोऽन्ते दशान्ते, दीक्षा प्रव्रज्याम्, उपागन्तु प्राप्तुम्, अर्हथ इति योग्या स्थेति ।

श्वश्रूगिरमिति—इमा पूर्वोक्ताम्, श्वश्रूगिर धवसवित्रीभारतीम्, श्रुत्वा निशम्य, शोकेन वियोगवार्ताश्रवणजन्यविषादेन विह्वल दु खीभूत मानस चेतो यासा ता, देव्यो गन्धर्वदत्तादय, नमितान्याननप्राणि आननपङ्कजानि मुखारविन्दानि यासा ता, तथाभूता सत्य, पुरत पुरस्तात्, तस्थुस्तिष्ठन्ति स्म ॥ ९ ॥

ततश्च देवीति—ततश्च तदनु च, विजया देवी, धराधिराज पृथिवीपतिम्, कुमार जीवन्धरम्, समीपमभ्यर्णम्, आनाय्य प्रापय्य, कादम्बिनी मेघमाला, आरभट्या घोरगर्जितेन, हसमिव मरालमिव, वैराग्यवाचा प्रव्रज्यागिरा, विधुरीचकार दु खीचकार ॥ १० ॥

तदन्विति—तदनु तदनन्तरम्, वैराग्यपदवी विरक्तिमार्गम्, अनुगच्छन्त्यानुयान्त्या, सुनन्दया गन्धोत्कटपत्न्या, सह सार्धम्, महादेवी विजया, कृच्छ्रायमाण दु खीभवन्तम्, महीनाथ जीवन्धरम्, कृच्छ्रेण कष्टेन, अनुज्ञाप्य सम्बोध्य, यथाविधि विधिपूर्वकम्, श्रमणीवर्याया साध्वीश्रेष्ठाया, पद्माया पद्माभिधानाया आर्यिकाया, सकाशे निकटे, अदीक्षिष्ट दीक्षा जग्राह । विजयासुनन्दाभ्या जीवकजननीभ्याम्, विश्राणित श्रमणीपद प्रदत्तमार्यिकापद यया सा, पद्मार्या, नभसो गगनात्, निपतिता वृष्टा, रत्नवृष्टिरिव मणिवृष्टिरिव, प्रव्रज्या दीक्षा, न प्रतिषेध्या न निषेधनीया, इतीत्थम्, महीनाथ जीवकम्, बोधयामास सम्बोधितवती ।

इति मधुरगिरेति—इति पूर्वोक्तप्रकारेण, मधुरगिरा मिष्टवाण्या, प्रबोधित समाश्वासित विनयभरवशात् विनयातिशयेन, आनतौ वन्दितौ मातृपादपद्मौ जननीचरणकमले येन तथाभूत, धीरो गभीर, नरपती राजा, परिवारसम्परीत सन् कुटुम्बजनपरिवृत सन्, निजसदन स्वकीयभवनम्, विवेश प्रविष्टवान् ॥ ११ ॥

तदन्विति—तदनु तदनन्तरम्, कतिपयदिवसापगमे किञ्चिद्दिनव्यतिगमनानन्तरम्, क्रमेणः क्रमश,

गर्भच्छलेन सक्रान्त प्रतिबिम्ब धरापते । ऊहुर्गन्धर्वदत्ताद्या सनिभा दर्पणश्रिया ॥ १२ ॥

देवीजनस्य विकचोत्पलशोभि वक्त्र कोकद्वयस्य सदृश कुचयुग्ममासीत् ।
आनीलचूचुकतल विलसत्तमालपत्राङ्कितानवहेमघटप्रतीपम्[1] ॥ १३ ॥

मणिकाञ्चीकलापेन दूयमानो दिने दिने । महिषीणा मध्यभाग कृशिमान जहौ तदा ॥ १४ ॥

तदनु प्राप्ते प्रसवसमये शुभदिवसे सावधानैर्नाडिपरिज्ञानसाधनस्वाधीनचित्तैर्गणकैर्गृहीते लग्ने देवीतति कादम्बिनीवेरमदा पुत्रानसूत । तत प्रहर्षविस्तारितलोचन पृथ्वीकमन पुत्रान्दृष्ट्वा शुभदिवसे कलितमहोत्सवस्तेषां गन्धर्वदत्ताप्रभृतिदेवीपुत्राणा सत्यधर-सुदर्शन-धरणि - गन्धोत्कट-विजय - दत्त - भरत - गोविन्दनामधेयानि प्रकटीचकार ।

एव सौख्येन वसत पाकारिसदृशश्रिय । धराधिपस्य धीरस्य त्रिशद्वर्षाण्ययासिषु ॥ १५ ॥

ख्यातौ श्रीभरताधिराजसदृशो नीतौ च रामप्रभो-
स्तुल्य सपदि पाकशासनसम पृथ्वीपति कौरव ।
धर्मे धर्मतनूभवेन तुलितस्तुल्योऽर्जुनेनाहवे
सोऽय भाग्यनिधि शशास वसुधा धृत्वा चिरं बाहुना ॥ १६ ॥

---

देवीना गन्धर्वदत्तादीनाम्, उदराणि जठराणि, कर्माणि, सरसीना कासाराणाम्, जलानि सलिलानि, शशिबिम्बा इव चन्द्रबिम्बानीव, गर्भा दौहृदानि, विविशु प्रविष्टा ।

गर्भच्छलेनेति—दर्पणश्रिया मुकुरलक्ष्म्या, सनिभा सदृश्य, गन्धर्वदत्ताद्या, गर्भच्छलेन भ्रूणव्याजेन, सक्रान्त प्रतिफलितम्, धरापते राज्ञ, प्रतिबिम्ब प्रतिमानम्, ऊहुर्धृतवत्य ॥१२॥

देवीजनस्येति—देवीजनस्य राज्ञीसमूहस्य वक्त्र वदनम्, विकचोत्पलशोभि प्रस्फुटारविन्दमिव शोभमानम्, कोकद्वयस्य चक्रवाकयुगलस्य, सदृश सन्निभम्, आनीलचूचुकतल श्यामाग्रप्रदेशम्, कुचयुग्म-स्तनयुगलम्, विलसत्तमालपत्रेण शोभमानतापिच्छच्छदेनाङ्कितो विराजितो योऽग्रनवहेमघट पुरोवर्तिनूतन-काञ्चनकलशस्तस्य प्रतीप सदृशम्, आसीद् बभूव । उपमा । वसन्ततिलकावृत्तम् ॥ १३ ॥

मणिकाञ्चीति—मणिकाञ्चीकलापेन रत्नरशनादाम्ना, दिने दिने वीप्साया द्वित्वम्, दूयमानो दु खी भवन्, महिषीणा राज्ञीनाम्, मध्यभाग कटिप्रदेश, तदा तस्मिन् काले, कृशिमान कृशत्व क्षीणतामिति यावत् । जहौ तत्याज । 'ओहाक् त्यागे' इत्यस्य लिटि रूपम् ॥१४॥

तदनु प्राप्त इति—तदनु तदनन्तरम्, प्रसवसमये प्रसूतिकाले, प्राप्ते समागते सति, शुभदिवसे श्रेष्ठवासरे, सावधानैरप्रमत्तै नाडीपरिज्ञानस्य घटिकाज्ञानस्य साधनेषु मन्त्रविशेषेषु स्वाधीन निजायत्त चित्त येषा तै, गणकैर्देवज्ञै, गृहीते समात्ते विदित इति यावत्, लग्ने मुहूर्ते, देवीततिर्महिषीसमूह, कादम्बिनी मेघमाला, इरमदानिव मेघज्योतीषीव, पुत्रान् सुतान्, असूत समुत्पादयामास । ततस्तदनन्तरम्, प्रहर्षेण प्रकृष्टप्रमोदेन विस्तारिते दीर्घे लोचने नयने यस्य स, पृथ्वीकमनो महीपतिर्जीवन्धर इति यावत्, पुत्रान् सुतान्, दृष्ट्वा विलोक्य, शुभदिवसे श्रेष्ठदिने, कलितो महोत्सवो येन स, तथाभूत सन्, गन्धर्वदत्ताप्रभृति देवीपुत्राणा खेचरसुतादिमहिषीसूनूनाम्, सत्यन्धर-सुदर्शन-धरणि गन्धोत्कट-विजय दत्त-भरत गोविन्दनाम-धेयानि, प्रकटीचकार प्रकटयामास ।

एव सौख्येनेति—एवमनेन प्रकारेण, सौख्येन सुखेन, वसतो निवास कुर्वत, पाकारिसदृशी पुरन्दरतुल्या श्रीर्लक्ष्मीर्यस्य तस्य, धीरस्य धैर्यगुणोपेतस्य धराधिपस्य राज्ञ, त्रिशत् त्रिशत्सङ्ख्याकानि, वर्षाणि हायना, अयासिषुर्व्यतिजग्मु ॥१५॥

ख्याताविति—ख्यातौ यशसि श्रीभरताधिराजेन प्रजापतिप्रथमपुत्रेण सदृश समान, नीतौ नये, रामप्रभो रामचन्द्रस्य, तुल्य सदृश, सपदि सपत्तौ, पाकशासनसम शक्रसन्निभ, धर्मे धार्मिककार्ये, धर्म-तनूभवेन युधिष्ठिरेण, तुलित सदृश, आहवे समरे, अर्जुनेन कौन्तेयेन, तुल्य सदृश, भाग्यनिधि सुदैव-

---

1 प्रदीपम् ब० ।

कदाचिद्वसन्ते[1] विरहिजनदुरन्ते प्रसाधितवनान्ते वनप्रियविरुतमुखरिताशान्ते सम्प्रवृत्ते, पुष्पफलादिकमुपहारीकुर्वता वनपालेन [1]वनविहाराय विज्ञापितो वसुधापति, अष्टाभि कान्ताभि सम नगरान्निर्याय, पर्याप्तफलकुसुमपल्लवतल्लजमुपवनमासाद्य वनपालेन तत्र निवेद्यमानानेकैकश पल्लवितपुष्पितफलिततरुनिकरान्निरीक्षमाणश्चिर विजहार।

वल्गत्कुच सपदि भङ्गुरमध्यभाग स्विद्यत्कपोलमलकाकुलवक्त्रबिम्बम्।
व्यालोलकङ्कणझणत्कृति तत्र देव्य पुष्पग्रह करतलै कुतुकादकार्षु ॥ १७॥

एव चिर विस्तारितद्विविधवनक्रीडाश्रान्ताना क्रीडासमर्दविलुलितलतान्ताना व्यालोलनयनान्ताना सदोहेन सह क्वचन निपण्णस्तत्र गन्धर्वदत्ताकुचकुम्भयुगले मारमदेभमदधारायमाणा कस्तूरीधारा निपातयन्, गुणमालावक्ष स्थले सुरभिलमृगमदमेदुरमलयजरस लिम्पन्, सुरमञ्जर्या नाभिकुहरादारभ्य काश्मीरपङ्केन लता विलिखन्, पद्माया कपोलयोर्मकरिका विस्तारयन्, क्षेमश्रियो वदने मृगमदतिलक विरचयन्, लक्ष्मणाया स्तनमुकुलयुगले मकरिकापत्र विचित्रयन्, अन्यासा च यथोचित प्रसाधनानि विदधानो जीवन्धर सहर्षमवतिष्ठ।

---

भाण्डार, सोऽय प्रसिद्ध, पृथ्वीपतिर्महीपति, कौरवो जीवन्धर, बाहुना भुजेन, चिर दीर्घकालपर्यन्तम्, धृत्वा भृत्वा, शशास रक्षति स्म ॥१६॥

कदाचिद्वसन्त इति—कदाचिज्जातुचित्, विरहिजनदुरन्ते विप्रलम्भिदु खप्रदे, प्रसाधितवनान्ते समलकृतवनमध्ये, वनप्रियाणा कोकिलाना विरुतै शब्दैर्मुखरित शब्दायमान आशान्तो दिगन्तो यस्मिन् तस्मिन्, वसन्ते पुष्पतौ, सम्प्रवृत्ते सति, पुष्पफलादिक कुसुमफलप्रभृतिकम्, उपहारीकुर्वता समुपनयता, वनपालेन मालाकारेण, वनविहाराय उद्यानक्रीडायै, विज्ञापितो निवेदित, वसुधापती राजा जीवन्धर, अष्टाभि कान्ताभिर्वल्लभाभि, सम साकम्, नगरात् राजपुरीनामधेयात्, निर्याय निर्गत्य, पर्याप्ता प्रचुरा फलकुसुमपल्लवतल्लजा फलपुष्पकिसलयश्रेष्ठा यस्मिस्तत्, उपवनमुद्यानम्, आसाद्य प्राप्य, तत्रोपवने, वनपालेन वनरक्षकेण, निवेद्यमानान् सूच्यमानान्, पल्लविता किसलयिता पुष्पिता कुसुमिता फलिता, फलयुक्ताश्च ये तरुनिकरा वृक्षसमूहास्तान्, निरीक्षमाणो विलोकमान, चिर दीर्घकाल यावत्, विजहार व्यहार्षीत् विहार कृतवान् चिक्रीड वा।

वल्गत्कुचमिति—तत्रोपवने, देव्यो राज्य, सपदि झटिति, वल्गन्त सचलन्त कुचा स्तना यस्मिस्तत्, भङ्गुरो भङ्गोन्मुखो मध्यभाग कटिप्रदेशो यस्मिंस्तत्, स्विद्यन्तौ स्वेदयुक्तौ कपोलौ गण्डौ यस्मि स्तत्, अलकाकुल चूर्णकुन्तलव्याप्त वक्त्रबिम्ब मुखमण्डल यस्मिस्तत्, व्यालोलाना चञ्चलाना कङ्कणाना कटकाना झणत्कृतिरव्यक्तशब्दविशेषो यस्मिस्तत्, यथा स्यात्तथा, करतलैर्हस्ततलै, कुतुकात् कौतूहलात्, पुष्पग्रह कुसुमावचयम्, अकार्षु कृतवत्य। वसन्ततिलकावृत्तम् ॥१७॥

एव चिरमिति—एवमनेन प्रकारेण, चिर दीर्घकालपर्यन्तम्, विस्तारिता कृता द्विविधा द्विप्रकारा या वनक्रीडा काननकेलिर्जलकेलिश्च तया श्रान्ता खिन्नास्तासाम्, क्रीडासमर्देन क्रीडाविमर्देन विलुलितानि मर्दितानि लतान्तानि पुष्पाणि याभिस्तासाम्, व्यालोलाश्चपला नयनान्ता नेत्रप्रान्ता यासा तासाम्, कान्तानाम् वल्लभानाम्, सदोहेन समूहेन, सह सार्धम्, क्वचन कुत्रचित्, निषण्ण समुपविष्ट, तत्रोपवने, गन्धर्वदत्ताया प्रथमपत्न्या कुचकुम्भयो स्तनकलशयोर्युगल युग तस्मिन्, मारमदेभस्य काममत्तकरिणो मदधारायमाणा दानश्रेणीवदाचरन्तीम्, कस्तूरीधारा मृगमदप्रवाहम्, निपातयन् मोचयन्, गुणमालावक्ष स्थले, गुणमालोरस्थले सुरभिलेन सुगन्धिना मृगमदेन कस्तूर्या मेदुरो मिलितो यो मलयजरसश्चन्दनरसस्तम्, लिम्पन् उपदिहन्, सुरमञ्जर्या, नाभिकुहरात् तुन्दिगर्तात्, आरभ्य प्रारभ्य, काश्मीरपङ्केन कुङ्कुमद्रवेण, लता वल्लीम्, विलिखन् अङ्कयन्, पद्माया एतन्नामकभार्याया, कपोलयोर्गण्डयो, मकरिका मकराकृतिम्, विस्तारयन् वितता कुर्वन्, क्षेमश्रिय एतन्नाम्न्या पत्न्या, वदने मुखे, मृगमदतिलक कस्तूरीस्थासकम्,

---

१ विहाराय ब०। २ कान्ताना ब०।

वृक्षाद्वृक्षमुदारशाखमचिरादाक्रम्य भूमीरुहान्-
व्यालोलान्निदधानमाहितभयादुड्डीनपक्षिव्रजान् ।
कीशाना निचय ददर्श वसुधापालो वनाभ्यन्तरे
शश्वद्बालकगृह्यमाणजठरोद्यद्वानरीभिर्वृतम् ॥ १८ ॥

तत्रान्यसपर्कमवेक्ष्य रुष्टा स्वा वानरी कोऽपि युवा प्लवङ्ग ।
दीनस्वभावो विविधैरुपायै शान्ता विधातु न चिर शशाक ॥ १९ ॥

तदनु रोपोत्कटमर्कटीं प्रकृतिस्था कर्तुमक्षमतया बहुदीनदशामापन्न मृतमिव भूमौ पतित मायाविन शाखामृगमवलोक्य भयविह्वलाङ्गी प्लवङ्गी समीपमासाद्य तदवस्थामपाचकार ।

प्लवङ्गतरुणस्तत पनसपक्वपुष्यत्फल ददौ वनमृगीमुदे विततहर्षनद्धा तर ।
जहार वनपालक सपदि तत्फल पेशल करप्रचलयष्टितो मुदितवानरी भर्त्सयन् ॥ २० ॥
इति सदयमशेष वीक्षमाणो धराया पतिरथ विषयेषु व्याहताशाविशेप ।
अतनुत हृदि चिन्तामेवमाजानधीर कृतसुकृतविपाक काललब्ध्या समेत ॥ २१ ॥

---

विरचयन् कुर्वन्, लक्ष्मणाया एतन्नामकवल्लभाया, स्तनमुकुलयुगले कुचकुड्मलयुगे, मकरिकापत्र मकरी, दलम्, विचित्रयन् चित्रित कुर्वन्, अन्यासाञ्चेतरासाञ्च, यथोचित यथार्हम्, प्रसाधनानि अलङ्करणानि, विदधान कुर्वाण, जीवन्धर स्वामी, सहर्ष सप्रमोद यथा स्यात्तथा, अवर्तिष्ट आसीत् ।

वृक्षाद्वृक्षमिति—वसुधापालो जीवन्धर, वनाभ्यन्तरे काननमध्ये, वृक्षात् एकस्मात्तरो, उदारशाख महाशाखम्, वृक्षमितर तरुम्, अचिराच्छीघ्रम्, आक्रम्य समारुह्य, भूमिरुहान् पादपान्, व्यालोलान् चञ्चलान्, आहितभयात् समुत्पन्नभीते, उड्डीना उत्पतिता पक्षिव्रजा पतत्रिसमूहा येभ्यस्तथाभूतान्, निद-धान कुर्वाणम्, शश्वन्निरन्तरम्, बालकै शिशुभिर्गृह्यमाण जठरमुदर यासा तथाभूता उद्यन्त्यो या वानर्यो मर्कट्यस्ताभि वृत परीतम्, कीशाना वलीमुखानाम्, निचय समूहम्, ददर्श विलोकयामास । शार्दूल विक्रीडितवृत्तम् ॥१८॥

तत्रान्यसपर्केति—तत्र कीशनिचये, दीनस्वभाव कातरनिसर्ग, कोऽपि कश्चन, युवा तरुण, प्लवङ्गो वानर, अन्यस्या सपर्कस्तमितरवानरीससर्गम् 'सर्वनाम्नो वृत्तिमात्रे पुवद्भाव' इति पुवद्भाव, रुष्टा कुपिताम्, स्वा स्वकीयाम्, वानरी मर्कटीम्, विविधैर्बहुप्रकारै, उपायै साधनै, शान्ता प्रकृतिस्थाम्, विधातु-कर्तुम्, चिर दीर्घकालेनापि, न शशाक न समर्थोऽभूत् ॥ १९ ॥

तदन्विति—तदनु तदनन्तरम्, रोपोत्कटा क्रोधविकटा चासौ मर्कटी च वानरी चेति रोपोत्कटमर्कटी ताम्, प्रकृतिस्था स्वभावस्थिता शान्तामिति यावत्, कर्तु विधातुम्, अक्षमतया सामर्थ्याभावेन, बहुदीनदशा मतिदीनावस्थाम्, आपन्न प्राप्तम्, मृतमिव विगतचेतनमिव, भूमौ वसुधायाम्, पतित स्खलितम्, मायाविन मायायुक्तम्, शाखामृग वानरम्, अवलोक्य दृष्ट्वा, भयेन त्रासेन विह्वल व्यथितमङ्ग शरीर यस्यास्तथाभूता प्लवङ्गी वानरी, समीपमभ्यर्णम्, आसाद्य प्राप्य, सा चावस्था चेति तदवस्था ताम्, तद्दशाम् अपाचकार दूरीकरोति स्म ।

प्लवङ्गतरुणस्तत इति—ततस्तदनन्तरम्, विततेन विस्तृतेन हर्षेण प्रमोदेन नद्ध व्याप्तमन्तर हृदय यस्य स, प्लवङ्गतरुणो वानरयुवा, वनमृगीमुदे वानरीहर्षाय, पनसस्य क्षीरिवृक्षस्य पक्व परिणत पुष्य त्पुष्ट च यत्फल तत्, ददौ ददाति स्म । वनपालक उद्यानरक्षक, सपदि शीघ्रम्, करप्रचलयष्टितो हस्तचालितदण्डत, मुदितवानरी प्रसन्नमर्कटीम्, भर्त्सयन् तर्जयन्, सन्, पेशल मनोहरम्, तत्फल पनसफलम्, जहार हरति स्म प्रतिजग्राहेति यावत् । पृथ्वाच्छन्द ॥ २० ॥

इति सदयमशेषमिति—अथानन्तरम्, इति पूर्वोक्तप्रकारेण, अशेष समग्रमेत घटनाचक्रम्, सदय सकृप यथा स्यात्तथा, वीक्षमाणो विलोकमान विषयेषु पञ्चेन्द्रियभोगेषु, व्याहत प्रतिरुद्ध आशाविशेषस्तृष्णा-विशेषो यस्य स, आजानधीरो विचारचतुर कृतसुकृतविपाक प्राप्तपुण्योदय, काललब्ध्या वैराग्यार्हसमय

काष्ठाङ्गारायते कीशो राज्यमेतत्फलायते । मद्यते वनपालोऽय त्याज्य राज्यमिद मया ॥ २२ ॥

या राज्यलक्ष्मीर्बहुदु खसाध्या दु खेन पाल्या चपला दुरन्ता ।
नष्टापि दु खानि चिराय सूते तस्या कदा वा सुखलेशलेश ॥ २३ ॥

कल्लोलिनीना निकरैरिवाब्धि कृपीटयोनिर्बहुलेन्धनैर्वा ।
काम न सतृप्यति कामभोगै कन्दर्पवश्य पुरुष कदाचित् ॥ २४ ॥

राज्य स्नेहविहीनदीपकलिकाकल्प चल जीवित
शम्पावत्क्षणभङ्गुरा तनुरिय लोलाभ्रतुल्य वय ।
तस्मात्ससृतिसन्ततौ न हि सुख तत्रापि मूढ पुमा-
न्नादत्ते स्वहित करोति च पुनर्मोहाय कार्यं वृथा ॥ २५ ॥

विलोभ्यमानो विषयैर्वराको भङ्गुरैर्भृशम् । नारम्भदोषान्मनुते मोहेन बहुदु खदान् ॥ २६ ॥

ममेय मृद्वङ्गी मम तनय एष प्रचुरधी-
रिमे मे पूर्वार्था इति विगतबुद्धिर्नरपशु ।
अणुप्रख्ये सौख्ये विहितरुचिरारम्भवशग
प्रयाति प्रायेण क्षितिधरनिभ दु खमधिकम् ॥ २७ ॥

---

प्राप्त्या, समेतो युक्त , धराया पतिर्जीवन्धर , हृदि चेतसि, एवमित्थम्भूताम्, चिन्ता विचारसन्ततिम्, अत-नुत विस्तारयामास । मालिनीछन्द ॥ २१ ॥

काष्ठाङ्गारयत इति—कीशो वानर , काष्ठाङ्गार इवाचरतीति काष्ठाङ्गारयते, एतत् राज्यम्, फलमिवा चरतीति फलायते, अयमेष , वनपाल उद्यानपाल , अहमिवाचरतीति मद्यते, तस्मात् , इदमेतत् , राज्य साम्राज्यम्, मया जीवकेन, त्याज्य त्यक्तुमर्हम्, अस्तीति शेष । यथा वनपालेन कीशात्फलमाच्छिन्न तथा मया काष्ठाङ्गाराद्राज्यमाच्छिन्नम्, फलेन विना यथा कीशस्तप्यते राज्येन विना तथा काष्ठाङ्गारपरिजनोऽपि तप्यते तस्मात् परदु खकारणमेतद्राज्य मया त्याज्यमेवास्तीति भाव ॥२२॥

या राज्यलक्ष्मीरिति—या राज्यलक्ष्मीर्नृपतित्वश्री बहुभिर्विपुलैर्दु खै कष्टै साध्या प्राप्येति बहु-दु खसाध्या, दु खेन कष्टेन, पाल्या पालयितुमर्हा, चपला भङ्गुरा, दुरन्ता दुष्परिणामा, अस्तीति शेष , नष्टापि सती, चिराय चिरकालपर्यन्तम्, दु खानि कृच्छ्राणि, सूते समुत्पादयति, तस्या राजलक्ष्म्याम्, सुख-लेशस्य लेश इति सुखलेशलेश शर्मकणाश , कदा वा कस्या वा वेलायामपि तु न कस्यामपि वेलाया मस्तीति भाव ॥२३॥

कल्लोलिनीनामिति—कल्लोलिनीना नदीनाम्, निकरै समूहै , अब्धिरिव सागर इव, बहुलेन्धनै प्रचुरसमिद्भि , कृपीटयोनिर्वा वह्निरिव, कामभोगैर्विषयसेवनै , कन्दर्पवश्यो मदनायत्तः, पुरुषो जन , कदाचित् जातुचित् , काम यथेच्छ यथा स्यात्तथा, न सतृप्यति न सतुष्टो भवति ॥२४॥

राज्य स्नेहेति—राज्य राजवैभवम्, स्नेहविहीना तैलरहिता दीपकलिका प्रदीपज्योतिरिति स्नेह-विहीनदीपकलिका ईषदूना स्नेहविहीनदीपकलिकेति स्नेहविहीनदीपकलिकाकल्पम्, जीवितमायु , चल चञ्चलम्, इय तनु एतच्छरीरम्,शम्पावत् सौदामिनीव, वय दशा, लोलाभ्रतुल्य चञ्चलमेघसदृशम्, अस्तीति सर्वत्र योज्यम् । तस्मात् कारणात् , ससृतिसन्ततौ ससारपरम्परायाम् सुख शर्म, नहि निश्चयेन न विद्यते, तत्रापि ससृतिसन्ततौ मूढो मोहासक्त , पुमान् पुरुष , स्वहित निजकल्याणम्, आदत्ते गृह्णाति, पुनर्भूय , मोहाय विभ्रमाय, वृथा निरर्थकम्, कार्यं कृत्यम्, करोति च विदधाति च । शार्दूलविक्रीडितच्छन्द ॥२५॥

विलोभ्यमान इति—भङ्गुरैर्नश्वरै , विषयै पञ्चेन्द्रियभोगै , भृश सातिशयम्, विलोभ्यमान प्रता-र्यमाण , वराको दीनो जन , मोहेन विभ्रमेण, बहुदु खदान् प्रचुरदु खदातॄन् आरम्भदोषान् , हिंसादीनामार म्भावगुणान् , न मनुते न मन्यते ॥२६॥

ममेयमिति—मम मे, इय मृद्वङ्गी कोमलाङ्गी, मम, एष , प्रचुरधी प्रकृष्टमति , तनय , पुत्र मे,

ये मोक्षलक्ष्मीमनपायरूपा विहाय विन्दन्ति नृपाललक्ष्मीम् ।
निदाघकाले शिशिराम्बुधारा हित्वा भजन्ते मृगतृष्णिका ते ॥ २८ ॥
तस्मात्क्लेशचयाल्लब्ध्वा मानुष जन्म दुर्लभम् ।
प्रमाद स्वहिते कर्तुं न युक्त इह धीमता ॥ २९ ॥

इति मनसि चिन्तयन्कुमुदिनीकान्तो द्वादशानुप्रेक्षया तत्क्षणमक्षोभ्या विरक्ति व्यवस्थापयन्, राज्यादिक तृणाय मन्यमान, तस्माद्वनान्निर्गत्य निर्वर्त्य च भगवज्जिनेन्द्रपूजाम्, धर्मामृतप्रदाननिरस्ततन्द्राद्योगीन्द्रान्मणिमयकिरीटकोटिविन्यस्तहस्ताम्भोरुहकुड्मल कुम्भिनीपतिर्धर्मं शुश्राव ।

श्रुत्वा धर्मं वल्लभोऽय धरित्र्या धीर श्रीमान्धार्मविद्यो बभूव ।
तत्सस्कारे कोविदैर्बुद्धिमद्भि शाणोल्लीढ सन्मणिनिर्मलो हि ॥ ३० ॥
ततश्चारणयो पूर्वं पूर्वजन्मबुभुत्सया । पप्रच्छ नरपालोऽय प्रश्रयस्य वशवद ॥ ३१ ॥
नृपेण परिपृष्टोऽयमवधिस्पष्टलोचन । यथावत्कुरुवीरस्य समाचष्ट पुराभवम् ॥ ३२ ॥

---

इमे, पूर्णार्थां पूर्णसञ्चितधनानि, इतीत्थम्, विगता बुद्धिर्यस्य तथाभूत , नरपशु पुरुषाधम , अणुप्रख्ये परमाणुतुल्ये, सौख्ये विषयशर्मणि, विहिता कृता रुचिरभिलाषो येन तथाभूत , आरम्भस्य वश गच्छतीत्यारम्भवशग उद्योग कुर्वाण सन्, प्रायेण, क्षितिधरनिभ पर्वतप्रतिमम्, अधिक प्रचुरम्, दु खम् अशर्म, प्रयाति लभते ॥ २७ ॥

ये मोक्षलक्ष्मीमिति—ये जना, अनपायमविनश्वर रूप स्वभावो यस्यास्ताम्, मोक्षलक्ष्मीमपवर्गश्रियम्, विहाय त्यक्त्वा, नृपाललक्ष्मीं राजविभूतिम्, विन्दन्ति लभन्ते, ते निदाघकाले ग्रीष्मर्तौ शिशिराम्बुधारा शीतलसलिलधाराम्, हित्वा त्यक्त्वा, मृगतृष्णिका मृगमरीचिकाम्, भजन्ते सेवन्ते । निदर्शनालङ्कार ॥ २८ ॥

तस्मादिति—तस्मात्कारणात्, क्लेशचयात् दु खराशे, दुर्लभ दुष्प्रापम्, मानुष मानुष्यकम्, जन्म भवम्, लब्ध्वा प्राप्य, धीमता बुद्धिमता, इह लोके, स्वहिते निजश्रेयसि, प्रमादोऽनवधानता, कर्तुं विधातुम्, न युक्तो नोचित ॥ २९ ॥

इति मनसीति—इत्येवम्, मनसि चेतसि, चिन्तयन् विचारयन्, कुरुकुमुदिनीकान्तो जीवन्धर, द्वादशानुप्रेक्षया अनित्यत्वादिभावनया, तत्क्षण तत्कालम्, अक्षोभ्यामचञ्चलाम्, विरक्ति वैराग्यम्, व्यवस्थापयन् स्थिरा कुर्वन्, राज्यादिक साम्राज्यप्रभृतिकम्, तृणाय मन्यमान तुच्छ जानन् 'मन्यकर्मण्यनादरे' इति चतुर्थी, तस्मात्पूर्वोक्तात्, वनात् काननात्, निर्गत्य निष्क्रम्य, भगवज्जिनेन्द्रपूजा भगवदर्हत्सपर्याम्, निर्वर्त्य च कृत्वा च, धर्मामृतप्रदाने धर्मपीयूषवितरणे निरस्ता दूरीभूता तन्द्रालसता यस्य तस्मात्, योगीन्द्रात् मुनिराजात्, मणिमयकिरीटकोट्या रत्नमयमौल्यग्रभागे विन्यस्तौ विक्षिप्तौ हस्ताम्भोरुहकुड्मलौ पाणिपद्मकोशौ यस्य तथाभूत, कुम्भिनीपतिर्नृपति, धर्मं वृषोपदेशम्, शुश्राव शृणोति स्म ।

श्रुत्वा धर्ममिति—धीरो गभीर, श्रीमान् लक्ष्मीमान्, अयमेष, धरित्र्या पृथिव्या, वल्लभ स्वामी, अय जीवन्धर, धर्मं योगीन्द्रकृतवृषोपदेशम्, श्रुत्वा निशम्य, धर्मविद्या वेदेति धार्मविद्य, बभूव, आसीत्, तत्सस्कारे मणिसस्कारे, कोविदैर्विद्वद्भि, बुद्धिमद्भिर्धीमद्भि, शाणोल्लीढो निकषोद्घृष्ट, सन्मणिरुत्तमरत्नम्, हि निश्चयेन, निर्मलो विमलो भवति । यथा शाणोल्लेखनेन सन्मणिविमलो भवति तथासौ धर्मोपदेशमाकर्ण्य धार्मविद्यो विमलाभिप्रायश्च बभूवेति भाव ॥ ३० ॥

ततश्चारणयोरिति—ततस्तदनन्तरम्, प्रश्रयस्य विनयस्य, वशवदोऽनुकूलभाषी, अय नरपालो राजा, पूर्वजन्मबुभुत्सया बोद्धुमिच्छा बुभुत्सा पूर्वजन्मन प्राग्भवस्य बुभुत्सा जिज्ञासा तया, चारणयोश्चारणर्द्धिसम्पन्नयोर्मुनिराजयो, पूर्वं ज्येष्ठम्, पप्रच्छ पृच्छति स्म ॥३१॥

नृपेणेति—नृपेण राज्ञा, परिपृष्टोऽनुयुक्त अवधिरेव स्पष्टलोचन यस्य सोऽवधिज्ञानस्पष्टनयन, अय ज्येष्ठमुनीन्द्र, कुरुवीरस्य स्वामिन, पुराभव पूर्वजन्म, यथावत् यथाविधि, समाचष्ट जगाद ॥३२॥

अस्ति निखिलभुवनतलललामभूत धानकीखण्डमण्डनायमानमतिविशालतया द्वितीयपृथिवी-शङ्कासमागतेन पारावारेणेवातिगम्भीरेण परिघावलयेन परीतम्, विजयार्धगिरिशिखरशङ्कावहैर-भ्रङ्कषैरनवरततन्तन्यमानमहोत्सवदिदृक्षासमागतवैमानिकजनविमानैरिव सुधाधवलै सौधै परिष्कृतम्, समुत्तुङ्गहर्म्यतलसगतनितम्बिनीजन[1]तरङ्गितसगीतमङ्गलरवाकृष्यमाणाधोमुखहरिणाङ्कहरिणम्, कामिनीजनमणिभूषणप्रभानिरस्ततम सङ्घातव्युत्पत्तिशून्यपौरलोकतया विघटितचक्रवाकयुगल व्यर्थीकृतप्रदीपम्, भूमितिलक नाम नगरम्।

तत्राभवत्पवनवेग इति प्रतीतो राजा विराजितगुणो विलसत्प्रताप ।
कीर्त्या पयोजलधिफेननिकाशकान्त्या व्यालिप्तविस्तृतसमस्तदिशावकाश ॥ ३३ ॥

सती जयवती नाम रतिगर्वविमोचना। कान्ताभवन्नृपालस्य कर्णान्तायतलोचना ॥ ३४ ॥

यशोधर इतीरितो नरपते कुमारो भवान्बभूव जितमन्मथ स्ववपुषा घनश्रीपुषा।
तवाष्ट सुदृशो बभु कमलजेन निष्पादिता गिरिद्वयधुरा स्थिरा इव मनोहरा विद्युत ॥ ३५ ॥

कदाचिद्भवान्यौवनपरिपुष्टाभि कान्ताभि करिणीभिरिव करीन्द्र सहर्षमुपवनविहाराय

---

अस्तीति—भूमितिलकमेतन्नाम नगरम्, अस्तीति सम्बन्ध । कथम्भूत तदिति निगद्यते—निखिल-भुवनतलस्य कृत्स्नभूलोकस्य ललामभूतमाभरणोपमानम्, धातकीषण्डस्य द्वितीयद्वीपस्य मण्डनायमान भूषणाय अतिविशालतया विपुलतरत्वेन, द्वितीयपृथिवीशङ्कासमागतेन द्वितीयवसुधारेकाप्राप्तेन, पारावारेणेव सागरेणेव, अतिगम्भीरेण अत्यगाधेन, परिखावलयेन खेयमण्डलेन 'खेय ग्रात तु परिखा' इत्यमर, परीत व्याप्तम्, विजयार्धगिरिशिखरस्य रजताद्रिश्रृङ्गस्य शङ्कावहै सशयधारकै, अभ्रङ्कषैर्घनाघनै, अनवरत निरन्तर तन्तन्यमानाना विस्तार्यमाणाना महोत्सवाना महाक्षणानाम् दिदृक्षया द्रष्टुमिच्छया समागतानि सम्प्राप्तानि यानि वैमानिकजनविमानानि देवसमूहव्योमयानानि तैरिव, सुधाधवलैश्चूर्णवलक्षै, सौधै भवनै परिष्कृत शोभितम्, समुत्तुङ्गेषु सून्नतेषु हर्म्यतलेषु धनिकावासतलेषु, सगता सम्मिलिता ये नितम्बिनीजना स्त्रीसमूहा-स्तैस्तरङ्गित प्राप्ततरङ्गक यत्सगीतमङ्गल गायनकल्याण तस्य रवेण शब्देन आकृष्यमाणोऽवनीयमानोऽधोमुखो हरिणाङ्कस्य चन्द्रस्य हरिणो मृगो यस्मिंस्तत्, कामिनीजनस्य स्त्रीसमूहस्य मणिभूषणप्रभाभि रत्नालकार-मरीचिभिर्निरस्तो दूरीकृतो यत्तमस्सङ्घातस्तिमिरसमूहस्तेन व्युत्पत्तिशून्या नियमहीना पौरलोका नागरिकनरा यस्मिंस्तस्य भावस्तत्ता तया, अविघटितचक्रवाकयुगल अविरहितकोकयुगम्, व्यर्थीकृता मोघीकृता प्रदीपा यस्मिंस्तत्, भूमितिलकम् एतन्नामधेयम्, एतन्नाम नगर पुरम्, अस्ति विद्यते ।

तत्राभवदिति—तत्र भूमितिलके नगरे, पवनवेग इति प्रतीत प्रसिद्ध विराजिता गुणा यस्य स, विलसन् प्रतापो यस्य स, पयोधिजलफेननिकाशा सागरसलिलडिण्डीरसदृशी कान्तिर्दीप्तिर्यस्यास्तया कीर्त्या यशसा, व्यालिप्ता व्यादिग्धा विस्तृता वितता समस्ता निखिला दिशावकाशा काष्ठान्तरालानि येन तथाभूत, राजा शासक, अभवत् आसीत् ॥३३॥

सतीति—सती पतिव्रता, रतिगर्वविमोचना कामकामिनीमदलोचना, कर्णान्तायते लोचने यस्या सा श्रवणान्तायतनयना, जयवती तदभिधाना, कान्ता वल्लभा, नृपालस्य पवनवेगाभिधानराजस्य, अभवदासीत् ॥३४॥

यशोधर इति—भवान् त्वम्, नरपते राजन् घनश्रीपुषा निविडलक्ष्मीपोषकेन, स्ववपुषा स्वकीय-देहेन, जितो मन्मथ कामो येन स, यशोधर इतीरित प्रसिद्ध, कुमार पुत्र, बभूव अजायत, तव भवत, अष्ट अष्टसख्याका, कमलजेन ब्रह्मणा, निष्पादिता रचिता, गिरिद्वयधुरास्तनयुगलरूपपर्वतद्वयभारेण, स्थिरा विद्यमाना, मनोहरा रमणीया, विद्युत इव तडित इव, सुदृश सुलोचना, बभु शुशुभिरे पृथिवीच्छन्द ॥३५॥

कदाचिदिति—कदाचिज्जातुचित्, भवान् त्वम्, यौवनपरिपुष्टाभि, कान्ताभि कामिनीभि,

---

[1] जनातरङ्गित ब० ।

चलित, पुरत परिस्फुरन्त पद्माकरमागत्य, तत्र कान्ताजनगतिनिरीक्षणलज्जितेष्विव मञ्जुलमञ्जरीरवानुकारिविरावमुखरितारामेषु क्षणादुड्डीनेषु राजहंसेषु, निरवशेषमसञ्जातपक्षतया गगनोद्गमनायासमर्थम्, विकचवारिजे सत्रास विलुठन्तम्, पद्मिनीमुखकमलचलाचलनासामुक्ताफलायमानम्, वनदेवताविकचकुसुमकन्दुकशङ्काकरम्, अतिपेशल राजहंसशावक केनचिदनुचरेण भवनमानाय्य, कनकशलाकाकलितपञ्जरे निवेश्य, मधुरक्षीरोदनाद्युपचारेण निरवद्य विवर्धयामास।

कदाचित्कान्ताना कुचकलशसीम्नि प्रियतमो
भवान्बाल हस नरवर निधायैवमवदत्।
अये त्व पद्माना विरहमनुभोक्तु न हि पटु-
र्यतस्तद्वक्षोजाम्बुजमुकुलयुग्मेऽद्य विहर ॥ ३६ ॥

एव मरालपोतमरालकुन्तलाभि कान्ताभि सह सन्तत क्रीडयति भवति सहर्षमास्थिते, धर्मविदामग्रणीस्ते पिता हसार्भकबन्धनोदन्तमाकर्ण्य कुपितस्त्वामाहूय बहुधा धर्मपरिपाटी प्रकटयामास। तदनु कर्णामृतायमानधर्मबोधनविजृम्भितनिर्वेद पित्रा निवारितोऽपि भवान्वैराग्यसमासादितजिनदीक्षादुश्चरतपश्चरणदक्ष, कान्ताभिरष्टाभि साक लोकोत्तर तप प्रकारमासाद्य,

---

करिणीभिर्हस्तिनीभि सह, करीन्द्र इव गजेन्द्र इव, सहर्ष सानन्द यथा स्यात्तथा, उपवनविहाराय उद्यानक्रीडायै, चलित प्रस्थित, पुरतोऽग्रे, परिस्फुरन्त शोभमानम्, पद्माकर तटाकम्, आगत्य समासाद्य, तत्र पद्माकरे, कान्ताजनस्य जायासमूहस्य गतिनिरीक्षणेन गत्यवलोकनेन लज्जितेष्विव व्रीडितेष्विव, मञ्जुलो मनोहरो यो मञ्जीररवो नूपुरशब्दस्तस्यानुकारिणा विडम्बकेन विरावेण शब्देन मुखरितो वाचालित आरामो यैस्तेषु, राजहसेषु मरालविशेषेषु, क्षणादल्पेनैव कालेन, उड्डीनेषु समुत्पतितेषु सत्सु, निरवशेष सम्पूर्ण यथा स्यात्तथा, असजातपक्षतया—अनुद्भूतगरुत्तया, गगनोद्गमनाय अम्बरोत्पतनाय, असमर्थम् अशक्तम्, विकचवारिजे स्फुट कमले, सत्रास सभय यथा स्यात्तथा, विलुण्ठत लुण्ठन कुर्वन्तम्, पद्मिन्या कमलिन्या मुखकमले वक्त्रवारिजे चलाचल चञ्चल यन्नासामुक्ताफल घ्राणमौक्तिक तद्वदाचरत्, पद्माकरवास्तव्या तटाकवासिनी या पद्मा लक्ष्मीस्तस्या वदनसरोजान्मुखारविन्दात् विगलत् पतत् यन्मन्दहासखण्ड स्मितशकल तद्वत्सभाव्यमान समुत्प्रेक्ष्यमाणम्, वनदेवताया काननदेव्या विकचकुसुमकन्दुक प्रस्फुटितपुष्पगेन्दुक तस्य शङ्काकर सशयदायकम्, अतिपेशलमत्यन्तमनोहरम्, राजहसशावक मरालबालकम्, केनचित् केनापि, अनुचरेण सेवकेन, भवन राजमन्दिरम्, आनाय्य प्रापय्य, कनकशलाकाभि सुवर्णदण्डिकाभि कलितो निमितो य पञ्जर शलाकागृह तस्मिन्, निवेश्य स्थापयित्वा, मधुरक्षीरोदनाद्युपचारेण मिष्टदुग्धभक्तप्रभृत्युपचारेण, निरवद्य निर्दोष यथा स्यात्तथा, विवर्धयामास पालयामास।

कदाचित्कान्तानामिति—हे नरवर हे पुरुषोत्तम, प्रियतमोऽतिशयेन वल्लभ, भवास्त्वम्, बाल हस मरालशिशुम्, कदाचिज्जातुचित्, कान्ताना ललनानाम्, कुचकलशसीम्नि वक्षोजकुम्भसीमायाम्, निधाय निक्षिप्य, एवमनेन प्रकारेण अवदत् जगाद, हि निश्चयेन, अये हे मरालबाल! त्व पद्माना कमलानाम्, विरह विप्रलम्भम्, अनुभोक्तुमनुभवितुम्, न पटुर्न समर्थोऽसि यत कारणात्, तत् तस्मात् कारणात्, अद्य साम्प्रतम्, वक्षोजाम्बुजमुकुलयुग्मे स्तनारविन्दकुड्मलयुगले, विहर विहार कुरु। शिखरिणीच्छन्द ॥ ३६ ॥

एवमिति—एवमनेन प्रकारेण, मरालपोत हसशिशुम्, मरालकुन्तलाभि, कुटिलकेशाभि कान्ताभि, पत्नीभि, सह साकम्, सन्तत शश्वत्, क्रीडयति क्रीडा कारयति, भवति त्वयि, सहर्ष सप्रमोद यथा स्यात्तथा, आस्थिते विद्यमाने सति, धर्मविदा धर्मज्ञानाम्, अग्रणीरग्रेसर, ते तव, पिता जनक, हसार्भकस्य मरालबालकस्य बन्धनोदन्त बन्धनवृत्तान्तम्, आकर्ण्य निशम्य, कुपित क्रुद्ध सन्, त्वा भवन्तम्, आहूय आकार्य, बहुधा नैकविध यथा स्यात्तथा, धर्मपरिपाटी धर्मसन्ततिम्, प्रकटयामास स्पष्टीचकार। तदनु तदनन्तरम्, कर्णामृतायमान श्रवणपीयूषायमाण यद्धर्मबोधन धर्मोपदेशस्तेन विजृम्भितो वर्धितो निर्वेदो वैराग्य यस्य स, पित्रा जनकेन, निवारितोऽपि प्रतिषिद्धोऽपि, भवान्, वैराग्येण विरक्त्या समासादिता

कृतसुकृतविकसित सहस्रारकल्पे देवभूय चिरमनुभूय, महीतले महिलाभिरेताभिरष्टाभि सह महीपतिरजायत । इति ।

राजहसशिशो पूर्वं मातापितृवियोजनात् ।
पित्रोश्चिराय विरह राजहस त्वमास्थित ॥ ३७ ॥

एव योगीन्द्रवाणीमनुजनिजसतीस्निग्धवृन्दै समेत
श्रुत्वा राज्याद्विभीत कुरुपतिरशने पातनाद्वा भुजङ्ग ।
आनर्च्यानम्य चैन पुरवरमगमत्ससृतिव्यङ्ग्यसौख्य
मन्वन्हालाहलाभ तपसि निजमति सुस्थिरा सदधान ॥३८॥

तदनु वसुमतीवल्लभेन राज्यपरिपालनाय समादिष्टे युवराजे नन्दाढ्ये तप साम्राज्यमेव वरीतुकामे, कुरुवीर पुन सगतमङ्गलमुहूर्ते भगवत्पूजापुर सर विस्तारितमहोत्सव प्रथितपराक्रमलक्ष्मीविहारप्रसादायमानभुज गन्धर्वदत्तानन्दन सकलकलाविलासनिधि चापविद्यापारीणगुण कीर्तिप्रतापविभवेन रूपसपदा चात्मानमनुकुर्वन्त सत्यन्धराह्वय राज्यभारेऽभिषिच्य तमेवमवादीत् ।

असत्या वाणी ते तनय रसनाग्रे न वसताच्छ्रव प्रान्ते वक्त्र पिशुनवचन नेत्रसरणौ ।
परस्त्रीणा रूप मनसि च कुमार्गे व्यवसितिर्मुखे कोपावेश सकलशशिबिम्बाभवदन ॥३९॥

---

सप्राप्ता या जिनदीक्षा निर्ग्रन्थप्रव्रज्या तस्या दुश्चरतपश्चरणेषु कठिनतपोऽनुष्ठानेषु दक्ष समर्थ, सन्, अष्टाभि कान्ताभिर्वनिताभि, साक सार्धम्, लोकोत्तर जगच्छ्रेष्ठम्, तप प्रकार तपश्चरणम्, आसाद्य प्राप्य, कृत विहित सुकृतस्य पुण्यस्य विकसित विकासो यस्मिस्तत् सहस्रारकल्पे द्वादशस्वर्गे, देवभूय देवत्वम्, चिर दीर्घकाल यावत्, अनुभूय भुक्त्वा, एताभि पुरोवर्तमानाभि, अष्टाभि अष्टसख्याकाभि, महिलाभिर्वनिताभि, सह सार्धम्, महीपतिर्जीवन्धरमहाराज, अजायत उदपादि । इति पुराभवम्, समाचष्टेति पूर्वसम्बन्ध ।

राजहसशिशोरिति—हे राजहस हे नृपोत्तम त्वम्, पूर्वं प्राग्भवे, राजहसशिशोर्मरालबालस्य, मातापितृवियोजनात् जननीजनकविरहात्, चिराय दीर्घकाल यावत्, पित्रोर्मातापित्रो, विरह विप्रलम्भम्, आस्थित प्राप्त ॥ ३७ ॥

एव योगीन्द्रेति—अनुजा कनिष्ठभ्रातरो निजसत्य स्ववल्लभा स्निग्धा स्नेहयुक्ता मित्रादयस्तेषा वृन्दै समूहै, समेत सहित, कुरुपतिर्जीवन्धर, एव पूर्वोक्तप्रकाराम्, योगीन्द्रवाणी मुनिराजभारतीम्, श्रुत्वा निशम्य, अशनेर्वज्रस्य, पातनान्मोचनात्, भुजङ्गो वा पन्नग इव, ससृतिव्यङ्ग्यसौख्य भवोत्पद्यमानशर्म, हालाहलाभ तीव्रविषसदृशम्, मन्वन् जानन्, तपसि तपश्चरणे, सुस्थिरा सुदृढाम्, निजमति स्वमनीषाम्, सदधान सधरन्, सन्, एव योगीन्द्रम्, आनर्च्य पूजयित्वा, आनम्य च नमस्कृत्य च, पुरवर नगरश्रेष्ठ राजपुरमिति यावत्, अगमत् ययौ ॥ ३८ ॥

तदन्विति—तदनु तत्पश्चात्, वसुमतीवल्लभेन भूपालेन, राज्यपरिपालनाय राजवैभवपरित्राणाय, समादिष्टे समाज्ञाते, युवराजे राज्यासनारोहणार्हे, नन्दाढ्ये गन्धोत्कटसुते, तप साम्राज्यमेव तपोराज्यमेव वरीतुकामे स्वीकर्तुकामे, सति, कुरुवीरो जीवन्धर, पुनरनन्तरम्, सगतमङ्गलमुहूर्ते प्राप्तोत्तमलग्ने, भगवत्पूजापुरस्सर श्रीजिनेन्द्रार्चासहित यथा स्यात्तथा, विस्तारितमहोत्सवो विततीकृतमहोल्लास, सन्, प्रथिता प्रसिद्धा या पराक्रमलक्ष्मीर्वीर्यश्रीस्तस्या विहारस्य विहरणस्य प्रासादायमानौ भवनायमानौ भुजौ बाहू यस्य तम्, गन्धर्वदत्तानन्दन गन्धवदत्तादारकम्, सकलकलाना निखिलवैदग्धीनाम् विलासनिधि विभ्रमभाण्डारम्, चापविद्याया धनुर्विद्याया पारीणा निपुणा गुणा यस्य तम्, कीर्तिश्च प्रतापश्चेति कीर्तिप्रतापौ यशस्तेजसी तयोर्विभवेन ऐश्वर्येण, रूपसपदा सौन्दर्यसम्पत्त्या च, आत्मान स्वम्, अनुकुर्वन्त विडम्बयन्तम्, सत्यन्धराह्वयमेतदभिधान पुत्रम्, राज्यभारे नृपतित्वधुरि, अभिषिच्य, त पुत्रम्, एव वक्ष्यमाणप्रकारेण, अवादीत जगाद ।

असत्या वाणीति—सकलशशिबिम्बाभ पूर्णरजनीरमणमण्डलसदृश वदन वक्त्र यस्य तत्सम्बुद्धौ

मनसि भगवतो जिनस्य पादौ श्रवसि धर्ममयामृत विधेहि ।
प्रकृतिचयहिते च नेत्रवृत्ति तनय सुखेन मही प्रपालयेति ॥४०॥

एव प्रकारेण निजनन्दन सत्यन्धर बोधयित्वा, इतरानपि तनयान् यथायोग्य पदेषु प्रतिष्ठाप्य, श्रीवीरजिनचरणसरोजभक्तिभरेण वैराग्यवशेन च प्रेरितो महीपाल, सकलसहचरनिकरपरिवृत-पार्श्वभाग, तुष्टाभिरष्टाभि कान्ताभिर्दन्तुरितसविधप्रदेश, पश्चादनुधाविन्या सत्यन्धरप्रमुखनन्दन-पुरस्सरया वेलामतिक्रम्योद्गच्छन्त्येव वारिनिधिवारिवाहिन्या निर्दयसताडितपटहप्रभृतितूर्यघोष-विशेषप्रतिध्वानितकुलाचलकन्दरया मदमन्थरया पृतनयानुगम्यमान, क्रमेण सप्रणाम तया विसृष्ट, श्रीसभासमीपमासाद्य ता त्रि प्रदक्षिणीकृत्य प्रमुदितमना मनागितरविस्मयविस्तारिताक्ष प्राविक्षत् ।

यस्या पार्श्वे रत्नरेणुप्रक्लृप्तो धूलीजाल शक्रचापानुकारी ।
अर्हन्नाथ मुक्तिलक्ष्म्या वरीतु क्षिप्त रेजे कङ्कण वा समीपे ॥ ४१ ॥

यस्या च गगनतलचुम्बिन स्पन्दमानमन्दपवमानकन्दलवलमानध्वजाग्रमानस्तम्भा क्रोधादीना चतुर्णा निरसनाय प्रसृतसस्रलक्ष्मीतर्जनीकार्यधूर्वहा व्यराजन्त ।

---

हे सकलशशिबिम्बाभवदन, तनय पुत्र, ते तव, रसनाग्रे जिह्वाग्रे, असत्या मिथ्या, वाणी, श्रव प्रान्ते कर्ण-प्रदेशे, वक्र कुटिलम्, पिशुनवचन खलवाक्यम्, नेत्रसरणौ नयनमार्गे, परस्त्रीणा परकीयपुरन्ध्रीणाम्, रूप लावण्यम्, मनसि च चेतसि च, कुमार्गे कापथे, व्यवसितिरुद्योग, मुखे वक्त्रे, कोपालेश क्रोधावेग, न वसतात् न निवसतु । शिखरिणीच्छन्द ॥ ३९ ॥

मनसीति—हे तनय हे पुत्र, मनसि चेतसि, भगवतो जिनस्य भगवज्जिनेन्द्रस्य, पादौ चरणौ, श्रवसि कर्णे, धर्ममयामृत धर्मरूपपीयूषम्, प्रकृतिचयहिते प्रजागणकल्याणे च, नेत्रवृत्ति नयनवृत्तिम्, निधेहि कुरु, सुखेन शर्मणा, मही वसुधाम्, प्रपालय रक्ष, इति, अवादीदित्यनेन सम्बन्ध ॥ ४० ॥

एव प्रकारेणेति—एव प्रकारेण इत्थम्, निजनन्दन स्वपुत्रम्, सत्यन्धर बोधयित्वा समाश्वास्य, इतरानप्यन्यानपि, तनयान् पुत्रान्, यथायोग्य यथार्हम्, पदेषु स्थानेषु, प्रतिष्ठाप्य प्रतिष्ठितान् कृत्वा, श्रीवीरजिनचरणसरोजयो श्रीवर्धमानजिनेन्द्रपादारविन्दयो भक्तिभरेण अनुरागातिशयेन, वैराग्यवशेन च विरक्तिनिघ्नत्वेन च, प्रेरित प्राप्तप्रेरण, महीपालो भूप, सकलसहचरनिकरेण निखिलमित्रमण्डलेन परिवृत परीत पार्श्वभागो निकटप्रदेशो यस्य स, तुष्टाभि प्रसन्नाभि, अष्टाभि अष्टसख्याकाभि, कान्ताभिर्वनिताभि, दन्तुरितो नतोन्नत सविधप्रदेशो यस्य स, पश्चात्पृष्ठभागे, अनुधाविन्या समनुगामिन्या, सत्यन्धरप्रमुखा-नन्दना पुरस्सरा यस्यास्तया, वेला तटम्, अतिक्रम्य समुल्लङ्घ्य, उद्गच्छन्त्या समुत्पतन्त्या, वारिनिधिवारि-वाहिन्येव सागरसलिलस्रवन्त्येव, निर्दय निष्कृप यथा स्यात्तथा सताडितानि समाहतानि पटहप्रभृतानि ढक्काप्रमुखानि यानि तूर्याणि वाद्यविशेषास्तेषा घोषविशेषेण शब्दविशेषेण प्रतिध्वानिता प्रतिनिनादिता कुलाचलकन्दरा यया तया, मदमन्थरया मदेन मन्थरा तया पृतनया सेनया, अनुगम्यमानोऽनुक्रियमाण, क्रमेण क्रमश, सप्रणाम सनमस्कारम्, तया पृतनया, विसृष्टस्त्यक्त, सन्, श्रीसभासमीप समवसरणनिकटम्, आसाद्य प्राप्य, ता श्रीसभाम्, त्रि प्रदक्षिणीकृत्य परिक्रम्य, प्रमुदितमना प्रसन्नचेता, मनागितरविस्मयेन विपुलाश्चर्येण विस्तारिते वितते अक्षणी यस्य तथाभूत सन्, प्राविक्षत् प्रविष्टो बभूव ।

तस्या इति—यस्या श्रीसभाया, पार्श्वे समीपे, रत्नरेणुप्रक्लृप्तो रत्नरजोनिर्मित, शक्रचापानुकारी पुरन्दरकोदण्डविडम्बक, धूलिसालो धूलिप्राकार, अर्हन्नाथ श्रीजिनेन्द्रम्, वरीतु स्वीकर्तुम्, मुक्तिलक्ष्म्या निर्वाणश्रिया, समीपे पार्श्वे, क्षिप्त न्यस्तम्, कङ्कण वा कटक यथा, रेजे शुशुभे । शालिनीच्छन्द ॥ ४१ ॥

यस्या चेति—यस्या च श्रीसभायाम्, गगनतलचुम्बिनो नभस्तलस्पर्शिन, स्पन्दमान सचलन् यो मन्दपवमानो मन्दसमीरण तेन कन्दलवलमाना ध्वजाग्रा केत्वग्रा येषु तथाभूता ये मानस्तम्भा ते, चतुर्णां चतु सख्यानाम्, क्रोधादीना कषायाणाम्, निरसनाय दूरीकरणाय, प्रसृतससल्लक्ष्मीर्निसृतसभा-श्रीस्तस्यास्तर्जनकार्यस्य भर्त्सनकृते धूर्वहा भारधारका, व्यराजन्त व्यशोभन्त ।

---

१ मन्थरया मु०

सालकान्तं मुखाभोगं दधत्यास्तत्सभाश्रियः ।
लीलादर्पणतां प्रापुः सरस्यो यत्र निर्मलाः ॥ ४२ ॥

यत्र च विकचपुण्डरीकषण्डमण्डिता स्फटिकस्वच्छसलिला सतारकेव व्योमलक्ष्मीः, महामहिमविराजितं विभुं विलोकितुमागतेव स्वर्लोककल्लोलिनी सुराङ्गनानेत्रविजिताभिरिव ह्रियान्तर्हिताभिः शफरीभिर्विराजिता खातिका विभाति स्म ।

प्रसूनानां वाटी सुरभिलतमा यत्र वितता
ततः सालो लोलन्मणिगणपरीतः समलसत् ।
चतुर्द्वारप्रान्तान्तरविलसिते नाट्यसदने
ततो मार्गे धूपाञ्चितकनककुम्भौ व्यलसताम् ॥ ४३ ॥

या खलु तत्र समिलितभव्यसदोहतो भगवद्दर्शनेन निर्गच्छत्पापपरम्पराभिरिव धूपघटनिर्यद्धूमरेखाभिः परीताभ्रभागा, ककुप्कामिनीजनकर्णपूरायमाणपल्लवतल्लजविराजितानामिन्द्रोद्यानजयार्थमुदस्तहस्तानामिवाभ्रङ्कषशाखानां चैत्यवृक्षाणां चतुष्टयेन विभ्राजितैर्विविधविचित्रधारायन्त्रलतामण्डपकाञ्चनक्रीडाशैलपेशलैश्चतुर्भिरुपवनैरुपेता, नानाविधमणिगणखचिततोरणया सुवर्णवेदिकयालङ्कृता, शिखावलदन्तावलदन्तिवैरिप्रमुखलाञ्छनलाञ्छिताभिर्गगनतलोद्वेल्लनसमाकृष्टसुरतरङ्गिणीतरङ्गसम्भावनासपादकव्यामुक्तमुक्ताफलरुचिनिचयरुचिराभिर्वैजयन्तीभिर्विलसिता, भगवन्मुख-

---

सालकान्तमिति—यत्र विमला निर्मला, सरस्यः कासाराः, अलकान्तैश्चूर्णकुन्तलान्तैः सहित इति सालकान्तस्तम्, पक्षे सालेन प्राकारेण कान्तो मनोहरस्तम्, मुखाभोगमग्रप्रदेशं वक्त्रप्रान्तञ्च, दधत्याः, सभाश्रियः समवसरणलक्ष्म्याः, लीलादर्पणतां केलिमुकुरताम्, प्रापुर्लेभिरे ॥ ४२ ॥

यत्र चेति—यत्र च यस्यां च सभायाम्, विकचपुण्डरीकषण्डेन प्रस्फुटकमलसमूहेन मण्डिता शोभिता स्फटिकमिव सितोपल इव स्वच्छं निर्मलं सलिलं जलं यस्यास्तथाभूता, खातिका परिखा, सतारका सनक्षत्रा, व्योमलक्ष्मीरिव गगनश्रीरिव, महामहिमविराजितं लोकोत्तरप्रभावशोभितम्, विभुं जिनेन्द्रम्, विलोकितुम्, द्रष्टुम्, आगता समायाता, स्वर्लोककल्लोलिनीव सुरपुरस्रवन्तीव सुराङ्गनानां नेत्रविलासैर्नयनचेष्टितैर्विजितास्ताभिरिव, ह्रिया त्रपया, अन्तर्हिताभिरन्तर्गताभिः, शफरीभिर्मीनैः, विराजिता शोभिता, खातिका परिखा, विभाति स्म शोभते स्म ।

प्रसूनानामिति—यत्र समवसरणसभायाम्, सुरभिलतमा सुगन्धियुक्ता प्रसूनानां कुसुमानाम्, वाटी वनी, वितता विस्तृता, ततस्तदनन्तरम्, लोलन्मणिगणैः शोभमानरत्नसमूहैः परीतो व्याप्तः, सालो वप्रः, समलसत् शुशुभे, ततस्तदनन्तरम्, चतुर्णां द्वाराणां प्रान्तान्तरेषु मध्यावकाशेषु विलसिते शोभिते, नाट्यसदने नृत्यनिकेतने, व्यलसताम् व्यशोभेताम् । शिखरिणीच्छन्दः ॥ ४३ ॥

या खल्विति—या खलु धर्मसभा, तत्र समिलिताश्च ते भव्याश्चेति समिलितभव्यास्तेषां सदोहस्तस्मात्, भगवद्दर्शनेन जिनेन्द्रावलोकनेन निर्गच्छन्त्यो निर्गलन्त्यो याः पापपरम्परा दुरितश्रेणयस्ताभिरिव, धूपघटेभ्यो धूपकुम्भेभ्यो निर्यन्त्यो या धूमरेखा धूम्रलेखास्ताभिः, परीतो व्याप्तोऽभ्रभागो गगनप्रदेशो यस्याः सा, ककुप्कामिनीजनानां काष्ठाङ्गनाजनानां कर्णपूरायमाणैः श्रवणालङ्कारायमाणैः पल्लवतल्लजैः किसलयश्रेष्ठैर्विराजितानां शोभितानाम्, इन्द्रोद्यानजयार्थं नन्दनोपवनविजयार्थम्, उदस्तहस्तानामिव समुन्नीतपाणीनामिव, अभ्रङ्कषशाखानां गगनचुम्बिकाण्डानाम्, चैत्यवृक्षाणां चैत्यतरूणाम्, चतुष्टयेन चतुष्केण, विभ्राजितैः शोभितैः विविधानि नैकप्रकाराणि विचित्राणि विस्मयावहानि धारायन्त्राणि जलयन्त्राणि, लतामण्डपानि निकुञ्जानि काञ्चनक्रीडाशैलाः सुवर्णकेलिपर्वतास्तद्वत्पेशलैर्मनोहरैः चतुर्भिश्चतुःसङ्ख्याकैः उपवनैरुद्यानैः, उपेता सहिता, नानाविधमणिगणैरनेकरत्नसमूहैः खचितौ निःस्यूतौ तोरणौ यस्याः तथाभूतया, सुवर्णवेदिकया काञ्चनवितर्दिकया, अलङ्कृता शोभिता, शिखावलो मयूरः, दन्तावलो हस्ती, दन्तिवैरी सिंहः, ते प्रमुखाः प्रधाना येषु तथाभूतानि यानि लाञ्छनानि चिह्नानि तैर्लाञ्छिताभिश्चिह्निताभिः, गगनतलोद्वेल्लनेन विहायस्तलप्रसरणेन, समाकृष्टा ये सुरतरङ्गिणीतरङ्गा गङ्गाकल्लोलास्तेषां सम्भावनाया उत्प्रेक्षायाः सम्पादकानि कारकाणि

सरसिजविगलद्दिव्यध्वनिश्रवणकुतुकेन कुण्डलीभूयोपतस्थुषा मेरुणेव कनकमयसालेन विलसिता, सकलचित्तहारिणा पुष्पितकल्पकवनेन परिशोभिता, निखिलजगदानन्दकन्दलसदायिन्या चतुर्गोपुरचारुतमवज्रवेदिकया सघटिता, जिनपतिदर्शनकुतूहलेन प्रादुर्भूतान्नवपदार्थानिव नवनव स्तूपानर्चासनाथान्धारयन्ती, भगवद्दिदृक्षया समागतेन मूर्तेन वायुमार्गेणेव स्फाटिकप्राकारेण परिवृता, सन्ततपरिस्फुरन्निशाकान्तकान्तविनिर्मितैर्भव्यसदोहाध्यासितैर्द्वादशकोष्ठै प्रतिष्ठिता विरराज ।

तत्र प्रविश्य स च गन्धकुटीसमाख्ये स्थाने मणिस्फुरितसिंहवृतासनाग्रे ।
पूर्वाचले रविमिव प्रविराजमान वीर ददर्श कुतुकेन जिनाधिराजम् ॥४४॥
प्रदक्षिणीकृत्य धराधिराजो भक्त्या जगत्पूज्यमथैष वीरम् ।
इयाज पूजाविधिना विधिज्ञस्तुष्टाव चैव परितुष्टचित्त ॥४५॥
स्वामिन्नम्बुदमार्गचुम्बिविटपे रुद्धाम्बराशान्तरो
गायन्भृङ्गरवैस्तवामलगुणान्नृत्यश्चलै पल्लवै ।
रक्तस्तावकदर्शनेन विविधै पुष्पप्रवालोत्करै-
र्मूर्तो वा मधुरेव वीर भवतो राजत्यशोकद्रुम ॥४६॥

---

व्यामुक्तानि धृतानि यानि मुक्ताफलानि तेषा रुचिनिचयेन कान्तिकलापेन रुचिरा मनोहरास्ताभि , वैजयन्तीभि पताकाभि विलसिता शोभिता भगवन्मुखसरसिजात् जिनेन्द्रवदनारविन्दात् विगलन्नि सरन् यो दिव्यध्वनिनिरक्षरवाणी तस्य श्रवण समाकर्णन तस्मिन् कौतुक कौतूहल तेन, कुण्डलीभूय मण्डलाकारीभूय, उपतस्थुषा समुपस्थितवता, मेरुणेव रत्नसानुनेव, कनकमयसालेन काञ्चननिर्मितवप्रेण, विलसिता शोभिता, सकलचित्तहारिणा निखिलमनोवशीकरणदक्षेण, पुष्पित कुसुमित यत्कल्पकवन कल्पानोकहकानन तेन, परिशोभिता समलकृता, निखिलजगता कृत्स्नलोकानामानन्दकन्दलस्य प्रमोदसमूहस्य सदायिन्या प्रदायिकया, चतुर्गोपुरैश्चतु प्रधानद्वारैश्चारुतमा मनोहरतमा या वज्रवेदिका पविमयवितर्दिका तया, सघटिता कलिता, जिनपतिदर्शनकुतूहलेन जिनेन्द्रावलोकनकौतुकेन, प्रादुर्भूतान् प्रकटितान्, नवपदार्थानिव जीवाजीवास्रवबन्धसवरनिर्जरापुण्यपापाभिधानपदार्थानिव, अर्चासनाथान् मूर्तिसहितान्, नव नव प्रतिदिश नव नव सख्याकान्, स्तूपान् मणिमयमृच्छैलान्, धारयन्ती दधती, भगवतो जिनेन्द्रस्य दिदृक्षा दर्शनेच्छा तया, समागतेन सप्राप्तेन, मूर्तेन मूर्तियुक्तेन, वायुमार्गेणेव पवनमार्गेणेव गगनेति यावत्, स्फाटिकप्राकारेण विशदोपलवप्रेण, परिवृता परीता, सन्तत निरन्तर परिस्फुरन्तो विकसन्तो ये निशाकान्तकान्ता चन्द्रकान्तमणयस्तैर्निर्मितै रचितै, भव्यसदोहेन भव्यजीवौघेनाध्यासिता अधिष्ठितास्तै, द्वादशकोष्ठैर्द्वादशसभाभि, प्रतिष्ठिता सहिता सती विरराज विशुशुभे ।

तत्र प्रविश्येति—तत्र धर्मसभायाम्, प्रविश्य प्रवेश कृत्वा, स च जीवन्धरश्च, गन्धकुटीसमाख्ये गन्धकुटीनामके, स्थाने धामनि मणिस्फुरित रत्नविभ्राजित यत् सिंहवृतासन हरिविष्टर तस्याग्रे पृष्ठे पूर्वाचले उदयाचले रविमिव सूर्यमिव, प्रविराजमान शोभमानम्, जिनाधिराज जिनेन्द्रदेवम्, कुतुकेन कुतूहलेन ददर्श विलोकयामास ॥ ४४ ॥

प्रदक्षिणीकृत्येति—अथानन्तरम्, धराधिराजो नृप एष जीवन्धर, जग पूज्य भुवनाभिवन्दनीयम्, वीर वर्धमानम्, प्रदक्षिणीकृत्य परिक्रम्य, पूजाविधिना सपर्याविधिना, इयाज पूजयामास, विधिं जानातीति विधिज्ञ, परितुष्टचित्त सतुष्टहृदयश्च सन्, एव वक्ष्यमाणप्रकारेण, तुष्टाव स्तौति स्म ॥४५॥

स्वामिन्नम्बुदेति—हे स्वामिन् हे नाथ, हे वीर हे वर्धमानजिनेन्द्र, अम्बुदमार्गो गगन तस्य चुम्बिन स्पर्शिनो ये विटपा शाखास्तै, रुद्धाम्बराशान्तरो रुद्धान्तरीक्षकाष्ठामध्य, भृङ्गरवै षट्पदशब्दै, तव भवत अमलगुणान् निर्मलगुणान्, गायन् उच्चारयन्, चलैश्चञ्चलै, पल्लवै किसलयै, नृत्यन् नृत्य कुर्वन्, तावकदर्शनेन भवदभीक्षणेन, विविधैरनेकप्रकारै, पुष्पप्रवालोत्करै कुसुमकिसलयसमूहै, रक्तो लोहितवर्णो धृतानुरागश्च, भवतस्तव, अशोकद्रुम कङ्केलिवृक्ष, मूर्त सदेह, मधुरेव वा वसन्त एव वा, राजति शोभते ॥४६॥

